प्रक्रियानिर्धारण इति स्पष्टमेव । तस्मात्, द्वितीयोऽपि प्रकारो नाल जिन [illegible] येति स्थितम् ॥

## प्रक्रियाप्रत्यभिज्ञापनाय प्रयत्न आवश्यकः –

९ इयता विचारेणेद तावत् सिद्धम् – परिशुद्धप्रक्रिया अनादिकालात् प्रवृत्ता सप्रदायपरम्पराप्राप्ता यद्यपि वेदान्तेष्विदानीमपि चकास्त्येव 'तद्धैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनु प्रजाभ्य ' (छा ८–१५–१), 'अथ वश ' (बृ ६–५–१), 'मृत्युप्रोक्ता नचिकेतोऽथ लब्ध्वा ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येव यो विदध्यात्ममेव । ' (का २–३–१८), 'स ब्रह्मविद्या सर्वविद्याप्रतिष्ठा-मथर्वाय ज्येष्ठपुत्राय प्राह परावराम् ' (मु १–१–१, २) 'इम विवस्वते योगम् ' (गी ४–१) इत्यादिश्रुतिस्मृतिलिङ्गेभ्य । तथापि सा प्रक्रिया प्राचीनार्वाचीनभाष्यकारैस्तदनुयायिभिश्च बहुप्रकार निर्दिष्टेति भवति जिज्ञासूना सशय – कि बहव एव स्युरमू प्रक्रिया भिन्नभिन्नेषु वेदान्तेषु भिन्नभिन्नवशकथनेन प्रतिपादिता, भाष्यकारैश्च बहुधा निर्दिष्टा, उत एकस्या एव प्रक्रियाया अवान्तरविधाभेदा एव या वेदान्तेषु गीतासु च दृश्यमाना भिन्नभिन्नतया विभाव्यन्ते मन्दमतिभिरिति । कि विस्पष्ट परस्पर विवदद्भिर्विरुद्धतया प्रदर्शिता सर्वा अपि प्रक्रिया साध्व्य एव स्यु, एकपुरुषार्थप्रदर्शकत्वाद्, भिन्नभिन्नदिग्भ्य प्रस्थिता इव मार्गा एकस्यैव नगरस्य प्राप्तये, आहोस्वित् अमूषा या काचिदेवैका समीचीना, इतरास्तु अनर्थायैवेति परिहातव्या मुमुक्षुभिरिति । यस्मा-

---

पारिभाषिकशब्दाना वचनव्यक्तीना च बाहुल्येन प्रयोगेण, भाष्यकारै कुत्राप्यनुदाहृत योगवासिष्ठनृतसहितादिग्रन्थवचनैश्च । प्रमादगतेनोदाहरणाच्च न भगवत्पादीय इति, शैल्यादि-सर्वांशेऽपि गीतातात्पर्यबोधिन्यनुकारात् श्रीशङ्करानन्दकृतिरेवेयमिति मया सपादित न [illegible] हित [illegible]मणीटिप्पणपरिशिष्टाभ्यामुपपादितास्तीत्यहोऽविचाररमणी यता सत्प्रकरणाना शाङ्करत्वेन विनिश्चिते ।

दाकुलानीव प्रतिभान्ति वेदान्तवाक्यानि, स्मृतिवाक्यानि च, विप्रतिपत्तिश्च बह्वना वेदान्तार्थविशदीकरणाय प्रवृत्ताना दृश्यते, यस्माच्च न शक्यतेऽल्पमतिभिर्जिज्ञासुभिर्विवेकेनावधारयितु तत्त्वम्, तस्मादेतेषा पक्षाणा सारासारविवेचनेन तत्त्व विनिर्णीय परमार्थप्रक्रियाप्रत्यभिज्ञापनायावश्य प्रयतितव्य वेदान्तविद्भिरिति सिद्धम् ॥

## प्रक्रियानिर्धारणेऽनुसर्तव्या नियमाः –

१० अथैषा प्रक्रिया कुत्र कथ प्रत्यभिज्ञातव्या ? – इतीद चिन्त्यते । असत्या हि प्रक्रियान्वेषणक्रमव्यवस्थाया या काचिदपि येन केनचिदुपस्थापिता तथात्वेनोपादेया स्यात् । अथवा सर्वा अपि निर्हेतुकम् अतथात्वेन हेया स्यु । न चैतद्युक्तम्, इष्ट वा कस्यचित् । अत कैर्लिङ्गै 'इयमेव सा प्रक्रिया' इति विज्ञेया भवेदितीह दर्शयिष्याम ॥

### (१) प्रथम तावत् वाक्यधर्ममनुसृत्य श्रुतितात्पर्यनिर्धारणसमर्था प्रक्रिया स्वीकार्या ॥

अतो वाक्यमीमासाभियुक्तसमादृतोपक्रमोपसहारादितात्पर्यलिङ्गैर्वाक्यार्थनिर्धारणम्, श्रुतिलिङ्गवाक्यप्रकरणादीना पारदौर्बल्यम्, बहुश्रुतिविरोधे सत्येकस्य परित्याग, तत्परातत्पराणा मध्ये तत्परवाक्यस्यैव प्राबल्यम्, असति बाधके मुख्यार्थस्यैव स्वीकरणम्, श्रुतिस्मृत्यो श्रुतेरेव प्राबल्यम्, श्रुत्यनुसारिस्मृतीनाम तदनुसारिस्मृतिवाक्यापेक्षया प्राबल्यम् – इत्यादिनियमानुल्लङ्घनेन या प्रवृत्ता सैव साध्वी प्रक्रिया भवितुमर्हति नान्या इत्यभ्युपगन्तव्य भवति ॥

### (२) भाष्येषु मध्ये श्रीशङ्करभगवत्पादीयान्येवानुसृत्य प्रक्रिया निर्धार्या ॥

यद्यपि वेदान्तप्रक्रिया सर्वप्रथम सर्ववेदान्तपरिशीलनेन निर्णेयस्येव सर्वसम्मतम्, तथापि परतन्त्रप्रज्ञानामस्मादृशाना स्वातन्त्र्येण श्रुत्यर्थमवगन्तुमशक्नुवता प्रख्यातप्रणेतृकभाष्येषु बद्धादराणा तद्बलेनैव च श्रुत्यर्थं प्रतिपित्सूना, तत्प्रदर्शितापि प्रक्रिया किं न स्यादिति शङ्कमानाना तत्त्वजिज्ञासूना च कृते यथोक्तनियमोऽङ्गीकरणीय ॥

किं कारणं पुनः शाङ्करभाष्याणामनुसरणमेवात्र कर्तव्यमिति ? उच्यते –

(1) उपलभ्यमानपुरातनतमभाष्यत्वात् । पुरातनभाष्यकारा हि वेदान्तप्रक्रियां सम्प्रदायानुसारिणीमेव स्वीचक्रुरिति सम्भाव्यते । सन्निकर्षात् । नेतरेऽत्यर्वाचीनाः । तेषां यथायथं द्वैतिसंसर्गसाहित्याद् द्वैतिदर्शनप्रभावाभिभूतविचारशक्तितया तदाराधनावासिततया च स्वाभ्यूहितप्रक्रियान्तरप्रणयनव्यसनित्वस्यापि शक्यशङ्कत्वात् । शङ्करभगवत्पादानां समये हि नैव द्वैतिवेदान्तिन आसन् इत्यनुमातुं शक्यते । यतो भगवत्पादाः स्वीयभाष्येषु सांख्यादिदर्शनकारानेव द्वैतित्वेन परामृश्याचखण्डन्, न द्वैतवेदान्तिनः । अपि च बृहदारण्यकभाष्ये एव लिखितमस्ति – 'सर्वो हि निदत्सु हि विज्ञानात्मन परमात्मनैकत्वप्रत्ययो विधीयत इत्यविप्रतिपत्तिः सर्वेषामुपनिषद्वादिनाम्' (बृ २-१-२०) इति । सूत्रभाष्ये चेदं वाक्यं दृश्यते – 'सम्यग्ज्ञानान्मोक्ष इति सर्वेषां मोक्षवादिनामभ्युपगमः' (सू भा २-१-११) इति । अतश्चेदमवगम्यते यत्तत्समये जीवात्मपरमात्मभेदमात्यन्तिकत्वेन स्वीकुर्वाणाः केवलभक्त्यादिसाधनान्तरप्राप्यं मोक्षमातिष्ठमाना वा द्वैतिवेदान्तिनो नासन्निति । तस्मात्, यावद् भगवत्पादानां समये ततः प्राग् वा द्वैतिवेदान्तिसद्भावः सैतिहासिकप्रमाणं नोपप्रदर्श्यते तावद् वेदान्तप्रक्रियाया अद्वैतपरत्वमेवेत्यवतिष्ठते । अत इहार्वाचीनभाष्याणि न विमर्शं नीयानीति सिध्यति ॥

यत् सत्यम् श्रीशङ्करभगवत्पादेभ्यः पूर्वतरे अपि नैके भाष्यकारा आसन्निति । तेषां तु मतम् तद्गुणदोषविमर्शप्रकारश्च भाष्यवार्तिकाभ्यामेवेदानीं शक्यते अवधारयितुमित्यतोऽपि शङ्करभाष्यमेव प्रथमतरं परिशीलनीयम् । तैर्विमृष्टा एव तु प्राचीनप्रक्रियास्तदनन्तरं परीक्षणीया भवन्तीति ॥

(2) व्याख्यानापेक्षया अभ्यर्हितत्वाच्च । भाष्यकाराणामभ्यर्हितत्वे हि सर्वेषां हि व्याख्याकर्तॄणां सम्प्रतिपत्तिः । न हि पञ्चपादिकातद्व्याख्यानेषु वा भामती तद्व्याख्यानेषु वा जातुचिद् भाष्यकारप्रस्थानादन्यदेव प्रस्थानमिहाश्रितमित्युक्तम्, भाष्यकारीयाभिप्रायव्याख्यानमेव तु करिष्यत इति स्पष्टमुद्घोषितम् । अतो यत्र भाष्याभिप्रायत्वेनोपवर्णितं साक्षाद् भाष्याक्षरैर्विरुध्यते तत्र भाष्यत एव भाष्याभिप्रायो निर्णेयः तत एव च प्रक्रियास्वरूपं निर्धारणीयम् इति न पृथग्वक्तव्यम् ॥

## (३) भाष्यव्याख्यानयोर्विरोधे श्रुतियुक्त्यभिमतं ग्राह्यम् ॥

यद्यपि वार्तिककारादयो भाष्यकारमभ्यर्हितप्रमाणत्वेनैव स्वीकृत्य स्वस्व व्याख्या प्राणैषुरिति तत्तद्वचनादेवावसीयते । तद्यथा वार्तिककारास्तावद् वार्तिकोपसंहारे –

> यामस्मद्गुरवः वेदशिरसाम् भाष्यतात्पर्यतो ।
> वृत्तिं सज्जनशङ्करीं सुविमलां नानानयोद्योतिताम् ।
> चक्रे काण्वसमाश्रितोपनिषदो दुस्तर्कदोषापहाम् ।
> श्रद्धामात्रबलेन वार्तिकमिदं तस्याः समासात् कृतम् ॥ इति ॥

पञ्चपादिकाकाराश्च –

> पदादिग्रन्थभारेण गरिमाणं बिभर्ति यत् ।
> भाष्यं प्रसन्नगम्भीरं तद्व्याख्या श्रद्धयारभे ॥ इति (प पा १),

'तस्माद् ब्रह्मविदाभ्युदयिकस्य लोकानुग्रहैकरसिकतया सम्यग्ज्ञान-प्रवर्तनप्रयोजन... शरीरपरिग्रहस्य भगवतो भाष्यकारस्य मतमागमयितव्यम् ॥' (प पा २०) इति च ।

भामतीकाराश्च खल्वपि ग्रन्थादौ –

> नत्वा विशुद्धविज्ञानं शङ्करं करुणाकरम् ।
> भाष्यं प्रसन्नगम्भीरं तत्प्रणीतं विभज्यते ॥ इति,
>
> आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् ।
> रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥ इति च ॥

तथापि तु वार्तिके तावत्, श्रुतियुक्तिभ्यां व्याख्यानान्तरमेव समीचीनमिति सूत्रस्य तत्राचार्यव्याख्यानं प्रत्यक्षत एव निराकृतमस्तीत्यनपह्नवनीयमेतत् । तथा च दर्शितं प्राक्' (पृ ११) । यत्राप्येवं प्रत्यक्षवचनं नोपलभ्यते विरोधश्च स्फुटः तत्रापि स्वव्याख्यानस्य वरीयस्त्वं मत्वैव मार्गान्तरेण प्रस्थितं वार्तिककारैरित्यनुमीयते । गत्यन्तराभावात् । तत्रैवंविधस्थलेषु श्रुत्यर्थनिर्णयस्यैवोभयोरपि लक्ष्ये स्थितत्वात्, यस्यैव रीत्या सा प्रक्रिया निःसन्दिग्धं परिपोषिता भवति सैव – भवतु सा भाष्यकारस्य व्याख्यानकारस्य वा – आदरणीयेत्यवश्यमभ्युपगन्तव्यं सर्वैस्तत्त्वपक्षपातिभिः । तथा ह्याहुर्बृहदारण्यके भाष्यकारा अपि – 'तस्मात् श्रुत्यर्थकल्पनाकुशलाः सर्व एवोपनिषदर्थमन्यथा कुर्वन्ति । तथापि वेदार्थश्चेत् स्यात् कामं भवतु न मे द्वेषः '[1] (बृ भा २-३-६) इति ॥

---

1 यद्यप्यत्र काक्वेदमभिप्रेतं वेदार्थस्तथा न भवतीति । तथापि वेदार्थश्चेद् भवति, तर्ह्यङ्गीकार्यमित्यप्युररीकृतमेव भवतीति ज्ञेयम् ॥

(४) शाङ्करमतनिर्धारणस्थले मतान्तराचार्यापादिताद् व्याख्यानतो वा यत् सिद्धम्, ततोऽपि च साक्षाद् भाष्यकारवचनं प्रबलतरं प्रमाणमिति स्वीकार्यम् ॥

नात्रोपपादकयुक्त्यपेक्षास्ति । असति हि भाष्यकारस्य प्रत्यक्षवचने तदभिप्रायोऽन्यतोऽनुमेयो भवेदिति ॥

(५) प्रस्थानत्रयभाष्येष्वपि यत्र परस्परविगानमिव प्रतीयते तत्र तत्परातत्परवाक्यविवेचनपूर्वकं प्रक्रियापरिपोषकवचनमेव वरणीयम् ॥

यथोपवर्णितनियमानुसारेणैव यथामति वेदान्तप्रक्रियानिर्धारणप्रयत्नः करिष्यतेऽग्रेतनग्रन्थसन्दर्भेणेति शिवम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादशङ्करभगवच्चरण-
स्मरणपरिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्य-
सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीतायां
वेदान्तप्रक्रियाप्रत्यभिज्ञायां प्रथमं काण्डम्

# २ प्रस्थानत्रयग्रन्थशरीरपरीक्षणम्

**प्रस्थानत्रयपरीक्षणस्यावश्यकत्वे निमित्तम् –**

११ अथैव सिद्धान्ता वेदा[illegible]
आवश्यकतायाम्, तदर्थं यथाभ्युपगतसमयानुरोधेन सर्वप्रथम मूलप्रमाणभूता वेदान्ता अवलोकनीया भवन्ति, तदुपबृंहकत्वेन सर्वसप्रतिपन्ने गीताशारीरकमीमांसाप्रस्थाने अपि परिशीलयितव्ये । अत इदानीं प्रस्थानत्रयग्रन्थशरीरपरीक्षणं प्रारभ्यते, प्रकृतचिन्तायां तत कियत् साहाय्यक लभ्येतेत्येतदध्यवसानाय । तत्रापि विप्रतिपत्तिस्थानमनापन्नाना दशानामेवोपनिषदा परिशीलनमादौ क्रियते, ततो गीताप्रस्थानस्य, तदनन्तर च सूत्रप्रस्थानस्य ॥

**उपनिषत्सु प्रतिपादिता विषयाः –**

१२ तत्र **वाजसनेयिसहितोपनिषदि** तावत् कर्मत्याग, नित्यकर्मानुष्ठानम्, विद्याविद्यासमुच्चय, सभूत्यसभूत्युपासनासमुच्चयश्चेति साधनप्रकारा उपदिष्टा । साधकस्य सूर्यमण्डलद्वारा गतिश्च ॥

**तलवकारीयोपनिषदि** त्विमे विषया । आदौ सर्वकरणकलापव्यापारस्तेषा तत्सामर्थ्यनिमित्तयत्किञ्चित्तत्त्वप्रेरित – इत्युक्त्वा तस्य तत्त्वस्य सर्वेन्द्रियागोचरत्व विदिताविदिताभ्यामन्यत्व वागादिविषयीकरणसामर्थ्यम् इदमित्यनुपास्यत्व चाब्रवीत् । अनन्तर तस्य अनुवेद्यत्व प्रतिबोधवेद्यत्व चोक्त्वा इहैव तद्बोद्धव्यम् इत्याचचक्षे । अनन्तरम् अग्निवाय्वोरपि तत्स्वरूपनिर्धारणे सामर्थ्याभावम्, इन्द्रस्य तु उमादेव्यनुग्रहात् ब्रह्मत्वेन तद्ज्ञान चाकथयत् । उपसहारे च तपआदीना तज्ज्ञाने साधनत्वमुवाच–**इति ॥**

**काठके** तु – अग्निविद्या स्वर्गलोकफला, ब्रह्मविद्या च साध्यात्मयोगा सद्योऽमृतत्वफला च–**इति** ॥

**आथर्वणमुण्डकोपनिषदि** प्रागविभागेन विद्याद्वय प्रस्तुतम् ‘कस्मिन् विज्ञाते सर्वमिद विज्ञात भवति’ इति प्रश्नोत्तरत्वेन । कर्मणा स्वर्गलोक, कर्मसमुच्चितोपासनया ब्रह्मलोक – इत्यपरविद्याफलमुपसहृत्य, परविद्याधिगम्य निर्विशेष तत्त्वम् अक्षरपुरुषादिशब्दवाच्य परम ब्रह्मैव जगत्कारण [illegible], तद्वेदिता च सर्वज्ञ ब्रह्मैव भवति–इत्युक्तम् ॥

आथर्वणप्रश्नोपनिषदि तु सुकेशादिशिष्येभ्य पिप्पलादेन परब्रह्मविद्या समुपदिष्टेति वर्णितम् । प्रजापते प्राणादपि च विलक्षण ब्रह्मैव पुरुषशब्दवाच्य प्राणादिषोडशकलानामुत्पत्तिस्थान लयस्थान च । तद्विद्ययैव चाविद्या तीर्णा भवन्ति–इति प्रतिपादितम् ॥

**माण्डूक्योपनिषदि** तु – केवलम् अवस्थात्रयपरामर्श कृत्वा, अवस्थारहितश्चात्मा इति निर्णीतम् । ओङ्कारात्मनैव चोपदिष्टम् ॥

**तैत्तिरीयोपनिषदि** पृथिव्यादि [illegible] व्याहृत्यात्मक ब्रह्मोपासनेन स्वाराज्यफलम्, तस्यैव ब्रह्मण पाङ्क्तरूपेणोपासनात् प्राजापत्य-फल चोपदिश्य, कर्मणामवश्यकर्तव्यतामुक्त्वा, अधीतवेदाय शिष्यायाचार्य-कर्तृकमनुशासन विधाय तत पर द्वितीयवल्ल्या ब्रह्मविद्या समुपदिष्टा । तत्र ब्रह्मणो जगत्कारणत्वम्, तत्रैव जगति प्रविष्टस्य सत्त्यदादिसर्वभावापत्ति, अन्नप्राणमनोविज्ञानानन्दमयोपसक्रमणक्रमेण सर्वकामावाप्तिश्च-इतीमे विषया उक्ता । तदनन्तरवल्ल्या भृगुवरुणसवादरूपेण चाख्यानेन भृगोरन्नप्राणादि परीक्षणद्वारेणानन्दब्रह्मविज्ञानेन प्रतिष्ठाप्राप्तिरभिहिता । तदनु च कानिचिदुपासनान्युक्तानि ॥

**ऐतरेयोपनिषदि** च प्राणविभूतिवर्णनप्राणोपासनाविधानानन्तर परमात्मन सर्वलोकसृष्टि, तस्य मूर्धद्वारेण शरीरप्रवेश, ससारगति प्रकार, ब्रह्मादिशरीरेषु प्रज्ञात्मना स्थितस्य ब्रह्मण स्वात्मत्वेन बोधात् सर्वस्यामृतत्वप्राप्तिश्चेत्येते विषया अनुक्रान्ता ॥

अथ **छान्दोग्योपनिषदि** विविधोपासनोपदेशानन्तर षष्ठे प्रपाठके श्वेतकेतूद्दालकसवादरूपेणाख्यानकेन केनादेशेन सर्वमश्रुत श्रुत भवत्यमत

मतममविज्ञात विज्ञातम्-इत्येतत प्रतिपादितम् । मद्ब्रह्मण सर्वजगत्कारणत्व, जीवात्मना तत्प्रवेश , सृष्टभूतत्रिवृत्करण च-इत्येतत्सर्वं प्रदर्शितम् । सुषुप्ति-मरणपरिशीलनेन विविधदृष्टान्तैश्च 'ऐतदात्म्यमिद सर्वं तत्सत्य स आत्मा तत्त्वमसि' इति पदे पदे उपदिश्य सर्वस्य जगतो जीवाना च सद्ब्रह्मात्मना ऐक्य प्रदर्शितम् । तत्रैव सप्तमे नारदसनत्कुमारसवादरूपेणाख्यानकेन नामादिप्राणान्तानामुत्तरोत्तर भूयस्त्व निर्दिश्य निरतिशयमहद्, भूमसज्ञित परमात्मतत्त्वमेव सुखम्, तत्र च नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानातीत्यद्वितीय तत्-इत्युपसहृतम् । अष्टमे च हृदयपुण्डरीके विद्यमान दहराकाश ब्रह्म-इत्युपदिष्टम् । तदुपासकस्य ब्रह्मलोके सर्वकामावाप्ति फलम्-इत्युपदिष्टम् । तत्रैव चोत्तरेण ग्रन्थेन इन्द्र प्रति प्रजापतिना अवस्थात्रयपरीक्षणपूर्वकम् अपहतपाप्मत्वादिगुणकम् अमृतमभय च ब्रह्मैवात्मा सर्वस्येति निर्धारितम् ॥

अथ **बृहदारण्यके** प्रथमाध्याये अश्वमेधपरामर्शपूर्वक प्रजापति-प्राणोपासनाविधि, आत्मोपासनप्रशसा, ब्रह्मविद्यया सर्वात्मभावफलम्, सप्तान्नसर्ग, वायुप्राणोपासने च – इतीमे विषया अनुक्रान्ता । द्वितीये–गार्ग्याजातशत्रुसवादरूपाख्यानेन सुप्तपुरुषोत्थापनदृष्टान्तेन सुषुप्तौ परमात्मनि जगतो लयस्तत एव चोत्पत्ति, प्राणविषयोपनिषद, मूर्तामूर्तयो र्ब्रह्मरूपयो सत्त्यदादिरूपेण रूपिणश्च ब्रह्मण नेतिनेतीति रूपेण च सतत्त्व निर्धारणम्, मैत्रेयीयाज्ञवल्क्यसवादरूपाख्यानेन श्रवणमनननिदिध्यासनाना मात्मविज्ञानसाधनत्वम्, आत्मविज्ञानेनैव सर्वस्य विदितत्वम्, पृथिव्यादि-जगत परस्परोपकार्योपकारकभावेन स्थितत्व मधुदृष्टान्तेन, सर्वेषा भूताना देवाना च लोकाना चारनाभिदृष्टान्तेनात्मनि समर्पितत्वम् – इत्येते विषया उक्ता । तृतीये – जनकयज्ञे समागताना ब्राह्मणाना याज्ञवल्क्येन सह जल्पन्यायेन विचार कृत । तत्र कर्मोपासनाफलम् अश्वमेधयाजिनां गति, सर्वान्तरात्मभूतब्रह्मण स्वरूपम्, ब्रह्मविदामेषणात्याग, ब्रह्मविदो

निरुपचरितब्राह्मण्य चेति ज्ञानप्रशसा, पृथिव्यादीना ब्रह्मलोकान्तानामुत्तरस्मिन्नुत्तरस्मिन्नोतप्रोतत्वम् सूत्रान्तर्यामिणोस्तत्त्वम्, सर्वस्य चाकाशे, आकाशस्य च प्रत्यस्तमितसर्वविशेषे ब्रह्मण्यक्षराख्ये ओतप्रोतत्वम्, तस्यैव ब्रह्मणो नियन्तृत्वभेदा, सर्वप्रतिष्ठाभूतस्य ब्रह्मणो नेतिनेतीत्यात्मरूपत्व जगत्कारणत्वेन विज्ञानानन्दरूपत्व च–इतीमे विषया प्रतिपादिता। अथ चतुर्थे – वागादिसविशेषब्रह्मोपासनानि, इन्द्रादिसज्ञया स्थूलसूक्ष्मप्राणात्मक्रमेण नेतिनेतीत्यात्मदर्शनम्, पुनरपि जाग्रत्स्वप्नसुषुप्तिपरीक्षणेन आत्मन कार्यकरणसघातव्यतिरिक्तत्व, शुद्धत्व, स्वयज्योतिष्ट्वम्, अलुप्तचैतन्यशक्तित्व, निरतिशयानन्दरसत्वमद्वैतत्व च–इत्यवगमितम्। जीवस्य जननमरणादिसव्यवहार, मुक्तस्य ज्ञानिन प्राणानामनुत्क्रान्ति, ब्रह्मण एव सतो ब्रह्मण्यप्ययश्च। सर्ववेदोक्तकर्मणा ज्ञाने उपयोगप्रकार, कृतकृत्यस्य ज्ञानिन प्रशसा। पुनरप्येकवार मैत्रेयीब्राह्मणेनात्मविज्ञानोपसहार –इति बहवो विषया समुदाहृता। पञ्चमाध्याये तु खिलकाण्डरूपे पूर्वानुक्तानि कानिचिदुपासनान्युक्तानि ॥

**अथ श्वेताश्वतरकौषीतकिब्राह्मणोपनिषदौ** यद्यपि बहुश भाष्येषूदाहृते प्रस्थानत्रयेऽपि, तथाप्याचार्यकृतभाष्यानुपलब्धेर्न तद्विषयानुक्रमणिका अत्र विव्रियते प्रत्येकश ॥

**वेदान्तमात्रपरिशीलनेन प्रक्रिया स्थूलमतीना दुरवधारणा –**

१३ यथोक्तविषयप्रतिपादनक्रमानुशीलनेन न तावत् स्थूलमतीना सर्वत्रानुगता काचिदेका प्रक्रिया मनस्यारोहति। अन्यान्या एव तु प्रातिस्विकी प्रक्रिया तत्रतत्रादृता लक्ष्यते। केनोपनिषदि दृग्दृश्यविवेक, तैत्तिरीये पञ्चकोशविवेक, जगद्ब्रह्मणो कार्यकारणभावश्च, प्रश्नोपनिषदि स्थूलसूक्ष्मकारणाना पूर्वस्य पूर्वस्योत्तरस्मिन् प्रविलय, माण्डूक्यच्छान्दोग्यबृहदारण्यकेषु, तत्र तत्रावस्थात्रयपरीक्षा – इत्येवम्। अतो वेदान्ताना

स्वातन्त्र्येण परिशीलितम् न काचित् सर्वानुगता प्रक्रिया विवृणुते इत्यापाततो भातीति स्थितम् ॥

**गीताप्रतिपाद्यविषयाः –**

१४ अथ साधनसिद्धान्तोभयतत्त्वावधारणाय प्रवृत्तत्वात् सर्ववेदसारसंग्रहत्वेन वेदान्तोपकारकं गीताप्रस्थानमपि विमर्शनीयम् । अतस्तत्र प्रतिपादिता विषया अध्यायानुक्रमेण संगृह्यन्ते ॥

तत्र प्रथमाध्याये ग्रन्थसंबन्धप्रदर्शनार्थम् अर्जुनविषादोपन्यासः, द्वितीये – साङ्ख्ये बुद्धिर्योगे बुद्धिरिति च द्वे बुद्धी उपदिश्य, साङ्ख्यदृष्ट्या निष्क्रियात्मतत्त्वोपदेशः कृतः, योगदृष्ट्या च सङ्गफलत्यागपूर्वकं कर्मानुष्ठानम्, साङ्ख्यानां ब्रह्मनिर्वाणाख्यं फलं चोपदिष्टम् । तृतीये – निष्ठाद्वयमेतदधिकारिभेदेन प्रोक्तमिति, कर्मारम्भ एव तु नैष्कर्म्यनिष्ठोपाय इति चाभिहितम् । चतुर्थे – अजस्याव्ययस्यापि परमेश्वरस्य धर्मोद्धारार्थं मायया जन्म संभवतीत्युपपाद्य तत्त्वदर्श्युपसत्त्या ज्ञानप्राप्तिः, ज्ञानिनः कर्मबन्धाभाव इति चोक्तम् । पञ्चमे – कर्मानुष्ठानकर्मसंन्यासयोरुभयोरपि श्रेयःकारणत्वे सत्यपि साधकानां कर्मनिष्ठैव सुकरेत्युक्तम् । परमार्थसंन्यासिनामिह च प्रेत्य चेत्युभयतोऽपि ब्रह्मनिर्वाणमिति चाभाणि । षष्ठे – कर्मध्यानयोर्योगाङ्गत्वे विशेषः, ध्यानयोगानुष्ठानप्रकारः, तत्फलमात्मदर्शनम्, तस्य नियतफलत्वं च । सप्तमे – भगवतः परापरप्रकृतिस्वरूपम्, सर्वस्यापि जगतः तत्तद्गुणविशिष्टे भगवति प्रोतत्वम्, भगवत्प्रपत्तेर्मायातरणोपायत्वम्, भगवन्तं प्रपन्नानां मध्ये ज्ञानिभक्तश्रैष्ठ्यम्, नैसर्गिकद्वन्द्वमोहस्य ज्ञानप्रतिबन्धकत्वं च । अष्टमे – ओंकारोपासकानां धारणायोगेनाग्न्याद्युपलक्षितमार्गेण गतिः, क्रमेणाक्षरब्रह्मप्राप्तिश्च, तदन्येषां तु कृष्णगतिः पुनरावृत्तिश्च । नवमे – परमात्मतत्त्वाभिवर्णनपूर्वकं प्रत्यक्षावगमफलं आत्मदर्शनप्रकारः उक्तः । भगवद्भजनप्रकाराः, भगवद्विभूतयः काश्चित् भगवदेकपरायणानां तत्प्राप्तिश्च । दशमे – उपासनार्थं विस्तरेण

भगवद्विभूतिकथनम् । कृत्स्न जगत् भगवदंशत्वेन जानीयादित्युपदेशेनाध्यायोपसंहारश्च । [illegible] भगवता विश्वरूपप्रदर्शनम्, अर्जुनकर्तृका भगवत्स्तुति, भक्त्यैकलभ्यत्वाद् विश्वरूपभगवत्प्राप्ते साधकेन भगवदेकपरायणेन भवितव्यमित्युपदेशश्च । द्वादशे – विश्वरूपोपासकानाम् अक्षरोपासकाना च मध्ये विश्वरूपोपासकानामेव युक्ततमत्व साधने क्लेशाल्पत्वात इत्युक्ति, विश्वरूपोपासकानाम् उत्तरोत्तर सुकरत्वेन विश्वरूपैकचिन्तनाभ्यासयोग भगवत्कर्मानुष्ठान-सर्वकर्मफलत्यागानामुपदेश, अक्षरोपासकानामद्वेष्टृ[illegible]गानि च । त्रयोदशे तु–क्षेत्रक्षेत्रज्ञविवेचनपूर्वक सर्वशरीरेष्वपि क्षेत्रज्ञस्य भगवदनन्यत्वम्, अमानित्वादिविज्ञान-साधनानि, ज्ञेयभूतब्रह्मस्वरूपनिर्देश, प्रकृतिपुरुषविवेक, आत्मदर्शनोपाय-विकल्पा, सम्यग्दर्शनप्रपञ्चन पुनरपीति । चतुर्दशे – सत्त्वरजस्तमसा प्रकृतिगुणाना बन्धनप्रकारा, तत्तद्गुणविवृद्ध्यवस्थाविशेषज्ञानार्थं लिङ्गविशेषा, तत्तद्गुणविवृद्धिफलम्, गुणातीतलक्षण च । पञ्चदशे – ससार-स्वरूपवर्णनम्, तदुच्छेदायासङ्गत्वोपदेश, परमपद प्राप्तस्यापुनरावृत्ति, ससारिण्येवात्मदर्शनम्, परमात्मविभूतिसक्षेप, भगवत क्षराक्षरविलक्षणत्वे-नोत्तमपुरुषाख्यत्वम्, तज्ज्ञानस्तुतिश्च । षोडशे – दैवासुरसपद्विभाग, कार्याकार्यव्यवस्थितौ शास्त्रस्यैव प्रामाण्यम् । सप्तदशे – आहारयज्ञ-तपोदानाना सात्त्विकत्वादिविभागकर्मसागुण्यार्थं ओंतत्सदिति निर्देशोप-देशश्च । अष्टादशे तु – यज्ञदानतपसा सङ्गफलत्यागपूर्वक कर्तव्यता, कर्मसन्यासिनामनिष्टादिफलाप्राप्ति, आत्मनोऽकर्तृत्वम् । ज्ञानकर्मकर्तृ-बुद्धिधृतिसुखाना सात्त्विकादिभेदा, ब्राह्मणादीना कर्माणि, स्वकर्मणा भगवदर्चनेन सिद्धि, सिद्धि प्राप्तस्य ब्रह्मप्राप्त्यर्थम् अनुष्ठेयसाधनम्, ब्रह्मभूतस्य भगवद्दर्शनम्, भगवच्छरणतोपदेशश्चेति ॥

### गीतास्वपि न प्रक्रिया शक्यनिर्धारणा –

१५ गीताप्रतिपादितविषयानुशीलनेन यद्यपि कर्मज्ञानादीना

परस्परसबन्धो यत्किञ्चिदिव ज्ञायते, तथापि तत्त्वज्ञानस्वरूपनिर्धारण तदुपायपरम्पराप्रणालिकानिर्धारण वा का प्रक्रियामवलम्ब्य क्रियतेऽत्रेति त्वस्मादृशाना न सुविज्ञानम् । सर्वत्र हि गीता उपदेशप्रधाना लक्ष्यन्ते न तूपपत्तिप्रधाना । अतोऽत्रापि प्रक्रियाप्रत्यभिज्ञा स्वतन्त्रविचारेण न सुलभेति सुव्यक्तम् । यत्रापि स्वल्पशनिपत्तु तत्र तत्रोपपत्तयोऽपि सदृष्टान्तमुपक्षिप्ता, तत्रापि न प्रक्रियान्वेषणपथो निष्कण्टक इति ज्ञातम्, का कथा पुनर्यत्रोपपत्तीनामत्यन्तविरलतेति ॥

सूत्रप्रस्थानविभागक्रमः –

१६ अथ वेदान्तमीमासाग्रन्थशरीर विभज्य विज्ञेयम् । मीमासाशब्दशब्दितत्वादेव हि तर्कप्रधानमिद शास्त्रमिति गम्यते । विषय विभागस्त्वत्रेत्थम् । प्रथमाध्याये प्रथमपादे—प्रथमसूत्रेण '**अथातो ब्रह्मजिज्ञासा**' इति जिज्ञासा कर्तव्यत्वेनोपदिष्टा, ब्रह्मणश्च लक्षण '**जन्माद्यस्य यतः**' इति द्वितीयसूत्रेण कथितम् । '**शास्त्रयोनित्वात्**' इति तृतीय सूत्रेण च शास्त्रमेव प्रमाण ब्रह्मणीति विज्ञापितम् । तच्च शास्त्रप्रमाणकत्व ब्रह्मण, '**समन्वयात्**' इति हेतूपदर्शनेन दृढीकृत तुरीयसूत्रेण । '**ईक्षतेर्नाशब्दम्**' इति च पञ्चमाधिकरणेनाचेतनस्य जगत्कारणत्व प्रतिक्षिप्तम् । अत पर प्रथमाध्याये ब्रह्मणि वेदान्तवाक्याना समन्वय. प्रदर्शित, आतृतीयपादपरिसमाप्ते । चतुर्थपादे वेदान्तवाक्येषु कुत्रचित् साङ्ख्याभिमतप्रधानसमर्पणाभासत्व लक्ष्यत इति तेषामन्यपरत्वव्याख्यानेन वेदान्ताना निरपवादो ब्रह्मणि समन्वय इति निगमन कृतम् । द्वितीये त्वध्याये यथोक्तसिद्धान्तस्य स्मृतिन्यायाविरोधो दर्शित परपक्षनिरासपूर्वकम् । तृतीये च जीवाना ससारप्रकार, उपासनादिसाधनविचारश्च प्रतानित । चतुर्थे पुन प्रायेण विद्याफलाश्रयो विचार कृत – इति सामान्येन सर्ववेदान्तसंप्रतिपन्नोऽय विषयविभागक्रम ॥

## सूत्रप्रस्थानावलोकनेनापि प्रक्रिया दुरवधारणा –

१७ अत्र यद्यपि बादरायणीयानि सूत्राणि न्यायेन वेदान्तार्थ-तात्पर्यनिर्णयार्थं प्रवृत्तानीत्यत्र न काचन विमति, तथापि 'अल्पाक्षर-मसन्दिग्ध सारवद्विश्वतोमुखम् । अस्तोभमनवद्य च सूत्र सूत्रविदो विदु' (१) इत्युक्तेषु विशेषणेषु मध्ये– न ज्ञायते कस्मात् कारणादिति– असदिग्धत्व तावत् सूत्रेषु न तादृग्लक्ष्यते यादृशा विरुद्धनानाव्याख्यानानि न लब्ध-प्रसराणि भवेयु । यावता दरीदृश्यन्ते औपनिषदपक्षावलम्बनत्वमात्मन समुद्घोषयद्भिरेव श्रीशङ्करभगवत्पादेभ्य प्राचीनैर्भर्तृप्रपञ्चादिभिरन्यथान्यथा वृत्तयो निर्वर्तिता । तास्त्विदानी यद्यपि नोपलभ्यन्ते तथापि भाष्ये वार्तिके च परामृष्टा समुपलभ्यन्ते । अर्वाचीनैश्च भास्कररामानुजश्रीकण्ठ विज्ञानभिक्षुमध्ववल्लभबलदेवप्रभृतिर्बहुभिर्बहुधा व्याख्यातानीमान्येव सूत्राणीति सुप्रसिद्धमेतत् । सर्वोऽपि च भाष्यकार स्वस्वप्रक्रियामेव सूत्रकाराभिमतामभिमन्यते, तदनुयायिभिरद्यापि प्रक्रियाविषये व्युद्यते परस्परमिति च सुविदितमेतत् । तस्मात् सूत्रमात्रविमर्शनेन प्रक्रियाप्रत्यभिज्ञाप्रत्याशा सुतरा दूरे स्थितेति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादशङ्करभगवच्चरण स्मरणपरिचयावाप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्य-सच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीताया

**वेदान्तप्रक्रियाप्रत्यभिज्ञाया द्वितीय काण्ड**

# ३. श्रीशङ्करभगवत्पादभाष्यपरिशीलनम्

## आचार्यभगवत्पादाना सत्संप्रदायस्थत्वम् –

१८ केवलप्रस्थानत्रयविषयनिरूपणेन वेदान्तप्रक्रियाया दुरव धारणत्वात्, तन्निर्धारणार्थं शाङ्करभाष्य प्रप्रथम परिशीलनीयमित्यावेदितम् । भगवत्पादेभ्य प्राचीनतराणा तत्समकालीनाना वा वृत्तिकृता अभिप्रायास्तु भाष्यवार्तिकान्यतरस्थपरामर्शमात्रादनुमेया, न त्विदानी तद् वृत्तय क्वाप्युपलभ्यन्त इत्यतो भगवत्पादीयभाष्यविमर्शनमेव तत्रापि शरण सप्रतीति च । इदमिदानी चिन्त्यते कि भगवत्पादोपस्थापिता प्रक्रिया कि तत्स्वोपज्ञा उत सप्रदायागतेति । यदि हि भाष्यकारोपज्ञैवैषा, तर्हि वेदान्तेष्वादृता सैवेयम् आहो नेत्यत्र सशयोऽपि प्रादुर्भवेदिति ॥

तत्र **श्रीगौडपादास्तावत्** परमगुरवो भगवत्पादाना वेदान्तप्रपञ्चदिगन्तविश्रान्तकीर्तय इति सुप्रसिद्धमेतत् । तत्प्रणीता माण्डूक्योपनिषत्कारिका इदानीमपि सगौरव सर्वत्र पठनपाठनयोरद्वैतिभिराद्रियन्त इति च । ते च सप्रदायवित्त्वेन महीकृता सूत्रभाष्ये – 'तथा च **संप्रदायविदो** वदन्ति' (सू भा १–४–१४), 'अत्रोक्त **वेदान्तार्थसंप्रदायविद्भिराचार्यैः**' (सू. भा २–१–९) इति च । गौडपादैरपि प्राक्तनसाप्रदायिका सबहुमान परामृष्टा – '**वेदान्तेषु विचक्षणैः**' (मा का २–३१) इति, '**मुनिभिर्वेदपारगैः**' (मा का २–३५) इति च । किञ्च, भाष्यकारेण सप्रदाये परमश्रद्धा आविष्कृतास्ति तत्र तत्र । तद्यथा **गीताभाष्ये** 'ससारोपरमश्च मम कर्तव्य क्षेत्रक्षेत्रज्ञविज्ञानेन, ध्यानेन चेश्वर क्षेत्रज्ञ साक्षात्कृत्वा तत्स्वरूपावस्थानेन' इत्येकदेशिमतमनूद्य लिखितमस्ति 'एव मन्वानो य स पण्डितापसद ससारमोक्षयो शास्त्रस्य चार्थवत्त्व करोमीत्यात्महा स्वय मूढोऽन्याश्च व्यामोहयति **शास्त्रार्थसंप्रदायरहितत्वात्** श्रुतहानिमश्रुतकल्पना च कुर्वन् । तस्मात्, **असंप्रदायवित्**

सर्वशास्त्रविदपि मूर्खवदेवोपेक्षणीय ' (गी भा १३-२) इति । तत्रैवा-न्यत्रैव लिखितम् – ' केचित्तु पण्डितमन्या निराकारत्वादात्मवस्तु नोपैति बुद्धि , अतो दु साध्या सम्यग्ज्ञाननिष्ठा–इत्याहु । सत्यमेवम्, **गुरुसप्रदाय-**रहितानाम् अश्रुतवेदान्तानाम्, अत्यन्तबहिर्विषयासक्तबुद्धीना सम्यक् प्रमाणेष्वकृतश्रमाणाम् ' (गी भा १८-५०) इति । **बृहदारण्यकभाष्ये** चेद वाक्य दृश्यते – ' अत्र च **संप्रदायविद** आख्यायिकामाचक्षते ' (बृ भा २-१-२०) इति । तदेव सप्रदाये ख्यापितपरमादरत्वात्, विश्रुतसप्रदायवित्परमपूज्यगौडपादप्रशिष्यत्वाच्च, अनतिशङ्कनीय भगव त्पादाना सत्संप्रदायस्थत्वमिति सिद्धम् ॥

## भगवत्पादसमता साप्रदायिकी प्रक्रिया –

१९ अथेदानीं का नु स्यादसौ वेदान्तप्रक्रिया आचार्याभीष्टा सप्रदायागतत्वेनेति विशये इद वाक्य समुपतिष्ठते – " तथा हि **सप्रदायविदा वचनम्** – ' अध्यारोपापवादाभ्या निष्प्रपञ्च प्रपञ्च्यते ' इति " (गी भा १३-१३) इति ॥

अस्याभियुक्तवचनस्याभिप्रायश्च **बृहदारण्यकभाष्ये** एव विवृतोऽस्ति–

' य एव यथोक्तमात्मानम् अभय ब्रह्म वेद, सोऽभय हि वै ब्रह्म भवति । एष सर्वस्या उपनिषद सक्षिप्तोऽर्थ उक्त । एतस्यैवार्थस्य सम्यक् प्रबोधाय, उत्पत्ति स्थितिप्रलयादिकल्पना क्रियाकारकफलाध्यारोपणा च आत्मनि कृता । तदपोहेन च नेति नेतीत्यध्यारोपितविशेषापनयद्वारेण पुनस्तत्त्वमावेदितम् । यथा एकप्रभृत्या परार्धसख्यास्वरूपपरिज्ञानाय रेखाध्यारोपण कृत्वा ' एकेय रेखा ', ' दशेय ', ' शतेय ' ' सहस्रेयम् '-इति ग्राहयति । अवगमयति सङ्ख्यास्वरूप केवलम्, न तु सङ्ख्याया रेखात्मत्वमेव । यथा च, अकारादीन्यक्षराणि विजिग्राहयिषु पत्रमषीरेखादि सयोगोपायमास्थाय वर्णाना सतत्त्वमावेदयति, न पत्रमष्याद्यात्मताम् अक्षराणा ग्राहयति, तथा चेहोत्पत्त्याद्यनेकोपायमास्थायैक ब्रह्मतत्त्वम् आवेदितम् । पुन तत्कल्पितोपायजनितविशेषपरिशोधनार्थं नेति नेतीति तत्त्वोपसहार कृत ' (बृ भा ४-४-२५, पा ९३९) इति ॥

**अध्यारोपापवादप्रक्रियैवेतरप्रक्रियाविशेषाणां मूलरूपम् –**

२० सैषा प्रक्रिया एकैव सती विविधप्रक्रियाविशेषवेषेण तत्र तत्रानीय प्रदर्श्यते वेदान्तेषु गीतासु, सूत्रेषु चेति तत्तत्प्रकरणनिरूपणेनावश्य विज्ञायेत, यदि वाक्यतात्पर्याध्यवसाये प्रथमनियमोदाहृता विनिगमनाहेतवो (पा १४) मनसि ध्रियेरन् । अत्र दिङ्मात्र तावद् दर्शयिष्याम, उत्तरत्र प्रस्तोष्यमाणभाष्यप्रस्थानप्रपञ्चे अनाकुल बुद्धिस्थैर्यं यथा स्याज्जिज्ञासूनामिति ॥

प्रत्यस्तमितसर्वविशेषेऽपि, सर्वात्मत्वेन नित्यप्राप्तेऽपि च ब्रह्मणि आप्यत्वम् श्रुतिषु कुत्रचित् अध्यारोप्य ज्ञानातिरिक्तसाधनप्राप्यत्वाशङ्का अपोद्यते । एव क्वचिज्ज्ञेयत्वमध्यारोप्य ब्रह्मातिरिक्ते वस्तुनि ज्ञेयत्वमपोद्यते, क्वचित्तस्मिन्नेव ज्ञातृत्वमध्यारोप्य ज्ञेयत्वमपह्नूयते । क्वचित्तु साक्षित्वमध्यारोप्य ज्ञातृत्वमपि निराक्रियते । क्वचित्पुन स्वरूपमेवापेक्ष्य नेति नेति इति साक्षित्वमपि निराक्रियते । एवम् क्वचिद्वाक्यगम्यत्वमङ्गीकृत्य प्रत्यक्षाद्यगम्यत्व बोध्यते, क्वचित्तु वाङ्मनसयोरप्यगोचरत्व स्वरूपापेक्षया स्वीकृत्य वाक्यगम्यत्व मनोगम्यत्व च निराक्रियते । एवमेव जगत्कारणत्व ब्रह्मण्यध्यारोप्य तस्य कार्यत्वमपह्नूयते, तत कारणत्वमप्यपह्नुत्य स्वरूपमेवावेद्यते । पञ्च कोशात्मकत्व क्रमक्रमेणाध्यारोप्य पूर्वपूर्वस्यात्मत्व निराकृत्य पञ्चकोशातीतत्वमवगमय्य सर्वद्वैतातीतत्व विज्ञाप्यते । तथा दृक्त्वारोपेण दृश्यत्वापह्नव क्वचित्, ततो द्वैतराहित्यमवबोध्य तस्यापि निराकरणम्, अवस्थात्रयवत्त्वमध्यारोप्य पूर्वपूर्वावस्थावत्त्वनिरास, ततस्तुरीयत्वबोधनेनावस्थावत्त्वमात्रस्य निरास । कि बहुना, ब्रह्मस्वरूपबोधनार्थं यद्यदध्यारोप्यते तत्तदपह्नूयते स्वरूपे एव बुद्धिविश्रान्तिर्यथा स्यादिति । तथा चोक्त **वेदान्तार्थसंप्रदायविद्भिः श्रीगौडपादाचार्यैः** – 'स एष नेति नेतीति व्याख्यात निह्नुते यत । सर्वमग्राह्यभावेन हेतुनाज प्रकाशते ॥' (गौ का ३-२६) यद्यत् परमार्थतत्त्वबोधोपायत्वेन व्याख्यायते, तस्य सर्वस्याप्यध्यारोपमात्र-

त्वात् पुन पुन स एष नेति नेत्यात्मा' (बृ ३-९-२६, ४-२-४, ४-४-२२, ४-५-१५) इति निह्नुते, निर्विशेषात्मस्वरूप तु सर्वनिह्नवात् पर स्वयमेव प्रकाशते इति कारिकार्थ ॥

## अध्यारोपितापवादेनैव ब्रह्म शक्यावगमनम् –

२१ अथ यथोक्तप्रक्रिया प्रस्थानत्रयभाष्येषु सर्वत्रापि सिद्धान्तसाधननिरूपणप्रदेशेषु कथमनुस्यूतेति ? एतत्प्रदर्शनाय प्रयत्यते। अध्यारोपप्रक्रियाया हि जीवितमिद यन्मिथ्याविकल्पानपि ब्रह्मण्यध्यारोप्य तत्राध्यारोपितादन्यस्य प्रतिद्वन्द्विन प्रतिषेध, ततस्तस्याप्यध्यारोपितस्याप वाद इति। एव यावन्निरवशेषेण सर्वमप्यध्यारोपितमपोद्यते तावदध्यारोपितापनये यत्न कर्तव्य इति। एव सर्वविधाध्यारोपप्रतिषेधेनैव ब्रह्मस्वरूप शक्यावगमनम्, नान्यप्रकारोऽस्ति तस्यावगमनायेति विस्पष्टमुद्घोषित प्रस्थानत्रयभाष्येषु। तद्यथा –

(१) ननु कथमाभ्या नेति नेतीतिशब्दाभ्या सत्यस्य सत्य निर्दिदिक्षितमिति ? उच्यते – सर्वोपाधिविशेषापोहेन। यस्मिन् न कश्चिद् विशेषोऽस्ति नाम वा रूप वा कर्म वा भेदो वा जातिर्वा गुणो वा। तद्द्वारेण हि शब्दप्रवृत्तिर्भवति। न चैषा कश्चिद्विशेषो ब्रह्मण्यस्ति। अतो न निर्देष्टु शक्यत इद तदिति। 'गौरसौ, स्पन्दते, शुक्लो, विषाणी' इति यथा लोके निर्दिश्यते, तथा अध्यारोपितनामरूपकर्मद्वारेण ब्रह्म निर्दिश्यते 'विज्ञानमानन्द ब्रह्म', 'विज्ञानघन एव', 'ब्रह्म', 'आत्मा', इत्येवमादिशब्दै। यदा पुन स्वरूपमेव निर्दिदिक्षित भवति निरस्त सर्वोपाधिविशेषम्, तदा न शक्यते केनचिदपि प्रकारेण निर्देष्टुम्। तदा अयमेवाभ्युपायो यदुत प्राप्तनिर्देशप्रतिषेधद्वारेण 'नेति नेति' इति निर्देश ॥ (बृ भा २-३-६, पा ७५५-७५६)

(२) उपपत्तेश्च सदसदादिशब्दैर्ब्रह्म नोच्यत इति। सर्वो हि शब्दोऽर्थप्रकाशनाय प्रयुक्त, श्रूयमाणश्च श्रोतृभि, जातिक्रियागुणसबन्धद्वारेण सङ्केतग्रहणसव्यपेक्षोऽर्थं प्रत्याययति नान्यथा अदृष्टत्वात्। न तु ब्रह्म जातिमत्। अतो न सदादिशब्दवाच्यम्। नापि गुणवत्, येन गुणशब्देनोच्येत। निर्गुणत्वात्। नापि क्रियाशब्दवाच्य निष्क्रियत्वात्। 'निष्कल निष्क्रिय शान्तम्' (श्वे ७-१९) इति

(१) दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सिन नचिकेतस मन्ये न त्वा कामा बहवोऽलोलुपन्त ॥
(का १-२-४)

(२) त्व हि न पिता योऽस्माकमविद्याया पर पार तारयसीति ॥
(प्र ६-८)

(३) स ब्रह्मविद्या सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥
(मु १-१-१)

सा चेयमविद्या भाष्येष्वित्थ विवृता दृश्यते –

(१) अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणा चाध्यास, तद्विपर्ययेण विषयिणस्तद्धर्माणा च विषयेऽध्यासो मिथ्येति भवितु युक्तम्, तथाप्यन्योन्यस्मिन्नन्योन्यात्मकताम् अन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेन, अत्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्त सत्यानृते मिथुनीकृत्य 'अहमिदम्, ममेदम्' इति नैसर्गिकोऽय लोकव्यवहार । तमेतम् एवलक्षणमध्यास पण्डिता अविद्येति मन्यन्ते । तद्विवेकेन च वस्तुस्वरूपावधारण विद्यामाहु ॥ (सू भा उपोद्घाते)

(२) सर्वव्यापार तत्राध्यारोप्य नामरूपगत ज्योतिर्धर्मं च नामरूपयो, नामरूपे चात्मज्योतिषि सर्वो लोको मोमुह्यते अयमात्मा, नायमात्मा, एवधर्मा नैवधर्मा, कर्ता, अकर्ता, शुद्ध, अशुद्ध, बद्ध, मुक्त, स्थित, गत, आगत, अस्ति, नास्ति – इत्यादिविकल्पै ॥ (बृ भा ४-३-७, पा ८७०)

(३) क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वभावयोरितरेतरतद्धर्माध्यासलक्षण सयोग क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनो रज्जुशुक्तिकादीना तद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसयोगवत् । सोऽयमध्यासस्वरूप क्षेत्रक्षेत्रज्ञसयोगो मिथ्याज्ञानलक्षण । यथाशास्त्र क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वक प्राग्दर्शितरूपात् क्षेत्रात् मुञ्जादिवेषीका यथोक्तलक्षण क्षेत्रज्ञ प्रविभज्य 'न सत्तन्नासदुच्यते' इत्यनेन निरस्तसर्वोपाधिविशेष ज्ञेय ब्रह्म स्वरूपेण य पश्यति, क्षेत्र च मायानिर्मित हस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवत् असदेव सदिवावभासते इत्येवनिश्चितविज्ञानो य, तस्य यथोक्तसम्यग्दर्शनविरोधादपगच्छति मिथ्याज्ञानम् ॥ (गी भा १३-२६, पा २१३)

अविद्याहेतुस्वरूपकार्याणि –

२३ अवगतमविद्यास्वरूपम्, आत्मानात्मनोरितरेतरतादात्म्य-तद्धर्माध्यास इति । अध्यास, अध्यारोप, विपर्यय, विपर्यास, मिथ्याज्ञानम्, मिथ्याप्रत्यय, अन्यथाग्रहणम्, तम, भ्रान्ति, मोह – इत्येवमादयोऽविद्याया एव वाचका इति भाष्ये तथा प्रयोगादवगम्यते । यद्यपि मिथ्याज्ञानलक्षणा अविद्या तन्त्रान्तरेष्वपि प्रसिद्धा । 'अनित्याशुचिदु खानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या' (यो सू २–५), 'दु खजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' (न्या सू १–१–२) इत्यादिदर्शनात् । तथाप्यात्मानात्मनोरन्योन्यस्मिन्नन्योन्यात्मकताबुद्धिरन्योन्यधर्मवत्त्वबुद्धिश्चेत्येवरूपा सत्यमिथ्यासभेदप्रत्ययरूपा च न क्वचिदप्यन्यत्र दर्शनेऽभ्युपगतेत्यय विशेषो वेदान्तप्रक्रियायाम् ॥

अस्याश्चाविद्याया आत्मानात्मस्वरूपविवेकाभावो हेतुरित्यप्यवगत यथोदाहृतभाष्यवाक्येभ्य एव । यद्यप्यभाव स्वतो न हेतुर्भवितु प्रभवति कस्यचित् । अभावत्वादेव, अभावस्य निर्विशेषत्वात् सिकताभावस्यापि तैलकार्यनिष्पादनसामर्थ्यं भवेदित्यतिप्रसङ्गाच्च । तथाप्यनिश्चितस्वरूपे वस्तुनि विविधविकल्पोत्थितिदर्शनात्, अनिश्चितमात्मतत्त्वमेव विविधानात्मरूपेण विकल्प्यत इति नैतच्चित्रम् । तथा ह्यभियुक्ता

'अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता ।
सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पित ॥' (मां का २–१७) इति ॥

तस्माद्वस्तुस्वरूपविवेकाभावेन निमित्तेन मृषाविकल्पनरूपाध्यासस्य लोके दृष्टत्वात्, इहाप्यात्मानात्मस्वरूपविवेकाभावनिबन्धन एव तदन्योन्याध्यास इत्यवगम्यत इत्यनवद्यम् । सोऽय विवेकाभाव, 'अज्ञानम्, अग्रहणम्, अनवबोध, अनवगम, अप्रतिबोध.'– इत्यादिपर्यायशब्दैरपि ज्ञानाभावबोधकैर्व्यपदिश्यते भाष्ये । क्वचिच्च मिथ्याज्ञानकारणत्वात् कारण

बीजम्, निद्रा, सुप्ति –इत्यपि । तदपेक्षया मिथ्याज्ञानमेव कार्यम्, फलम्, स्वप्न इति च व्यवहृतोऽभियुक्तै । तद्यथा –

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञ कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यत ॥ ११ ॥

द्वैतस्याग्रहण तुल्यमुभयो प्राज्ञतुर्ययो ।
बीजनिद्रायुत प्राज्ञ सा च तुर्ये न विद्यते ॥ १३ ॥

स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।
न निद्रा नैव च स्वप्न तुर्ये पश्यन्ति निश्चिता ॥ १४ ॥

अन्यथा गृह्णत स्वप्नो निद्रा तत्त्वमजानत ।
विपर्यासे तयो क्षीणे तुरीय पदमश्नुते ॥ १५ ॥

इति चागमप्रकरणे श्रीगौडपादाचार्याः ॥

अथेदानीमविद्याकार्यं विवेक्ष्यते । बृहदारण्यके तावद् विद्याविद्ये एव प्रदर्शिते दृश्येते –

अथ यत्रैन घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भय पश्यति तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाह मेवेद सर्वोऽस्मीति मन्यते सोऽस्य परमो लोक ॥' बृ ४-३-२०, पा ८८९

अत्र स्वप्नोदाहरणेन लोकसिद्धमेवेदमविद्याकार्यमिति दर्शित भवति । न हि स्वप्ने ज्ञातृज्ञानज्ञेयविभागो वा क्रियाकारकफलविभागो वा वस्तुत एवास्ति, मृषावासनानिमित्त भ्रान्तिमात्रमेव तु तत्सर्वमिति सर्व लोकप्रसिद्धमेतत् । अथ च तत्काले स्वप्नदृक् 'तथ्यत एव मा केचन घ्नन्ति, वशीकुर्वन्ति, हस्ती विद्रावयति च, अहो गर्ते पतितोऽहम्, हा कष्ट वर्तते !' इति मन्यते । एव विद्यावासनावशतो 'देव सवृत्तोऽहम्, राज्येऽभिषिक्तोऽहम्, सर्वात्मभाव गतोऽहम्' इति च मन्यते इति सर्वेषा न प्रत्यक्षमेतत् । यथैव स्वप्ने तथैव जागरितेऽप्यध्यासकार्यं वेदितव्यमिति दर्शयति श्रुति । भाष्यवाक्यतोऽप्येतदेवमिति विज्ञायते –

(१) मृषैव वासनानिमित्त प्रत्ययोऽविद्याख्यो जायते । तदेतदुच्यते पुन स्वप्नदृश भ्रन्तीवेति । । अत इदमविद्याया सतत्त्वमुक्त भवति । सर्वात्मान सन्तमसर्वात्मत्वेन ग्राहयति । आत्मनोऽन्यद्वस्त्वन्तरमविद्यमान प्रत्युपस्थापयति । आत्मानमसर्वमापादयति । ततस्तद्विषय कामो भवति । यतो भिद्यते कामत क्रियामुपादत्ते । तत फलम् ॥ बृ भा ४-३-२०, पा ८८९, ८९०

अत एव सूत्रभाष्येऽपीत्थ लिखितमस्ति –

(२) तमेतमविद्याख्यम् आत्मानात्मनोरितरेतराध्यास पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ता, सर्वाणि च शास्त्राणि विधि प्रतिषेधमोक्षपराणि । अध्या भा पा २

(३) एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूप कर्तृत्व भोक्तृत्वप्रवर्तक सर्वलोकप्रत्यक्ष ॥ अध्या भा पा ४

(४) अस्यानर्थहेतो प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते ॥ अध्या भा पा ४

## विद्याहेतुस्वरूपकार्याणि –

२४ 'अस्यानर्थहेतो' इत्याद्यधस्तादुदाहृतभाष्यवाक्ये विद्या-हेतुस्वरूपकार्याण्यपि पुञ्जीकृत्य प्रदर्शितानि । अविद्या हि सर्वानर्थहेतु, प्रमाणप्रमेयकर्तृत्वभोक्तृत्वव्यवहारजनकत्वात् । न ह्यसति प्रमाण व्यवहारे द्वितीयवस्तुसद्भावज्ञान समस्ति । न च द्वितीयवस्तुज्ञानमन्तरेण तद्विषय कामो भय वा समुद्भवेत् । न च कामभयादिदोषसमुत्थान विना इष्टानिष्टप्राप्तिपरिहारार्थं प्रवृत्तिनिवृत्ती प्रादुष्याताम्, तन्निष्पन्न-फलभोगो वा । तस्मादविद्यैव प्रमाणादिव्यवहारजनकत्वद्वारेण सर्वानर्थ-हेतुरिति गम्यते । इहार्थोऽप्यनर्थ एव । तस्य क्षयिष्णुत्वे सति, विनाशकृत-दुःखापादकत्वात्, स्वलाभार्थं भूयो भूय आयासलक्षणप्रवृत्तिप्रयोजकत्वा-च्चेति कृत्वा हि 'अस्यानर्थहेतो' इति विशेषणादानम् । क्षयिष्णुत्व च क्रियासाध्यस्य 'तद्यथेह कर्मजितो लोक क्षीयत एवमेवामुत्र पुण्यजितो लोक क्षीयते' (छा ८-१-६) इत्यादिन्यायोपबृंहितश्रुतिसिद्धम् । अविद्याप्रहाणहेतुत्व च विद्याया प्रसिद्धमेव शुक्तिरजतरज्जुसर्पादिभ्रान्ति-

निरासकत्वदर्शनाच्छुक्तिरज्ज्वादिविद्यायाः । तथैवात्राप्यात्मैकत्वविद्याया आत्माविद्यानिवारकत्वेन कार्यवत्त्वमिति श्लिष्यते । तदेव तावदुक्तं भवति '**अस्यानर्थहेतोः** प्रहाणायात्मैकत्वविद्याप्रतिपत्तये' इति यावदुक्तं भवति **विद्याकार्यम**विद्यानिवृत्तिः, **विद्यास्वरूपं** चात्मैक्यमेव परमार्थ इति विज्ञानमिति । **विद्याहेतुस्तु 'सर्वे वेदान्ता आरभ्यन्ते'** इत्यनेन दर्शितः । 'स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो' (छा ६-८-७) इत्यादिभिर्हि वेदान्तैः सर्वविधविकल्पानाम् आत्मैकास्पदत्वं जिज्ञासोः परमात्मतादात्म्यं च स्फुटं प्रतिपाद्यत इति ॥

**प्रमातृत्वकर्तृत्वयोराविद्यकत्वोपपत्तिः –**

अविद्याख्यमध्यासं पुरस्कृत्य सर्वप्रमाणप्रमेयव्यवहाराणां सर्वशास्त्राणां च प्रवृत्तिरिति प्रतिज्ञातं पूर्वतनप्रघट्टकोदाहृतभाष्यवाक्ये । तच्चेदं व्यवहाराणामविद्याकृतत्वं नाम मिथ्याज्ञानापरपर्यायाध्यासनिमित्तकत्वमेवेत्यध्यासप्रतिज्ञावाक्य एव स्पष्टीकृतमस्ति भाष्ये – मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य 'अहमिदम्', 'ममेदम्' इति नैसर्गिकोऽयं लोकव्यवहार' इत्यत्र, अध्यासो नाम मिथ्याबुद्धिरिति च स्वाभिप्रायः स्फुटीकृतः '**अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचाम**' इति । न च मिथ्याबुद्धिरूपाविद्यायाः शब्दप्रत्ययादानलक्षणव्यवहारस्य च हस्तपुस्तकयोरिव संयोगः, मृद्घटयोरिवोपादानोपदेयभावलक्षणः संबन्धो वा चिन्तयितुमपि शक्यते । अतो मिथ्याबुद्धिनिबन्धन एव प्रमाणप्रमेयादिव्यवहार इत्येव **भाष्यार्थ** इति गम्यते । अत एव हि श्रुतिः कार्यकरणसंघातस्य नात्मना नित्यसंबन्ध इति द्योतयितुं वक्ति –

'**स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव ।**

**स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि**' (बृ ४-३-७)

**इति** । शरीरज्ञानेन्द्रियकर्मेन्द्रियसंबन्धाभावेऽपि तत्कर्म करोतीव चलतीव च,

वस्तुतस्तु स्वप्ने न किञ्चित् कर्म करोति—इति खलु श्रुत्यर्थ । 'अतिक्रामति मृत्यो रूपाणि ' इति वाक्य तु भाष्ये एव व्याख्यातम् —

मृत्यु कर्माविद्यादि , न तस्यान्यद्रूप स्वत , कार्यकरणान्येवास्य रूपाणि । अतस्तानि मृत्यो रूपाणि अतिक्रामति क्रियाफलाश्रयाणीति ॥ बृ भा ८७१

एतादृश श्रुत्यभिप्राय मनसि कृत्वैव 'कथ पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ?' इत्याशङ्कामुत्थाप्य प्रत्यवोचद् भाष्यकार — '**उच्यते । देहेन्द्रियादिष्वहममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः**' इति । अत्र प्रमाणव्यवहार मात्रस्याविद्यावद्विषयत्व प्रतिबुबोधयिषुर्भगवान् न किञ्चित् प्रमाणमुदाहरति इति स्पष्टमेव । अत सार्वत्रिकानुभवमेवाश्रित्योच्यते यत् प्रमातृत्वमेव तावद्देहेन्द्रियाभिमानमन्तरा न स्वात्मान लभत इतीति गम्यते । अत एव भगवान् देहादिभि. सबन्धम् आत्मनो मिथ्याभिमानकृतम्—इति पदे पदे प्राह —

(१) तस्मान्मिथ्याप्रत्ययनिमित्तत्वात् सशरीरत्वस्य सिद्ध जीवतोऽपि विदुषोऽशरीरत्वम् ॥ सू भा १-१-४, पा २२

(२) विवेकाविवेकमात्रेणैवात्मनोऽशरीरत्व सशरीरत्व च । मन्त्रवर्णात् 'अशरीर शरीरेषु' इति ॥ सू भा १-३-१९ पा ११३

(३) देहे सबन्धो देहसबन्ध । क पुनर्देहसबन्ध ? देहादिरय सघातोऽहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्ति ॥ सू भा २-३-४८, पा ३०१

इति । 'तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीर प्रियाप्रियाभ्याम्' (छा ८-१२-१) इति श्रुतिव्याख्यानावसरे सुस्पष्टमाह—

(४) 'शरीरम्' इति अत्र सहेन्द्रियमनोभिरुच्यते । तच्छरीरम् अस्य सप्रसादस्य त्रिस्थानतया गम्यमानस्य अमृतस्य मरणादिदेहेन्द्रियमनोधर्मवर्जितस्य इत्येतत् । आत्मन भोगाधिष्ठानम् । यस्येदमीदृश नित्यमेव मृत्युग्रस्त धर्माधर्मजनितत्वात् प्रियाप्रियवदधिष्ठानम् , तदधिष्ठित स्तद्वान् सशरीरो भवति । अशरीरस्वभावस्यात्मन 'तदेवाहं शरीरम्',

शरीरमेव चाहम्' इत्यविवेकात्मभाव सशरीरत्वम् । अत एव सशरीर सन् आत्तो ग्रस्त प्रियाप्रियाभ्याम्' (छा ८-१२-१, पा ५९७)

इति । एतेन **कर्तृत्वभोक्तृत्वाध्यासोऽपि** व्याख्यात । तत्रापि हि समान कार्यकरणसघाते आत्मत्वाभिनिवेशपूर्विकैव प्रवृत्तिरिति । तथा हि श्रुतय स्मृतयश्च कार्यकरणव्यापारेणैव तत्तद्व्यापारवत्त्वमाहुरात्मन, केवलस्य च तद्विविक्तता च । भाष्य च तत्र तत्र तदनुगुणम् इति । तद्यथा–

(१) प्राणन्नेव प्राणो नाम भवति । वदन् वाक्पश्यश्चक्षु शृण्वञ्छ्रोत्र मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव । स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीत ॥ बृ १-४-७

भाष्यम्– तान्येतानि प्राणादीन्यस्यात्मन कर्मनामानि । कर्मजानि नामानि कर्मनामान्येव न तु वस्तुमात्रविषयाणि । यावदयमेव वेद, पश्यामि शृणोमि स्पृशामीति स्वभावप्रवृत्तिविशिष्ट वेद, तावदजमा कृत्स्नमात्मान न वेद । कथ पुन पश्यन् वेदेति ? आह– आत्मेत्येव । आत्मेति प्राणादीनि विशेषणानि यान्युक्तानि तानि यस्य स आप्नुवस्तानि आत्मेत्युच्यते । स तथा कृत्स्नविशेषोपसहारी सन् कृत्स्नो भवति । । तस्मादात्मेत्येवोपासीत ॥ बृ भा पा ६६०

(२) स वा अय पुरुषो जायमान शरीरमभिसपद्यमान पाप्मभि ससृज्यते स उत्क्रामन् म्रियमाण पाप्मनो विजहाति ॥ बृ ४-३-८

भाष्यम्– पाप्मभि पाप्मसमवायिभिर्धर्माधर्माश्रयै कार्यकरणैरित्यर्थ । तस्मात् सिद्धमस्यात्मज्योतिषोऽन्यत्व कार्यकरणेभ्य पाप्मभ्य, सयोगवियोगाभ्याम् । न हि तद्धर्मत्वे सति तैरेव सयोगो वियोगो वा युक्त ॥ बृ भा पा ८७६

(३) आत्मेन्द्रियमनोयुक्त भोक्तेत्याहुर्मनीषिण ॥ का १-३-४

भाष्यम्– आत्मेन्द्रियमनोयुक्त शरीरेन्द्रियमनोभि सहित सयुक्तम् आत्मान भोक्तेति ससारीत्याहुर्मनीषिण विवेकिन । न हि केवलस्यात्मनो भोक्तृत्वमस्ति, बुद्ध्याद्युपाधिकृतमेव तस्य भोक्तृत्वम् ॥

का भा पा ८०

(४) अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ गी १८-१४
शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ गी १८-१५

भाष्यम् - इच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयोऽधिष्ठानं शरीरम् । तथा कर्ता उपाधिलक्षणो भोक्ता। करणं च श्रोत्रादिकं शब्दाद्युपलब्धये पृथग्विधं नानाप्रकारं तद् द्वादशसंख्यम् । विविधाश्च पृथक्चेष्टा वायवीया प्राणापानाद्या । दैवं चैव दैवमेव चात्रैतेषु चतुर्षु पञ्चमं पञ्चानां पूरणम् आदित्यादि चक्षुराद्यनुग्राहकम् ॥ गी भा पा २६२

(५) तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ गी १८-१६

भाष्यम्- एवं यथोक्तैः पञ्चभिर्हेतुभिर्निर्वर्त्ये सति कर्मणि । 'तत्रैवं सति' इति दुर्मतित्वस्य हेतुत्वेन संबध्यते । तत्र एतेषु आत्मानन्यत्वेन अविद्यया परिकल्पितैः क्रियमाणस्य कर्मणः 'अहमेव कर्ता' इति कर्तारम् आत्मत्वेन केवलं शुद्धं तु यः पश्यति अविद्वान् । कस्मात् ? वेदान्ताचार्योपदेशन्यायैरकृतबुद्धित्वात् असंस्कृतबुद्धित्वात् । अतोऽकृतबुद्धित्वात् न स पश्यत्यात्मनस्तत्त्वं कर्मणो वा इत्यर्थः । अतः दुर्मतिः कुत्सिता विपरीता दुष्टा अजस्रं जननमरणप्रतिपत्तिहेतुभूता मतिः अस्येति दुर्मतिः ॥ गी भा पा २६३

(६) अनादित्वान्निर्गुणत्वात् परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ गी १३-३१

भाष्यम्- शरीरस्थोऽपि शरीरेषु आत्मनः उपलब्धिर्भवतीति शरीरस्थ उच्यते । तथापि न करोति, तदकरणादेव तत्फलेन न लिप्यते । कः पुनर्देहेषु करोति लिप्यते च ? तत्राय परिहारो भगवता स्वेनैवोक्तः 'स्वभावस्तु प्रवर्तते' (गी ५-१४) इति । अविद्यामात्रस्वभावो हि करोति लिप्यते इति व्यवहारो- भवति । न तु परमार्थतः एकस्मिन् परमात्मनि तदस्ति ॥ गी भा पा २१६

## विधिप्रतिषेधशास्त्रस्याविद्यापुरःसरं प्रवृत्तिः-

२६ 'सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि' पुरस्कृत्यैवाध्यासं प्रवृत्तानीति भाष्यवाक्यार्थ इदानीं विवेचनीयोऽस्ति । अयमत्र

विशेषो लौकिकशास्त्रीयव्यवहारयो यद्देहव्यतिरिक्तात्मज्ञान लौकिकेषु कर्मसु नोपयुज्यते । एतज्जन्मदेहगतेष्टानिष्टप्राप्तिपरिहारमात्रदृष्टित्वा-ल्लौकिकानाम् । शास्त्रीये तु व्यवहारे जन्मान्तरलोकान्तरयोरपीष्टानिष्ट प्राप्तिपरिहारोपायविशेषानुसन्धानमेवाधिकारित्वात् तत्रात्मास्तित्वज्ञानमा-वश्यकमिति । यथोक्त बृहदारण्यकभाष्ये **'न चासति जन्मान्तर-सबन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात् । स्वभाववादिदर्शनात् । तस्माज्जन्मान्तरसबन्ध्यात्मास्तित्वे जन्मान्त-रेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्र प्रवर्तते'** (बृ भा स १-१-१) तत्रेदश शास्त्रीयव्यवहार किमविद्याकृत एव स्यादुत नेति भवति सशय । शास्त्रकृतत्वाद् देहव्यतिरिक्तात्मज्ञानस्य । तत्र यदि तावद् भाष्यप्रतिज्ञा-सिद्ध्यर्थं द्वितीय कल्प आश्रीयेत, तर्हि **'अध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः'** इति सामान्येनोपसहारग्रन्थे प्रतिज्ञात हीयेत । शास्त्रकृतकर्तृत्वादिव्यवहारस्यानाविद्यकत्वस्वीकरणात् । अथ पुन सोऽप्य विद्यापुरःसर एवेति प्रथम कल्प एवोपादीयेत, तर्हि शास्त्रस्य विपरीत बोधकत्वादप्रामाण्य प्राप्नोतीति । तत्राविद्याकृतत्वपक्षमेवालम्ब्याह श्रुति –

" प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवर येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यु ते पुनरेवापियन्ति ॥
अविद्यायामन्तरे वर्तमाना स्वय धीरा पण्डितमन्यमाना ।
जङ्घन्यमाना परियन्ति मूढा अन्धेनैव नीयमाना यथान्धा ॥
(मु १-२-७, ८)

इति । न च तर्हि शास्त्राप्रामाण्यम् । पुरुषार्थोपायज्ञापनमात्रपरत्वात् शास्त्रस्य । तदेतदभिसधायाह भाष्यकृत् –

**(१) शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वा आत्मन परलोकसबन्धम् अधिक्रियते, तथापि न वेदान्तवेद्यम् अशनाया द्यतीतम्, अपेतब्रह्मक्षत्रादिभेदम् असससार्यात्मतत्त्वम् अधिकारेऽपेक्ष्यते ।**

अनुपयोगात्, अधिकारविरोधाच्च । प्राक्च तथाभूतात्मविज्ञानात् प्रवर्तमान शास्त्रम् अविद्यावद्विषयत्व नातिवर्तते । तथा हि 'ब्राह्मणो यजेत' इत्यादीनि शास्त्राणि, आत्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते ॥ सू भा उपो पा ३

(२) यद्यपि शास्त्रागत नित्य कर्म तथाप्यविद्यावत एव भवति । यथा प्रतिषेधशास्त्रावगतमपि ब्रह्महत्यादिलक्षण कर्मानर्थकारणम् अविद्या-कामादिदोषवतो भवति । अन्यथा प्रवृत्त्यनुपपत्ते । तथा नित्यनैमित्तिक-काम्यान्यपीति ॥ गी भा १८-६६, पा २९३

(४) योऽपि देहादिव्यतिरिक्तात्मवादी आत्मानमेव केवल कर्तार पश्यति, असावप्यकृतबुद्धि । अतोऽकृतबुद्धित्वान्न स पश्यत्यात्मनस्तत्त्व कर्मणो वा- इत्यर्थ ॥ गी भा १८-१६, पा २६३

(४) यदुपमृद्य कर्त्रादिकारकविशेषम् आत्मैकत्वविज्ञान विधीयते । सर्पादिभ्रान्तिविज्ञानोपमर्दकरज्ज्वादिविषयविज्ञानवत्, प्राप्त कर्मविधि श्रुतीना निर्विषयत्वाद् विरोध । विहितानि च कर्माणि । स च विरोधो न युक्त । प्रमाणत्वाच्छ्रुतीनाम् इति चेत् । न । यथाप्राप्तमेव कारकास्तित्व मुपादाय उपात्तदुरितक्षयार्थं कर्माणि विदधच्छास्त्र मुमुक्षूणा, फलार्थिना फलसाधन च, न कारकास्तित्वे व्याप्रियते ॥ तै भा शी उपस, पा २७८

(४) यत्तूक्त वेदैकदेशस्याप्रामाण्य कर्मविषये द्वैताभावात्, अद्वैते च प्रामाण्यम् इति । तन्न । यथाप्राप्तोपदेशार्थत्वात् । । तस्मात् यथा प्राप्तमेव द्वैतमविद्याकृत स्वाभाविकम् उपादाय स्वाभाविक्यैवाविद्यया युक्ताय रागद्वेषादिदोषवते यथाभिमतपुरुषार्थसाधन कर्म उपदिशत्यग्रे । पश्चात् प्रसिद्धक्रियाकारकफलस्वरूपदोषदर्शनवते तद्विपरीतौदासीन्यस्वरू पावस्थानफलार्थिने तदुपायभूतात्मैकत्वदर्शनात्मिका ब्रह्मविद्यामुपदिशति ॥ बृ भा ५-१-१, पा ९५३

उपासनानां शास्त्रविहितानामपि मानसकर्मत्वाविशेषात् यथाप्राप्तमेव क्रियाकारकादिद्वैतास्तित्वमादायैवाविद्यावत्पुरुषान् प्रत्युपदेश इति न तत्राधिक वक्तव्यमस्ति । अत एवमाह भगवान् भाष्यकार –

√ (५) तत्राविद्यावस्थायां ब्रह्मण उपास्योपासकादिलक्षण सर्वो व्यवहार ॥ सू भा १-१-१२, पा ३५

## मोक्षशास्त्रस्याविद्वद्विषयत्वेऽपि विशेषः–

२७ अथ क्रमप्राप्त मोक्षशास्त्र प्रति चिन्ता कर्तव्या । तत्रापि शास्तृशास्त्रशिष्यवेद्यवेदितृवेदनादिविभागरूप यथाप्राप्त द्वैतमूरीकृत्यैव ब्रह्मविद्योपदेशात्, समानमविद्यावद्विषयत्व विधिप्रतिषेधशास्त्रै । इयांस्तु विशेष, विधिशास्त्र पुरुषार्थोपायोपदर्शनमात्रेण विश्राम्यति, न तु क्रिया-कारकफलभेदस्य न [illegible] वा ब्रूते, मोक्षशास्त्र पुन क्रियाकारक-फल[illegible] जिज्ञासु तदात्मनैवावस्थानलक्षणे मोक्षेऽभिषेचयतीति । अत एव विधिशास्त्रमोक्षशास्त्रयोरविरोध । विधिशास्त्रस्य ज्ञानात् पूर्वमेवा-विद्यावस्थाया प्रवृत्ते, जाते तु तत्त्वे द्वैताभावाच्च । अपि च शास्त्रदृष्ट्या तदनुसारिण आचार्यस्य दृष्ट्या वा वस्तुतो कस्यचन द्वैतस्याभावात्, शिष्य-जनोपदेशार्थमेव शास्त्रादिविकल्पाङ्गीकारात्, न कदापि द्वैताद्वैतविरोध । तदेतदभिसन्धायैव 'आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते' इत्युक्तम् । अत एव हि भाष्यकार श्रुत्यनुरोधेनाविद्यावस्थाया द्वैतव्यवहारम् अद्वैते च तदभाव पदे पदे बोधयतीति सर्वमनाकुलम् ॥

(१) पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभि परिच्छिद्यमानो बालै शारीर इत्युपचर्यते । यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभ परिच्छिन्नवदवभासते । तद्वत् । तदपेक्षया च कर्मकर्तृत्वादिभेदव्यव-हारो न विरुध्यते प्राक् 'तत्त्वमसि' इत्यात्मैकत्वोपदेशग्रहणात् । गृहीते त्वात्मैकत्वे बन्धमोक्षादिसर्वव्यवहारपरिसमाप्तिरेव स्यात् ॥

सू भा १-२-६, पा ६७

(२) अविद्यावत्त्वेनैव जीवस्य सर्व संव्यवहार सततो वर्तते ॥

सू भा १-४-३, पा १४९

(३) सर्वव्यवहाराणामेव प्राग् ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्ते स्वप्नव्यवहारस्येव प्राक् प्रबोधात् ॥ सू भा २-१-१४, पा १९८

(४) एको हि प्रत्यगात्मा भवति न द्वौ प्रत्यगात्मानौ सम्भवत । एकस्यैव तु भेदव्यवहार उपाधिकृतो यथा घटाकाशो महाकाश इति । ततश्च ज्ञातृज्ञेयादिभेदश्रुतय प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधि

प्रतिषेधशास्त्रं च–इति सर्वमेतदुपपद्यते । तथा च श्रुतिः 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यविद्याविषये सर्वं व्यवहारं दर्शयति 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' (बृ. ४-५-१२) इति विद्याविषये सर्वं व्यवहारं वारयति ॥ सू. भा. १-२-२० पा. ८१

(२) 'उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते' ॥ गौ. १-१८

भाष्यम्. ननु शास्ता शास्त्रं, शिष्य –इति विकल्पः कथं निवृत्त इति ? उच्यते । विकल्पो विनिवर्तेत यदि केनचित् कल्पितः स्यात् । यथाऽयं प्रपञ्चो माया रज्जुसर्पवत्, तथाऽयं शिष्यादिभेदविकल्पोऽपि प्राक्प्रतिबोधादेव उपदेशनिमित्तः । अत उपदेशादयं वादः – शिष्यः शास्ता शास्त्रमिति । उपदेशकार्ये तु ज्ञाने निर्वृत्ते ज्ञाते परमार्थतत्त्वे द्वैतं न विद्यते ॥

गौ. का. भा. १. १८. पा. १९१

## शास्त्रस्यान्त्यप्रमाणत्वम् –

२८. अध्यारोपापवादप्रक्रियाया एतावता निरूपणेनेदं सिद्धम् यद् वेदान्तप्रमाणस्याविद्यानिरसनद्वारेणात्मैकत्वप्रतिपादन एव व्यापारो न त्वात्मनि कस्यचिदतिशयस्य संपादने इति । आत्मा हि न कस्यचित् प्रमाणस्य विषयः, परमार्थतोऽद्वयत्वात्, नित्यापरोक्षस्वभावत्वाच्च स्वयं प्रसिद्धो नान्यत् किञ्चनापेक्षते स्वसाधनाय । यदाप्यविद्यासिद्धद्वैतप्रतिभासः, तदापि वाङ्मनसादिसर्वकरणसाक्षिस्वयंज्योतिश्चैतन्येनान्यत् सर्वमवभासयन्नास्ते । **'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥'** (श्वे. ६-११) इति श्रुतेः । प्रत्यक्षादिप्रमाणानि तु नित्यशुद्धबुद्धमुक्तस्वभावमेव सन्तम् अविद्यया प्रमातारमापाद्यैव तमाश्रित्य प्राणान् धारयन्ति, तस्यैव च भासा विभान्ति च । 'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः' (बृ. ३-४-२), 'अदृष्टो द्रष्टा ...' (बृ. ३-७-२३), 'यन्मनसा न मनुते येनाहुर्मनो मतम्' (के. १-६), 'तस्य भासा सर्वमिदं विभाति'

(मु २-२-११) – इत्यादिश्रुतिभ्य । देहाद्यात्मत्वभ्रान्त्यवस्थायामपि सर्वस्यान्तरतम सन् साक्षादपरोक्षतयैव स्वेन सर्वातिशायिस्वरूपेण वर्तत एव । 'यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर ' (बृ ३-४-१) इति श्रुते ।³ वेदान्तास्तत्स्वरूपसमर्पणे प्रमाणम् इति व्यवहारस्तु तस्मिन्नध्यारोपिताहप्रत्ययविषयत्वापनयनमात्रेणेति ज्ञेयम् । प्रत्यक्षादिप्रमाणान्तरेण नैव ज्ञाप्यत इत्यभिप्रायेण चैव व्यवहार ॥

किञ्चान्यत् । यावदेव शास्त्रेण कल्पितप्रमातृत्वमपह्नुत्यास्य पारमार्थिक ब्रह्मस्वरूप न बोध्यते, तावदेव तु प्रत्यक्षादिप्रमाणाना विधिनिषेधशास्त्राणा – कि बहुना ? वेदान्तानामपि – प्रामाण्य नाम । तत ऊर्ध्वं त्वद्वैतब्रह्मरूपेणैवावशेषात् तत्रात्मनि न कश्चन प्रमाणप्रमेयादिव्यवहार अत एव वेदान्तशास्त्रम् ' अन्त्य प्रमाणम् ' इति व्यपदिश्यते वेदान्ताभियुक्तै ॥ ⁴

(१) [अ] रूपाद्यभावाद्धि नायमर्थ प्रत्यक्षस्य गोचर । लिङ्गाद्यभावाच्च नानुमानादीनाम् ॥ सू भा २-१-७ पा १८८

[आ] अविषयत्वे ब्रह्मण शास्त्रयोनित्वानुपपत्तिरिति चेत् न । अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । न हि शास्त्रमिदतया विषयभूत ब्रह्म प्रतिपिपादयिषति, कि तर्हि प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पित वेद्यवेदितृवेदनादिभेदम् अपनयति ॥ सू भा १-१-४, पा १६

(२) न ह्यात्मा आगन्तुक कस्यचित् । स्वयसिद्धत्वात् । न ह्यात्मा आत्मन प्रमाणमपेक्ष्य सिध्यति । तस्य हि प्रत्यक्षादीनि प्रमाणान्यप्रसिद्धप्रमेयसिद्धये उपादीयन्ते ॥ सू भा २-३-७, पा २६८

(३) न ह्यहप्रत्ययविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थ सम एक कूटस्थनित्य पुरुषो विधिकाण्डे तर्कसमये वा केनचिदधिगत सर्वस्यात्मा ॥ सू भा १-१-४, पा २०

(४) ' त त्वौपनिषद पुरुष पृच्छामि ' (बृ ३-९-२६) इति चौपनिषदत्वविशेषण पुरुषस्य, उपनिषत्स्वेव प्राधान्येन प्रकाश्यमानत्व उपपद्यते ॥ सू भा १-१-४, पा २०

(५) अपि च अन्त्यमिदं प्रमाणमात्मैकत्वस्य प्रतिपादकम्, नातः परं किञ्चिदाकाङ्क्ष्यमस्ति ॥ सू भा २-१-१४ पा १९९

(६) न ह्यात्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति । प्रमातृत्वं ह्यात्मनो निवर्तयत्यन्त्यं प्रमाणम् । निवर्तयदेव चाप्रमाणीभवति स्वप्नकालप्रमाणमिव प्रबोधे ॥ गी भा २-६९, पा ३९

(७) न हि क्वचित् साक्षाद् वस्तुधर्मस्य अपोढ्री दृष्टा श्रुता वा ब्रह्मविद्या । अविद्यायास्तु सर्वत्रैव निवर्तिका दृश्यते । तथा इहापि अब्रह्मत्वम् असर्वत्वं चाविद्याकृतमेव निवर्त्यता ब्रह्मविद्यया ॥ बृ भा १-४-१० पा ६६९

(८) प्राक् प्रबोधात् समाप्तत्वाभ्युपगमात् तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ २-४-१४) इत्यादिना हि प्रबोधे प्रत्यक्षाद्यभावं दर्शयति । प्रत्यक्षाद्यभावे श्रुतेरप्यभावप्रसङ्ग इति चेत् । न । इष्टत्वात् । 'अत्र पिताऽपिता भवति' (बृ ४-३-२२) इत्युपक्रम्य 'वेदा अवेदा' (बृ ४-३-२२) इति वचनात्, इष्यत एवास्माभिः श्रुतेरप्यभावः प्रबोधे ॥ सू भा ४-१-३ पा ४६०

(९) तस्मात्, 'अहं ब्रह्मास्मि' इत्येतदवसाना एव सर्वे विधयः सर्वाणि चेतराणि प्रमाणानि । न ह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति ॥ अपि चाहुः –

> अन्वेष्टव्यात्मविज्ञानात् प्राक् प्रमातृत्वमात्मनः ।
> अन्विष्टः स्यात् प्रमातैव पाप्मदोषादिवर्जितः ।
> देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः ।
> लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥ इति ॥

सू भा १-१-४ पा ४८

## विद्याविद्याव्यवहारोऽप्यविद्याभूमावेव –

२९. उक्तमेतद् यथा अविद्यापरपर्यायात्मानात्मेतराध्यास एवात्मनि सकलेतराध्यासोपमूलम् (२१), यथा च स एव सर्वप्रमाणप्रमेयव्यवहारप्रवृत्तिहेतुः, सर्वशास्त्रप्रवृत्तिहेतुश्चेति । उक्तं च यथा वेदान्ता अपि प्रमाणव्यवहारगोचरत्वात्, आत्मैकत्वावगतेरूर्ध्वमप्रमाणीभवन्ति । इत्थं च विद्याविद्याव्यवहारोऽप्यविद्याभूमावेव, अविद्याया आत्मनि

बन्धकारित्वं विद्यायाश्च तदपहारेण मोक्षकारित्वमित्यप्याविद्यकमेव — इत्यागुक्तमेव भवति । अथैवं मिथ्याभूतस्य वेदान्तप्रमाणस्य मिथ्याभूताविद्याप्रहाणपूर्वकं मोक्षजनकत्वे, किमात्मैकत्वावगतिरपि मिथ्यैव, उत सत्या ? यदि मिथ्या, मिथ्यैव स्यात् तत्फलो मोक्षोऽपीति किं प्रयोजनं स्याद् वेदान्तशास्त्रम् ? अथात्मावगतिः सत्येत्युच्यते, तत्र कथं मिथ्यावेदान्तवाक्येन सत्यावगतिजन्म ?—इति चोदिते, द्वेधा विभज्य परिहारो वक्तव्यो भवति । कथम् ? 'वाक्येनावगतिर्जायते' इत्यत्र यदि वृत्तिरेवावगतिः, तर्हि मिथ्यैव सापि । स्वाप्नखड्गेन स्वाप्नव्याघ्रसंहारवत् तयाप्यविद्याप्रहाणं भविष्यत्येव साप्याविद्यकत्वाविशेषात् स्वप्नमपि नश्यति । स्वप्नव्याघ्रायसम्प्रष्टस्येव सचेतस्ताप्राप्तिरिव मिथ्याविद्यातत्प्रहाणास्पृष्टस्यैव स्वात्मन्यवस्थानं मोक्ष इत्युपचरिष्यते । नन्वेतस्मिन् पक्षे बन्धस्य मिथ्यात्वात् मोक्षोऽपि मिथ्येत्येव प्राप्नोति । तदप्यस्तु । परमार्थस्य का हानिः ? अथ परमार्थ एव कथं सिध्येत् ? नैव तस्य सिद्धिं प्रति शङ्का । स्वतःसिद्धत्वादित्यवेहि । न ह्यध्यस्तविकल्पाः स्वास्पदपरमार्थं विना क्षणमपि स्वात्मानं बिभृयुः । अतस्तदपनयनेनैव परमार्थज्ञानं भविष्यतीत्यास्तां तावत् । अथ प्रत्यक्षादिप्रमाणेषु स्वस्वविषयावगत्यर्थं व्यापृतेषु या अन्ततो वृत्तिरुपजायते तस्या अन्ते नित्यसिद्धमेवात्मचैतन्यम् अभिव्यज्यते इत्यालोचनेन प्रमाणफलं नित्यसिद्धचैतन्यमेवेति वस्तुवृत्तमाश्रीयते, तर्हीहापि वेदान्तवाक्यप्रमाणजनितवृत्त्यन्ते संजायमानचैतन्याभिव्यक्तिरेव प्रमाणफलमित्युपचर्यतामिति न कुचोद्यावसरः ॥

(१) न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥

गौ. का. २-३२, पा. २०४

भाष्यम् – यदा वितथं द्वैतम्, आत्मैवैकः परमार्थतः सन्, तदा इदं निष्पन्नं भवति – सर्वोऽयं लौकिको वैदिकश्च व्यवहारोऽविद्याविषय एवेति ॥

(२) कथं पुनः स्वरूपे व्यापाराभावे शास्त्रस्य द्वैतविज्ञाननिवर्तकत्वम् ? नैष दोषः । रज्ज्वां सर्पादिवदात्मनि द्वैतस्याविद्याध्यस्तत्वात् । आत्मा एतेष्वनुगतः, सर्वत्राव्यभिचारात् । तस्मान्निर्विशेष एवात्मनि सुखित्वादयो विशेषाः कल्पिताः । यत्त्वसुखित्वादिशास्त्रमात्मनः, तत्सुखित्वादिविशेषनिवृत्त्यर्थमेवेति सिद्धम् । 'सिद्धं तु निवर्तकत्वात्' इत्यागमविदां सूत्रम् ॥ गौ का भा २-३२, पा २०५

(३) विद्याविद्ययोस्तद्धर्मत्वम् इति चेत् । न । प्रत्यक्षत्वात् । विवेकाविवेकौ रूपादिवत् प्रत्यक्षावुपलभ्येते अन्तःकरणस्थौ । न हि रूपस्य प्रत्यक्षस्य सतो द्रष्टृधर्मत्वम् । अविद्या च स्वानुभवेन रूप्यते 'मूढोऽहम्' अविविक्तं मम विज्ञानमिति । तथा विद्याविवेकोऽनुभूयते । उपदिशन्ति चान्येभ्य आत्मनो विद्यां बुधाः । तथा चान्येऽवधारयन्ति । तस्मात् नामरूपपक्षस्यैव विद्याविद्ये । नामरूपे च नात्मधर्मौ । नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म ' (छा ८-१४-१) इति श्रुत्यन्तरात् । ते च पुनर्नामरूपे सवितर्यहोरात्रे इव कल्पिते । न परमार्थतो विद्यमाने ॥ तै भा २-८, पा ३१०

✓ (४) कथं त्वसत्येन वेदान्तवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिरुपपद्येत ? नैष दोषः । शङ्काविषादिनिमित्तमरणादिकार्योपलब्धेः । स्वप्नदर्शनावस्थस्य च सर्पदंशनोदकस्नानादिकार्यदर्शनात् । तत्कार्यमप्यनृतमेवेति चेत् ब्रूयात्, तत्र ब्रूमः । यद्यपि स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यमनृतम्, तथापि तदवगतिः सत्यमेव फलम् । प्रतिबुद्धस्याप्यबाध्यमानत्वात् ॥ सू भा २-१-१४, पा १९९

(५) अत्राह चोदकः – अवगतिः प्रमाणानां फलम्, कूटस्थनित्यात्मज्योतिःस्वरूपा इति च विप्रतिषिद्धम् । इत्युक्तवन्तमाह – न विप्रतिषिद्धम् । कथं तर्हि ? कूटस्थनित्यापि सती प्रत्यक्षादिप्रत्ययान्ते लक्ष्यते । तादर्थ्यात् । प्रत्यक्षादिप्रत्ययस्य अनित्यत्वे अनित्येव भवति, तेन 'प्रमाणानां फलम्' इत्युपचर्यते ॥ उ सा गद्य पा १००

## विद्यया अविद्यात्रयापबाधः –

३० यद्यपि ज्ञानाभावसंशयविपर्ययज्ञानानां त्रयाणामपि विद्यातो भिन्नत्वात् वस्तुतत्त्वावरकत्वाविशेषत्वेन विद्योदयसमसमयमेव

विनाशाच्च समानमविद्याशब्दार्हत्वम्, व्यपदिश्यन्ते च तेऽपि क्वचि दज्ञानाविद्यादिशब्दैः, तथापीह वेदान्तदर्शने यथोक्तं मिथ्याज्ञानमेव विशिष्य परिभाष्यते अविद्येति। तत्र निमित्तं तु यथोपपादितमेव प्रमाणादि-सर्वव्यवहारप्रवर्तकत्वेनानर्थहेतुत्वम्। यावद्धि स्वमात्मानं शरीरकरण-संहतं मन्यते, तावदयमात्मा 'शारीरः', 'जीवः', 'विज्ञानात्मा', 'विज्ञाता', 'द्रष्टा', 'श्रोता', 'कर्ता', 'भोक्ता' – इत्यादिभिस्तत्तदुपाधिसंबन्धद्योतकैः शब्दैर्व्यपदिश्यते। यावदेव चास्मिन्नध्यारोपितं प्रमातृत्वमनुवर्तते, तावदेव चायम् 'न जानामि', 'संशये', 'विपरीतं मे ज्ञानं जातम्', 'इदानीमनेन प्रमाणेन प्रमिनोऽम्यर्थं' – इति च ज्ञानाज्ञानव्यवहारस्याश्रयो भवति। अत एव च नैसर्गिकाविद्यावशात् स्वात्मन्यप्येवं व्यवहरति 'अहमज्ञो न जानाम्यात्मानम्', 'तत्र महान् संशयो मे कतमोऽयमात्मेति', 'पुत्रादीन् देहादिबहिर्भूतान्यप्यात्मत्वेन कदाचिद् विपर्यस्यामि'–इति। यदा तु स्व पारमार्थिकं स्वरूपं विजायते श्रुत्याचार्योपदेशलाभेनाविद्यामपास्य, तदा त्रिविकाभावसंशयरूपे अप्यविद्ये स्वयं व्यपगच्छत इति न तत्र पृथग् यत्नः कर्तव्यः। अविद्यापि समूला न विद्यया स्वव्यापारपूर्वकमपास्यते अवकर इव समार्जन्या, किं तु स्वोत्पत्तिमात्रेणान्धकार इवादित्येन। विद्योत्पत्तिस्तु वेदान्ताचार्योपदेशमात्राद् विद्याविद्योदासीननित्यसिद्धात्मस्वरूपज्ञापना-दित्यवोचाम ॥

(१) भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

मु २-२-८, पा १६३

(२) यदि ज्ञानाभावो, यदि संशयज्ञानम्, यदि विपरीतज्ञानं वा उच्यते 'अज्ञानम्' इति, सर्वं हि तत् ज्ञानेनैव निवर्त्यते ॥

बृ भा ३-३-१, पा ७९९

(३) तामसो हि प्रत्ययः, आवरणात्मकत्वादविद्या, विपरीतग्राहकः, संशयोपस्थापको वा अग्रहणात्मको वा। विवेकप्रकाशभावे तदभावात्।

तामसे च आवरणात्मके तिमिरादिदोषे सति, अग्रहणादेरविद्यात्रयस्योप लब्धे ॥ गी भा १३-२, पा १९२

(४) न हि 'अग्निरुष्ण, प्रकाशश्च' इति विज्ञानोत्पत्तौ यस्मिन्नाश्रये तदुत्पन्न तस्मिन्नेवाश्रये 'शीतोऽग्नि' 'अप्रकाशो वा' इति अविद्याया उपपत्ति नापि सशय, अज्ञान वा ॥ ई भा १८ पा १३

(५) तमेतम् अविद्याख्यम् आत्मानात्मनोरितरेतराध्यास पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ता ॥ अध्या भा पा २०

(६) यावद्धि अविद्या न निवर्तते तावद धर्मादिगोचरत्व जीवस्य जीवत्व च न निवर्तते ॥ सू भा १-४-६, पा १५४

(७) यावदेव चाय बुद्ध्युपाधिसबन्ध तावज्जीवस्य जीवत्व सम्सारित्व च ॥ सू भा २-३-३०, पा २८७

(८) यथा गृह्यमाणाया अपि शुक्तिकाया विपर्ययेण रजताभासाया अग्रहण विपरीतज्ञानव्यवधानमात्रम्, तथा ग्रहण ज्ञानमात्रमेव। विपरीत ज्ञानव्यपोहार्थत्वाज्ज्ञानस्य । एवमिहाप्यात्मनोऽलाभोऽविद्यामात्रव्यव धानम्। तस्मात्, विद्यया तदपोहनमात्रमेव लाभ ॥ बृ भा १-४ ७ पा ६६६

(९) यथा लोके द्रष्टुश्चक्षुष आलोकेन सयोगो यत्कालस्तत्काल एव रूपाभिव्यक्ति, एवम् आत्मविषय विज्ञान यत्काल तत्काल एव तद्विषय-ज्ञानतिरोभाव स्यात् ॥ बृ १-४-१०, पा ६७६

(१०) योऽय लौकिको वैदिकश्च व्यवहार स उत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्य अविद्याकार्यत्वादविद्यानिवृत्तौ निवर्तते अविद्यायाश्च विद्या विरोधान्निवृत्ति । विद्याया हि सत्याम्, उदिते सवितरि शार्वरमिव तम प्रणाशमुपैत्यविद्या ॥ गी भा २-६९, पा ३८

(११) सकृदुत्पन्नैव ह्यात्मप्रतिपत्तिरविद्या निवर्तयतीति नात्र कश्चित् क्रमोऽभ्युपगम्यते ॥ सू भा ४-१-२, पा ४६२

(१२) अविद्यावतोऽविद्यानिवृत्त्यनिवृत्तिकृतो विशेष आत्मन स्यादिति चेत्। न। अविद्याकल्पनाविषयत्वाभ्युपगमात् रज्जूषरशुक्तिकागगनाना सर्पोदकरजतमलिनत्वादिवददोष इत्यवोचाम । तिमिरातिमिरदृष्टिवत्, अविद्याकर्तृत्वाकर्तृत्वकृत आत्मनो विशेष स्यादिति चेत्। न। 'ध्यायतीव लेलायतीव' इति स्वतोऽविद्याकर्तृत्वस्य प्रतिषिद्धत्वात् ॥ बृ भा ४-४-६, पा ९१९

आगमतर्कयोरनुभवपर्यवसायित्वम्—

३१  इयता विचारसदर्भेणैतद् विज्ञात यदात्मनि प्रमातृत्वाध्यासलक्षणा अविद्यैव सर्वससारानर्थमूलम्, सा च वेदान्तवाक्यप्रमाणजनितया विद्ययैवापबाध्यते व्यवहारविषये, परमार्थतस्तु विद्याविद्याव्यवहारातीतमेवात्मतत्त्वं भवति। तत्र योऽसौ श्रुत्या समाद्रियमाण उपदेशक्रमविशेष – नित्यशुद्धबुद्धमुक्तस्वभावे परमात्मन्यविद्याप्रत्युपस्थापितस्य प्रमातृत्वस्यापह्नवेन स्वरूपसमर्पणलक्षण – सोऽसौ '**आगमः**' इति परिभाषितो वेदान्ताभियुक्तै। यद्यपि वेदान्तशास्त्रमप्यागमशब्देनैव व्यपदिश्यते प्रायश, भागवतादिपुराणेषु च पाञ्चरात्रादिमूलग्रन्थानाम् 'आगमा' इत्येव सज्ञा कृता, आप्तोपदेशादागता इति कृत्वा, तथापीह परमार्थस्यावाङ्मनसगोचरस्य सर्वाध्यारोपापवादेन य स्वरूपसमर्पणसमर्थ उपदेशक्रम, सोऽप्यागमशब्देन व्यवह्रियते सप्रदायविद्भिरिति बोध्यम्। तत्रेमानि भाष्यवाक्यान्युदाहरणम् –

(१) **रूपाद्यभावाद्धि नायमर्थ प्रत्यक्षस्य गोचर। लिङ्गाद्यभावाच्च नानुमानादीनाम्। आगममात्रसमधिगम्य एव त्वयमर्थो धर्मवत्॥ सू भा २-१-६, पा १८८**

[अत्र प्रत्यक्षादिशब्दसाहचर्यात्, आगमशब्दो वेदान्तशास्त्रवचन इति गम्यते॥]

(२) **परस्यापि सर्वज्ञप्रणीतागमसद्भावात् समानमागमबलम् इति चेत्॥ सू भा २-२-३८, पा २५७**

[अत्र माहेश्वराणा प्रमाणग्रन्थानाम् आगमशब्देन व्यपदेश॥]

(३) **आगमप्रधानेन मधुकाण्डेन ब्रह्मतत्त्व निर्धारितम्। पुनस्तस्यैवोपपत्तिप्रधानेन याज्ञवल्कीयेन काण्डेन पक्षप्रतिपक्षपरिग्रह कृत्वा विगृह्य वादेन विचारितम्। शिष्याचार्यसबन्धेन च षष्ठे प्रश्नप्रतिवचनन्यायेन सविस्तर विचार्योपसहृतम्॥ बृ भा ४-५-१, सबन्धग्रन्थे, पा ९३९**

[अत्र वेदभागयोरेव मधुमुनिकाण्डयो, 'आगमप्रधानम्', 'उपपत्तिप्रधानम्' इति च विशेषकरणात्, आगमोऽत्रोपदेशक्रमविशेष एव विवक्षित इति गम्यते॥

तत्र य कुशलबुद्धिर्वेदान्तवाक्यश्रवणमात्रेण स्व सर्वव्यवहारातीत स्वरूप विज्ञातु समर्थ, न तस्मिन् विषयेऽन्यत् प्रमाण साधन वा मृग्य मस्तीति स्पष्टमेव । सर्वा [illegible] स्वरूपे प्रतिष्ठितत्वात्तस्य । यद्यप्यध्यारोपदशायामपि स्वरूपप्रतिष्ठ एवासौ । स्वरूपस्यानपायित्वात्, अध्यारोपितविकल्पेन तदानीमपीषन्मात्रेणाप्यसबन्धाच्च तस्य । तथाप्यज्ञानत स्तत्काले स्वरूपात् प्रच्युत इवासीदिति तदपेक्ष्य विद्यया [illegible] स्वरूपे प्रतिष्ठित इत्युच्यत इत्यवधेयम् । सेय स्वरूपे प्रतिष्ठा **'आत्मानुभवः'** इति व्यपदिश्यते । विद्याप्रत्ययान्तेऽनुभवरूपस्यात्म चैतन्यस्य लक्ष्यमाणत्वात् इत्यवोचाम । तथा चात्र न केवल वाक्यमित्येव श्रुतिवाक्य प्रमाण यथा कर्मकाण्डे, कथ तर्हि, नियमेनानुभवावसानज्ञान जनकत्वादिति बोध्यम् ॥

ये तु मन्दमध्यममतयो सकृत्कृत शास्त्रोपदेशमर्थत स्वसवेद्यता मापादयितुमशक्ता, तान् प्रति श्रुत्यनुगृहीतस्तर्कोऽप्युपायो भवति । तदनुकूला लौकिकतर्काश्च । 'श्रोतव्यो मन्तव्य' (बृ २–४–५) इति श्रुते । श्रुत्यनुगृहीतस्तर्कोऽप्यनुभवाङ्गत्वेनैव स्वीकार्य इति, तत्र सार्वत्रिकानुभव प्रमाणतया तिष्ठति । स च **प्रमाणभूतोऽनुभवो** न प्रत्यक्षप्रमितिरूप, नाप्युग शिरोवेदनादिजन्मानसानुभवलक्षण, **कि** तु सर्वबाह्याध्यात्मिकप्रपञ्चोपलम्भरूप । स चात्मचैतन्यस्वरूपानतिरिक्त एव सन् वस्तुत, स्वप्रकाश्यदृश्यापेक्षया 'अनुभव' इत्युच्यते । यथा प्रकाशस्वरूप एव सन् सविता प्रकाश्यापेक्षया प्रकाशक इत्युच्यते, तद्वत् । य पुनर्निरागमोऽनुभवप्रमाणरहितश्च पुरुषाभ्यूहमात्रस्तर्क, स **केवलतर्कः शुष्कतर्कः** – इति चाभिधीयते । तस्य तु नावकाशो वेदान्तविचारे ॥

(३) सत्यमेव प्रत्यक्षादिभि प्रमाणैर्न पर प्रत्याययितु शक्य, आगमेन तु शक्यत एव प्रत्याययितुम् । तदुपदेशार्थमागममाह– **'अन्यदेव तद्विदितादथो अविदितादधि'** इति ॥ के भा १–४, पा २०

(४) एष व्यावृत्तसर्वसंसारधर्मकोऽनुभवात्मको ब्रह्मसंज्ञकस्तत्पदार्थो वेदान्ताभियुक्तानां प्रसिद्धः ॥ सू भा ४-१-२, पा ४६२

(५) श्रुत्यैव च सहायत्वेन तर्कस्याभ्युपेतत्वात् ॥

सू भा १-१-२, पा ८

✓(६) न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम्, किं तु श्रुत्यादयोऽनुभवादयश्च यथासंभवमिह प्रमाणम्। अनुभवावसानत्वात्, भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य ॥ सू भा १-१-२, पा ८

(७) तस्माद् ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते ॥

सू भा १-१-१, पा ६

(८) भवेदानर्थक्यं तं प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नुयात्, यस्तु न शक्नोति तं प्रत्युपयुज्यत एवावृत्तिः ॥

सू भा ४-१-२, पा ४६१

(९) यद्यपि च प्रतिपत्तव्य आत्मा निरंशः, तथाप्यध्यारोपितं तस्मिन् बह्वंशत्वं देहेन्द्रियमनोबुद्धिविषयवेदनादिलक्षणम्। तत्रैकेनावधानेनैकमंशम् अपोहति, अपरेणापरम् इति युज्यते तत्र क्रमवती प्रतिपत्तिः। तत्तु पूर्वरूपमेवात्मप्रतिपत्तेः ॥ सू भा ४-१-२, पा ४६२

[ आत्मप्रतिपत्तेः – आत्मानुभवस्य ]

✓(१०) यदपि श्रवणव्यतिरेकेण मननं विदधच्छब्द एव तर्कमप्यादर्तव्यं दर्शयतीत्युक्तम्। नानेन मिषेण शुष्कतर्कस्यात्रात्मलाभः संभवति। श्रुत्यनुगृहीत एव ह्यत्र तर्कोऽनुभवाङ्गत्वेनाश्रीयते ॥

✓ सू भा २-२-६, पा १८८

(११) इतश्च नागमगम्येऽर्थे केवलेन तर्केण प्रत्यवस्थातव्यम्। यस्मान्निरागमाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिता भवन्ति। उत्प्रेक्षाया निरङ्कुशत्वात् ॥ सू भा २-१-११, पा १९२

[अत्र 'आगमगम्येऽर्थे', 'निरागमाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्काः' इति च विशेषद्वयादानेनाचार्य एतज्ज्ञापयति – यत् केवलतर्कावष्टम्भिपरदर्शननिराकरणे, तदीयरीत्यैव केवलतर्कानुसरणं न दोषायेति। तत्र हि नागम उपयुज्यते, तत्प्रामाण्यानङ्गीकारात् प्रतिवादिना, न च तदीयतर्कस्य तदीयरीत्यैव निरासाभावे तद्दर्शने आस्तिकानामसारताबुद्धिस्स्यादिति। अत एव हि बौद्धादिमतनिराकरणे श्रीगौडपादाचार्यैः, भगवता भाष्यकारेण च केवलतर्कानुसरणमपि कृतं पश्यामः ॥ ]

## कार्यकारणवादादिप्रक्रिया मूलप्रक्रियावान्तरभेदा एव –

३२ मन्दमध्यमाधिकारिणा कृतेऽनुभवाङ्गतर्कस्वीकरणेन कार्यकारणविवेकप्रक्रिया, सामान्यविशेषविवेकप्रक्रिया, द्रष्टृदृश्यविवेकप्रक्रिया, पञ्चकोशविवेकप्रक्रिया, अवस्थात्रयविवेकप्रक्रिया – इत्येवमादयोऽवान्तरा प्रक्रियाभेदा स्वीकृता वेदान्तेषु। सर्वत्रानुगता त्वेकाप्रक्रिया एषैव यद् तत्र तत्राध्यारोपितापह्नवेनात्मैकत्व प्रबोध्य जिज्ञासो स्वात्मन्यवस्थापनमिति तत्त प्रक्रियाभेदपरिशीलनेनावगम्यते ॥

## कार्यकारणविवेकः –

३३ तत्र **कार्यकारणविवेको** यथा – **छान्दोग्ये** सच्छब्दवाच्यादद्वितीयब्रह्मणस्तेजोबन्नादिसृष्टिमुपदिश्य, तस्या एव सदाख्याया परस्या देवताया जीवात्मरूपेणानुप्रवेश नामरूपव्याकरण च शिष्ट्वा मृल्लोहादिदृष्टान्तै – कार्यस्य कारणानन्यत्वात् कारणविज्ञानेनैव सर्वं कार्यं विज्ञात भवतीति यदादौ प्रतिज्ञात तदुपपाद्य – 'ऐतदात्म्यमिद सर्व तत् सत्य स आत्मा तत्त्वमसि' (छा ६–८–७) इति सर्वस्यापि जगत, श्रोतुश्च श्वेतकेतोर्ब्रह्मात्मकत्व जगाद। तथा **मुण्डके**, अक्षरसत्यपुरुषापरनामधेयस्याद्वितीयब्रह्मण एव सर्वस्य चराचरस्य जगत उत्पत्तिमुपदिश्य 'ब्रह्मैवेदममृत पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृत ब्रह्मैवेद विश्वमिदं वरिष्ठम्' (मु २–२–१२) इति ब्रह्मात्मैकत्व जगतो जगौ। **तैत्तिरीयके** च ब्रह्मण आकाशादिजगत्सृष्टिमुक्त्वा, अन्ते प्रतिषिद्धसर्वमूर्तामूर्तजगत्सबन्धे ब्रह्मण्येवात्मत्वेनाभय प्रतिष्ठाम् (तै २-७) अभ्यधात्। सर्वत्र चेदृशस्थलेषु कार्यकारणवादस्वीकरणम् आत्मैकत्वे चित्तावतारोपायत्वेनैव न तु कार्यसत्यता वक्तुमिति श्रुतौ–यथैव दृष्टान्ते सर्वत्र कार्यस्य वाचारम्भणत्वेन नाममात्रत्व प्रतिज्ञाय कारणस्यैव तु तदपेक्षया सत्यत्वावधारणम् तथैव–सर्वस्यापि विकारस्य नाममात्रत्व-

विज्ञापनपूर्वकं परमकारणस्यैव सत्यत्वावधारणात्, कार्यप्रपञ्चस्य च मूलकारणप्रतिपत्त्यर्थत्वमिति कण्ठरवेण विस्पष्टमुद्घोषणाच्चाध्यवसीयते । तद्यथा –

(१) यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ छा ६-१-४, ५, ६ पा ५०५

(२) अपागादग्नेरग्नित्वं वाचारम्भणो विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ६-४-१, २, ३, ४, पा ५१४-५१५

भाष्यम् — प्राग् रूपत्रयविवेकविज्ञानाद् या अग्निबुद्धिरासीत् ते, साग्निबुद्धिरपगता, अग्निशब्दश्चेत्यर्थः । बुद्धिशब्दमात्रमेव ह्यग्निः, यत आह वाचारम्भणमग्निर्नाम विकारो नामधेयम्, नाममात्रमित्यर्थः । अतोऽग्निबुद्धिरपि मृषैव । किं तर्हि तत्र सत्यम् ? त्रीणि रूपाणीत्येव सत्यम्, नाणुमात्रमपि रूपत्रयव्यतिरेकेण सत्यमस्तीत्यवधारणार्थः ॥ छा भा ६-४-१, पा ५१४

(३) अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ छा ६-८-४, ५२४

अत्र भाष्यम् –

मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाभेदं वदितुं सृष्ट्यादिप्रपञ्चः श्राव्यत इति गम्यते । तथा च सम्प्रदायविदो वदन्ति – मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा । उपायः सोऽवताराय नास्ति भेदः कथञ्चन (गौ का ३-१५) इति ॥ सू भा १-४-१४, पा १६३

एवं **गीताप्रस्थानेऽपि** भगवतः प्रकृतिद्वयद्वारेणैव जगदुत्पत्तिप्रलयकारणत्वमुक्तं स्वतः कारणत्वनिषेधार्थं कार्यस्य कारणानन्यत्वद्योतनार्थं च । एवं भगवतोऽपि कारणान्तरवत्त्वं मा शङ्कीति ततः परतरं तत्त्वं किमपि नास्तीत्युक्तं तस्यैव परमसत्यत्वदृढीकरणाय –

(१) एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ॥ गी ७-६ ७

एव सर्वस्यापि जगतो भगवता व्याप्तत्व तदाश्रयेणैव लब्धस्थितिकत्व चोक्तम्, भगवतो जगत्स्थितिसमयेऽप्यद्वितीयत्व जगत स्वतन्त्रसत्ता शून्यत्व च यथा श्रोतृहृदयमागच्छेदिति । पुनश्च जगतो भगवति स्थितिरपि प्रतिषिद्धा । मृषावस्त्वाश्रयत्वेन परमात्मनि तत्संसर्ग सद्वितीयत्व वा यादृश तादृशमपि मा भूच्छङ्कितमिति –

(३) मया ततमिद सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाह तेष्ववस्थित ॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥ गी ९-४, ५

**सूत्रप्रस्थाने** पुन स्पष्टमेवाभिहित कार्यस्य कारणानन्यत्व तत्प्रदर्शनार्थमेव कार्यकारणविवेकप्रक्रिया प्रवृत्तेति –

(१) जन्माद्यस्य यत ॥ वे सू १-१-२
(२) प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ वे सू १-४-२३
(३) तदनन्यत्वमारम्भणशब्दादिभ्य ॥ वे सू २-१-१४

भाष्यम् – 'आरम्भणशब्दादिभ्य ' इति 'आदि'शब्दात् 'ऐतदात्म्यमिद सर्वं तत्सत्य स आत्मा तत्त्वमसि' (छा ६-८-७) 'इद सर्वं यदयमात्मा ' (बृ २-४-६), 'ब्रह्मैवेद सर्वम्' (?) 'आत्मैवेद सर्वम्' (छा ७-२-१२), 'नेह नानास्ति किञ्चन' (बृ ४-४-१९) इत्येवमाद्यात्मैकत्वप्रतिपादनपर वचनजातमुदाहर्तव्यम् । न चान्यथा, एकविज्ञानेन सर्वविज्ञान सपद्यते । तस्मात्, यथा घटकरकाद्याकाशानां महाकाशानन्यत्वम्, यथा च मृगतृष्णिकोदकादीनाम् ऊषरादिभ्योऽनन्यत्व दृष्टनष्टस्वरूपत्वात्, स्वरूपेणानुपाख्यत्वात्, एवमस्य भोग्यभोक्त्रादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम् ॥ सू भा २-१-१४, पा १९७

## सृष्टेर्व्यावहारिकत्वस्वीकारोऽधिकारिभेदानुग्रहार्थम् –

३४ तदेव कार्यकारणविवेकप्रक्रियया श्रौत्या स्वीकृता सृष्टिर्न सृष्टिप्रतिपादनार्था, कि तर्हि, कार्यस्य जगत कारणभूतब्रह्मानन्यत्वज्ञापनेन परमार्थस्याद्वैतत्वज्ञापनार्था – इति स्थिते, किमिय वेदान्तेषु श्रूयमाणा सृष्टि सर्वथाप्यपरमार्थैव, उतास्ति तत्रापि यत्किञ्चित् तथ्यत्वमपि ? इति

विवेक्तव्यम् । यत्कारणं प्रमाणभूतासु श्रुतिषु तत्तादृशं सविस्तरेण प्रतिपाद्यमानायाः सृष्ट्या न परमार्थगन्धोऽप्यस्तीति न सभाव्यते किञ्च, प्रत्यक्षादिप्रमाणैरुपलभ्यमानं समर्थक्रियाकारित्वेन सर्वैरनुभूयमानमिदं जगत् कथङ्कारं मिथ्यैवेति प्रेक्षावतामनादरभाक्त्वं व्रजेत् ? – इति मन्दमतीन् काश्चित् प्रतिभासान् । तत्राभियुक्ताः समाधानमभिदधते–प्रविभज्य विज्ञेयमेतत् । कथम् ? कर्मणामनुष्ठाने, उपासनाकर्मणि वा शेषत्वेनोपयुज्यन्त इति यदा कारकाणां पदार्थानां समर्थक्रियाक्षमत्वमनुलक्ष्यते, ब्रह्म च नामरूपकृतोपाधितो विविच्य न स्वरूपेण निश्चीयते, तदा भवत्यपि कार्यस्य सत्यत्वमपि । तत्सत्यत्वं परं व्यावहारिकमेवाङ्गीक्रियते अविद्याकृतनामरूपमायामनपबाध्य सृष्टेः सर्वस्य मायिकत्वाभ्युपगमात् । यदा पुनर्ब्रह्मणस्तत्त्वमेव निर्दिधारयिषितम्, तदा तु नामरूपयोः प्रतीतिदशायां ब्रह्मणोऽन्येन वा निर्वक्तुमशक्यत्वात्, ब्रह्मदृष्ट्या च निरूप्यमाणयोर्वस्तुतोऽभावाच्च, ब्रह्मण एव तत्तच्छब्दबुद्धिगोचरत्वं व्यवहारे इत्यध्यवसीयते । तथा च ब्रह्मणोऽद्वितीयत्वं सर्वव्यवहारातीतं नित्यसिद्धमेवेति सेत्स्यति । अतो न विरोध इति ॥

(१) उपलम्भात्समाचारादस्ति वस्तुत्ववादिनाम् ।
जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा ॥ गौ का ४-४२

भाष्यम्-यापि बुद्धैरद्वैतवादिभिर्जातिर्देशिता उपदिष्टा । उपलम्भनम् उपलम्भ, तस्मात् । उपलब्धेरित्यर्थः । समाचारात्, वर्णाश्रमादिधर्मसमाचरणात् । ताभ्यां हेतुभ्याम् अस्तिवस्तुत्ववादिनाम्, अस्ति वस्तुभाव इत्येवं वदनशीलानां दृढाग्रहवतां श्रद्दधानानां मन्दविवेकिनाम् अर्थोपायत्वेन सा देशिता जातिः । तां गृह्णन्तु तावत् । वेदान्ताभ्यासिनां तु स्वयमेव अजाद्वयात्मविषयो विवेको भविष्यतीति । न तु परमार्थबुद्ध्या ॥

पा २४०

(२) उपलम्भात्समाचारान्मायाहस्ती यथोच्यते ।
उपलम्भात्समाचारादस्तिवस्तु तथोच्यते ॥ गौ का ४-४४

(३) धर्मा य इति जायन्ते जायन्ते ते न तत्त्वतः ।
जन्म मायोपमं तेषां सा च माया न विद्यते ॥ गौ का ४-५८

भाष्यम् – येऽपि आत्मनोऽन्ये च धर्मा जायन्त इति कल्प्यन्ते ते इति एवप्रकारा यथोक्ता संवृतिर्निर्दिश्यत इतीति । संवृत्यैव धर्मा जायन्ते । न ते तत्त्वत परमार्थतो जायन्ते । यत् पुनस्तत् संवृत्या जन्म तेषा धर्माणा यथोक्ताना यथा मायया जन्म तथा तन्मायोपम प्रत्येतव्यम् । माया नाम वस्तु तर्हि ? नैवम् । सा च माया न विद्यते । 'माया' इत्यविद्य मानस्याख्या इत्यभिप्राय ॥ पा २४४, २५५

(४) सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्वम्' इत्याह । व्यवहाराभिप्रायेण तु 'स्याल्लोकवत्' इति महासमुद्रस्थानीयता ब्रह्मण कथयति । अप्रत्याख्यायैव कार्यप्रपञ्च परिणामप्रक्रिया चाश्रयति सगुणेषूपासनेषूप योक्ष्यत इति ॥ सू भा २-१-१४, पा २०१, २०२

(५) नामरूपोपाध्यस्तित्वे 'एकमेवाद्वितीयम्', 'नेह नानास्ति किञ्चन' इति श्रुतयो विरुध्येरन् इति चेत् । न । सलिलफेनदृष्टान्तेन परिहृतत्वात्, मृदादिदृष्टान्तैश्च । यदा तु परमार्थदृष्ट्या परमात्मतत्त्वात् श्रुत्यनुसारिभिरन्यत्वेन निरूप्यमाणे नामरूपे मृदादिविकारवत् वस्त्वन्तरे तत्त्वतो न स्त, सलिलफेनघटादिविकारवदेव, तदा तदपेक्ष्य 'एकमेवाद्वितीयम्', 'नेह नानास्ति किञ्चन' इत्यादिपरमार्थदर्शनगोचरत्व प्रतिपद्यते । यदा तु स्वाभाविक्या अविद्यया ब्रह्मस्वरूप रज्जुशुक्तिकागगन स्वरूपवदेव स्वेन रूपेण वर्तमान केनचिदस्पृष्टस्वभावमपि सत्, नामरूपकृतकार्यकरणोपाधिभ्यो विवेकेन नावधार्यते, नामरूपोपाधिदृष्टिरेव च भवति स्वाभाविकी, तदा सर्वोऽय वस्त्वन्तरास्तित्वव्यवहार ॥

बृ भा २-५-१, पा ८१०, ८११

## सत्कार्यवादो मायाजन्मवादश्च –

३५ नामरूपजगत प्रतीयमानरूपेण विकल्पमात्रत्वात् रज्जुसर्पादेरिव न जन्मस्थितिभङ्गम् । नापि पारमार्थिकरूपस्यात्मनस्तत् । तस्य कूटस्थनित्यस्वभावत्वात् । तथाप्यनिश्चितस्वरूपाया रज्ज्वा सर्पादिरूपैर्विकल्पनवदनिर्धारितस्वरूपस्य ब्रह्मणो नामरूपजगद्रूपेणोत्पत्त्यादिकल्पन नानुपपन्नम् । दृष्टत्वात् । स्वरूपनिश्चये सति तथैव बाध्यमानत्वाच्चेति मन्तव्यम् । इदमेव च वेदान्ते सत्कार्यवादवाचोयुक्त्या स्वीकृतम् ।

कार्यस्य स्वेन रूपेण सर्वथा अस्तित्वाभावेऽपि, स्वविकल्पनास्पदब्रह्मरूपेण सदा सत्त्वमेव हि सत्कार्यवादस्येष्टम् । ब्रह्मणश्चाजाद्वयस्यैव सत स्वात्मनि विकल्प्यमाननामरूपजगद्रूपेणावभासमानत्वमेव तस्य मायया जन्मेति च ॥

(१) न निरोधो न चोत्पत्तिर्न बद्धो न च साधक ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ गौ का २-३२

भाष्यम् - न हि मनोविकल्पनाया रज्जुसर्पादिलक्षणाया रज्ज्वा प्रलय उत्पत्तिर्वा । न च मनसि रज्जुसर्पस्योत्पत्ति प्रलयो वा, न चोभयतो वा । तथा मानसत्वाविशेषाद् द्वैतस्य ॥ पा २०४

(२) नात्मभावेन नानेद न स्वेनापि कथञ्चन ।
न पृथङ् नापृथक्किञ्चिदिति तत्त्वविदो विदु ॥ गौ का २-३४

(३) अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता ।
सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पित ॥ गौ का २-१७
निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते ।
रज्जुरेवेति चाद्वैत तद्वदात्मविनिश्चय ॥ गौ का २-१८

(४) असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ वे सू २-१-७

भाष्यम् — यदि चेतन शुद्ध शब्दादिहीन च ब्रह्म तद्विपरीतस्याचेतनस्य अशुद्धस्य शब्दादिमतश्च कार्यस्य कारणमिष्येत । असत्तर्हि का प्रागुत्पत्तेरिति प्रसज्येत, अनिष्ट चैतत् सत्कार्यवादिनस्तव-इति चेत् । नै दोष । प्रतिषेधमात्रत्वात् । प्रतिषेधमात्र हीद, नास्य प्रतिषेधस्य प्रतिषेध्यमस्ति । न हीदानीमपीद कार्यं कारणात्मानमन्तरेण स्वतन्त्रमेवास्ति 'सर्वं त परादाद् योऽन्यत्रात्मन सर्वं वेद' (बृ २-४-६) इत्यादि श्रवणात् । कारणात्मना तु सत्त्व कार्यस्य प्रागुत्पत्तेरविशिष्टम् । ननु शब्दादिहीन ब्रह्म जगत कारणम् । बाढम् । न तु शब्दादिमत् कार्यं कारणात्मना हीन प्रागुत्पत्तेरिदानीं वा अस्ति ॥ सू भा २-१-७, पा १८९

(५) नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ।
अजायमानो बहुधा मायया जायते तु स ॥ गौ का ३-२४

भाष्यम् - मायाभि , इन्द्रियप्रज्ञाभि , अविद्यारूपाभि -इत्यर्थ 'अजायमानो बहुधा विजायते' (तै आ ३-१२) इति श्रुते । तस्मान्माय

यैव जायते तु स । तुशब्दोऽवधारणार्थ, 'माययैव' इति । मह्यजाय मानत्व बहुधा जन्म चैकत्र सभवति । अप्ताविव शैत्यम्, औष्ण्य च ॥ पा २१८

(६) अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्व प्रतिपद्यते । पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतम् अवतिष्ठते ॥ सू भा २-१-२७, पा २१३

३६ स्यान्मनीषा केषाञ्चित् – नेमौ सत्कार्यवादमायाजातिवादवर्णनप्रकारौ श्रुत्यक्षरानुलोम्य भजेते इव । यत्कारण सर्वत्र वेदान्तेषु तत्त्वत एव ब्रह्मणो जगज्जन्मादि श्रूयमाणमुपलभामहे 'आत्मन आकाश सभूत ' (तै २-१), 'स प्राणमसृजत ' (प्र ६-४), 'अक्षरात् सभवतीह विश्वम् ' (मु १-१-७), 'यतो वा इमानि भूतानि जायन्ते' (तै ३-१), 'स इमॉल्लोकानसृजत ' (ऐ १-२), 'तत्तेजोऽसृजत ' (छा ६-२-३)–इत्यादिवचनै । एव गीतास्वपि 'अह सर्वस्य प्रभव ' (गी १०-८)–इत्यादिभि । सूत्र च ब्रह्मलक्षणसमर्पकम् 'जन्माद्यस्य यत ' (वे सू १-१-२) इति । तत् कथमिद सर्वं पृष्ठत कृत्वा जगन्निषेध क्रियेत, मायाजातिवादश्चाङ्गीक्रियेत ? तस्मात् सर्वज्ञत्वात् सर्वशक्तित्वाच्च ब्रह्म तथ्यत एव जगत्कारणम् इत्येव युक्तमुत्पश्याम । 'य सर्वज्ञ सर्ववित् ' (मु १-१-९), 'परास्य शक्तिर्विविधैव श्रूयते ' (श्वे ६-८) इत्यादिश्रुतिभ्य इति । नैषा शङ्का युक्ता । यत सर्वत्र नियमेन पररूपप्रतिषेधेनैव ब्रह्मणो यथार्थं रूप समर्प्यते तात्पर्यत 'अथात आदेशो नेति नेति ' (बृ २-३-६), 'न सत्तन्नासदुच्यते ' (गी १३-१२) इति । न च तत्स्वरूपावगमादूर्ध्वं काचिदाकाङ्क्षा भवति । उत्पत्त्यादिश्रुतीना तु, आत्मैकत्वप्रतिपत्त्यर्थता श्रूयते ' तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ ' (छा ६-८-४) इति । तस्मात्, निराकाङ्क्षश्रुतीना बलीयस्त्वमुपेत्य, जगज्जन्मादिश्रुतीनामन्यार्थाना मायिकजन्मादिपरत्वेन नयन न्याय्यमेव 'इन्द्रो मायाभि ' (बृ २-५-१९) इति श्रुते ।

सर्वशक्तित्वमपि ब्रह्मणो व्यावहारिकमेव । शक्तेरपि कारणानन्यत्वात् कार्यवदेव । 'ब्रह्मैवेद विश्वम्' (मु २-२-१२), 'आत्मैवेद सर्वम्' (छा ७-२५-२)-इत्यादिसावधारणश्रुतिभ्य इत्यनवद्यम् ॥

(१) स एष नेति नेतीति व्याख्यात निह्नुते यत ।
सर्वमग्राह्यभावेन हेतुनाज प्रकाशते ॥ गौ का ३-२६

(२) कस्मात् पुनरुत्पत्त्यादिश्रुतीना विशेषनिराकरणश्रुतिशेषत्व न पुनरितरशेषत्वमितरासामिति ? उच्यते। विशेषनिराकरणश्रुतीना निराकाङ्क्षार्थत्वात् । न ह्यात्मन एकत्वनित्यत्वशुद्धत्वाद्यवगतौ सत्या भूय काचिदाकाङ्क्षा उपजायते। पुरुषार्थसमाप्तिबुद्ध्युपपत्ते । 'तत्र को मोह क शोक एकत्वमनुपश्यत ' (ई ७), ' अभय वै जनक प्राप्तोऽसि ' (बृ ४-२-४), 'विद्वान् न बिभेति कुतश्चन ' (तै २-९) - इत्यादिश्रुतिभ्य । तथैव च विदुषा तुष्ट्यनुभवादिदर्शनात् । विकारानृताभिसध्यपवादाच्च 'मृत्यो स मृत्युमाप्नोति य इह नानेव पश्यति ' (बृ ४-४-१९) इति । अतो न विशेषनिराकरणश्रुतीनामन्यशेषत्वमवगन्तु शक्यते। नैवम् उत्पत्त्यादिश्रुतीना निराकाङ्क्षार्थप्रतिपादनसामर्थ्यमस्ति । प्रत्यक्ष तु तासामान्यार्थत्व समनुगम्यते । तथा हि 'तत्रैतच्छुङ्गमुत्पतित सोम्य विजानीहि नेदममूल भविष्यति ' (छा ६-८-३) इत्युपन्यस्योदर्के सत एवैकस्य जगन्मूलस्य विज्ञेयत्व दर्शयति ॥ सू भा ४-३-१४, पा ४९८, ४९९

(३) एवमुत्पत्त्यादिश्रुतीनामैकात्म्यावगमपरत्वान्नानेकशक्तियोगो ब्रह्मण ॥ सू भा ४-३-१४, पा ४९९

(४) तस्मात् कारणस्यात्मभूता शक्ति , शक्तेश्चात्मभूत कार्यम् ॥
सू भा २-१-१८ पा २०४

[अत्र कार्यस्य शक्तिद्वारेण, शक्तेश्च साक्षात्, कारण मत्वनुक्तम् ॥]

(५) भूततोऽभूततो वापि सृज्यमाना समा श्रुति ।
निश्चित युक्तियुक्त च यत्तद्भवति नेतरत् ॥ गौ का ३-२३

भाष्यम् - अविद्यासृष्टिविषयैव सर्वा गौणी मुख्या च सृष्टिर्न परमार्थत । 'स बाह्याभ्यन्तरो ह्यज ' (मु ) इति श्रुते ॥ गौ का भा ३-२३, पा २१८

(६) नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ।
अजायमानो बहुधा मायया जायते तु स ॥ गौ का ३ २४

(७) सतो हि मायया जन्म युज्यते न तु तत्त्वत ।
तत्त्वतो जायते यस्य जात तस्य हि जायते ॥ गौ का ३-२७

भाष्यम् – सतो विद्यमानस्य वस्तुनो रज्ज्वादे सर्पादिवन्मायया जन्म युज्यते । न तु तत्त्वतो यथा, तथाऽग्राह्यस्यापि सत एवात्मनो रज्जु सर्पवज्जगद्रूपेण मायया जन्म युज्यते । न तु तत्त्वत एवाजस्य आत्मनो जन्म । यस्य पुन परमार्थसदजमात्मतत्त्व जगद्रूपेण जायते वादिन , न हि तस्याज जायत इति शक्य वक्तुम् । विरोधात् । ततस्तस्यार्थाज्जात जायत इत्युपपन्नम् । ततश्चानवस्था जाताज्जायमानत्वेन ॥

गौ का ३-२७, पा २२०

## सामान्यविशेषप्रक्रियाविमर्शः –

३७ तदेव कार्यकारणविवेकप्रक्रिया कार्यस्वरूपनिर्धारणव्याजेन कार्यकारणभावप्रतिषेधपूर्वक परमार्थतत्त्वनिर्धारणायेत्येतदवधारितम् । अधुना सामान्यविशेषप्रक्रिया परीक्ष्यते । तत्रेत्थ श्रुति –‘ स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्शब्दाञ्शक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत ॥ ’ (बृ २-४-७) इति । अयमभिप्राय । यथा ताड्यमानस्य दुन्दुभेरभिव्यज्यमानान् शब्दान् ‘ दुन्दुभिशब्दा ’ इति दुन्दुभ्याघातविशिष्टशब्दसामान्यविशेषत्वेनैव ग्रहीतु शक्नुयात् कश्चित्, न तु त एव विशेषास्ततो निर्भिद्य ग्रहीतुत्, विशेषाणा स्वातन्त्र्येणाभावादेव, एव सर्वत्र विशेषेषु सञ्चारयितव्यो न्याय । तत्तत्सामान्यव्यतिरेकेण तत्तद्विशेषाभावश्चावसेय इति । अत एव हि ‘ स यथा शङ्खस्य ध्मायमानस्य ’ (बृ २-४-८), ‘ स यथा वीणायै वाद्यमानायै ’ (बृ २-४-९) इति विविधशब्दसामान्यविशेषदृष्टान्तोपादान करोति । तस्मात्, यथैव सर्वे शब्दविशेषास्तत्तच्छब्दसामान्यविशेषव्यतिरेकेण न विद्यन्ते, एव शब्दसामान्यविशेषा अपि स्वमहासामान्यशब्दव्यतिरेकेण

न विद्यन्ते, एवं स्पर्शरूपरसगन्धसामान्यविशेषाणामपि स्वस्वमहासामान्याव्यतिरिक्तम् । एवमेव च सत्सामान्याव्यतिरिक्तत्वं सर्वसामान्यविशेषाणां जगत्स्थितिकाले इत्यवगच्छाम ॥

अथ किमिदं सत्सामान्यमिति ? न तावत्तार्किकसमतं सर्वप्रमेयविशेषानुगतं सत्ताख्यम् । यतस्तस्यापि स्वात्मसाक्षिचैतन्यव्याप्तत्वमस्तीति स्वव्यापकातिरेकेणाभाव एवानुभूयते । नन्वेवं चिद्रूपस्यात्मनः सद्व्यतिरिक्तत्वाभ्युपगमेऽसत्त्वापत्तिर्दुर्वारा स्यात् । न चात्मनोऽसत्त्वं कल्पयितुमिष्टं शक्यं वेत्यतोऽकामेनाप्यात्मनि सत्तासामान्यमभ्युपगन्तव्यम् । न । सुषुप्तप्रलयादावात्मनोऽवतिष्ठमानस्यापि सत्तासामान्याननुवृत्तेः । न हि प्रागुत्पत्तेर्द्रव्यादिविशेषास्तित्वमभ्युपयन्ति तार्किकाः । असत्कार्यवादहानप्रसङ्गात् । न च निर्विशेषं सामान्यं समस्ति क्वचिदिति । तस्मात्, आत्मन एवेदं सदात्मकं स्फुरणं सर्वत्र सामान्यविशेषेष्वनुगतं स्थितिकाले, तच्च स्वरूपमेव चिदात्मनो नान्यत् सत्तासामान्यं नामास्तीत्यवगम्यते । एवं च दुन्दुभ्यादिदृष्टान्तैः सामान्यविशेषभावोऽत्र स्थितिकाले श्राव्यमाणो नात्मनि महासामान्यत्वं प्रतिबोधयितुम्, किं तर्हि सामान्यविशेषभावस्यैव चिद्व्यतिरेकेणाभावं श्रावयित्वा निःसामान्यविशेषे चिदात्मनि चित्तमवतारयितुम्—इति सामान्यविशेषप्रक्रियाप्यध्यारोपापवादप्रक्रियावान्तरभेद एवेति सिद्धम् ॥

(१) अनेकदृष्टान्तोपादानमिह सामान्यबहुत्वख्यापनार्थम् । अनेके हि विलक्षणाश्चेतनाचेतनरूपाः सामान्यविशेषाः । तेषां पारम्पर्यगत्या यथैकस्मिन् महासामान्येऽन्तर्भावः प्रज्ञानघने कथं नाम प्रदर्शयितव्य इति ॥
बृ. भा. २-४-९, पा. ७६२

(२) शब्दसामान्यस्य ग्रहणेन तद्गता विशेषा गृहीता भवन्ति । न तु त एव निर्भिद्य ग्रहीतुं शक्यन्ते विशेषरूपेणाभावात् तेषाम् । तथा प्रज्ञानव्यतिरेकेण स्वप्नजागरितयोर्न कश्चिद् वस्तुविशेषो गृह्यते । तस्मात् प्रज्ञानव्यतिरेकेणाभावो युक्तस्तेषाम् ॥ बृ. भा. २-४-७, पा. ७६२

(३) ननु वैशेषिकपक्षेऽपि सत्सामानाधिकरण्यं सर्वस्योपपद्यते । द्रव्यगुणादिषु सच्छब्दबुद्ध्यनुवृत्तेः । 'सद् द्रव्यम्', 'सन् गुणः', 'सत्

कर्म' – इत्यादिदर्शनात् । सत्यमेव स्यादिदानीम्, प्रागुत्पत्तेस्तु नैवेद कार्यं सदेवासीदित्यभ्युपगम्यते वैशेषिकै । प्रागुत्पत्ते कार्यस्यासत्त्वाभ्युपगमात् । न चैकमेव सदद्वितीय प्रागुत्पत्तेरिच्छन्ति । तस्मात्, वैशेषिकपरिकल्पितात् सतोऽन्यत् कारणमिद सदुच्यते । मृदादिदृष्टान्तेभ्य ॥

छा ६-२-१, पा ५०७

## द्रष्टृदृश्यप्रक्रियापरिशीलनम् –

३८ नैसर्गिकदृष्ट्या वीक्षित जगदिद 'अहमिदमनेन पश्यामि' इति द्रष्टृदर्शनदृश्यत्रिपुटीलक्षण विभाव्यते । तत्र द्रष्टा करणव्यापारेण विषयान् व्याप्यानुभविता । दर्शन करण चक्षु श्रोत्रादि । दृश्य शब्द स्पर्शरूपादि विषयलक्षणम् । करणव्यापारस्य फलमपि दर्शनशब्दवाच्य यस्मिन् जाते 'पश्यति', 'शृणोति', 'मनुते', 'विजानाति' – इत्यादि व्यवहारो भवति । तत्रैव स्थिते दृश्यविषयाद् विविच्य द्रष्टार यत्तत् स्वरूपनिर्धारण तद् 'द्रष्टृदृश्यविवेक' इत्युच्यते । तत्र द्रष्टा तावत् 'अह प्रत्ययगम्य ', दृश्य तु ' इदप्रत्ययगम्यम् ' इति द्रष्टृदृश्यविभागे अहमिद प्रत्ययतन्त्रे स्थिते, यत्रैकान्ततोऽहप्रत्ययगम्यत्वमेव न जातुचित् इदप्रत्यय गम्यत्व, स एव परमार्थद्रष्टा, तदितरे तु गौणा द्रष्टार, मिथ्याद्रष्टारो वा भवितुमर्हन्ति । तत्र लोके 'राजा चारचक्षुषा पश्यति' इत्यत्र गौण द्रष्टृत्वम् । राजचारयोर्भेदे प्रसिद्धे सति चारद्रष्टृत्वस्य राज्ञि उपचारात्, देहेन्द्रियादिषु द्रष्टृत्वबुद्धिशब्दौ तु न गौणौ, किं तु मिथ्यैव । तत्र सर्वत्र चक्षुरादौ अद्रष्टृभूतेऽपि ' अह पश्यामि ' इत्येवमादिबुद्धिशब्दयोर्निरुप चरितयोरेवोत्पत्तिदर्शनात् । अत एव हि श्रुति " यत्र हि द्वैतमिव भवति तदितर इतर पश्यति तदितर इतर जिघ्रति तदितर इतर रसयते इतर मभिवदति तदितर इतर शृणोति तदितर इतर मनुते तदितर इतर स्पृशति तदितर इतर विजानाति " (बृ ४–५–१५) इत्याविद्यकद्वैतविषय एव द्रष्टृदृश्यविभाग इत्याह । सेयम् आविद्यिकी लौकिकी दृष्टि, अन्त करण-वृत्तिरूपत्वादनित्या । वृत्तयश्च जायमाना एव चैतन्यव्याप्ता चिदाभासाश्च

जायन्त इति लौकिकैस्त एव ज्ञानशब्दवाच्या इति गण्यन्ते । या पुनर्नित्यचैतन्यस्वरूपा आत्मन स्वभावभूता, सैव पारमार्थिकी दृष्टि । नित्याविपरिलुप्तस्वाभाव्यात् । तत्र च सवितृतत्प्रकाशवदभिन्नत्व द्रष्टृदृश्ययो । एतयैव दृष्ट्या द्रष्टेत्युच्यते परमात्मा तत्प्रकाश्यत्वेन दृश्य भूतम् अन्त करणवृत्त्याद्यपेक्ष्य । अय तु द्रष्टैव न दृश्य जातुचिदपीत्यत परमार्थद्रष्टा । 'न दृष्टेर्द्रष्टार पश्येर्न श्रुते श्रोतार शृणुया न मतेर्मन्तार मन्वीथा न विज्ञातेर्विज्ञातार विजानीया । एष त आत्मा सर्वान्तर ' (बृ ३-४-२) इति श्रुते । लौकिक तु द्रष्टृत्वम् अस्मिन् तत्तदन्त करणवृत्त्य ध्यारोपापेक्षम् । इदमेव हि प्रमातृत्व नामात्मन , यद्देहेन्द्रियमनआदिष्वह ममाभिमानकृतमित्यवोचाम प्राक् (ख २५, पा ३६) । अनयैव चानित्य दृष्टिव्यापृत्या स्वीयत्वेनाविद्याध्यारोपितया 'पश्यति', 'शृणोति' इत्यादि व्यवहारास्पद भवत्यात्मा । अनयैव हि दृष्ट्या समन्विततत्वेन विभाव्य मानोऽत्र प्राणभृत् 'द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष ' (प्र ४-९) इति चोच्यते । वस्तुतस्तु नैव नित्यदृष्टिमत सर्वसाक्षिण परमात्मनोऽन्यो द्रष्टास्तीति कृत्वा श्रुतिर्विज्ञापयति 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' (बृ ४-३-२३) इति । 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता ' (बृ ३-७-२३) इति च । यदा तु लौकिकीय दृष्टिर्व्यभिचरत्स्वरूप त्वेन सुषुप्त्याद्यवस्थानुशीलनेन विनिश्चीयते, तदा द्रष्ट्रादित्रिपुटीरहित त्वेनाध्यवस्यते सर्वव्यवहारातीत एवेत्यध्यारोपापनयनेन विज्ञाप्यते 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन क पश्येत् तत् केन क जिघ्रेत् तत् केन क रसयेत् तत् केन कमभिवदेत् तत् केन क शृणुयात् तत् केन क विजानी याद् येनेद सर्व विजानाति त केन विजानीयात् स एष नेति नेत्यात्मा ' (बृ ४-५-१५) इति ॥

(१) **यत्र यस्मिन्नविद्याकल्पिते कार्यकरणसघातोपाधिजनिते विशेषात्मनि खिल्यभावे हि यस्माद् द्वैतमिव (भवति) परमार्थतोऽद्वैते ब्रह्मणि तत् तत्र**

यस्माद् द्वैतमिव तस्मादेव, इतरोऽसौ परमात्मन खिल्यभूत आत्मा अपरमार्थ चन्द्रादेरिवोदकचन्द्रादिप्रतिबिम्ब, इतरो घ्राता इतरेण घ्राणेन, इतर घ्रातव्य जिघ्रति । इतर इतरमिति कारकप्रदर्शनार्थम्, जिघ्रतीति क्रियाफलयोरभिधानम् । यथा छिनत्तीति ॥ बृ भा २-४-१४, पा ७६८

(२) न दृष्टेर्द्रष्टार पश्येर्न श्रुते श्रोतार शृणुया न मतेर्मन्तार मन्वीथा न विज्ञातेर्विज्ञातार विजानीया । एष त आत्मा सर्वान्तर ॥ बृ ३-४-२

भाष्यम् – दृष्टिरिति द्विविधा भवति लौकिकी पारमार्थिकी चेति । तत्र लौकिकी चक्षु सयुक्ता अन्त करणवृत्ति । सा क्रियत इति जायते विनश्यति च । या तु आत्मनो दृष्टि – अग्न्युष्णप्रकाशादिवत् – सा च द्रष्टु स्वरूपत्वान्न जायते न विनश्यति च । सा क्रियमाणया उपाधिभूतया ससृष्टेव इति व्यपदिश्यते 'द्रष्टा' इति, भेदवच्च 'द्रष्टा', 'दृष्टि '–इति च । यासौ लौकिकी दृष्टि, चक्षुर्द्वारा रूपोपरक्ता जायमानैव नित्यया आत्मदृष्ट्या ससृष्टेव तत्प्रतिच्छाया तया व्याप्तैव जायते तथा विनश्यति च । तेनोपचर्यते द्रष्टा सदा पश्यन्नपि 'पश्यति' 'न पश्यति' चेति । न तु पुन द्रष्टुर्दृष्टे कदाचिदप्यन्यथात्वम् । तथा च वक्ष्यति षष्ठे ' ध्यायतीव लेलायतीव ' (४-३-७) ' न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' (४-३-२३) इति च ॥ बृ भा ३-४-२, पा ८०७

(३) 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते', (बृ ४-३-२३), 'न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यते', 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' (बृ ४-३-२४ प्रभृति ३० पर्यन्तम्) ॥

भाष्यम् – ' यदस्य जाग्रत्स्वप्नयोश्चक्षुराद्यनेकोपाधिद्वार चैतन्यात्म ज्योति स्वाभाव्यम् उपलक्षित दृष्ट्याद्यभिधेयव्यवहारापन्नम्, सुषुप्ते उपाधि भेदव्यापारनिवृत्तौ अनुद्भास्यमानत्वादनुपलक्ष्यमाणस्वभावमपि उपाधिभेदेन भिन्नमिव यथाप्राप्तानुवादेनैव भिद्यमानत्वमुच्यते ' ॥

बृ भा ४-३-३०, पा ८९९

(४) अथ यो वेदेद जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माभिव्याहाराय वागथ यो वेदेद शृणवानीति स आत्मा श्रवणाय श्रोत्रम् । अथ यो वेदेद मन्वानीति स आत्मा मनोऽस्य दैव चक्षु ॥ छा ८-१२-४, ५

भाष्यम् – 'यो वेद स आत्मा' इत्येव सर्वत्र प्रयोगाद् वेदनमस्य स्वरूपमित्यवगम्यते । यथा 'य पुरस्तात् प्रकाशयति स आदित्य , यो दक्षिणतो य पश्चाद् य उत्तरतो य ऊर्ध्वं प्रकाशयति स आदित्य' इत्युक्ते प्रकाशस्वरूप इति गम्यते ॥ छा भा ८-१२-५, पा ६०२

(५) आत्मन सत्तामात्र एव ज्ञानकर्तृत्वम् , न तु व्यापृततया । यथा सवितु सत्तामात्र एव प्रकाशनकर्तृत्वम् , न तु व्यापृततयेति तद्वत् ॥ छा भा ८-१२-५, पा ६०२

(६) अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति । वदन् वाक् पश्यश्चक्षु शृण्वञ्श्रोत्र मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव । स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एक भवन्ति ॥ बृ १-४-७

भाष्यम् – तान्येतानि प्राणादीनि, अस्यात्मन कर्मनामानि कर्मजानि नामानि । कर्मनामान्येव, न तु वस्तुमात्रविषयाणि । अतो न कृत्स्नात्म वस्त्ववद्योतकानि । यावदयमेव वेद 'पश्यामि', 'शृणोमि', 'स्पृशामि' इति वा स्वभावप्रवृत्तिविशिष्ट वेद तावदञ्जसा कृत्स्नमात्मान न वेद । कथ पुन पश्यन् वेदेति ? आह । आत्मेत्येव । आत्मेति प्राणादीनि विशेषणानि यान्युक्तानि तानि यस्य स आप्नुवस्तानि आत्मेत्युच्यते । स तथा कृत्स्न विशेषोपसहारी सन् कृत्स्नो भवति ॥ बृ भा पा ६६०

[अत्र द्रष्टृत्वादिकम् औपाधिकत्वात् कृत्स्न न भवति, परिच्छिन्नमेव स्वात्मरूपम् । चैतन्यरूपेण स्वरूपेण चक्षुराद्युपाधिविशेषजनितानि द्रष्टृत्वादि विशेषणानि व्याप्नुवस्तु कृत्स्नता प्राप्नोतीति ज्ञस्वरूपेण आत्मेत्येव परमार्थद्रष्टा वेदितव्य इत्युक्तम् ॥ ]

## पञ्चकोशविवेकप्रक्रियापरिशीलनम् –

३९ अथ पञ्चकोशविवेकप्रक्रियामधिकृत्य किञ्चिद् विचारयाम । तैत्तिरीयके '**सत्यं ज्ञानमनन्तं ब्रह्म**' इति ब्रह्मलक्षणमभिधाय तद् '**यो वेद निहितं गुहाया परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह**' इति बुद्धिगुहाया वेदितव्यत्व श्रावयति । तद्वेदनप्रकारविशदीकरणाय ब्रह्मात्मन सकाशादाकाशादिक्रमेण पञ्चभूतसृष्टि ततो भौतिकान्नरसमय-

देहोत्पत्ति चानुशास्ति 'अन्नात्पुरुषः' इति। तस्मिन्नात्मत्व प्राकृतजनै र यारोप्यमाणमनूद्य तस्मात् 'अन्योऽन्तर आत्मा प्राणमयः' इति प्राणे आ मबुद्धि सक्रामयति। तदनु च 'अन्योऽन्तर आत्मा मनोमयः', 'अन्योऽन्तर आत्मा विज्ञानमयः', 'अन्योऽन्तर आत्मा आनन्दमयः' इति चान्यमन्यमन्तरात्मत्वेन ग्राहयित्वा आनन्दमयस्य पुच्छत्वेन ब्रह्मान्ते श्रावयतीति तदेव परमार्थत सर्वाभ्यन्तरतम आत्मा सर्वस्येति मन्यत इति गम्यते। न ह्येकस्य पुरुषस्य पञ्चा मान सभवन्तीति। 'स य एवंवित्। अस्माँल्लोकात् प्रेत्य। एतमन्नमयमात्मनमुपसंक्रामति'। एत प्राणमयम मनोमयम्, विज्ञानमयम, [illegible] इति सर्वेषामप्यानन्दमयान्तानामुपसक्रमितव्यत्वेनैवोपसहाराच्चैवमिति गम्यते। अतोऽत्राप्युत्तरस्मिन्नुत्तरस्मिन् कोशे आत्मबुद्ध्यारोपण पूर्वस्मिन् पूर्वस्मिस्तदपोहनेन परमार्थात्मभूते ब्रह्मण्येवात्मबुद्धिस्थिरीकरणार्थमुपाय प्रक्रियेति गम्यते॥

(१) रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके।
तेषामात्मा परो जीव ख यथा सप्रकाशित॥
गौ का ३-११

(२) अन्नमयादिभ्य आनन्दमयान्तेभ्य आत्मभ्योऽभ्यन्तरतम ब्रह्म विद्यया प्रत्यगात्मत्वेन दिदर्शयिषु शास्त्रम् अविद्याकृतपञ्चकोशापनयनेन अनेकतुषकोद्रववितुषीकरणेनेव तदन्तर्गततण्डुलान् प्रस्तौति 'तस्माद्वा एतस्मादन्नरसमयात्' इत्यादि॥ तै भा २-२, पा २८९

(३) अतश्च नान्नमयेनैव परिच्छिन्नेनात्मना आत्मवन्त प्राणिन, किं तर्हि, तदन्तर्गतेन प्राणमयेनापि साधारणेनैव सर्वपिण्डव्यापिना आत्मवन्तो मनुष्यादय। एव मनोमयादिभि पूर्वपूर्वव्यापिभिरुत्तरोत्तरै सूक्ष्मैरानन्दमयान्तैराकाशादिभूतारब्धैरविद्याकृतैरात्मवन्त. सर्वे प्राणिन। तथा स्वाभाविकेनाप्याकाशादिकारणेन नित्येनाविकृतेन सर्वगतेन सत्य ज्ञानान-तलक्षणेन पञ्चकोशातिगेन सर्वात्मना आत्मवन्त। स हि परमार्थत आत्मा सर्वेषाम् इत्येतदप्यर्थादुक्त भवति॥ तै, भा २-३, पा २९१,

अवस्थात्रयविवेकप्रक्रियाविमर्शः –

४० अथेदानीम् अवस्थात्रयविवेकप्रक्रिया विमृश्यते । प्रसिद्धा स्तावत् तिस्र अवस्था जीवस्य, जागरित स्वप्न सुषुप्त चेति । तत्र स्वप्नजागरितयोर्दर्शनवृत्तित्वात्, सुषुप्तस्य चादर्शनवृत्तित्वात्, दर्शनादर्शन-वृत्तिभ्यामतिरिक्तस्यान्यस्य चिन्तयितुमप्यशक्यत्वात्, एतासु तिसृ विचारितासु सर्वासामवस्थाना तदन्तर्गतज्ञेयस्य च सतत्त्व विचारित भवतीति स्पष्टम् । तत्रावस्थाना चैतन्यरूपात्माश्रयेणैवात्मलाभात्, तासामन्योन्यव्यभिचारेऽपि चैतन्यस्य तद्धर्मासम्पृष्टस्यैव सर्वत्रानुवृत्ते, जाग्रत्स्वप्नयोस्तदन्तर्गत प्रपञ्चयोश्च आत्मचैतन्यव्यतिरेकेणानुपलब्धे, मिथ्यात्वम् अवस्थानाम्, सत्यत्व सर्वमहत्त्व चात्मन सिध्यति । सुषुप्तौ सदात्मना सपत्तेश्च निष्प्रपञ्चसदात्मत्वमेवात्मन स्वभाव इति गम्यते ॥

(१) ज्ञेयमेतान्येव त्रीणि । एतद्व्यतिरेकेण ज्ञेयानुपपत्ते ॥
गौ का भा ४ ८८, पा २५२

(२) स्वप्नान्त जागरितान्त चोभौ येनानुपश्यति ।
महान्त विभुमात्मान मत्वा धीरो न शोचति ॥ का २-१-४

(३) स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्य च पाप च पुन प्रतिन्याय प्रतियोन्याद्रवति बुद्धान्तायैव स यत्तत्र किञ्चित् पश्यत्य नन्वागतस्तेन भवत्यसङ्गो ह्यय पुरुष ॥ बृ ४-३-१६

स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्य च पाप च पुन प्रतिन्याय प्रतियोन्याद्रवति स्वप्नान्तायैव ॥ बृ ४-३-१७

(४) प्रज्ञानव्यतिरेकेण स्वप्नजागरितयोर्न कश्चिद् वस्तुविशेषो गृह्यते । तस्मात् प्रज्ञानव्यतिरेकेण अभावो युक्तस्तेषाम् ॥
बृ भा २ ४ ७, पा ७६२

(५) यत्रैतत् पुरुष, स्वपिति नाम सता सोम्य तदा सपन्नो भवति स्वमपीतो भवति तस्मादेन स्वपितीत्याचक्षते स्व ह्यपीतो भवति ॥
छा ६-८-१

(६) कथ पुनरन्त प्रज्ञत्वादीनामात्मनि गम्यमानाना रज्ज्वादौ सर्पादिवत् प्रतिषेधादसत्त्व गम्यत इति ? उच्यते । ज्ञस्वरूपाविशेषेऽपि इतरेतरव्यभिचारादसत्यत्व रज्ज्वादाविव सर्पधारादिविकल्पितभेदवत् । सर्वत्राव्यभिचाराज्ज्ञस्वरूपस्य सत्यत्वम् ॥ मा भा ७, पा १८७

(४) निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वा उचितानि विद्यन्ते। करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति। रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा॥ सू भा ३-२-३ पा ३४५

(५) तथा च श्रुतिरविकारानुबद्धमेव स्वप्नव्यापारं वर्णयति – 'उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्' (बृ ४-३-१२) इति। लौकिका अपि तथैव स्वप्नं कथयन्ति 'आरुक्षमिव गिरिश्रृङ्गम्, अद्राक्षमिव वनराजिम्' इति॥ सू भा २-३-४०, पा २९४

(६) स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिणः।
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना॥ गौ का २-५

(७) बुद्ध्याद्युपाधिस्थानविशेषयोगात् उद्भूतस्य विशेषविज्ञानस्योपाध्युपशमे य उपशमः, स परमात्मना संबन्धः – इत्युपाध्यपेक्षयैवोपचर्यते न परिमितत्वापेक्षया॥ सू भा ३-२-३४, पा ३७१

(८) उपपद्यते चात्रेदृश एव संबन्धो नान्यादृशः, 'स्वमपीतो भवति' (छा ६-८-१) इति हि स्वरूपसंबन्धमेनमामनन्ति। स्वरूपस्य चानपायित्वात्॥ सू भा ३-२-३५, पा ३७१, ३७२

## आत्मनश्चैतन्यस्वभावत्वम् –

४२ स्यादेतत्। चैतन्यमप्यस्य व्यभिचरत्येव, यथा सुषुप्ते। यथैव हि बहिष्प्रज्ञत्वमस्य जागरिते, स्वप्ने त्वन्तःप्रज्ञत्वम्—इत्यवस्थयोस्तयोः परस्परव्यभिचारो भवति, तदन्तर्गतप्रपञ्चयोस्तद्विषयप्रज्ञयोरपि, एवं ज्ञस्वरूपस्यापि व्यभिचारो भवत्येव सुषुप्ते। प्रसिद्धं ह्येतत् सर्वस्य लोकस्य यत् सौषुप्तानुस्मरणम् 'न किञ्चिदवेदिषम्' इति। श्रुतिश्चात्र भवति 'नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति' (छा ८-११-२) इति। अपि चेदमेव खलु सुषुप्तस्य सुषुप्तत्वं नाम यन्न किञ्चित्तत्र विजानातीति। यदि हि किञ्चिद् विजानीयात्, तर्हि तत एव स्वप्नजागरितयोरिव दर्शनवृत्तित्वमेव तस्यापीत्यवस्थान्तरत्वमेव हीयेतेति। अतो ज्ञस्वरूपमपि व्यभिचार्येवेति

न किञ्चिदप्यात्मनस्तत्त्व सुषुप्तपरिशीलनाद् विज्ञात भवति , अथवा तत्रोप लम्भनैष्किञ्चन्यात् , शून्य परमार्थ इत्येव युक्त भवेदध्यवसातुमिति ॥

नैतदस्ति । अनुभवस्यानपलपनीयत्वात् । सुषुप्ते 'न किञ्चिदवेदिषम्' इति परामर्श सौषुप्तानुभवनत खलु स्यात् । अनुभूतिरेव तु ज्ञस्वरूपमात्मन इति न तस्यापलाप शक्य कर्तु केनचित् । अत एव न शून्यवाद स्यावसरोऽत्र । यत्तु श्रुत्युदाहरणम् 'नाह खल्वयमेव सप्रत्यात्मान जानाति' इत्यादि, तच्चेत् सुषुप्तौ विशेषविज्ञानाभावाभिप्रायेण, काम भवतु तथा, न तेन न किञ्चिच्छिद्यते । न हि सुषुप्तौ विशेषविज्ञान दर्शन-श्रवणादिरूपमस्तीति वय प्रतिजानीमहे , तदुपशमलक्षण हि सुषुप्तमिष्टम् । विशेषविज्ञानाभावे कारण तु नात्मनो ज्ञस्वरूपवियोगात्, कि तर्हि ज्ञेयाभावादेव तत्र । तथा ह्याह श्रुति 'यद् वै तन्न विजानाति विजानन् वै तन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्त यद्विजानीयात्' (बृ ४-३-३०) इति । तस्मात् चैतन्य स्वरूपमेवात्मन , प्रकाश इव सवितु । सुषुप्तावचेतयमानता तु तत्र सर्वस्यापि चिदनन्यत्वेनावस्थितत्वात्, ततो विभक्तत्वाभावादेवेतरा-वस्थयोरिवेति सिद्धम् । अत एव हि श्रुति 'सति सपद्य न विदु ' (छा ६-९-२), 'प्राज्ञेनात्मना सपरिष्वक्तो न बाह्य किञ्चन वेद नान्तरम् ' (बृ ४-३-२१) इति ॥

(१) सुषुप्ते व्यभिचरतीति चेन्न । सुषुप्तस्यानुभूयमानत्वात् ॥
गौ का ७, पा १८७

(२) यत्तु तत्र विनाशमेवापीतो भवति इति । तदपि विशेषविज्ञान विनाशाभिप्रायमेव, न विज्ञातृविनाशाभिप्रायम् ॥
सू भा १-३-१९, पा ११४

(३) एवदुक्त भवति – विषयाभावादियमचेतयमानता न चैतन्या भावादिति । यथा वियदाश्रयस्य प्रकाशस्य प्रकाश्याभावादनभिव्यक्तिर्न स्वरूपाभावात् , तद्वत् ॥ सू भा २-३-१८, पा २८१

(४) विशेषविज्ञानोपशमलक्षण तावत् सुषुप्त न क्वचिद् विशिष्यते । तत्र सति सपनस्तावत् तदेकत्वान्न भिनानातीति युक्तम् ॥

सू भा ३-२-७, पा ३५१

(५) सोऽय पुरुष प्राज्ञेन परमार्थेन स्वाभाविकेन स्वेनात्मना परेण ज्योतिषा सपरिष्वक्त सम्यक् परिष्वक्त एकीभूतो निरन्तर सर्वात्मा न बाह्य किञ्चन वस्त्वन्तर नाप्यान्तरम् आत्मनि 'अयमहमस्मि सुखी दु खी वा' इति वेद । तत्र चैतन्यज्योति स्वभावत्वे कस्मादिह न जानातीति यदप्राक्षी तत्राय हेतुर्मयोक्त एकत्वम् ॥ बृ भा ४-३ २१, पा ८९२

## आत्मनो नित्यनिरवस्थत्वम् –

४३ योऽसौ सुषुप्ते प्राज्ञेनात्मनैकीभाव उक्त, सोऽसावस्य स्वभाव एव, न पुन सुषुप्तेऽपूर्ववत् प्राप्य इत्यावेदितम् । प्राज्ञत्व च नित्यचैतन्यलक्षणप्रज्ञावत्त्वमेवेति स्वप्नजागरितयोरप्यनेनानुवृत्तेन भवितव्यमिति श्लिष्यते१ अतो यथैवास्य सुषुप्तौ परमेश्वरत्वम्, तथैव स्वप्नजागरितयोरपीत्याप्नोति । तयोरवस्थयो परम् अविद्याप्रत्युपस्थापितकार्यकरणसघाताभिमानित्वलक्षणप्रमातृत्वावभासोऽप्यस्तीति तद्व्युदासेनास्य परमेश्वरत्वमपि पृथग् ज्ञाप्यते श्रुत्या 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान । जुष्ट यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक ॥' (मु ३-१-२) इत्यादिवचनै । तथा च तिसृष्वप्यवस्थासु अस्यात्मनोऽविद्याध्यारोपितप्रमातृत्वमपोह्य सम परमेश्वरत्वमेव बोध्यत इत्यत सर्वावस्थारहितत्वमेव विवक्षितमवस्थात्रयप्रक्रिययेत्यवगम्यते । एव हि तुरीयत्वोपदेशोऽवकल्पत इति ॥ ७

(१) सुषुप्तोऽपि हि भूतपूर्वगत्या प्राज्ञ उच्यते । अथवा प्रज्ञप्तिमात्रमस्यैवासाधारण रूपमिति प्राज्ञ । इतरयोर्विशिष्टमपि विज्ञानमस्तीति ॥

मा भा ५, पा १८१

[ विशिष्टमपि विज्ञानमिति प्रमातृरूपाश्रित विज्ञानमपीत्यर्थ । अपिशब्दात् स्वरूपभूत प्रज्ञानमप्यस्तीति गम्यते ॥ ]

(२) प्राज्ञ परमेश्वर । सर्वज्ञत्वलक्षणया प्रज्ञया नित्यमवियोगात् ॥
सू भा १-३-४२, पा १४३

(३) यावदेव हि स्थाणाविव पुरुषबुद्धिं द्वैतलक्षणामविद्यां निवर्तयद् कूटस्थनित्यदृक्स्वरूपमात्मानम् 'अहं ब्रह्मास्मि' इति न प्रतिपद्यते, ताव-ज्जीवस्य जीवत्वम् । यदा तु देहेन्द्रियमनोबुद्धिसघाताद् व्युत्थाप्य श्रुत्या प्रतिबोध्यते ' नासि त्व देहेन्द्रियमनोबुद्धिसघात नासि ससारी, किं तर्हि तद्यत् सत्य स आत्मा चैतन्यमात्रस्वरूप तत्त्वमसि ' इति, तदा कूटस्थ-नित्यदृक्स्वरूपमात्मान प्रतिबुध्य अस्माच्छरीराद्यभिमानात् समुत्तिष्ठन् स एव कूटस्थनित्यदृक्स्वरूप आत्मा भवति ॥ सू भा १-३-१९, पा ११२

(४) द्वा सुपर्णा सयुजा सखाया समान वृक्ष परिषस्वजाते ।
तयोरन्य पिप्पल स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति ॥
मु ३-१-१

भाष्यम् - तयो परिष्वक्तयो, अन्य एक क्षेत्रज्ञो लिङ्गोपाधि, वृक्षमाश्रित पिप्पल कर्मनिष्पन्न सुखदु खलक्षण फल स्वादु अनेकविचित्र-वेदनास्वादरूप स्वादु, अत्ति भक्षयति, उपभुङ्क्ते अविवेकत । अनश्नन् अन्य इतर ईश्वरो नित्यशुद्धबुद्धमुक्तस्वभाव सर्वज्ञ सर्वसत्त्वोपाधिरीश्वर, नाश्नाति । प्रेरयिता ह्यसौ उभयोर्भोज्यभोक्त्रो नित्यसाक्षित्वसत्तामात्रेण । स त्वनश्नन् अन्योऽभिचाकशीति, पश्यत्येव केवलम् ॥ मु भा पा १६५

(५) यदा यस्मिन् काले पश्यति ध्यायमानोऽन्य वृक्षोपाधिलक्षणाद् विलक्षणमीशम् असंसारिणम् अशनायापिपासाशोकमोहजरामृत्य्वतीत सर्वस्य जगत । 'अयमहमस्म्यात्मा सर्वस्य सम सर्वभूतस्थो नेतरोऽविद्या जनितोपाधिपरिच्छिन्नो मायात्मा '-इति । विभूति महिमान च जगद्रूपम् 'अस्यैव मम परमेश्वरस्य ' इति यदैव द्रष्टा, तदा वीतशोको भवति ॥
मु भा ३-१-२, पा १६६

(६) जागरितस्थानो बहि प्रज्ञ सप्ताङ्ग एकोनविंशतिमुख स्थूल भुग्वैश्वानर प्रथम पाद ॥ मा ३

भाष्यम् - इष्यते च सर्वोपनिषदा सर्वात्मैक्यप्रतिपादकत्वम् । अतो युक्तमेवास्य आध्यात्मिकस्य पिण्डात्मनो द्युलोकाद्यङ्गत्वेन विराडात्मना आधिदैविकेनैकत्वमभिप्रेत्य सप्ताङ्गत्ववचनम् । विराजैकत्वमुपलक्षणार्थं हिरण्यगर्भाव्याकृतात्मनो ॥ मा भा पा १८०

[अत्र जागरितात्मन पिण्डाभिमानाद् व्युत्थापनेन प्रमातृत्वमपोह्य वैश्वानरात्मत्व बोध्यते । एव स्वप्नात्मनोऽपि तैजसत्व नाम हिरण्यगर्भात्मत्वम् उपदिश्यते ॥]

(७) विश्वस्य सविषयत्वेन प्रज्ञाया स्थूलाया भोज्यत्वम् । इह पुन केवला वासनामात्रा प्रज्ञा भोज्येति प्रविविक्तो भोग ॥

मा भा ४, पा १८०

[अत्र स्थूलप्रज्ञाया, सूक्ष्मप्रज्ञायाश्च आत्मभोज्यत्वेनोपस्थापनात प्रमातृत्वमपोह्य तत्स[illegible] ज्ञाप्यत इति गम्यते ॥]

(८) एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनि सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ मा ६

भाष्यम् - यथा प्राणलये परिच्छिन्नाभिमानिना प्राणोऽव्याकृत, तथा प्राणाभिमानिनोऽप्यविशेषापत्तौ अव्याकृतता समाना, प्रसवबीजात्मकत्व च । तदध्यक्षश्चैकोऽव्याकृतावस्थ । परिच्छिन्नाभिमानिनामध्यक्षाणा च तेनैकत्वमिति पूर्वोक्त विशेषणम् 'एकीभूत प्रज्ञानघन' इत्यादि उपपन्नम् ॥ पा १८३

[अत्र प्राज्ञस्य प्राणापराभिधानस्य [illegible] सुषुप्तावस्थोपहितत्वमव्याकृतानन्यत्व चोक्तम् । जीवप्रसवबीजात्मकत्व च स्वप्नप्रबोधयो प्रमातृत्वावभासलक्षणविकल्पस्यास्पदत्वात ॥]

## आत्मनोऽवस्थात्रयवत्त्व मायिकम् –

४४ 'सुषुप्ताव्याकृतात्मनोरेकत्वम्, निर्विशेषत्वात्' इति सार्वत्रिकानुभवानुसारेण भाष्योक्त किञ्चित् सूक्ष्मेक्षिकया विमर्शनीयमस्ति । यथा हि प्रलयावस्थाया नामरूपयोरव्याकृतावस्थयोरात्मैकत्वादात्मैकशब्देन व्यपदिशन्ति 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ १-१) इत्याद्या श्रुतय, तथैव सुषुप्तावस्थायामपि नामरूपयोरव्याकृतावस्थयोरात्मनैकत्व मभिप्रेत्यैव **'एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्'** (मा ५), 'सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य एषास्य परमा गतिरेषास्य परमा सम्पदेषोऽस्य

परमो लोक एषोऽस्य परम आनन्दः' (बृ ४-३-३२) इत्यादय । तथा सुषुप्तात्मन सकाशात् प्राणलोकदेवभूतानामुत्पत्ति कथयन्ति 'स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' (बृ २-१-२०) इति । अत एव माण्डूक्येऽपि 'प्रभवाप्ययौ हि भूतानाम्' (मा ६) इत्युक्तम् । एव चात्रावस्थात्रयप्रक्रियाजगत्कारणप्रक्रिययोरुभयोरप्येकवाक्यता सजाता – उभयत्रापि परमेश्वरादेव जगज्जन्मस्थित्यप्यया उच्यन्ते तदनन्यत्वद्योतनार्थमिति । नामरूपयोश्च स्वप्नजागरितयो परस्परव्यभिचारात्, सुषुप्ते च स्वरूपेणापि व्यभिचारात्, आत्मन्यविद्यारोपितत्वमेवेति, वस्तुतो मायामात्रमेवेदमात्मनोऽवस्थात्रयवत्त्व नामेत्यवसीयते ॥

(१) स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते - 'यदा सुप्त स्वप्न न कञ्चन पश्यत्यथास्मिम् प्राण एवैकधा भवति तदैन वाक् सर्वैर्नामभि सहाप्येति चक्षु सर्वै रूपै सहाप्येति श्रोत्र सर्वैं शब्दै सहाप्येति मन सर्वैर्ध्यानै सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलत सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मन सर्वे प्राणा यथायतन विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका (कौ ३ ३) इति ॥

सू भा १-३-३०, पा १२८, १२९

(२) श्रुत्यनुगृहीत एव ह्यत्र तर्कोऽनुभवाङ्गत्वेनाश्रीयते – स्वप्नान्तबुद्धान्तयोरुभयोरितरेतरव्यभिचारादात्मनोऽनन्वागतत्वम्, सप्रसादे च प्रपञ्चपरित्यागेन सदात्मना सपत्तेर्निष्प्रपञ्चसदात्मत्व प्रपञ्चस्य ब्रह्मप्रभवत्वात् कार्यकारणानन्यत्वन्यायेन ब्रह्माव्यतिरेक – इत्येवजातीयक ॥

सू भा २-१-७, पा १८९

(३) सुषुप्तिकाले च परेण ब्रह्मणा जीव एकता गच्छति । परस्माच्च ब्रह्मण प्राणादिक जगज्जायत इति वेदान्तमर्यादा ॥

सू भा १-४-१८, पा

(४) 'इद सर्वं यदयमात्मा' (बृ २-४-६), 'आत्मैवेद सर्वम्' (छा ७-२५-२) 'ब्रह्मैवेदममृत पुरस्तात्' (मु २-२-१२), 'सर्वं

खल्विदं ब्रह्म' (छा ३-१४-१) इत्येवमाद्याभिर्हि श्रुतिभिरविशेषेण त्रिष्वपि कालेषु कार्यस्य कारणानन्यत्वं श्राव्यते तत्र य परिहार कार्यस्य तद्धर्माणा चाविद्याध्यारोपितत्वान्न तै कारण ससृज्यत इति । अपीतावपि स समान । अस्ति चायमपरो दृष्टान्त - यथा स्वयप्रसारितया मायया मायावी त्रिष्वपि कालेषु न सस्पृश्यते, अवस्तुत्वात् एव परमात्मापि ससारमायया न सस्पृश्यत इति । यथा च स्वप्नदृगेक स्वप्नदर्शनमायया न सस्पृश्यते प्रबोधसप्रमादयोरनन्वागतत्वात्, एवम् अवस्थात्रयसाक्ष्येकोऽव्यभिचारी अवस्थात्रयेण व्यभिचारिणा न सस्पृश्यते । मायामात्र ह्येतत् यत् परमात्मनोऽवस्थात्रयात्मनावभासन रज्ज्वा इव सर्पादिभावेनेति । अत्रोक्त वेदान्तार्थसप्रदायविद्भिराचार्यै -' अनादिमायया सुप्तो यदा जीव प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैत बुध्यते तदा ॥ ' (गौ का १-१६) इति ॥

सू भा २-१-९, पा १९१

(९) यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासाद् ससारिस्वरूपविवक्षा मन्यते, स प्राचीमपि दिश प्रस्थापित प्रतीचीमपि दिश प्रतिष्ठेत । यतो न बुद्धान्ताद्यवस्थोपन्यासेनावस्थावत्त्व ससारित्व वा विवक्षति, किं तर्हि, अवस्थारहितत्वम् अससारित्व च ॥ सू भा १-३-४२, पा १४४

[ एतद् बृहदारण्यकस्थ ' कतम आत्मेति योऽय विज्ञानमय प्राणेषु हृद्यन्तर्ज्योति पुरुष ' इति वाक्यमधिकृत्योक्तम् । माण्डूक्ये तु जागरितादिस्थानस्थस्य तत्र तत्रैव वैश्वानराद्यभेदप्रतिपादनात्, अन्ते च ' नान्त प्रज्ञ न बहि प्रज्ञम् ' इत्यादिना अवस्थासस्पर्शराहित्यस्यैवोद्धोषणात्, अवस्थात्रयोपन्यासोऽवस्थावत्त्व प्रतिषेधार्थ एवेति नि सशय निश्चीयत इति बोध्यम् ॥ ]

## अवस्थात्रयपरीक्षया जीवेश्वरविभागव्यवहारस्याप्यपबाधः -

४५ इद चापरमत्रावस्थात्रयप्रक्रियया प्रसिध्यति यद् यथैव जागरितस्थयोर्नामरूपयोस्तत्कृतकार्यकरणसघाताना चाविद्याकल्पितत्वेन मायिकत्वात्, मायिकमेव तत्र प्रतिभासमान चेतनाचेतननानात्व जीवाना प्रमातृत्व कर्तृत्व भोक्तृत्व भोक्तृभोगविभागव्यवहारादिक च, तथैव तदपेक्षया प्रतिभासमानमीश्वरस्येश्वरत्व तथा जगत्कारणत्व जीवाना मीशितव्यत्व च मायिकमेव, तथैव च नामरूपयोर्बीजशक्त्यात्मना

सावशेषत्वव्यवहार सुषुप्तप्रलययो । अविद्याकल्पितत्वाविशेषात् तत्रानुमेय बीजशक्तेरिति । अत एव हि श्रुतिर्विज्ञानमयस्याजाद्वितीयब्रह्मानन्यत्वमाह, अविद्याकल्पितविषयसापेक्षान्त प्रज्ञत्वादिविशेषनिराकरणपूर्वकम् अवस्थात्रयतद्गतप्रपञ्चसस्पर्शविधुर तुरीयत्वमप्यात्मन आचष्ट इति ॥

(१) सर्वज्ञस्येश्वरस्यात्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये ससारप्रपञ्चबीजभूते सर्वज्ञस्येश्वरस्य माया, शक्ति , प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते । ताभ्यामन्य सवज्ञ ईश्वर 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा ८-१४-१) इति श्रुते ॥ सू भा २-१-१४, पा २०१

[अत्र नामरूपयोस्तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वमुक्त व्यवहारे यथाप्रतिभासमानमायिकशरीरमपेक्ष्य । परमार्थतस्तु तयोरात्मत्वमेवेति प्रागुक्तम् (३५) तत्र प्रस्मर्तव्यम् ॥]

(२) एवमविद्याकृतनामरूपोपाध्यनुरोधी ईश्वरो भवति , व्योमेव घटकरकाद्युपाध्यनुरोधि । स च स्वात्मभूतानेव घटाकाशस्थानीयान् अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसघातानुरोधिनो जीवाख्यान् विज्ञानात्मन प्रतीष्टे व्यवहारविषये । तदेवम् अविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरस्येश्वरत्व सर्वज्ञत्व सर्वशक्तित्व च न परमार्थतो विद्यया अपास्त सर्वोपाधिस्वरूपे आत्मनि ईशित्रीशितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते । तथा चोक्तम् 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छा ७-२४-१) इति, 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन क पश्येत्' (बृ ४-५-१५) इत्यादिना च । एव परमार्थावस्थाया सर्वव्यवहाराभाव वदन्ति वेदान्ता सर्वे ॥ सू भा २-१-१४, पा २०१

(३) सूत्रकारोऽपि परमार्थाभिप्रायेण 'तदनन्यत्वम्' इत्याह । व्यवहाराभिप्रायेण तु 'स्याल्लोकवत्' इति महासमुद्रस्थानीयता ब्रह्मण कथयति । अप्रत्याख्यायैव कार्यप्रपञ्च परिणामप्रक्रिया चाश्रयति सगुणेषूपासनेषूपयोक्ष्यत इति ॥ सू भा २-१-१४, पा २०१, २०२

(४) यावदेव हि स्थाणाविव पुरुषबुद्धिं द्वैतलक्षणामविद्या निवर्तयन् कूटस्थनित्यदृक्स्वभावमात्मानम् 'अह ब्रह्मास्मि' इति न प्रतिपद्यते तावज्जीवस्य जीवत्वम् । यदा तु देहेन्द्रियमनोबुद्धिसघाताद् व्युत्थाप्य श्रुत्या

प्रतिबोध्यते तदा कूटस्थनित्यदृक्स्वरूपमात्मानं प्रतिबुद्ध्यास्माच्छरीराद्यभिमानात् समुत्तिष्ठन् स एव कूटस्थनित्यदृक्स्वरूप आत्मा भवति ॥

सू भा १-३-१९ पा ११२

(५) अपि च यदा 'तत्त्वमसि' इत्येवञ्जातीयकेनाभेदनिर्देशेनाभेदं प्रतिबोधितो भवति, अपगतं तदा भवति जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वम् ॥ सू भा २-१-२२ पा २०९

(६) यथा लोके पुंस्त्वादीनि बीजात्मना विद्यमानान्येव बाल्यादिष्वनुपलभ्यमानान्यविद्यमानवदभिप्रेयमाणानि यौवनादिष्वाविर्भवन्ति नाविद्यमानान्युत्पद्यन्ते षण्डानामपि तदुत्पत्तिप्रसङ्गात्, एवमयमपि बुद्धिसंबन्धः शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोधप्रसवयोराविर्भवति ॥

सू भा २-३-३१, पा २८९

(७) प्रलीयमानमपि चेदं जगच्छक्त्यवशेषमेव प्रलीयते। शक्तिमूलमेव च प्रभवति ॥ सू भा १-३-३०, पा १३०

(८) यथा ह्यविभागेऽपि परमात्मनि मिथ्याज्ञानप्रतिबद्धो विभागव्यवहारः स्वप्नवदव्याहतः स्थितौ दृश्यते एवमपीतावपि मिथ्याज्ञानप्रतिबद्धैव विभागशक्तिरनुमास्यते ॥ सू भा २-१-९, पा १९१-१९२

[ सृतिप्रत्यययोरनुमीयमानं बुद्धिसंबन्धविभागशक्त्यादिकं मिथ्याज्ञाननिमित्तमेवेत्यत्रोक्तम् ॥ ]

(९) निर्बीजतयैव चेत् सति प्रलीनानां सम्पन्नानां सुषुप्तिप्रलययोः पुनरुत्थानानुपपत्तिः स्यात्। मुक्तानां च पुनरुत्पत्तिप्रसङ्गः। बीजाभावाविशेषात्। ज्ञानदाह्यबीजाभावे च ज्ञानानर्थक्यप्रसङ्गः। तस्मात् सबीजत्वाभ्युपगमेनैव सतः प्राणत्वव्यपदेशः, सर्वश्रुतिषु च कारणत्वव्यपदेशः। अत एव 'अक्षरात्परतः परः' (मु २-१-२), 'स बाह्याभ्यन्तरो ह्यजः' (मु २-१-२), 'यतो वाचो निवर्तन्ते' (तै २-९), 'नेति नेति' (बृ २-३-६) इत्यादिना बीजत्वापनयनेन व्यपदेशः ॥

गौ का १-२, पा १८३

(१०) सतां विद्यमानानां स्वेन अविद्याकृतनामरूपमायास्वरूपेण, सर्वभावानां विश्वतैजसप्राज्ञभेदानाम् उत्पत्तिः ॥

गौ का भा १-६, पा १८४

(११) नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥

मा ७

व्यवहारस्य सर्वथाप्यात्मासंस्पर्शित्वम् –

४६ दिङ्मात्रमिह दर्शित जगत्कारणवादादिप्रक्रियापञ्चकस्य यथाध्यारोपापवादप्रक्रियावान्तरभेदत्वोपपत्तिस्तथा । एवमेवान्यासामपि प्रक्रियाणामत्रैव तात्पर्यमूह्य जिज्ञासुभि । सर्वत्र तु यद्यत् परमार्थतत्त्वबोधनोपायत्वेनात्मन्यध्यारोप्यते तत्तदपोद्यतेऽन्तत – इत्येतावत्तु शरीर प्रक्रियाया । तत्र लोकसिद्ध जीवत्वमध्यारोप्य तस्य शरीरादिमत्त्व, जन्मादिविक्रियावत्त्व, कर्तृत्व, भोक्तृत्व, जन्मान्तरलोकान्तरगति, फलभोगावसाने पुन शरीरान्तरग्रहणमित्येत्सर्व वर्ण्यते शास्त्रे । तथा ससारे विरक्तस्य गुरुपादोपसर्पण, तदुपदेशश्रवण, श्रुतार्थमनन, तदर्थविज्ञानेन च ससारबन्धनान्मोक्ष – इत्येवविधोऽपि शास्त्रीयव्यवहारोऽविद्याभूमामेवेत्युक्त प्राक् (२७)। तदेव सर्वविधव्यवहारभात्त्वेऽप्यात्मनि न कश्चिद्विशेषोऽध्यारोपितरजतसर्पतलमलिनवत्त्वादिव्यवहारै शुक्तिरज्जुव्योमादीनामिवेति च । अत्र नित्यशुद्धबुद्धमुक्तब्रह्मानन्यत्वेन नित्य स्थितस्यैवात्मनोऽविद्याश्रयत्वविषयत्वव्यवहार इति न तत्स्वरूपे तेन कश्चिद्विशेषो भवतीत्येतद्विज्ञापनाय श्रुतिषु 'तत्त्वमसि', 'अह ब्रह्मास्मि' – इत्यादीनि ब्रह्मात्मनो रितरेतरत्वबोधकानि वचनान्युपन्यस्यन्ते । अत एव च रज्जुशुक्त्यादिषु सर्पत्वरजतत्वादिसव्यवहारकालेऽपि यथा सर्परजतादयो नैव सन्ति तत्र वस्तुत., एव ससारित्वप्रत्ययकालेऽपि नास्त्येवात्मनि वास्तविक ससारित्वमिति रज्जुसर्पादिदृष्टान्तप्रणयने आशयोऽभियुक्तानामित्यवगम्यते । इयास्तु दृष्टान्तदार्ष्टान्तिकयोर्विशेष । दृष्टान्ते रज्ज्वादिषु सर्पादयो यद्यपि वस्तुवृत्तेन न सन्ति, ज्ञात्रैव केवल भ्रान्तेन तत्र निश्चितसर्पादिबुद्धिशब्दप्रयोगौ क्रियेते, दार्ष्टान्तिके पुनर्ब्रह्मात्मनि यद्यपि विपरीतज्ञानकृतमेवात्मसबन्धनमिति सव्यवहारोऽस्ति, तथाप्याविद्यकमेव तत्र विपरीतप्रत्ययाश्रयत्व तदपबाधश्चेति । यद्यपि यथैव सर्परजताद्यध्यारोपस्थले तत्तदध्यारोपो मिथ्याप्रत्ययत्वेन व्यवह्रियते, तथैवात्मन्यनात्माध्यारोपोऽपि मिथ्या-

प्रत्यक्त्वेनैव व्यवह्रियते, तथापि तु यथा काचित्का सर्पादिप्रत्यया सत्येव प्रमातु प्रमातृत्वे जायन्ते विनिवर्तन्ते च न तथा अनात्माध्यारोप , प्रमातृत्वस्यैव तादृशाध्यारोपपुर सरत्वात् , प्रमातृत्वेन सहैव च विनिवृत्तेस्तस्याध्यारोपस्य । अत एव चास्य मूलाध्यारोपस्य न सति काले आदिरन्तो वा शक्यकल्पन , कालस्याप्यध्यारोपपुर सरमेवात्मलाभादिति, अनादिरनन्तश्चायमित्यभियुक्ता सव्यवहरन्ति । सर्वोऽपि विद्याविद्याव्यवहारोऽयमविद्याभूमावेवेति प्रागावेदितम्, तन्न प्रस्मर्तव्यम् ॥

(१) आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदित ।
घटादिवच्च सघातैर्जातावेतन्निदर्शनम् ॥ गौ का ३-३

(२) मरणे सभवे चैव गत्यागमनयोरपि ।
स्थितौ सर्वशरीरेषु ह्याकाशेनाविलक्षण ॥
सङ्घाता स्वप्नवत्सर्वे आत्ममायाविसर्जिता ।
आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥
गौ का ३-९, १०

(३) न चाविद्यावत्त्वे तदपगमे च वस्तुन कश्चिद्विशेषोऽस्ति । यथा कश्चित् सतमसे पतिता काञ्चिद् रज्जुमहिं मन्यमानो भीतो वेपमान पलायते, त चापरो ब्रूयात् 'मा भैषी , नायमहि , रज्जुरेव ' इति । स च तदुप श्रुत्याहिकृत भयमुत्सृजेत् , वेपथु पलायन च, न त्वहिबुद्धिकाले तदपगमकाले च वस्तुन कश्चिद्विशेष स्यात् , तथैवैतदपि द्रष्टव्यम् ॥
सू भा १-४-६, पा १७४

[अत्र यथा रज्ज्वामहिबुद्धिकाले तदपगमकाले च नास्ति वस्तुनि कश्चिद्विशेष , एवमविद्यावत्त्वकाले तदपगमकाले च नात्मनि कश्चिद्विशेषोऽस्ति इत्युक्तम् ॥ ]

(४) ब्रह्मण्यविद्यानुपपत्तिरिति चेत् । न । ब्रह्मणि विद्याविधानात् । न हि शुक्तिकाया रजताध्यारोपणेऽसति शुक्तिकात्व ज्ञाप्यते चक्षुर्गोचरापन्नायाम् 'इय शुक्तिका, न रजतम्' इति । तथा 'सदेवेद सर्वम्', 'ब्रह्मैवेद सर्वम्', 'आत्मैवेद सर्वम्', 'नेद द्वैतमस्त्यब्रह्म' – इति ब्रह्मण्येकत्वविज्ञान न विधातव्य ब्रह्मण्यविद्याध्यारोपणायाम् असत्याम् ॥
बृ भा १-४-१० पा ६७०

[अत्र विद्योपदेशश्रुत्यन्यथानुपपत्त्या ब्रह्मण्यविद्याविषयत्व स्वीकर्तव्यमित्युक्तम् ॥]

(५) न ब्रूमः शुक्तिकायामिव ब्रह्मण्यतद्धर्माध्यारोपणा नास्तीति किं तर्हि, न ब्रह्म स्वात्मन्यतद्धर्माध्यारोपनिमित्तमविद्याकर्तृ चेति । भवत्वेवं नाविद्याकर्तृ भ्रान्तं च ब्रह्म । किं तु, नैवाब्रह्माविद्याकर्ता चेतनो भ्रान्तोऽन्य इष्यते । 'नान्योऽतोऽस्ति विज्ञाता', 'नान्यदतोऽस्ति विज्ञातृ', 'तत्त्वमसि', 'आत्मानमेवावेत्', 'अहं ब्रह्मास्मि', 'अन्योऽसावन्योऽहमस्मीति न स वेद' इत्यादिश्रुतिभ्यः ॥ बृ भा १-४-१०, पा ६७०

[अत्र ब्रह्मण्यविद्याश्रयत्वम् अविद्यादृष्ट्या, अविद्याराहित्यं च परमार्थत इत्युच्यते, श्रुतिप्रामाण्यात् ॥]

(६) [अ] न चायं व्यवहाराभावोऽवस्थाविशेषनिबद्धोऽभिधीयत इति युक्तं वक्तुम् । 'तत्त्वमसि' इति ब्रह्मात्मभावस्यानवस्थाविशेष-निबन्धनत्वात् ॥ सू भा २-१-१४, पा १९८

[संसारित्वाध्यारोपणावस्थायामपि संसारित्वं नास्तीत्यवगम्यत इत्येतत् ॥]

[आ] स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद ॥ बृ ४-४-२५

भाष्यम् – एष सर्वस्या उपनिषदः संक्षिप्तोऽर्थ उक्तः । एतस्यैवार्थस्य सम्यक् प्रबोधाय उत्पत्तिस्थितिप्रलयादिकल्पना क्रियाकारकफलाध्यारोपणा च आत्मनि कृता । तदपोहेन च नेतिनेतीत्यध्यारोपितविशेषापनयद्वारेण पुनस्तत्त्वमावेदितम् ॥ पा ९३७, ९३८

(७) भावैरसद्भिरेवायमद्वयेन च कल्पितः ।
भावा अप्यद्वयेनैव तस्मादद्वयता शिवा ॥ मा का २-३३

भाष्यम् – अतोऽसद्भिरेव प्राणादिभावैरद्वयेन च परमार्थसता आत्मना रज्जुवत् सर्वविकल्पास्पदभूतेनायं स्वयमेवात्मा कल्पितः सदैकस्वभावोऽपि सन् । ते च प्राणादिभावा अप्यद्वयेनैव सता आत्मना विकल्पिताः । न हि निरास्पदा काचित् कल्पनोपपद्यते । अतः सर्वकल्पनास्पदत्वात् स्वेनात्मना अद्वयस्याव्यभिचारात् कल्पनावस्थायामप्यद्वयता शिवा । कल्पना एव त्वशिवा ॥ पा २०५

(८) तिमिरातिमिरदृष्टिवदविद्याकर्तृत्वाकर्तृत्वकृत आत्मनो विशेष स्यादिति चेन्न । 'ध्यायतीव लेलायतीव' (बृ ४-३-७) इति स्वतोऽविद्याकर्तृत्वस्य प्रतिषिद्धत्वात् । अनेकव्यापारसंनिपातजनितत्वाच्चाविद्याभ्रमस्य । विषयत्वोपपत्तेश्च । यस्य चाविद्याभ्रमो घटादिवद्विविक्तो गृह्यते स नाविद्याभ्रमवान् ॥ बृ भा ४-४-६, पा ९१९

(९) शुक्तिका रजतमिति प्रत्येतीत्यत्र शुक्तिवचन एव शुक्तिका शब्द । रजतशब्दस्तु रजतप्रतीतिलक्षणार्थ । प्रत्येत्येव हि केवल रजतमिति न तु तत्र रजतमस्ति ॥ सू भा ४-१-५ पा ४६७

(१०) प्रमातृत्व ह्यात्मनो निवर्तयत्यन्त्य प्रमाणम् । निवर्तयदेव च अप्रमाणीभवति स्वप्नकालप्रमाणमिव प्रबोधे । लोके च वस्त्वधिगमे प्रवृत्ति हेतुत्वादर्शनात् प्रमाणस्य ॥ गी भा २ ६९, पा ३९

[अत्र यथा शुक्तिकाज्ञानादूर्ध्वमपि तदधिगमाय प्रमाणप्रवृत्तिर्नास्ति, एव प्रमातृत्वरहितस्यात्मतत्त्वाधिगमादूर्ध्वम् आत्मनि प्रमातृत्व वा, तत्त त्त्वाधिगमाय पुनरपि प्रमाणप्रवृत्तिर्वा नास्तीत्युच्यते ॥ ]

(११) एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूप कर्तृत्वभोक्तृत्वप्रवर्तक सर्वलोकप्रत्यक्ष ॥ अध्यासभाष्यम् , पा ४

[अत्राध्यासस्य सति प्रमातृत्वे कालानुवृत्तौ चानादित्वमनन्तत्व चोक्तम् , अनुभववेद्यत्व च । अस्य चात्मतत्त्वविद्या बाधिकेति समनन्तरवाक्य बोध्यते । अतो न पूर्वापरविरोध ॥ ]

## द्वैतमिथ्यात्वं किंलक्षणमभिप्रेतम् ? –

४७ एतावता विचारसदर्भेणेदमपि स्पष्टीकृत वेदितव्यम् – यदेतद् द्वैतस्य मिथ्यात्व बोध्यते ज्ञानबाध्यत्व च, तदपि द्वैतस्य न ब्रह्म व्यतिरेकेण वस्त्वन्तरत्वमङ्गीकृत्य, कि तु वस्तुत परमार्थानन्यत्वमभिप्रेत्यैव अत 'सत्यानृतमिथुनीकरणमध्यास , तन्निमित्तश्च सर्वो व्यवहार ' इति वाचोयुक्त्या तत्त्वत एवाध्यास कृतोऽस्तीति, ज्ञानेन वस्तुत एवापबाध्य भवेदिति वा न भ्रमितव्यम् । अध्यारोपापवादयोरप्यध्यासभूमावेव लब्ध प्राणत्वात् । तस्मात् , परमार्थदृष्ट्या नाद्वैतिनो जगन्मिथ्यात्ववादित्वे व्यवहार्या , कि त्वात्मैकत्ववादित्वेनेत्यवधेयम् । न हि जातु मिथ्या विकल्पस्य प्रतीतिकाले सत्त्व बाधकाले तु निवृत्तिरिति युज्यते । अत यथा रज्ज्वादिकं स्वरूपेण स्थितमेव सर्पादिबुद्ध्या विकल्प्यते, एव एकरूपेण स्वरूपेणावस्थितमेव ब्रह्म जगज्जीवादिरूपेण विकल्प्यत इत्येव सिद्धान्त ।

(१) असदेव तर्हि सर्वं यद् गृह्यते रज्जुरिव सर्पाद्याकारेण । न । सत एव द्वैतभेदेनान्यथागृह्यमाणत्वान्नासत्त्वं कस्यचित् क्वचिदिति ब्रूमः । यथा सतोऽन्यद्वस्त्वन्तरं परिकल्प्य पुनस्तस्यैव प्रागुत्पत्तेः प्रध्वंसाच्चोर्ध्वमसत्त्वं ब्रुवते तार्किकाः, न तथा अस्माभिः कदाचित् क्वचिदपि सतोऽन्यदभिधानमभिधेयं वा वस्तु परिकल्प्यते । सदेव तु सर्वमभिधानम् अभिधीयते च यदन्यबुद्ध्या । यथा रज्जुरेव सर्पबुद्ध्या सर्प इत्यभिधीयते, यथा वा पिण्डघटादि मृदोऽन्यबुद्ध्या पिण्डघटादिशब्देनाभिधीयते लोके । रज्जुविवेकदर्शिनां तु सर्पाभिधानबुद्धी निवर्तेते यथा च मृद्विवेकदर्शिनां घटादिशब्दबुद्धी, तद्वत् सद्विवेकदर्शिनाम् अन्यविकारशब्दबुद्धी निवर्तेते । 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इति 'अनिरुक्तेऽनिलयने' इत्यादिश्रुतिभ्यः ॥ छा ६-१-३ पा ५१०

[रज्ज्वादौ सर्पादिशब्दबुद्धी यथा भ्रान्तानाम्, एवं जगच्छब्दबुद्धी ब्रह्मणि भ्रान्तानां ज्ञानरहितानामित्युक्तं भवति ॥]

(२) यथा मन्दान्धकारे 'स्थाणुरयम्' इत्यगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, यथा वा शुक्तिकायाम् अकस्माद्रजतमिति निश्चितौ शब्दप्रत्ययौ, तद्वत् देहादिसंघातेऽहमिति निरुपचारेण शब्दप्रत्ययौ आत्मानात्माविवेकेनोत्पद्यमानौ कथं गौणौ शक्यौ वदितुम्? आत्मानात्मविवेकिनामपि पण्डितानाम् अजाविपालानामिव अविविक्तौ शब्दप्रत्ययौ भवतः । तस्मात्, देहादिव्यतिरिक्तात्मास्तित्ववादिनां देहादावहंप्रत्ययो मिथ्यैव न गौणः । तस्मात्, मिथ्याप्रत्ययनिमित्तत्वात् सशरीरत्वस्य सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम् ॥ सू भा १-१-४, पा २२

[देहादिसंघाते जायमानौ अहमिति शब्दप्रत्ययौ स्थाणुशुक्तिकादिषु जायमानपुरुषरजतादिशब्दप्रत्ययवत् देहादिविकल्पास्पदात्मविषयावेवेत्युक्तमत्र । सर्वत्राप्येवंविधस्थले तत्तदास्पदव्यतिरेकेणारोप्यमाणं वस्त्वन्तरमप्यस्तीति न भ्रमितव्यमित्युक्तं भवति । रज्जुसर्पादिविकल्पस्य वस्तुवृत्तेनाप्युत्पत्त्यादिकं कल्पयतां स्थूलबुद्धीनां निरासः प्रागेव (३५) कृतः ॥]

(३) प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ मा का १-१७

भाष्यम् - रज्ज्वां सर्प इव कल्पितत्वान्न तु स विद्यते । विद्यमानश्चेन्निवर्तेत न संशयः । न हि रज्ज्वां भ्रान्तिबुद्ध्या कल्पितः सर्पो

विद्यमानः सन् विवेकतो निवृत्तः । नैव माया मायाविना प्रयुक्ता तद्दर्शिना चक्षुर्बन्धापगमे विद्यमाना सती निवृत्ता । तथेदं प्रपञ्चाख्यं मायामात्रं द्वैतम्, रज्जुवन्मायाविवच्चाद्वैतं परमार्थतः । तस्मान्न कश्चित् प्रपञ्चः प्रवृत्तो निवृत्तो वास्तीत्यभिप्रायः ॥ मा १-१७ पा १९०, १९१

[ अत्रापि विकल्पितस्य प्रपञ्चस्य – रज्जुसर्पादेरिव – विद्यमानत्वं निवृत्तिश्च प्रतिषिध्येते ॥ ]

(४) तस्मादविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृभोक्तृ रागद्वेषादिदोषकलुषितमनेकानर्थयोगि, तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं स्वरूपं विद्यया प्रतिपाद्यते, सर्पादिविलयनेनेव रज्ज्वादि ॥ सू भा १-३-१९, पा ११५

[ अत्राप्यविद्यमानमेव भ्रान्त्या कल्पितं जीवत्वं सर्पादिवदपनुद्यते विद्ययेत्युच्यते ॥ ]

(५) यथा च मृगतृष्णिकोदकादीनाम् ऊषरादिभ्योऽनन्यत्वं दृष्टनष्टस्वरूपत्वात्, स्वरूपेणानुपाख्यत्वात्, एवमस्य भोग्यभोक्त्रादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम् ॥ सू भा २-१-१४, पा १९७

(६) न ह्यविद्याकल्पितेन रूपभेदेन सावयवं वस्तु संपद्यते । न हि तिमिरोपहतनयनेनानेक इव चन्द्रमा दृश्यमानोऽनेक एव भवति । अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते । पारमार्थिकेन च रूपेण सर्वव्यवहारातीतम् अपरिणतमवतिष्ठते ॥

सू भा २-१-२७, पा २१३

[ अत्र यथा तैमिरिकदृष्टचन्द्रस्यानेकत्वं नास्त्येव, तथा अविद्याकल्पितो व्याकृताव्याकृतात्मकरूपभेदो वा, तेनापाद्यमानपरिणामादिव्यवहारास्पदत्वं वा ब्रह्मणि वास्तविको न भवतीत्युक्तम् ॥ ]

## व्यावहारिकावस्थायां प्रमाणादिविभागसत्यत्वम् –

४८ यद्यपि यथोक्तनीत्या ब्रह्मात्मातिरिक्तं वस्तुसन्नास्त्येव वेदान्ते 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' (मु २-२-१२), 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा'

(छा ७–२४–१), 'आत्मैवेदं सर्वम्' (छा ७–२५–२), 'इद सर्वं यदयमात्मा' (बृ २–४–६), 'ऐतदात्म्यमिद सर्वं तत्सत्य स आत्मा तत्त्वमसि' (छा ६–८–७), 'नेह नानास्ति किञ्चन' (बृ ४-४-१९) इत्यादिश्रुतिभ्य । तथापि प्रागेतस्मात् तत्त्वविज्ञानादित्यत एव सर्वो लौकिको वैदिकश्च प्रमाणादिव्यवहारो यथादृष्ट । तेन न दृष्टापलाप शक्यापादनो वेदान्तनये यथा महावैनाशिकपक्षे । अमुष्या च व्यावहारिकावस्थाया लोकदृष्टि, शास्त्रदृष्टिश्चेति दृष्टिद्वयमवलम्ब्य प्रमाणादि विभाग आस्थीयते । तत्र स्वाभाविकी रागद्वेषादियुक्ता **लौकिकी दृष्टिः**, यया स्वाभाविकज्ञानानुसारेण क्रियमाण कर्मानर्थाय भवति । यदा त्विन्द्रियनिग्रह कृत्वा शास्त्रानुसारेणैव प्रवर्तते, तदा अवलम्ब्यमाना **शास्त्रदृष्टि**र्भवतीति कर्मणि लौकिकशास्त्रदृष्टिविवेक । एव ज्ञानविषयेऽपि विवेक्तव्यम् । यया नैसर्गिकबुद्ध्या, केवलप्रत्यक्षादिप्रमाणबलाद् वा शरीरेन्द्रियसघाते एवाहममाभिमान करोति सा **लौकिकी दृष्टिः** । यया पुन शास्त्रमनुसरन् देहेन्द्रियाद्यसपृक्ते कर्तृत्वभोक्तृत्वरहिते शुद्ध स्वात्मन्यात्माभिमानं करोति सा **शास्त्रदृष्टि**रिति । शास्त्रदृष्टि, आर्षदर्शनम्, पारमार्थिकदृष्टिश्चेति पर्याया । लौकिकदृष्टि, स्वाभाविकदृष्टि, व्यावहारिकदृष्टि –इति च । शास्त्रदृष्टिश्चेय परमात्मैकत्वदर्शनलक्षणा सती तत्त्वदर्शिन आचार्यस्यापि भवतीति **'आचार्यदृष्टिः'** इत्यपि व्यपदेशमर्हति । अत एव शास्त्राचार्योपदेशमनुसृत्य यदनुभवारोपण तत् 'अनुदर्शनम्' इति व्यवह्रियते क्वचित् । अत एव 'तमात्मस्थ येऽनुपश्यन्ति धीरा' (का २–२–१२) इति श्रुतिवाक्य भाष्यकारो व्याचष्टे **'तमेतमीश्वर ये निवृत्तबाह्यवृत्तयोऽनुपश्यन्ति आचार्यागमोपदेशमनु साक्षादनुभवन्ति'** इति । तत्र स्वाभाविकीं लौकिकदृष्टि व्युदस्य शास्त्रदृष्ट्या श्रेयोमार्गेऽभ्युदयनि श्रेयसफले प्रस्थातव्यमिति वेदेन बोध्यते, अविद्याभूमौ (२६, २७) । अत एव चात्मज्ञानात् प्रत्यक्षादीना शास्त्रोपदेशस्य च न तत ऊर्ध्वं प्रवृत्तिरित्युक्त पुरस्तात् (२८) । तत् स्मर्तव्यम् ॥

(१) न ह्ययं सर्वप्रमाणप्रसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम् । अपवादाभावे उत्सर्गप्रसिद्धेः ॥

सू भा २-२-३१, पा २५२

(२) यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥

गी १६-२३, २४

(३) या हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरःसरैव स्वकार्ये पुरुषं प्रवर्तयति । तदा स्वधर्मपरित्यागः परधर्मानुष्ठानं च भवति । यदा पुनः, रागद्वेषौ तत्प्रतिपक्षेण नियमयति, तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवशः ॥ गी भा ३-३४, पा ५७

(४) 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (वे सू २ १ २४) इत्यत्र तु बाह्यनिमित्तनिरपेक्षमपि स्वाश्रयं कार्यं भवतीत्येतल्लोकदृष्ट्या निदर्शितम् । शास्त्रदृष्ट्या तु पुनः सर्वत्रैवेश्वरापेक्षत्वम् आपद्यमानं न पराणुद्यते ॥ सू भा २-२-३, पा २२३

(५) शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ वे सू १-१-३०

भाष्यम् – इन्द्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेन 'अहमेव ब्रह्म' इत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन्नुपदिशति स्म 'मामेव विजानीहि' इति ॥ सू भा १-१-३०, पा ५९

(६) ननु 'हत्वापि न हन्ति' इति विप्रतिषिद्धमुच्यते यद्यपि स्तुतिः । नैष दोषः । लौकिकपारमार्थिकदृष्ट्यपेक्षया तदुपपत्तेः, देहाद्यात्मबुद्ध्या हन्ताहम् इति लौकिकीं दृष्टिमाश्रित्य 'हत्वापि' इत्याह । यथादर्शितां पारमार्थिकीं दृष्टिमाश्रित्य 'न हन्ति न निबध्यते' इति ॥

गी भा १८-१७, पा २६४

✓ (७) नन्वेकत्वैकान्ताभ्युपगमे नानात्वाभावात् प्रत्यक्षादीनि लौकिकानि प्रमाणानि व्याहन्येरन् । स्थाण्वादिष्विव पुरुषादिज्ञानानि । तथा विधि-प्रतिषेधशास्त्रमपि भेदापेक्षत्वात् तदभावे व्याहन्येत । मोक्षशास्त्रस्यापि शिष्यशासित्रादिभेदापेक्षत्वात् तदभावे व्याघातः स्यात् । अत्रोच्यते – नैष दोषः । सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्तेः,

स्वप्नव्यवहारस्येव प्राक् प्रबोधात् । यावद्धि न सत्यात्मैकत्वप्रतिपत्तिः, तावत् प्रमाणप्रमेयफललक्षणेषु विकारेष्वनृतत्वबुद्धिर्न कस्यचिदुत्पद्यते । विकारानेव तु 'अहं मम' इत्यविद्यया आत्मात्मीयेन भावेन सर्वो जन्तुः प्रतिपद्यते स्वाभाविकीं ब्रह्मात्मतां हित्वा । तस्मात् प्राग् ब्रह्मात्मताप्रतिबोधादुपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः । यथा सुप्तस्य प्राकृतस्य जनस्य स्वप्ने उच्चावचान् भावान् पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक् प्रबोधात्, न च प्रत्यक्षाभासाभिप्रायस्तत्काले भवति । तद्वत् ॥

सू. भा. २-१-१४, पा. १९८

## निरुपाधिकब्रह्मवाक्यं तत्त्वप्रधानम्, सोपाधिकवाक्यं तूपासनाविधिप्रधानम् –

४९ उपनिषत्सु प्रतिपाद्यमानं ब्रह्म सोपाधिकं निरुपाधिकं चेति द्विविधं प्रदर्श्यते । तत्र सोपाधिकं साकारं सगुणं वा समुपदिश्यते । यथा 'हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः' (छा. १-६-६), 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' (छा. ३-१४-२)–इत्यादिरूपम् । निरुपाधिकं च यथा 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे. ६-१९), 'नेति नेति' (बृ. २-३-६)–इत्यादिरूपम् । तत्र निरुपाधिकं ब्रह्म यथावर्णितरीत्या अध्यारोपापवादप्रक्रियया समर्थ्येत इति भवेत् । सोपाधिकं तु कथमेतत्प्रक्रियागोचरं भवेदिति शङ्का समुन्मिषेज्जिज्ञासूनाम् । किं च, नैकमेव वस्तु सोपाधिकं निरुपाधिकं च भवेत्तत्त्वतः । सोपाधिकत्वनिरुपाधिकत्वयोर्विरोधात् । श्रुतेर्विरुद्धार्थबोधकत्वेनाप्रामाण्यमपि प्राप्नोति तथात्वे । अतः किं निरुपाधिकवाक्यानां सोपाधिकैरैकार्थ्याय गौणार्थता कल्प्यताम्, किं वा सोपाधिकवाक्यानामेव निरुपाधिकवाक्यानुगुण्येन गौणार्थता स्वीक्रियताम् ?–इत्यपि भवेद् विमर्शः । किञ्चान्यत्, तत्रैव सोपाधिकब्रह्मज्ञानस्यापि फलं श्रूयते 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' (छा. १-६-७), 'सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्च' (छा. १-७-७),

'अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च' (छा १-७-८), यत्रैव निरुपाधिकाना श्रूयते 'तत्र को मोह क शोक' (ई ७), 'परामृता परिमुच्यन्ति सर्वे' (मु ३-२-६) इत्यादिना । एव चान्यतरहानेनान्यतरादाने हेतुर्नोपलभ्यते इत्यतोऽपि कथमिद श्रद्दधाम यदेकैव प्रक्रिया वेदान्तेषु सर्वत्रेत्यपि भवेत् केषाञ्चिन्मति । अत्र भगवान् बादरायण प्राह–'अरूपवदेव हि तत्प्रधानत्वात्' (वे सू ३-२-१४) इति । निरुपाधिकरूपमेव ब्रह्म प्रतिपत्तव्यम्, न रूपाद्याकारविशेषवत् सोपाधिकम् । कुत ? निरुपाधिकवाक्याना वस्तुस्वरूपावधारणप्रधानत्वा दित्यर्थ । सोपाधिकवाक्याना तु गति स एवाह–'प्रकाशवच्चावैयर्थ्यम्' (वे सू ३-२-१५) इति । आकारबोधकवाक्यानामवैयर्थ्यम्, उपासनार्थमुपदेशे प्रवृत्तत्वात् । न ह्याकारविशेषोपदेशमात्रेणाकारवदेव परमार्थतो भवति ब्रह्म । न हि प्रकाशोऽङ्गुल्याद्युपाधिवशाद् वक्रादिभाव प्रतिपद्यमानमिव भासमान वक्रादिस्वभावमेवेति भवति, तद्वत् इत्यर्थ । उपाधीनामविद्याकल्पितनामरूपविशेषत्व ह्यवगतम् (सू भा ३-२-११) । अपि च 'यद्वाचानभ्युदित येन वागभ्युद्यते । तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासते ॥ यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासते ॥' (के १-५, ६) इति च वाङ्मनसागोचर निरुपाधिकमेव ब्रह्मस्वरूप परमार्थत, नोपासनागोचरमिति स्पष्टमेव सोपाधिकस्वरूपस्यापरमार्थत्वमुद्घोषित श्रुत्या । अतोऽपि निरुपाधिकरूपमेव ब्रह्म प्रतिपत्तव्यमिति सिध्यति । यत्तु फलोक्तिरभयत्रापि समाना दृश्यत इति । तत्र सोपाधिकवाक्येष्वविद्याविषयाण्येवोच्चावचानि फलानि श्रूयन्ते, सद्योमुक्तिलक्षणमेकरूपमेव तु निरुपाधिकविद्यावाक्येष्विति वैषम्यमस्तीत्य दोष ॥

(१) सति तु विरोधे तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्तीत्येष विनिगमनाया हेतु, येनोभयीष्वपि श्रुतिषु रातीष्वनाकारमेव ब्रह्मावधार्यते । न पुनर्विपरीतमिति ॥ सू भा ३-२-१४, पा ३५८

(२) नन्वेवमपि यत् पुरस्तात् प्रतिज्ञातं नोपाधियोगादप्युभयलिङ्गत्वं ब्रह्मणोऽस्तीति, तद्विरुध्यते । नेति ब्रूमः । उपाधिनिमित्तस्य वस्तुधर्मत्वानुपपत्तेः । उपाधीनां चाविद्याप्रत्युपस्थापितत्वात् । सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्रावोचाम ॥

सू भा ३-२-१५, पा ३०७, ३५८

[सोपाधिकब्रह्मण उपासनार्थमेवोपदिष्टत्वात्, अविद्याविषयत्वाच्च प्रक्रियाविरोध इत्युक्तमत्र ॥]

(३) यैर्वागाद्युपाधिभिः 'वाचो ह वाक् चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो मनः', 'कर्ता, भोक्ता, विज्ञाता', 'नियन्ता प्रशासिता', 'विज्ञानमानन्दं ब्रह्म'– इत्येवमादयः संव्यवहारा असंव्यवहार्ये निर्विशेषे परे साम्ये ब्रह्मणि प्रवर्तन्ते, तान् व्युदस्यात्मानमेव निर्विशेषं ब्रह्म विद्धि – इत्येव शब्दार्थः । नेदं ब्रह्म यदिदमित्युपाधिभेदविशिष्टम् अनात्मेश्वराद्युपासते ध्यायन्ति ॥ के भा १–५, पा २२

(४) ये पुनरुपासनाधिकारे प्रपञ्चा उच्यन्ते यथा 'मनोमयः प्राणशरीरो भारूपः' (छा ३-१४-२) इत्येवमादयः, न तेषां प्रविलयार्थत्वं न्याय्यम् । 'स क्रतुं कुर्वीत' इत्येवंजातीयकेन प्रकृतेनैवोपासनाविधिना तेषां संबन्धात् । श्रुत्या चैवंजातीयकानां गुणानामुपासनार्थत्वेऽवकल्पमाने न लक्षणया प्रविलयार्थत्वमवकल्पते ॥

सू भा ३-२-२१, पा ३६१

[उपासनावाक्यानां विधिप्रधानत्वात्, नाध्यारोपापवादप्रक्रिया तेष्वपेक्ष्या–इत्युक्तमत्र ॥]

(५) तत्राविद्यावस्थायां ब्रह्मण उपास्योपासकादिलक्षणः सर्वो व्यवहारः ॥ सू भा १-१-१२, पा ३५

(६) अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः । एको हि प्रत्यगात्मा भवति । न द्वौ प्रत्यगात्मानौ संभवतः । एकस्यैव तु भेदव्यवहार उपाधिकृतः । यथा 'घटाकाशो, महाकाशः' इति । ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः, प्रत्यक्षादीनि च प्रमाणानि, संसारानुभवः, विधिप्रतिषेधशास्त्रं च – इति सर्वमेतदुपपद्यते ॥

सू भा १-२-२०, पा ८१

[अत्र कार्यकरणोपाध्यभिमानकृतो जीवस्य परमेश्वराद् भेदः, तत एव च ईशजीवयोरुपास्योपासकभावः, उपासनाविधिवाक्यप्रामाण्यम्, जीवस्योपासनाफलभोग -इत्येतत्सर्वं व्यावहारिकदृष्ट्या अवकल्पत इत्युक्तं भवति ॥ ]

(७) फलमप्येषां यथोपदेशं क्वचिद् दुरितक्षयः क्वचिदैश्वर्यप्राप्तिः, क्वचित् क्रममुक्तिः - इत्यवगम्यत एवेत्यतः पार्थगर्थ्यमेवोपासनावाक्यानां ब्रह्मवाक्यानां च न्याय्यं नैकवाक्यत्वम् ॥ सू भा ३-२-२१; पा ३६१

## ब्रह्मवस्तुबोधकान्यपि वाक्यानि सन्ति –

५० 'विधिप्रधानेभ्यो विलक्षणानि वस्तुमात्रपर्यवसायीनि ब्रह्मवाक्यानि, तेष्वेवैषा अध्यारोपापवादप्रक्रिया व्याप्रियत इत्युक्तम् । उपासनावाक्यैर्निर्देश्यस्य तु ब्रह्मणोऽविद्याकल्पितनामरूपोपाधियुक्तत्वादुपासनाविधिशेषत्वाच्च न तत्रैतत्प्रक्रियापेक्षेति च । केचित्तु क्रियाविधिपरत्वाभावे वस्तुस्वरूपान्वाख्यानमात्रपरस्य वाक्यस्याप्रामाण्यप्रौढ्यात्, अर्थवादत्वम्, कर्तृदेवतादिप्रकाशनेन क्रियाविधिशेषत्वम्, उपासनादिक्रियाविधिपरत्वम्, प्रतिपत्तिनियोगशेषत्वेन ब्रह्मसमर्पणात् तत्रापि प्रामाण्यं वा अभ्युपगन्तव्यम् इति मेनिरे । तेषां मतान्यागामिनि खण्डे परीक्षिष्यन्ते । भूतवस्तुनः प्रमाणान्तरविषयत्वमेवेति तत्स्वरूपसमर्पणमात्रपर्यवसन्नं वेदवाक्यं नास्त्येवेति ये मन्यन्ते तेषां पक्षस्त्वत्र पराणुद्यते । सन्ति वाक्यानि 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः' इत्येवरूपाणि ब्रह्मबोधकानि । न चैषां विधिपरत्वं नियोगपरत्वं वा शक्यकल्पनम् । वाक्यस्थानां पदानां ब्रह्मस्वरूप एव निश्चितसमन्वयावगमात् । न च कर्त्रादिप्रकाशकत्वम् । उक्तहेतोरेव । नापि प्रमाणान्तरगोचरवस्त्वन्वाख्यानानि तानि । ब्रह्मणि सर्वविशेषनिराकरणेनैवोपक्षीणत्वात् । नच नास्त्येव तत्प्रतिपाद्यं वस्तु । सर्वस्याप्यात्मत्वेन समर्प्यमाणत्वात् । आत्मनश्चाप्रत्याख्येयत्वात् । न चानर्थक्यं वाक्यजन्यज्ञानस्य । प्रत्यक्षत्वादविद्यादिक्लेशप्रहाणेस्तत्फलस्य । तस्मादध्यारोपापवादप्रक्रियासमर्प्यमाणं ब्रह्मात्मवस्तु, तज्ज्ञानं च पुरुषार्थ इति सिद्धम् ॥

(१) यदपि केचिदाहु प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवल-वस्तुवादी वेदभागो नास्तीति, तन्न । औपनिषदस्य पुरुषस्यानन्यशेषत्वात् । योऽसावुपनिषत्स्वेवाधिगत पुरुषोऽसंसारी ब्रह्म, उत्पाद्यादिचतुर्विधद्रव्य विलक्षण, स्वप्रकरणस्थोऽनन्यशेष, नासौ नास्ति नाधिगम्यत इति वा शक्य वदितुम् । 'स एष नेति नेत्यात्मा (बृ ३-९-२६) इत्यात्मशब्दात् । आत्मनश्च प्रत्याख्यातुमशक्यत्वात्, य एव निराकर्ता तस्यैवात्मत्वात् । 'त त्वौपनिषद पुरुष पृच्छामि' (बृ ३-९-२६) इति चौपनिषदत्व विशेषण पुरुषस्योपनिषत्स्वेव प्राधान्येन प्रकाश्यमानत्वे उपपद्यते । अतो भूतवस्तुपरो वेदभागो नास्तीति वचन साहसमात्रम् ॥

सू भा १-१-४, पा १९, २०

[ भूत परिनिष्ठित परिनिष्पन्नमिति च पर्याय । सिद्धवस्तुवाचका एते शब्दा ॥ ]

(२) न च तेषा कर्तृस्वरूपप्रतिपादनपरता अवसीयते । 'तत् केन क पश्येत्' (बृ २-४-१३) इत्यादिक्रियाकारकफलनिराकरणश्रुते । न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्व ब्रह्मण । 'तत्त्वमसि' (छा ६-८-७) इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यत्वात् । यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति, नैष दोष । हेयोपादेयशून्य ब्रह्मात्मतावगमादेव सर्वक्लेशप्रहाणात् पुरुषार्थसिद्धे ॥

सू भा १-१-४, पा ११

[ अत्र कर्त्रादिपरत्व प्रमाणान्तरविषयत्व निष्फलत्व च वस्तुबोधक वाक्याना प्रत्युक्तम् ॥ ]

(३) न च तद्गताना पदाना ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽव गम्यमानेऽर्थान्तरकल्पना युक्ता । श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् ॥

सू भा १-१-४, पा ११

(४) अविधिप्रधानैर्हि वस्तुपर्यवसायिभिर्ब्रह्मवाक्यैर्ब्रह्मविज्ञान जन्यत इत्यवोचदाचार्य, 'तत्तु समन्वयात्' (वे सू १-१-४) इत्यत्र ॥

सू भा ३-३-१, पा ३८५

(५) वस्तुमात्रपर्यवसायीनि हि ब्रह्मवाक्यानि न नियोगोपदेशीनी त्येतद् विस्तरेण प्रतिष्ठापित 'तत्तु समन्वयात्' (वे सू १-१-४) इत्यत्र ॥

सू भा ३-२-२१, पा ३६१

(६) आत्मस्वरूपान्वाख्यानपरेषु वाक्येषु फलवन्निश्चित च विज्ञान मुत्पद्यते, न वा ? उत्पद्यते चेत् कथमप्रामाण्यमिति ? किं वा न पश्यसि

अविद्याशोकमोहभयादिसमारबीजदोषनिवृत्ति विज्ञानफलम् ? न शृणोषि वा किं तत्र 'को मोह क शोक एकत्वमनुपश्यत', मन्त्रविदेवास्मि नात्मवित् सोऽह भगव शोचामि त मा भगवाञ्छोकस्य पार तारयतु' इत्येवमाद्युपनिषद्वाक्यशतानि ? एव विद्यते किं 'सोऽरोदीत्' इत्यादिषु निश्चित फलवच्च विज्ञानम् ? बृ भा १-४-७, पा ६६४

[ अत्र फलवन्निश्चितज्ञानजनकत्वात् ब्रह्मवाक्यस्य प्रामाण्यमेव नाथ व ? परि पुनाम् ॥ ]

## परापरब्रह्मणी–

५१ तदेव ब्रह्मात्मवस्तुप्रधानैर्वाक्यै समर्प्यमाण निरुपाधिक ब्रह्म । उपासनाविधिप्रधानैश्च वाक्यै समर्प्यमाण सोपाधिक ब्रह्मेति च द्विरूप ब्रह्म वेदान्तेषूपदिश्यते । तत्र ब्रह्मवाक्याना तत्प्रधानत्वात् तद्बलेन निरुपाधिकमेव परमार्थतो ब्रह्मेत्यवधारणीयमित्यवगतम् । निरुपाधिक, निष्प्रपञ्च, निर्विशेष, निर्गुण कारण मुख्य परम्–इत्येकार्थका शब्दा । एव सोपाधिक, सप्रपञ्च, सविशेष, सगुणम्, कार्यम्; अमुख्यम्, अपरम्–इति च । एतस्मिन्नेव ब्रह्मणि परापरविभागोऽय 'एतद्वै सत्यकाम पर चापर च ब्रह्म यदोङ्कार' (प्र ५–२) इत्यादिश्रुतिप्रमाणत । तत्रोपाधीनामविद्याप्रत्युपस्थापितत्वान्न ब्रह्मणोऽद्वितीयत्व विहन्यते । अविद्याप्रत्युपस्थापितानामप्याकारगुणादीना व्यावहारिकदृष्ट्या पुरोदितनीत्या (४–४) सत्यत्वमपि भवति । ब्रह्मण सर्वशक्ते सर्वनामरूपकारणत्वात् तदनन्यत्वन्यायेन ( सू भा २–१–२४ ) सर्वात्मत्वोपपत्ते । एव चोपासकानामर्चिरादिमार्गेण ब्रह्मप्राप्ति, तत्रैश्वर्यप्राप्ति, ईश्वरेण साम्य फलभोगे, इत्येतत्सर्वमपि श्रूयमाणमवकल्पते ॥

(१) किं द्वे ब्रह्मणी परम् अपर चेति ? बाढ द्वे 'एतद्वै सत्यकाम पर चापर च ब्रह्म यदोङ्कार' (प्र ५–२) इत्यादिदर्शनात् । किं पुन पर ब्रह्म किमपरमिति ? उच्यते । यत्राविद्याकृतनामरूपादिविशेषप्रतिषेधादस्थूलादिशब्दैर्ब्रह्मोपदिश्यते तत् परम् । तदेव यत्र नामरूपादिविशेषेण केनचिद्विशिष्टम् उपासनायोपदिश्यते 'मनोमय प्राणशरीरो भारूप'

(छा ३ १४ २) इत्यादिशब्दैः, तदपरम्। नन्वेवम् अद्वितीयश्रुतिरुपरुध्येत। न। अविद्याकृतनामरूपोपाधिकतया परिहृतत्वात्॥

सू भा ४-३-१४, पा ५०१, ५०२

(२) परमेव हि ब्रह्म विशुद्धोपाधिसबन्धं क्वचित् कैश्चिद्विकारधर्मैर्मनोमयत्वादिभिरुपासनायोपदिश्यमानम् अपरम् इति स्थितिः॥

सू भा ४-३-९ पा ४९५

['परं चापरं च ब्रह्म यदोङ्कारः' (प्र ५-२) इत्यत्रोङ्कारस्यैवालम्बनत्वेनोपासनं परब्रह्मदृष्ट्या, इति नैतद्वाक्यविरोध इति मन्तव्यम्। द्रष्टव्यमत्र वे सू १-३-१३, पा १०५]

(३) यत्तूक्तं हिरण्यश्मश्रुत्वादिरूपश्रवणं परमेश्वरे नोपपद्यत इति, अत्र ब्रूमः। स्यात् परमेश्वरस्यापीच्छावशात् मायामयं रूपं साधकानुग्रहार्थम्। 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद। सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि' (मो ध ३३९-४५) इति स्मरणात्। अपि च यत्र तु निरस्तसर्वविशेषं पारमेश्वरं रूपमुपदिश्यते, भवति तत्र शास्त्रम् 'अशब्दमस्पर्शमरूपमव्ययम्' (क १-३-१५) इत्यादि। सर्वकारणत्वात्तु विकारधर्मैरपि कैश्चिद्विशिष्टः परमेश्वर उपास्यत्वेन निर्दिश्यते 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' (छा ३-१४-२) इत्यादिना। तथा हिरण्यश्मश्रुत्वादिनिर्देशोऽपि भविष्यति॥ सू भा १-१-२०, पा ४५

(४) कार्यमेव सगुणमपरं ब्रह्मैनान् गमयति अमानवः पुरुषः – इति बादरिराचार्यो मन्यते। कुतः? अस्य गत्युपपत्तेः। अस्य हि कार्यब्रह्मणो गन्तव्यत्वम् उपपद्यते प्रदेशवत्त्वात्। न तु परस्मिन् ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वा अवकल्पते। सर्वगतत्वात्, प्रत्यगात्मत्वाच्च गन्तृणाम्॥

सू भा ४-३-७, पा ४९५

(५) सर्वगतत्वेऽपि चात्मन आकाशस्येव घटादिगमने बुद्ध्याद्युपाधिगमने गमनप्रसिद्धिरित्यवादिष्म 'तद्गुणसारत्वात्' (२-३-२९) इत्यत्र॥

सू भा ४-३-१४, पा ५०२

(६) जगदुत्पत्त्यादिव्यापारं वर्जयित्वा अन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति। जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य॥

सू भा ४-४-१७, पा ५१०

(७) इतश्च न निरङ्कुशं विकारालम्बनानामैश्वर्यम्, यस्माद्भोगमात्रमेवैषाम् अनादिसिद्धेनेश्वरेण समानमिति श्रूयते॥

सू भा ४-४-२१, पा ५[illegible]

## ज्ञानोपासनयोर्वैलक्षण्यम् –

५२ अविद्याविषयत्वेऽप्युपासनानां ज्ञानकाण्डे तेषां विधानं न विरुद्धम् । विद्यात्वाविशेषात्, मनोवृत्तित्वसामान्याच्च । यद्यपि कर्मसमृद्ध्यर्थत्वम् अभ्युदयार्थत्वं चास्ति कर्मसामान्यमप्यस्त्युपासनानाम्, तथापि मानसत्वम्, प्रत्यक्प्रवणतासंपादकत्वेन ज्ञानस्यान्तरङ्गत्वं क्रममुक्तिफलत्वं चेत्येतत् कर्मवैलक्षण्यभूयस्त्वमालक्ष्याद्वैतज्ञानप्रकरणे तेषामुपादानम् । यद्यपि मानसत्वाविशेषादेवाद्वैतज्ञानमुपासनं चेत्युभयमपि समं ज्ञानविद्योपासनाशब्दैर्व्यपदिश्यते श्रुतिस्मृत्योः, तथापि तयोः स्वरूपभेदोऽस्ति ।[1] यतो ध्यानापराभिधानमुपासनं कर्तृव्यापारायत्तनिष्पत्ति मानसं कर्म चोदनालक्षणं च कर्मवत् । ज्ञानं तु प्रमाणजन्यं प्रमेयवस्त्वनुसारेण जायमानं मनोवृत्तिलक्षणमिति । अत एव ह्युपासनमध्यारोपितकारकफलापेक्षं कर्मविशेषः, ज्ञानं तु सर्वाध्यारोपापह्नवात्मवस्त्ववगतिरित्युच्यत इति ॥ [2]

(१) ध्यानं चिन्तनं यद्यपि मानसं तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यम् । पुरुषतन्त्रत्वात् । ज्ञानं तु प्रमाणजन्यम् । प्रमाणं च यथाभूतवस्तुविषयम् । अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुमशक्यम् । केवलं वस्तुतन्त्रमेव तत् । न चोदनातन्त्रं नापि पुरुषतन्त्रम् । तस्मात्, मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम् । यथा च 'पुरुषो वाव गौतमाग्निः', 'योषा वाव गौतमाग्निः' (छां) इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति । केवलचोदनाजन्यत्वात् क्रियैव सा, पुरुषतन्त्रा च । या तु प्रसिद्धेऽग्नावग्निबुद्धिः, न सा चोदनातन्त्रा, नापि पुरुषतन्त्रा, किं तर्हि प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतन्न क्रिया । एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम् ॥ सू. भा. १-१-४, पा. १८

(२) उपासनं नाम उपास्यार्थवादे यथा देवतादिस्वरूपं श्रुत्या ज्ञाप्यते तथा मनसा उपगम्य आसनं चिन्तनं लौकिकप्रत्ययाव्यवधानेन यावत्तावद्देवतादिस्वरूपात्माभिमानाभिव्यक्तिर्लौकिकात्माभिमानवत् ॥

बृ. १-३-९, पा. ६३३, ६३४

(३) तत्रैतस्मिन्नद्वैतविद्याप्रकरणे अभ्युदयसाधनान्युपासनान्युच्यन्ते। कैवल्यसन्निकृष्टफलानि चाद्वैतादीषद्विकृतब्रह्मविषयाणि 'मनोमय प्राण शरीर' इत्यादीनि कर्मसमृद्धिफलानि च कर्माङ्गसबन्धीनि । रहस्य-सामान्यान्मनोवृत्तिसामान्याच्च ॥ छा सबन्ध भा, पा ३५२

(४) कस्तर्ह्यद्वैतज्ञानस्य, उपासनाना च विशेष ? उच्यते। स्वाभाविकस्य आत्मन्यक्रियेऽध्यारोपितस्य कर्त्रादिकारकक्रियाफलभेद-विज्ञानस्य निवर्तकम् अद्वैतविज्ञानम् । रज्ज्वादाविव सर्पाद्यध्यारोपलक्षण ज्ञानस्य रज्ज्वादिस्वरूपनिश्चय प्रकाशनिमित्त । उपासन तु यथाशास्त्र समर्पित किञ्चिदालम्बनम् उपादाय तस्मिन् समानचित्तवृत्तिसतानकरण तद्विलक्षणप्रत्ययानन्तरितम्–इति विशेष ॥ छा सबन्ध भा, पा ३५२

(५) तान्येतान्युपासनानि सत्त्वशुद्धिकरत्वेन वस्तुतत्त्वावभासकत्वात् अद्वैतज्ञानोपकारकाणि आलम्बनविषयत्वात् सुखसाध्यानि, चेति पूर्वम् उपन्यस्यन्ते ॥ छा सबन्ध भा, पा ३५२

(६) सर्वत्र हि शास्त्रप्रापिता एव धर्मा उपास्या, न विद्यमाना अप्यशास्त्रीया ॥ छा २-२-१ पा ३८८

(७) न च प्रमाणान्तरेणान्यथा प्रसिद्धेऽर्थेऽन्यथा ज्ञान नियुक्तस्या प्युत्पद्यते। यदि पुन 'नियुक्तोऽहम्' इत्यन्यथा ज्ञान कुर्यात्, न तु तज्ज्ञान कि तर्हि मानसी सा क्रिया। स्वयमेव चेदन्यथोत्पद्येत, भ्रान्तिरेव स्यात् ॥ सू भा ३-२-२१, पा ३६३

[ अत्र प्रमाणान्तरनिश्चितेऽर्थे नियुक्तस्याप्यन्यथाज्ञानमुत्पद्यते–इत्यनेन शास्त्रनियुक्तस्यापि वस्तुविषयक ज्ञान तथैवानुवर्तते इत्युक्त भवति। न हि प्रतिमाया विष्णुबुद्धिनियोगेऽपि प्रतिमाबुद्धिर्निवर्तते। विष्णुबुद्धिस्तु पुरुषप्रयत्नकृता इति ध्यानमात्रत्वात् मानसक्रियारूपम् । प्रतिमायामेव केनचिदन्यकारादिदोष निमित्तेन चेन्मनुष्यादिबुद्धिरुत्पद्येत तर्हि भ्रान्तिरेव सेति मन्तव्यम् ॥ ]

(८) विद्युपास्त्योश्च वेदान्तेष्वव्यतिरेकेण प्रयोगो दृश्यते। क्वचिद् विदिनोपक्रम्योपासिना उपसहरति यथा 'यस्तद्वेद यत्स वेद स मयैतदुक्त' (छा ४-१-४) इत्यत्र 'अनु म एता भगवो देवता शाधि या देवता मुपास्से' (छा ४-२-२) इति। क्वचिच्चोपासिनोपक्रम्य विदिनोपसहरति। यथा – 'मनो ब्रह्मेत्युपासीत' (छा ३-१८-१) इत्यत्र 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एव वेद' (छा ३-१८-३) इति ॥

सू भा ४-१-१, पा ४६०

(९) 'तस्मिन् यदन्तस्तदन्वेष्टव्य तद्वाव विजिज्ञासितव्यम् ॥
छा ८-१-१, पा ५६६

[ अत्र तस्मिन्नाकाशाख्ये ब्रह्मणि यदन्तस्तदन्वेष्टव्य विजिज्ञासितव्यम् इत्युपासनमेव विधीयते । उत्तरत्र 'य इहात्मानमनुविद्य व्रजन्ति' (छा ८ १ ६) इति परत्र प्राप्यफलसकीर्तनात् ॥ ]

'यथेय न प्राक्त्वत्त पुरा विद्या ब्राह्मणान् गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति ॥ छा ५-३-७ पा ४७८

[ अत्र विद्याशब्देन पञ्चाग्निविद्याख्योपासना परामृष्टा ॥ ]

'स यो नाम ब्रह्मेत्युपास्ते, यावन्नाम्नो गत तत्रास्य यथा कामचारो भवति ॥' छा ७-१-५ पा ५४३

[ अत्र नाम्नि ब्रह्मबुद्धिकरण पुरुषतन्त्र विधीयत इत्युपासनमेवैतत् ॥ ]

'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेद सर्वं विदितम् '॥ बृ २-४-५ पा ७६०

[ अत्रात्मदर्शनम्, वस्तुतन्त्र ज्ञानम् । एकविज्ञानेन सर्ववेदनफल कीर्तनात् ॥ ]

'आत्मेत्येवोपासीतात्र ह्येते सर्व एक भवन्ति ' ॥
बृ १-४-७, पा ६५४

[अत्र वेदन वस्तुतन्त्रज्ञानमेव दृष्टफल्कीर्तनात् ॥ ]

(१०) साधिभूताधिदैव मा साधियज्ञ च ये विदु ।
प्रयाणकालेऽपि च मा ते विदुर्युक्तचेतस ॥ ७-३०
प्रयाणकाले च कथ ज्ञेयोऽसि नियतात्मभि ॥ गी ८-२
ये तु सर्वाणि कर्माणि मयि सन्यस्य मत्परा ।
अनन्येनैव योगेन मा ध्यायन्त उपासते ॥
तेषामह समुद्धर्ता मृत्युससारसागरात् ॥ गी १२-६, ७

[अत्र सर्वत्र पुरुषतन्त्रमुपासन परामृष्टम् ॥ ]

ज्ञानाग्नि सर्वकर्माणि भस्मसात्कुरुते तथा ॥
गी ४-३७, पा ८०

राजविद्या राजगुह्य पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगम धर्म्यं ससुख कर्तुमव्ययम् ॥ गी ९-२

ये त्वक्षरमनिर्देश्यमव्यक्त पर्युपासते ।
सर्वत्रगमचिन्त्य च कूटस्थमचल ध्रुवम् ॥ गी १२-३

[अत्र सर्वत्र निर्विशेषब्रह्मवस्तुज्ञानमेव परामृष्टम् ॥]

## ज्ञानसाधनानि –

५३ सर्वस्यात्मभूत ब्रह्म, साक्षादपरोक्षस्वभावत्वात् अविद्यामात्र व्यवहित च–इत्यत सर्वविधाध्यारोपापसारि वेदान्तवाक्यज्ञानमेव नान्यत् इति सेत्स्यति । अत एव हि 'औपनिषद पुरुष' (बृ ३–९–२६) इति ब्रह्मविशेषणम्, 'आचार्यावान् पुरुषो वेद' (छा ६–१४–२) इति वेदान्तसप्रदायविदाचार्योपदेशगम्यत्व ब्रह्मण इति च । बाह्यविषयापहृत बुद्धीना विषयवासनाकलुषितचित्तत्वात्तु न वेदान्तवाक्यमाचार्योपदेशन वा ब्रह्मात्मता ज्ञापनायालमिति, चित्तशुद्धये प्रत्यक्प्रावण्याय च कर्माण्युपास नानि च श्रुतिस्मृत्योरुपदिश्यन्ते । तत्रापि दुराचाराद्विरतस्यैव कर्माणि पावनानि भवन्ति 'आचारहीन न पुनन्ति वेदा' (?) इति स्मरणात् । यस्तु कर्मभि शुद्धबुद्धि प्रत्यङमुखश्च तस्यैवोपासनकर्मण्यधिकार इति स्पष्टम् । मानससाधनत्वादुपासनस्य । अन्तर्मुखस्य च शमदमादीनि श्रौतान्यमानित्वादीनि च स्मार्तानि ज्ञानस्यान्तरङ्गसाधनानि भवन्ति । ज्ञानसाधनत्वेन श्रुतत्वात् । श्रवणमनननिदिध्यासनानि च साक्षात् साधनानि । तेषा साक्षाज्ज्ञेयविषयत्वेन तत्प्रकाशनस्वाभाव्यस्य प्रसिद्धत्वात् । एव च कर्मादीना बाह्यप्रतिबन्धकापनयनेन, श्रवणादीना च साक्षाद्विषय प्रकाशनेन ज्ञानसाधनत्वमिति स्थितम् ॥

(१) 'त त्वौपनिषद पृच्छामि' (बृ ३–९–२६) इति चौपनिषदत्व-विशेषण पुरुषस्योपनिषत्स्वेव प्राधान्येन प्रकाश्यमानत्व उपपद्यते ॥
सू भा १–१–४, पा २०

(२) यदि हि सदस्मीति बुद्धिमात्र कर्तव्यतया विधीयते न तु त्वशब्दवाच्यस्य सद्रूपत्वमेव, तदा न 'आचार्यवान् वेद' इति ज्ञानोपायोप-देशो वाच्य स्यात् । यथा 'अग्निहोत्र जुहुयात्' इत्येवमादिष्वर्थप्राप्त-मेवाचार्यवत्त्वमिति तद्वत् ॥ छा ६–१६–३, पा ५४०

(३) अत एव च नेयमागमप्रभूता मति , तार्किकादन्येनैवागमाभिज्ञेनाचार्येणैव प्रोक्ता सती सुज्ञानाय भवति ॥ का १-२ ९, पा ७२

(४) ये सम्य दर्शिन , तैरुपदिष्टं ज्ञान कार्यक्षम भवति नेतरत् इति भगवतो मतम् । तथा च सनीदमपि समर्थ वचनम् — यज्ज्ञात्वा यज्ज्ञान तैरुपदिष्टम् अधिगम्य प्राप्य पुनर्भूयो मोहम् एव यथेदानी मोह गतोऽसि, पुनरेव न यास्यसि हे पाण्डव ॥

गी भा ४ ३४, ३५, पा ७९

(५) सत्यमेतत् । विद्यासयुक्त कर्माग्निहोत्रादिक विद्याविहीनात् कर्मणोऽग्निहोत्रादिविशिष्टम्, विद्वानिव ब्राह्मणो विद्याविहीनाद् ब्राह्मणात् । तथापि नात्यन्तमनपेक्ष विद्याविहीन कर्माग्निहोत्रादिकम् । कस्मात्? 'तमेतमात्मान यज्ञेन विविदिषन्ति' इत्यविशेषेणाग्निहोत्रादेर्विद्याहेतुत्वेन श्रुतत्वात् । विद्यासहायस्य अग्निहोत्रादेर्विद्यानिमित्तेन सामर्थ्यातिशयेन योगात् आत्मज्ञान प्रति कश्चित् कारणत्वातिशयो भविष्यति, न तथा विद्याविहीनस्येति युक्त कल्पयितुम् । तथा हि श्रुति "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तर भवति' (छा १-१-१०) इति विद्यासयुक्तस्य कर्मणोऽग्निहोत्रादर्वीर्यवत्तरत्वाभिधानेन स्वकार्यं प्रति कञ्चिदतिशय ब्रुवाणा विद्याविहीनस्य तस्यैव तत्प्रयोजन प्रात वीर्यवत्त्व दर्शयति ॥ सू भा ४-१-१८, पा ४७७, ४७८

[अत्र केवलस्य कर्मण , उपासनासमुच्चितस्य च ज्ञानसाधनत्वमुपपादितम् ॥]

(६) कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिन कर्म कुर्वन्ति सङ्ग त्यक्त्वात्मशुद्धये ॥ गी ५-११

भाष्यम् – आत्मशुद्धये सत्त्वशुद्धय इत्यर्थ ॥

(७) शमदमाद्युपेत स्याद् विद्यार्थी 'तस्मादेवविच्छान्तो दान्त उपरतस्तितिक्षु समाहितो भूत्वाऽऽत्मन्येवात्मान पश्यति' (बृ ४-४-२२) इति विद्यासाधनत्वेन शमदमादीना विधानात् विहिताना चावश्यानुष्ठेयत्वात् ॥

यज्ञादीन्यपि त्वपेक्षितव्यानि यज्ञादिश्रुतेरेव । स्मृतिष्वपि भगवद्गीताद्यासु अनभिसधाय फलमनुष्ठितानि यज्ञादीनि मुमुक्षोर्ज्ञान साधनानि भवन्तीति प्रपञ्चितम् । तत्रापि 'एववित्' इति विद्यासयोगात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि विविदिषासयोगात्त बाह्यतराणि यज्ञादीनीति विवेक्तव्यम् ॥ सू भा ३-४-२७, पा ४४६

(८) नाविरतो दुश्चरितान्नाशान्तो नासमाहित ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥ क १-२-२४

भाष्यम् – यस्तु दुश्चरिताद्विरत इन्द्रियलौल्याच्च समाहितचित्त, समाधानफलादप्युपशान्तमानसश्च, आचार्यवान्, प्रज्ञानेन यथोक्तमात्मान प्राप्नोतीत्यर्थ ॥ पा ७८

(९) शास्त्राचार्योपदेशशमदमादिसस्कृत मन आत्मदर्शने करणम् ॥
गी भा २-२१ पा २०

शास्त्राचार्योपदेशेन ज्ञानोत्पत्तिहेतु सहकारिकारण बुद्धिविशुद्ध्याद्यमानित्वादि चापेक्ष्य जनितस्य क्षेत्रज्ञपरमात्मैकत्वज्ञानस्य कर्तृत्वादिकारकभेदबुद्धिनिबन्धनसर्वकर्मसन्याससहितस्य स्वात्मानुभवनिश्चयरूपेण यदवस्थानम्, सा 'परा ज्ञाननिष्ठा' इत्युच्यते ॥
गी भा १८-५५ पा २८४

(१०) श्रद्धावाल्लभते ज्ञान तत्पर सयतेन्द्रिय ॥ गी ४-३९

(११) श्रद्धाप्रभृतीनाम् अधर्मादिनिमित्तवियोगहेतुत्वात् वेदान्तश्रवणमनननिदिध्यासनाना च साक्षाज्ज्ञेयविषयत्वात् । पापादिप्रतिबन्धक्षये चात्ममनसो भूतार्थज्ञाननिमित्तस्वाभाव्यात् ॥ बृ भा १-४-२, पा ६४९

(१२) आत्मा वा अरे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन मत्या विज्ञानेनेद सर्व विदितम् ॥
बृ २-४-५

## ज्ञानसाधनाना समुच्चयविकल्पः–

५४ तत्र कर्मादीनि ज्ञानसाधनान्यधिकृत्येद विचारणीयमस्ति । किमेतानि सर्वाणि सर्वैरविशेषेणानुष्ठेयानि, कि वा कानिचिदेव कैश्चिदिति व्यवस्थाप्यस्तीति । तत्र त्रैवर्णिकैर्गृहस्थैर्विरागरहितानि केवलानि वा वेदोक्तकर्माण्यनुष्ठाय चित्तशुद्धि प्रत्यक्प्रवणता चासाद्य श्रवणमनननिदिध्यासनपूर्वक ज्ञान सपादयितव्यमित्युत्सर्ग । चित्तशुद्धिमुपागताना यमप्रधानानि शमादीनि सुलभानीति तदभ्यासोऽपि सहकारिकारण भवति ज्ञानोत्पत्ते । येषा तु जन्मान्तरानुष्ठितकर्मभिश्चित्तशुद्धिरासा न तान् प्रति निर्बन्धोऽस्ति कर्माण्यवश्य कर्तव्यानीति । तेषा हि श्रद्धातात्पर्याद्यन्तरङ्ग

साधनयुक्तान्येव श्रवणादीनि ज्ञानोपकारकाणि भवेयुः । वेदार्थज्ञानानुष्ठानयो रनधिकृतानां च स्ववर्णोचितैर्नियमैर्धर्मैश्च युक्तानाम् इतिहासपुराणश्रवण मननादिभिरेव ज्ञानोत्पत्तिः । देवादीनामुत्कृष्टजन्मनां पुनः स्वयंभातवेदानां विनैवाध्ययनकर्मानुष्ठानं ... भवेत् । प्रजापतेश्चात्यन्त विशुद्धकार्यकरणसयुक्तस्य श्रवणाद्यन्तरेणापि ज्ञानं जातमिति शास्त्रादव- गम्यते । एवमधिकारतारतम्येन श्रद्धातात्पर्यगुरुसेवादिविकल्पः समुच्चयश्च श्रवणाद्यधिकारे ज्ञानोत्पत्तौ च निमित्तं भवतीति ज्ञेयम् ॥

(१) ज्ञानस्यैव हि प्रापकं सत् कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते ॥

सू भा ४-१-१६ पा ४७६

(२) तस्मात्, विद्यासंयुक्तं नित्यमग्निहोत्रादि विद्याविहीनं चोभयमपि मुमुक्षुणा मोक्षप्रयोजनोद्देशेन इहजन्मनि जन्मान्तरे वा प्राग्ज्ञानोत्पत्तेः कृतं यत्, तद् यथासामर्थ्यं ब्रह्माधिगमप्रतिबन्धकारणोपात्तदुरितक्षयहेतुत्व द्वारेण ब्रह्माधिगमकारणत्वं प्रतिपद्यमानं श्रवणमननश्रद्धातात्पर्याद्यन्तरङ्ग कारणापेक्षं ब्रह्मविद्यया सहैककार्यं भवतीति स्थितम् ॥

सू भा ४-१-१८, पा ४७८

(३) येषां पुनः पूर्वकृतसंस्कारवशाद्विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिः, तेषां न शक्यते फलप्राप्तिः प्रतिषेद्धुम् । ज्ञानस्यैकान्तिकफलत्वात् । 'श्रावयेच्चतुरो वर्णान्' (मो ध ३२७-४९) इति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात् । वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणाम् इति स्थितम् ॥ सू भा १-३-३८ पा १३९

(४) तत्रार्थित्वं तावन्मोक्षविषयं देवादीनामपि संभवति । विकार- विषयविभूत्यनित्यत्वालोचनादिनिमित्तम् । तथा सामर्थ्यमपि तेषां संभवति । मन्त्रार्थवादेतिहासपुराणेभ्यो विग्रहवत्त्वाद्यवगमात् । न च तेषां कश्चित् प्रतिषेधोऽस्ति । न चोपनयनशास्त्रेणैषामधिकारो निवर्त्येत । उपनयनस्य वेदाध्ययनार्थत्वात् तेषां च स्वयंप्रतिभातवेदत्वात् । अपि चैषां विद्या ग्रहणार्थं ब्रह्मचर्यादि दर्शयति ॥ सू भा १ ३-२६, पा १२०

(५) प्रजापतेर्धर्मज्ञानवैराग्यैश्वर्यविपरीतहेतुसर्वपाप्मदाहाद् विशुद्धे कार्यकरणे संयुक्तमुत्कृष्टं जन्म । तदुद्भवं चानुपदिष्टमेव युक्तमेवत्वदर्शनं प्रजापतेः ॥ बृ १-४-२, पा ६४८

(६) निमित्तविकल्पसमुच्चयगुणवदगुणत्वभेदोपपत्तेः । एवमेवात्मैकत्वज्ञानेऽपि क्वचिज्जन्मान्तरकृतं कर्म निमित्तं भवति । यथा प्रजापतेः । क्वचित् तपोनिमित्तम् । 'तपसा ब्रह्म विजिज्ञासस्व' इति श्रुतेः । क्वचित् 'आचार्यवान् पुरुषो वेद', 'श्रद्धावाँल्लभते ज्ञानम्', 'तद्विद्धि प्रणिपातेन', 'आचार्याद्धैव', 'द्रष्टव्यः श्रोतव्यः' इत्यादिश्रुतिस्मृतिभ्य एकान्तज्ञानलाभनिमित्तत्वम् ॥ बृ १-४ २ पा ६४९

## साधनानुष्ठानावधिः—

५५ साधनानुष्ठानकालेयत्ताविषयेऽपि चिन्तनीयम् — किं सकृत् कृत्वा शास्त्रचारितार्थ्यं संपादनीयम्, आहोस्वित् साधनान्यावर्तयेदपीति । यद्यावर्तनमावश्यकम्, तर्हि कियन्तं कालमावर्तयेदिति च । तत्र साधनानां दृष्टार्थत्वात् कर्माणि तावच्चित्तशुद्धिविरक्तिपर्यन्तं कर्तव्यानि फलाभिसंधिवर्जनपूर्वकम् — 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' (गी १८-४६) इति स्मृतेः । विरक्तैस्तु पारमहंस्यं स्वीकार्यम् । 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जा ४) इति श्रुतेः । अनुत्पन्नायां तु विरक्तौ कर्माण्यनुवर्तयेदेव । 'तयोस्तु कर्मसन्यासात् कर्मयोगो विशिष्यते' (गी ५-२) इति स्मृतेः । 'सन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' (गी ५-६) इति च कर्मयोगस्यैव परमार्थसन्यासोपायत्वस्मरणाच्च । श्रवणादीनां तु साक्षाज्ज्ञानसाधनानां त्वधिकारभेदादनुष्ठानविकल्पसमुच्चयौ ज्ञेयौ । तद्यथा—ये तावदुत्तमाधिकारिणः सकृच्छ्रुतवेदान्तवाक्यादेव ब्रह्मात्मत्वमनुभवितुं शक्नुयुः, तेषां श्रवणमात्रादेव कृतार्थतेति न तदूर्ध्वं किञ्चित् कर्तव्यमवशिष्यते । न ह्युदिते सूर्ये पुनरपि तमोऽपनयनाय प्रयत्नोऽपेक्ष्यत इति । ये तु तथा वाक्यार्थमनुभवितुं न शक्नुवन्ति तान् प्रति वाक्यश्रवणाभ्यासः, तदर्थग्रहणप्रतिबन्धकशङ्कानिवृत्त्यर्थं मननं च कर्तव्यं यावज्ज्ञानोत्पत्ति । अभ्यासेन मन्दप्रज्ञानां प्रतिपत्तिदर्शनात् । मननं चात्र यथावर्णितश्रुत्यनुगृहीततर्कानुसंधानं तदनुकूललौकिकतर्कानुसरणं च । तेन ह्यात्मन्यध्यारो-

पितस्तत्तदंशोऽपनीयत इति । ये पुन श्रवणमननमात्रेण तत्त्व प्रतिपत्तु मशक्ता , तान् प्रति निदिध्यासनमप्यपेक्ष्यते । सर्वथापि तु यावत् तत्त्वानु भवो न भवेत् , तावदावर्तनीयानि श्रवणादीनि । अनुभवार्थत्वात्तेषाम् । 'आत्मा वा अरे द्रष्टव्य ' इति दर्शन कर्तव्यतयावधार्य तदर्थं 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य ' (बृ २-४-५) श्रवणादीनामुपायत्वेनोप देशात् । शमदमामानित्वादिसहकारिभावनाना तु नास्त्यनुष्ठानावधि । तषा ज्ञानपरिपाकार्थत्वात् , तत्परत्वस्यैव ज्ञाननिष्ठालक्षणत्वाच्चेति साधनानु ष्ठानावधिविवेक ॥

(१) 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ' ॥ बृ ४-४-२२

यज्ञो दान तप कर्म न त्याज्य कार्यमेव तत् ।
यज्ञो दान तपश्चैव पावनानि मनीषिणाम् ॥ १८-५ ॥
एतान्यपि तु कर्माणि सङ्ग त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चित मतमुत्तमम् ॥ १८ ६ ॥

भाष्यम् - सासङ्गस्य फलार्थिनो बन्धहेतव एतान्यपि कर्माणि मुमुक्षो कर्तव्यानि - इति अपिशब्दार्थ ॥ पा २५८

(२) 'एतमेव प्रव्राजिनो लोकमिच्छन्त प्रव्रजन्ति ' ॥
बृ ४-४-२२

✓(३) भवेदावृत्त्यानर्थक्य त प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्म-त्वम् अनुभवितु शक्नुयात् । यस्तु न शक्नोति त प्रत्युपयुज्यत एवावृत्ति ॥
सू भा ४-१-२, पा ४६१

(४) दृश्यन्ते हि सकृच्छ्रुताद् वाक्यान्मन्दप्रतीत वाक्यार्थमावर्त यन्तस्तत्तदाभासव्युदासेन सम्यक्प्रतिपद्यमाना ॥
सू भा ४-१-२, पा ४६२

(५) येषामेतौ पदार्थौ अज्ञानसशयविपर्ययप्रतिबद्धौ तेषा 'तत्त्वमसि' इत्येतद् वाक्य स्वार्थे प्रमा नोत्पादयितु शक्नोति पदार्थज्ञानपूर्वकत्वाद् वाक्यार्थज्ञानस्येत्यतस्तान् प्रत्येष्टव्य पदार्थविवेकप्रयोजन शास्त्रयुक्त्य भ्यास ॥ सू भा ४-१-२, पा ४६२

(६) यद्यपि च प्रतिपत्तव्य आत्मा निरंश, तथाप्यध्यारोपितं कस्मिन् बह्वंशत्व देहेन्द्रियमनोबुद्धिविषयवेदनादिलक्षणम्। तत्रैकेन अव धानेनैकमंशमपोहति, अपरेणापरमिति युज्यते तत्र क्रमवती प्रतिपत्ति ॥
सू भा ४-१-२, पा ४६२

(७) मनसो निग्रहायत्तमभय सर्वयोगिनाम्।
दु खक्षय प्रबोधश्चाप्यक्षया शान्तिरेव च ॥
गौ का ३-४०, पा २२५

भाष्यम् – येषा पुनर्ब्रह्मस्वरूपव्यतिरेकेण रज्जुसर्पवत् कल्पितमेव मन इन्द्रियादि च न परमार्थतो विद्यते, तेषा ब्रह्मस्वरूपाणाम् अभय मोक्षाख्या च अक्षया शान्ति स्वभावत एव सिद्धा नान्यायत्ता 'नोपचार कथञ्चन' (३-३६) इत्यवोचाम। ये त्वतोऽन्ये योगिनो मार्गगा हीन मध्यमदृष्टयो मनोऽन्यदात्मव्यतिरिक्तमात्मसबन्धि पश्यन्ति, तेषामात्म सत्यानुबोधरहिताना मनसो निग्रहायत्तम् अभय सर्वेषा योगिनाम्। किञ्च, दु खक्षयोऽपि। न ह्यात्मसबन्धिनि मनसि चलिते दु खक्षयोऽस्त्य-विवेकिनाम्। किञ्च, आत्मप्रबोधोऽपि मनोनिग्रहायत्त एव। तथा अक्षयापि मोक्षाख्या शान्तिस्तेषा मनोनिग्रहायत्तैव ॥ पा २२५

[अत्र मनोनिग्रहशब्देन निदिध्यासन विवक्षितम् ॥]

(८) दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति ॥ सू भा ४-१-१, पा ४६०

(९) परिव्राजकस्य तु सर्वकर्मसन्न्यासान् प्रत्यवायो न सभवत्य ननुष्ठाननिमित्त। शमदमादिस्तु तदीयो धर्मो ब्रह्मसस्थताया उपोद्बलको न विरोधी। ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृहित स्वाश्रमविहित कर्म, यज्ञादीनि चेतरेषाम्। तद्व्यतिक्रमे च तस्य प्रत्यवाय ॥
सू भा ३-४-२०, पा ४४२

(१०) यस्य सप्रभावस्य क्षेत्रज्ञस्य परिज्ञानादमृतत्व भवति। त 'ज्ञेय यत्तत् प्रवक्ष्यामि' (गी १३-२) इत्यादिना सविशेषण स्वयमेव वक्ष्यति भगवान्। अधुना तु तज्ज्ञानसाधनगणम् अमानित्वादिलक्षण – यस्मिन् सति तज्ज्ञेयविज्ञाने योग्योऽधिकृतो भवति, यत्पर सन्न्यासी ज्ञाननिष्ठ उच्यते – तम् अमानित्वादिगण ज्ञानसाधनत्वाज्ज्ञानशब्दवाच्य विदधाति भगवान् ॥ गी भा १३-७, पा १९९

(११) ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य नानधिकृतविषयत्वम् ॥
सू भा ३-४-२०, पा ४४२

उपासनानिदिध्यासनयोर्भेदो ग्राह्य –

५८ वैराग्येण प्राप्तपारिव्राज्यस्य भिक्षोरवश्यकर्तव्या श्रवणमननावृत्तिर्यावदात्मानुभवम् इत्युक्तम् । यस्य श्रवणमात्रादेव नानुभव, तस्य मननसयुता श्रवणावृत्ति कर्तव्या भवति, मन्दमध्यमाधिकारिणा तु निदिध्यासनमप्यावश्यक भवेदिति च । तत्र यद्यपि निदिध्यासनमपीतरोपासनवन्निरन्तरध्यानरूपम्, किंच – अत एवोपासनाशब्देनापि व्यपदिश्यते क्वचित् – तथाप्युपासनानिदिध्यासनयो लक्षणभेदोऽस्ति । यत उपासन नाम यथाचोदित क्रियमाणा प्रत्ययसन्तति, निदिध्यासन त्वैकाग्र्येण वस्तुतत्त्वनिश्चयाय तत्रैव चित्तस्थापन वा निरीक्षण रत्नपरीक्षकवत् । तत्रेश्वरप्राप्त्यर्थेषूपासनेष्वन्यतममुपादाय ध्येयसाक्षात्कारपर्यन्त यथाशास्त्र समानवृत्ति सतत कुर्यात् साधक । साक्षात्कारसाध्यत्वादुपासनाफलप्राप्ते । फल त्वपरब्रह्मप्राप्ति कालान्तरे ब्रह्मलोके, तत्रेश्वरसमानभोग, कल्पान्ते च ज्ञानोदयात् सह ब्रह्मणा क्रममुक्तिरिति च शास्त्रेषु निर्दिष्टम् । निदिध्यासनकर्त्रा तु वस्तुदर्शनायैव प्रयतित वस्त्वन्तरान्मनोव्यावृत्त्या । ज्ञानोत्पत्त्यनन्तर कर्तव्य नावशिष्यत इति विशेष । इद च निदिध्यासनम् **अध्यात्मयोग**नाम्ना समुपदिष्ट **काठके** । **ध्यानयोग**शब्देन व्यवहृत **गीतासु** । **मनोनिग्रह**मिति च व्यपदिष्ट **माण्डूक्यकारिकासु** । तत्प्रकारश्च तत्रैव वर्णित । सर्वत्र च फल सम्यग्दर्शनमित्येव कीर्तितम्, तत सद्योमुक्तिरिति च ॥

(१) एकेन चोपासनेन साक्षात्कृत उपास्ये विषये ईश्वरादौ द्वितीयमनर्थकम् । अपि चासभव । साक्षात्कारणस्य समुच्चयपक्षे चित्तविक्षेपहेतुत्वात् । साक्षात्करणसाध्य च विद्याफल दर्शयन्ति श्रुतय । 'यस्य स्यादद्धा न विचिकित्सास्ति' (छा ३-१४-४) इति, 'देवो भूत्वा देवानप्येति' (बृ ४-१-२) इति चैवमाद्या । स्मृतयश्च 'सदा तद्भावभावित' (गी ८-६) इत्येवमाद्या । तस्मात्, अविशिष्टफलाना विद्यानाम् अन्यतममादाय तत्पर स्याद् यावदुपास्यविषयसाक्षात्करणेन तत्फल प्राप्तमिति ॥ सू भा ३-३-५९, पा ४३०

(२) कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनाः सन्तः, तदध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परमं पदं प्रतिपद्यन्त इति। इत्थं क्रममुक्तिरनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या॥'

सू भा ४-३ १० पा ४९६

(३) 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति॥'

का १-२-१२

भाष्यम् – विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समाधानम् अध्यात्मयोगः, तस्याधिगमः। तेन मत्वा देवमात्मानं धीरो हर्षशोकौ आत्मन उत्कर्षापकर्षयोरभावात् – जहाति॥ पा ७४

(४) 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' (का १ ३ १२) इति वैष्णवस्य परमपदस्य दुरवगमत्वमुक्त्वा तदवगमार्थं योगं दर्शयति – 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि' (का १-३-१३) इति। एतदुक्तं भवति-वाचं मनसि संयच्छेत्, वागादिबाह्येन्द्रियव्यापारम् उत्सृज्य मनोमात्रेणावतिष्ठेत। मनोऽपि विषयविकल्पाभिमुखं विकल्पदोषदर्शनेन ज्ञानशब्दोदितायां बुद्धौ अध्यवसायस्वभावायां धारयेत्। तामपि बुद्धिं महत्यात्मनि भोक्तरि अग्र्यायां वा बुद्धौ – सूक्ष्मतापादनेन नियच्छेत्। महान्तं त्वात्मानं शान्त आत्मनि प्रकरणवति परस्मिन् पुरुषे परस्यां काष्ठायां प्रतिष्ठापयेत् इति च॥ सू भा १-४-१, पा १४७

(५) ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः॥ गी १८-५२

भाष्यम् – ध्यानम् आत्मस्वरूपचिन्तनम्, योगः आत्मविषय एवैकाग्रीकरणम्। तौ ध्यानयोगौ परत्वेन कर्तव्यौ यस्य स ध्यानयोगपरः। नित्यम्। नित्यग्रहणं मन्त्रजपाद्यन्यकर्तव्याभावप्रदर्शनार्थम्॥ पा २८२

[अत्र ज्ञाननिष्ठा कथं कार्या? – इत्येतद्विवक्षुर्भगवान् 'बुद्ध्या विशुद्धया युक्तः' (गी १८-५१) इत्यारभ्य 'ब्रह्मभूयाय कल्पते' (१८-५३) इत्येतत्पर्यन्तं ध्यानयोगं सान्तरङ्गसाधनमुक्त्वा 'ब्रह्मभूतः प्रसन्नात्मा' इत्याद्याभ्यां द्वाभ्यां सद्योमुक्तिं तत्फलमाह॥]

(६) स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ गी ६-२३
सकल्पप्रभवान् कामॉस्त्यक्त्वा सर्वानशेषत ।
मनसैवेन्द्रियग्राम विनियम्य समन्तत ॥ ६-२४
शनै शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
आत्मसस्थ मन कृत्वा न किञ्चिदपि चिन्तयेत् ॥ ६-२५
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वश नयेत् ॥ ६-२६
प्रशान्तमनस ह्येन योगिन सुखमुत्तमम् ।
उपैति शान्तरजस ब्रह्मभूतमकल्मषम् ॥ ६-२७
युञ्जन्नेव सदाऽऽत्मान योगी विगतकल्मष ।
सुखेन ब्रह्मसस्पर्शमत्यन्त सुखमश्नुते ॥ ६-२८
सर्वभूतस्थमात्मान सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शन ॥ ६-२९

भाष्यम् – ' सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु सम निर्विशेष ब्रह्मात्मैकत्वविषय दर्शन ज्ञान यस्य स सर्वत्र समदर्शन ॥
गी भा पा ११०

[ अत्र ध्यानयोगानुष्ठानप्रकार उक्त्वान्तिमश्लोकेन तत्फल ज्ञानमित्युक्तम् ]

(७) उत्सेक उदधेर्यद्वत् कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वद्भवेदपरिखेदत ॥
उपायेन निगृह्णीयाद् विक्षिप्त कामभोगयो ।
सुप्रसन्न लये चैव यथा कामो लयस्तथा ॥
दु ख सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् ।
अज सर्वमनुस्मृत्य जात नैव तु पश्यति ॥
लये सबोधयेच्चित्त विक्षिप्त शमयेत् पुन ।
सकषाय विजानीयात् समप्राप्त न चालयेत् ॥
नास्वादयेत् सुख तत्र नि सङ्ग प्रज्ञया भवेत् ।
निश्चल निश्चरच्चित्तमेकीकुर्यात् प्रयत्नत ॥
यदा न लीयते चित्त न च विक्षिप्यते पुन ।
अनिङ्गनमनाभास निष्पन्न ब्रह्म तत् तदा ॥ गौ का ३-४१    ४६

[ अत्र मनोनिग्रहप्रकारो वितत्य दर्शित , अन्ते च मनसो ब्रह्मरूपापत्ति लक्षण तत्फल च दर्शितम् ॥ ]

14

विदित्वा । आत्मविज्ञानं निरवशेषं कृत्वा-इत्यर्थः । आचार्यत आगमतश्च । एषणाभ्यो व्युत्थाय । एषणाव्युत्थानावसानमेव हि तत् पाण्डित्यम् । तस्मादेषणाभ्यो व्युत्थाय ज्ञानबलभावेन बाल्येन तिष्ठासेत् स्थातुमिच्छेत् ।

बलं नाम आत्मविद्यया अशेषविषयदृष्टितिरस्करणम् । अतस्तद्भावेन बाल्येन तिष्ठासेत् । अथ मननान्मुनिर्योगी भवति । अमौनं चात्मज्ञानानात्मप्रत्ययतिरस्कारात् पाण्डित्यबाल्यसंज्ञकौ निःशेषं कृत्वा । मौनं नाम अनात्मप्रत्ययतिरस्करणस्य पर्यवसानं फलम् । तच्च निर्विद्य अथ ब्राह्मणः कृतकृत्यो भवति । ब्रह्मैव सर्वमिति प्रत्यय उपजायते ॥ पा. ८१६

(२) 'बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते । ननु सति विद्यावत्त्वे प्राप्नोत्येव तत्रातिशयः किं मौनविधिना ? इत्यत आह 'पक्षेण' इति । एतदुक्तं भवति – यस्मिन् पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति तस्मिन्नेष विधिरिति ॥

सू. भा. ३-४-४७, पा. ४५५

[ सूत्रभाष्ये विद्यावतोऽपि व्यवहारदृष्ट्या भेददर्शनप्राबल्यमाशङ्क्य तन्निवारणार्थं मौनं विधीयत इत्युक्तम् । 'आत्मानं विदित्वा' इति पूर्वस्मिन् वाक्ये विद्यावदधिकारात् । तेनैव विविदिषोरपि मौनं कार्यं भवतीत्यविरोधो द्रष्टव्यः ॥ ]

(३) 'ज्ञानाध्ययनधार्मिकत्वादिभिरात्मानम् अविख्यापयन् दम्भदर्पादिरहितो भवेत् । यथा बालोऽप्ररूढेन्द्रियतया न परेषाम् आत्मानमाविष्कर्तुमीहते तद्वत् ॥ सू. भा. ३-४-५०, पा. ४५६

[ बृहदारण्यकभाष्ये ज्ञानबलभावो बाल्यम् – इत्युक्तम् । सूत्रभाष्ये तु बालस्य भावो दम्भादिराहित्यमित्युक्तम् । उभयमप्यविरुद्धतया सङ्ग्राह्यमेव ॥ ]

(४) हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणतः ।
तेषामन्यत्र विज्ञेयादुपलम्भस्त्रिषु स्मृतः ॥ गौ. का. ४-९०

भाष्यम् – हेयानि च लौकिकादीनि त्रीणि जागरितस्वप्नसुषुप्तानि । आत्मन्यसत्त्वेन रज्ज्वां सर्पवद् हातव्यानीत्यर्थः । ज्ञेयम् इह चतुष्कोटिवर्जितं परमार्थतत्त्वम् । आप्यानि आप्तव्यानि त्यक्तबाह्यैषणात्रयेण भिक्षुणा पाण्डित्यबाल्यमौनाख्यानि साधनानि । पाक्यानि रागद्वेषमोहादयो दोषाः, कषायाख्यानि पक्तव्यानि । सर्वाण्येतानि हेयज्ञेयाप्यपाक्यानि विज्ञेयानि भिक्षुणोपायत्वेन इत्यर्थः । अग्रयाणतः प्रथमतः । तेषां हेया-

दीनाम् – अन्यत्र विज्ञेयात् परमार्थसत्य विज्ञेय ब्रह्मैक वर्जयित्वा – उपलम्भनम् उपलम्भ , अविद्याकल्पनामात्र हेयाप्यपाक्येपु त्रिष्वपि स्मृतो ब्रह्मविद्भि न परमार्थसत्यता त्रयाणाम् इत्यर्थ ॥ पा २५३

(३) न कश्चिज्जायते जीव सम्भवोऽस्य न विद्यते ।
एतत्तदुत्तम सत्य यत्र किञ्चिन्न जायते ॥ गौ का ३-४८

भाष्यम्– सर्वोऽप्ययं मनोनिग्रहादि मृल्लोहादिवत् सृष्टि , उपासना चोक्ता परमार्थस्वरूपप्रतिपत्त्युपायत्वेन न परमार्थसत्येति । परमार्थसत्य तु न कश्चित् जायते जीव कर्ता भोक्ता च नोत्पद्यते केनचिदपि प्रकारेण । पूर्वेषूपायत्वेनोक्ताना सत्यानाम् एतदुत्तम सत्यम् यस्मिन् सत्यस्वरूपे ब्रह्मणि अणुमात्रमपि किञ्चिन्न जायत इति ॥ पा २२७

## ज्ञानोत्पत्त्यनन्तरम् आत्मनिष्ठैव कर्माभावः –

५८ यद्यपि श्रुतिस्मृत्योर्ज्ञानसाधनानि विहितानि, तथापि तान्यनुतिष्ठत कस्य कदा भवति ज्ञानोत्पत्तिरिति नियन्तु न शक्यते । ज्ञानसाधनानुष्ठानस्यासतिप्रतिबन्धके तस्मिन्नेव जन्मनि ज्ञानपरिपाको भवेत् । सति तु कस्मिंश्चित् प्रतिबन्धके जन्मान्तरेऽप्युत्पद्येत ज्ञानम् । अस्मादेव च हेतोर्ब्रह्मचर्ये, गार्हस्थ्ये, वानप्रस्थे वा यथायोग ज्ञानोत्पत्तिरवकल्पते, तस्य तस्य साधनपरिपाकानुगुण्येन । तत्र यस्य यदेव च ज्ञानमुत्पन्नम्, तस्य तदैवार्थप्राप्त सन्यास । न तु ज्ञानकर्मणो सहभाव उपपद्यते कथञ्चित् । अत एव हि ब्रह्मचर्याद्यन्यतमादप्याश्रमात् पारिव्राज्यमनुजानाति श्रुति –'गृहाद् वनी भूत्वा प्रव्रजेद्, यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद् वा वनाद् या' (जा ४) इति । यस्य तु ज्ञानोत्पत्त्यनन्तर, कुतश्चित् कारणात् पारिव्राज्यासभव , तस्य लोकदृष्ट्या कर्म कुर्वतोऽपि परमार्थदृष्ट्या कर्मासंसर्ग एव । अहङ्कारफलाभिसंध्योरभावात् तत्कर्मण कर्मत्वापायात्, स्वदृष्ट्या सर्वस्यापि कर्मणो ज्ञानसमकालमेव क्षीणत्वात्, सर्वथापि कर्तृत्वाभावबुद्धेरेव ज्ञानत्वाच्च ॥

(१) आत्मानं चेद् विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत् ॥ बृ ४-४-१२

(२) यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ गी ३-१७

(३) यदा प्रक्रान्तस्य विद्यासाधनस्य कश्चित् प्रतिबन्धो न क्रियत उपस्थितविपाकेन कर्मान्तरेण तदा इहैव विद्या उत्पद्यते यदा तु खलु तत्प्रतिबन्धः क्रियते, तदा अमुत्रेति । यानि चैकस्य कर्मणो विपाचकानि देशकालनिमित्तानि, तान्येवान्यस्यापि – इति न नियन्तुं शक्यते । यतो विरुद्धफलान्यपि कर्माणि भवन्ति ॥ सू भा ३-४-५१, पा ४५७

(४) यस्तु अकर्मादिदर्शी सोऽकर्मादिदर्शनादेव निष्कर्मा सन्न्यासी जीवनमात्रार्थचेष्टः सन् कर्मणि न प्रवर्तते, यद्यपि प्राग्विवेकतः प्रवृत्तः । यस्तु प्रारब्धकर्मा सन् उत्तरकालमुत्पन्नात्मसम्यग्दर्शनः स्यात् स सर्वकर्मणि प्रयोजनमपश्यन् ससाधनं कर्म परित्यजत्येव । स कुतश्चिन्निमित्तात् कर्मपरित्यागासम्भवे सति कर्मणि तत्फले च सङ्गरहिततया स्वप्रयोजनाभावात् लोकसङ्ग्रहार्थं पूर्ववत् कर्मणि प्रवृत्तोऽपि नैव किञ्चित् करोति । ज्ञानाग्निदग्धकर्मत्वात् तदीयं कर्माकर्मैव सम्पद्यते ॥ गी भा ४-२०, पा ७०

(५) यस्यैव पुरुषस्योपमर्दितः प्रत्ययो ब्रह्मक्षत्राद्यात्मविषयः, तस्य तत्प्रत्ययसन्न्यासात् तत्तत्कार्याणां कर्मणां कर्मसाधनानां चाथप्राप्तश्च सन्न्यासः ॥ बृ भा २-४-१, पा ७५८

(६) यथा लोके द्रष्टुश्चक्षुष आलोकेन संयोगो यत्कालः तत्काल एव रूपाभिव्यक्तिः, एवम् आत्मविषयं विज्ञानं तत्काल एव तद्विषयाज्ञानतिरोभावः स्यात् । ॥ बृ भा १-४-१० पा ६७६

(७) पूर्वसिद्धकर्तृत्वभोक्तृत्वविपरीतं हि त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि, नेतः पूर्वमपि कर्ता भोक्ता वाऽहमासम्, नेदानीम्, नापि भविष्यत्काले – इति ब्रह्मविदवगच्छति । एवमेव च मोक्ष उपपद्यते ॥ सू भा ४-१-१३, पा ४७४

## अविद्याबाधे सत्यात्मन्यवस्थानमेव मोक्षः –

५९ एतावद्विचारसन्दर्भेण सर्वोऽपि बन्धमोक्षव्यवहार आत्मानात्मान्योन्याध्यासलक्षणाविद्याव्यवहारक्षेत्र एवेत्यवगतम् । इत्थं च शास्त्राचार्योपदेशजनितविज्ञानेनाविद्यादिसंसारधर्मनिवृत्तावद्वैतात्मन्यवस्थानं मोक्ष इति

व्यवहारोऽप्यविद्ययैवेति सिध्यति । इदं च कैवल्यम् 'स्वस्थता' (मा अव) 'स्वात्मन्यवस्थानम्', 'स्वरूपावस्थानम्', 'प्रत्यगात्मस्वरूपावस्थानम्', 'स्वात्मप्रतिष्ठा', 'स्वरूपेणाभिनिष्पत्तिः', 'ब्राह्मी स्थिति', 'अशरीरत्वम्'—इत्यादिशब्दैर्व्यपदिश्यते । सेयं मुक्त्यवस्था ब्रह्माव्यतिरिक्तत्वात् ब्रह्मणश्च जिज्ञासोरात्मस्वाभाव्यात् न कयाचित् क्रियया निष्पाद्या, विकार्या, संस्कार्या, प्राप्या वा । अविद्यामात्रव्यवधानापनयनेन तु स्वस्वरूपत्वेन विज्ञेया । अत एव मोक्षस्य ज्ञानकार्यत्वमप्यौपचारिकम् । दशमज्ञानेन दशमप्राप्तेरिव, ब्रह्मप्राप्तिश्चौपचारिकमेव । एतादृशज्ञानिनो बाधितानुवृत्त्या मिथ्याज्ञानानुवृत्तेः सत्त्वेऽपि तज्ज्ञानस्य न काचित् क्षतिः । यथैव तस्य कर्मणो लोकसंग्रहार्थत्वेऽपि तस्य कर्मबन्धाभावः, तद्वत् तत्कृतोपदेशेन मुमुक्षुजनानुग्रहेऽपि न तस्मिन्नपि तस्य वास्तविकं कर्तृत्वमस्ति ॥

(१) किं पुनस्तत् प्रयोजनमिति ? उच्यते । रोगार्तस्येव रोगनिवृत्तौ स्वस्थता, तथा दुःखात्मकस्यात्मनो द्वैतप्रपञ्चोपशमे स्वस्थता, अद्वैतभावः प्रयोजनम् ॥ मा अव पा १७७

(२) अतोऽविद्यानिवृत्तौ स्वात्मन्यवस्थानं परप्राप्तिः ॥

तै अव, पा २५८

(३) केवलज्ञानमप्यनर्थकं तर्हि । न । अविद्यानिवर्तकत्वे सति दृष्टकैवल्यफलावसानत्वात् । अविद्यातमोनिवर्तकस्य ज्ञानस्य दृष्टं कैवल्यफलावसानत्वम् रज्ज्वादिविषये सर्पाद्यज्ञानतमोनिवर्तकप्रदीपप्रकाशफलवत् । विनिवृत्तसर्पादिविकल्परज्जुकैवल्यावसानं हि प्रकाशफलम् । तथा ज्ञानम् ॥

गी भा १८-६६, पा २८९

(४) पतितेऽस्मिन् शरीरे देहान्तरोत्पत्तौ कारणाभावादात्मनः, रागादीनां चाकरणात् स्वरूपावस्थानमेव कैवल्यमित्ययत्नसिद्धं कैवल्यम् ॥

गी भा, पा २९०

[ केवलनित्यकर्मानुष्ठानात् कैवल्यमिति वादिना मतस्यानुवादप्रसङ्गेनेदं वाक्यं लिखितम् । एवं सूत्रभाष्येऽपीदमेव मतमनुवदद्भाष्यवाक्यमस्ति 'देहान्तरप्रतिसंधानकारणाभावात् स्वरूपावस्थानलक्षणं कैवल्यम्' (पा ४९९) इति । पूर्वं वाक्यं स्वावसर एवोत्तरस्मिन् काण्डे उदाहरिष्यते ॥ ]

(५) देवाद्यमृतत्व ह्यध्रुवम् , इद तु प्रत्यगात्मस्वरूपावस्थानलक्षण ध्रुवम् ॥ का २-१-२ पा ८६

(६) ससारोऽनादिरनन्तो दु खस्वरूपत्वात् हातव्य प्रत्येक शरीरिभि । नदीस्रोतोवदविच्छेदसबन्ध । तदुपशमलक्षणो मोक्ष परविद्या-विषयोऽनाद्यनन्तोऽजरोऽमरोऽमृतोऽभय शुद्ध प्रसन्न स्वात्मप्रतिष्ठालक्षण परमानन्दोऽद्वय इति ॥ मु भा १-२-१, अव , पा १४७, १४८

(७) देहाद्युपाध्यविविक्तस्येव सतो जीवस्य श्रुतिकृत विवेकविज्ञान शरीरात् समुत्थान विवेकविज्ञानफलम् स्वरूपेणाभिनिष्पत्ति केवलात्म स्वरूपावगति ॥ सू भा १-३-१९, पा ११२

(८) एषा ब्राह्मी स्थिति पार्थ नैना प्राप्य विमुह्यति ॥

भाष्यम् - ब्राह्मी ब्रह्मणि भवा इय स्थिति सर्वं कर्म सन्यस्य ब्रह्मरूपेणावस्थानम् इत्येतत् ॥ गी भा २ ७२, पा ४०

(९) तद्यथाहिनिर्ल्वयिनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेद शरीर शेते ॥ बृ ४-४-७

भाष्यम् - इद शरीर सर्पस्थानीयेन मुक्तेनानात्मभावेन परित्यक्त मृतमिव शेते । अथेतर सर्पस्थानीयो मुक्त सर्वात्मभूत सर्पवत् तत्रैव वर्तमानोऽप्यशरीर एव न पूर्ववत् पुन सशरीरो भवति । कामकर्मप्रयुक्त शरीरात्मभावेन हि पूर्वं सशरीरो मर्त्यश्च । तद्वियोगादथेदानीम् अशरीरोऽत एवामृतश्च ॥ पा ९२१

(१०) तस्मात् मिथ्याप्रत्ययनिमित्तत्वात् सशरीरत्वस्य सिद्ध जीवतोऽपि विदुषोऽशरीरत्वम् ॥ सू भा १-१-४, पा २२

(११) ब्रह्मैव हि मुक्त्यवस्था ॥ सू भा ३-४ ५२ पा ४५८

(१२) यस्य तूत्पाद्यो मोक्ष , तस्य मानस वाचिक कायिक वा कार्य मपेक्षत इति युक्तम् । तथा विकार्यत्वे च । तयो पक्षयोर्मोक्षस्य ध्रुव-मनित्यत्वम् । न हि दध्यादि विकार्यम् , उत्पाद्य वा घटादि नित्य दृष्ट लोके । न चाप्यत्वेनापि कार्यापेक्षा । स्वात्मस्वरूपत्वे सत्यनाप्यत्वात् । नापि सस्कार्यो मोक्ष , येन व्यापारमपेक्षेत । सस्कारो हि सस्कार्यस्य गुणाधानेन वा स्यात् , दोषापनयनेन वा । न तावद्गुणाधानेन सभवति । अनाधेयाति-शयब्रह्मस्वरूपत्वान्मोक्षस्य । नापि दोषापनयनेन । नित्यशुद्धब्रह्मस्वरूपत्वा-न्मोक्षस्य ॥ सू भा १-१-४, पा १६, १७

(१३) अज्ञानव्यवधाननिवर्तकत्वाज्ज्ञानस्य मोक्षो ज्ञानकार्यमित्युप-चर्यते । न तु कर्मणा निवर्तयितव्यमज्ञानम् । न चाज्ञानव्यतिरेकेण मोक्षस्य

व्यवधानान्तरं कल्पयितुं शक्यम् । नित्यत्वान्मोक्षस्य साधकस्वरूपाव्यतिरेकाच्च । यत् कर्मणा निवर्त्येत ॥ बृ भा ३-३ अव, पा ७९९

(१४) तत्रैवमविद्यया नाप्तब्रह्मस्वरूपस्य – प्रकृतसङ्ख्यापूरणस्यात्मनोऽविद्ययानाप्तस्य सतः केनचित् स्मारितस्य पुनस्तस्यैव विद्यया आप्तिर्यथा तथा–श्रुत्युपदिष्टस्य सर्वात्मब्रह्मण आत्मत्वदर्शनेन विद्यया तदाप्तिरुपपद्यत एव ॥ तै भा २-१, पा २८२

(१५) अकर्त्रात्मबोधोऽपि हि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति । बाधितमपि तु मिथ्याज्ञानं द्विचन्द्रज्ञानवत् संस्कारवशात् कञ्चित्कालमनुवर्तत एव ॥ सू भा ४-१-१५, पा ४७५

(१६) न च विपरीतप्रत्ययो विद्यावत उत्पद्यते । निर्विषयत्वात् । अनवधृतविषयविशेषस्वरूपं हि सामान्यमात्रमाश्रित्य विपरीतप्रत्यय उत्पद्यमान उत्पद्यते । यथा शुक्तिकायां रजतमिति । स च विषयविशेषावधारणवतोऽशेषविपरीताश्रयस्य उपमर्दितत्वान्न पूर्ववत् सम्भवति । शुक्तिकादौ सम्यक्प्रत्ययोत्पत्तौ पुनरदर्शनात् । क्वचित् विद्याया पूर्वोत्पन्नविपरीतप्रत्ययजनितसंस्कारेभ्यो विपरीतप्रत्ययावभासाः स्मृतयो जायमाना विपरीतप्रत्ययभ्रान्तिम् अकस्मात् कुर्वन्ति । यथा विज्ञातदिग्विभागस्याप्यकस्माद्दिग्विपर्ययविभ्रमः ॥ बृ भा १-४-१०, पा ६७८

(१७) अथ ज्ञानवत क्षीयन्ते कर्माणि, तदा ज्ञानप्राप्तिसमकालमेव ज्ञानस्य स्वोत्पत्तिहेतुत्वान्मोक्षः स्यादिति शरीरपातः स्यात् । तथा च आचार्याभाव इति 'आचार्यवान् पुरुषो वेद' इत्यनुपपत्तिः ज्ञानान्मोक्षाभावप्रसङ्गश्च । देशान्तरप्राप्त्युपायज्ञानवदनैकान्तिकफलत्वं वा ज्ञानस्य । न । कर्मणां प्रवृत्ताप्रवृत्तफलवत्त्वविशेषोपपत्तेः ॥

छा ६-१४-२, पा ५३६

[अत्र कर्मणो बाधितानुवृत्त्यैव सत्त्वं तेन च आचार्याभावदोषवारणं चोक्तम् ॥]

(१८) परकर्मणा च परस्मिन्नात्मन्यविद्यया अध्यारोपितानां विद्यया विवेकज्ञानेन मनसा सन्यास उपपद्यते । उत्पन्नविवेकज्ञानस्य सर्वकर्मसन्यासिनोऽपि गेह इव देह एव नवद्वारे पुरे आसनं प्रारब्धफलकर्मसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तेः 'देह एव आस्ते' इत्यस्त्येव विशेषणफलम् । विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात् ॥

गी भा ५-१३, पा ९०, ९१

[अत्र निवृत्तसर्वकर्मणोऽपबाधितानुवृत्त्या देहे आसनमुक्तम् । तस्योपदेशः कर्मण्यपि नैव किञ्चित् करोमीत्यनुसंधानं चोपपन्नमित्यवगम्यते ॥]

मुक्तिद्वयम् , जीवन्मुक्तेर्मुख्यत्वाच्च–

६० येय मुक्तिर्विद्यासमवाप्या, सा ज्ञानसमकाललब्धात्मभाव त्वात् **सद्योमुक्तिरित्युच्यतेऽभियुक्तै** । सैव च **जीवन्मुक्तिशब्दव्यपदेश्या**, व्यवहारदृष्ट्या जीवतैव लभ्यत्वात्, यावज्जीवमनुवर्तनाच्च । शरीरपाते तु या ब्रह्मण्येव ब्रह्मरूपेणावस्थिति , सापि **विमुक्तिः, ब्रह्मण्यप्ययः, ब्रह्मनिर्वाणम्, ब्रह्मभूयम्, ब्रह्मसंपत्तिः, क्षेमम्, अपुनरावृत्तिः** – इत्यादिशब्दैरुपचर्यते, शरीरान्तरादानहेतो कर्मशेषस्याभावमालक्ष्य । मुख्या मुक्तिस्तु सद्योमुक्तिरेवेति सर्वं शिवम् ॥

(१) न हि सद्योमुक्तिभाजा सम्यग्दर्शननिष्ठाना गतिरागतिर्वा क्वचिदस्ति । 'न तस्य प्राणा उत्क्रामन्ति' (बृ ४–४–६) इति श्रुते । ब्रह्मसंल्लीनप्राणा एव ते । ब्रह्ममया ब्रह्मभूता एव ते ॥
गी भा ८–२४, पा १३४

(२) ब्रह्मैव सन् ब्रह्माप्येति ॥ बृ ४–४–६

भाष्यम् – 'विद्वान् स इहैव ब्रह्म – यद्यपि देहवानिव लक्ष्यते स ब्रह्मैव – सन् ब्रह्माप्येति । यस्मान्न हि तस्याब्रह्मत्वपरिच्छेदहेतव कामा सन्ति, तस्मादिहैव ब्रह्मैव सन् ब्रह्माप्येति न शरीरपातोत्तरकालम् । न हि विदुषो मृतस्य भावान्तरापत्तिर्जीवतोऽन्यो भाव । देहान्तरप्रतिसधानाभावमात्रेणैव तु ब्रह्माप्येति–इत्युच्यते ॥ पा ९१७

(३) अनुष्ठाय न शोचति । विमुक्तश्च विमुच्यते ॥ का २–२–१

भाष्यम् – अनुष्ठाय ध्यात्वा । ध्यान हि तस्यानुष्ठान सम्यग्विज्ञान पूर्वकम् । इहैवाविद्याकृतकामकर्मबन्धनैर्विमुक्तो भवति । विमुक्तश्च सन् विमुच्यते । पुन शरीर न गृह्णातीत्यर्थ ॥ पा ९१

(४) स योगी ब्रह्मनिर्वाण ब्रह्मभूतोऽधिगच्छति ॥ गी ५–२४

भाष्यम् – य ईदृश स योगी ब्रह्मनिर्वाण ब्रह्मणि निर्वृतिं मोक्षम् इह जीवन्नेव ब्रह्मभूत सन् अधिगच्छति प्राप्नोति ॥ पा ९७

(५) अभितो ब्रह्मनिर्वाण वर्तते विदितात्मनाम् ॥ गी ५–२६

भाष्यम् – 'जीवता मृताना च ब्रह्मनिर्वाण मोक्षो वर्तते ॥ पा ९६

(६) प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ गी भा ६-२७

भाष्यम्-ब्रह्मभूतं जीवन्मुक्तं 'ब्रह्मैव सर्वम्'-इत्येवंनिश्चयवन्तम् ॥
पा १०९

(७) अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ गी १८-५३

भाष्यम् - 'ब्रह्मभूयाय ब्रह्मभवनाय कल्पते समर्थो भवति' ॥
पा २८३

(८) यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ गी १३-३०

भाष्यम् - शास्त्राचार्योपदेशमनु आत्मानं प्रत्यक्षत्वेन पश्यति 'आत्मैवेदं सर्वम्' इति । तत एव च तस्मादेव च विस्तारम् उत्पत्तिं विकासम् 'आत्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावौ आत्मतोऽन्नम्' (छा) इत्येवमादिप्रकारैर्विस्तारं यदा पश्यति ब्रह्म संपद्यते, ब्रह्मैव भवति तदा तस्मिन् काले ॥ पा २१५ २१६

(९) तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ गी ५-१७

भाष्यम् - तस्मिन् ब्रह्मणि गता बुद्धिर्येषां ते तद्बुद्धयः । तदात्मानः । तदेव परं ब्रह्म आत्मा येषां ते तदात्मानः । तन्निष्ठाः । निष्ठा, अभिनिवेशः, तात्पर्यम् । सर्वाणि कर्माणि सन्न्यस्य तस्मिन् ब्रह्मण्येवावस्थानं येषां ते तन्निष्ठाः । तत्परायणाश्च । तदेव परम् अयनं परा गतिर्येषां भवति ते तत्परायणाः । केवलात्मरतय इत्यर्थः । येषां ज्ञानेन नाशितम् आत्मनोऽज्ञानं ते गच्छन्ति, एवंविधा अपुनरावृत्तिम् अपुनर्देहसंबन्धं ज्ञाननिर्धूत-कल्मषाः यथोक्तेन ज्ञानेन निर्धूतो नाशितः कल्मषः पापादिसंसारकारणदोषो येषां ते ज्ञाननिर्धूतकल्मषाः । यतय इत्यर्थः ॥ पा ९२

[अत्र 'तन्निष्ठाः' इत्यनेन जीवन्मुक्तिमुक्त्वा 'अपुनरावृत्तिम्' इति विदेहमुक्तिरप्युक्ता द्रष्टव्या ॥]

(१०) अप्रवृत्तफले एव पूर्वे जन्मान्तरसञ्चिते अस्मिन्नपि च जन्मनि प्राग् ज्ञानोत्पत्तेः सञ्चिते सुकृतदुष्कृते ज्ञानाधिगमात् क्षीयेते, न त्वारब्धकार्ये

नामि भुक्तफले याभ्यामेतद् ब्रह्मज्ञानायतन जन्म निर्मितम् । कुत एतत् ? 'तस्य तावदेव चिर यावन्न विमोक्ष्येऽथ सपत्स्ये' (छा ६-१४-२) इति शरीरपातावधिकरणात् क्षेमप्राप्तेः । इतरथा हि ज्ञानादशेषकर्मक्षये सति स्थितिहेत्वभावात्, ज्ञानप्राप्त्यनन्तरमेव क्षेममश्नुवीत । तत्र शरीरपातप्रतीक्षा नाचक्षीत ॥ सू भा ४-१-१५, पा ४७५

[अत्र व्यावहारिकदृष्ट्या ज्ञानिनि शरीरित्व प्रारब्धकर्मावशेषत्व चोररी कृत्य शरीरपातानन्तर क्षेमप्राप्त्युक्ते, क्षेमशब्देन विदेहकैवल्यमुच्यत इति स्पष्टम् ॥]

## ज्ञानफले मुक्तौ न कश्चिद् विशेषोऽस्ति–

६१ यद्यपि ब्रह्मलोक गतानाम् उपासकाना तत्रैव सम्यग्ज्ञानोत्पत्तौ तल्लोकप्रलये प्रत्युपस्थिते ब्रह्मणा सहाप्राप्यमाना **क्रममुक्तिः**, इहैव जन्मनि जन्मान्तरे वा विद्यासाधनविपाके उत्पद्यमानाया विद्याया समसमय अधिगम्यमाना **सद्योमुक्तिः**, प्रारब्धफलकर्मक्षये सति शरीर पातानन्तर भविष्यन्ती **विदेहमुक्तिः** – इति च त्रेधा विभज्य दर्श्यते मुक्तिर्वेदान्तेषु, तथापि न क्वचिदपि मुक्तिस्वरूपे कश्चिद् विशेष समस्ति । नित्यप्राप्तात्मस्वरूपत्वान्मुक्ते, तत्साधनभूताया विद्याया भेदाभावाच्च । न हि मुक्तिर्नाम उत्पाद्या, विकार्या, आप्या, सस्कार्या वा येन तत्तत्साधनानुगुण भिद्येत । नित्यप्राप्तात्मस्वरूपत्वात्, आत्मनश्च निरवयवत्वात्, कूटस्थनित्यत्वात्, अनाधेयातिशयरूपत्वात्, सर्वक्रियाश्रयत्वानुपपत्तेश्च । 'शरीरपाते मोक्ष' इति व्यवहारस्तु देहान्तरग्रहणाभावापेक्षया इत्युक्तम् (ख ६०) । तस्मात्, न ज्ञानफले कश्चिद्विशेषप्रतिनियम आशङ्कितव्य, एकरूपात्मस्वभावत्वात् तस्या इति शिवम् ॥

(१) कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनास्सन्त, तदध्यक्षेण हिरण्यगर्भेण सहात पर परिशुद्ध विष्णो परम पद प्रतिपद्यन्ते । इत्थं क्रममुक्ति, अनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या । न ह्यञ्जसैव गतिपूर्विका परप्राप्ति सभवतीत्युपपादितम् ॥

सू भा ४-३-१०, पा ४९६

(२) तस्मिन् मार्गे प्रयाता मृता गच्छन्ति ब्रह्म ब्रह्मविदो ब्रह्मोपासका ब्रह्मोपासनपरा जना । 'क्रमेण' इति वाक्यशेष । न हि सद्योमुक्तिभाजा सम्यग्दर्शननिष्ठाना गति, आगतिर्वा क्वचिदस्ति ॥
गी भा ८-२४, पा १२४

(३) एव धर्माधर्मयोर्बन्धहेत्वो, विद्यासामर्थ्यादश्लेषविनाशसिद्धे, अवश्यभाविनी विदुष शरीरपाते मुक्ति - इत्यवधारयति ॥
सू भा ४-१-१४, पा ४७४

(४) यथा मुमुक्षोर्विद्यासाधनावलम्बिन साधनवीर्यविशेषाद् विद्यालक्षणे फले ऐहिकामुष्मिकफलत्वकृतो विशेषप्रतिनियमो दृष्ट, एव मुक्तिलक्षणेऽपि उत्कर्षापकर्षकृत कश्चिद् विशेषप्रतिनियम स्यात् इत्याशङ्क्याह- 'एव मुक्तिफलानियम' इति । ✓न खलु मुक्तिफले कश्चिदेवभूतो प्रतिनियम आशङ्कितव्य । कुत ? तदवस्थावधृते । मुक्त्यवस्था हि सर्ववेदान्तेषु एकरूपैवावधार्यते । ब्रह्मैव हि मुक्त्यवस्था । न च ब्रह्मणोऽनेकाकारयोगोऽस्ति । एकलिङ्गत्वावधारणात् ॥
सू भा ३-४ ५२, पा ४५८

(५) विद्याभेदाभावादपि तत्फलभेदनियमाभाव कर्मफलवत् । न हि मुक्तिसाधनभूताया विद्याया कर्मणामिव भेदोऽस्तीति । सगुणासु तु विद्यासु 'मनोमय प्राणशरीर' इत्याद्यासु गुणावापोद्वापवशात् भेदोपपत्तौ सत्याम् उपपद्यते यथास्व फलभेदनियम कर्मफलवत् नैव निर्गुणाया विद्यायाम् । गुणाभावात् ॥ सू भा ३-४-५२, पा ४५९

✓(६) अशरीरत्वमेव धर्मकार्यमिति चेत् । न । तस्य स्वाभाविकत्वात् । 'अशरीर शरीरेष्वनवस्थेष्ववस्थितम् । महान्त विभुमात्मान मत्वा धीरो न शोचति ॥' (का १-२-२१) इत्यादिश्रुतिभ्य ॥
सू भा १-१-४, पा १४

[अत्राशरीरत्वलक्षणस्य मोक्षस्य स्वाभाविकत्वमुक्तम् ॥]

✓(७) तस्मात्, मिथ्याप्रत्ययनिमित्तत्वात् सशरीरत्वस्य सिद्ध जीवतोऽपि विदुषोऽशरीरत्वम् ॥ सू भा १-१-४, पा २२

[सशरीरत्वस्य मिथ्याप्रत्ययनिमित्तत्वोक्त्या, शरीरपातप्रतीक्षोक्ति अविद्याकृतव्यवहारमपेक्ष्य-इति गम्यते ॥]

✓(८) इद तु पारमार्थिकम्, कूटस्थनित्यम्, व्योमवत् सर्वव्यापि, सर्वविक्रियारहित, नित्यतृप्त, निरवयव स्वयज्योति स्वभावम् । यत्र

धर्माधर्मौ सह कार्येण कालत्रय च नोपावर्तेते, नदेतदशरीरत्वम् मोक्षाख्यम् ॥
सू भा १-१-४, पा १४

(९) यस्य तूत्पाद्यो मोक्ष, तस्य मानस वाचिक कायिक वा कार्यमपेक्षत इति उक्तम् । तथा विकार्यत्वे च । तयो पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वम् । न चाप्यत्वेन कार्यापेक्षा । स्वात्मस्वरूपत्वे सत्यनाप्यत्वात् ॥ सू भा १-१-४ पा १७

(१०) नापि सस्कार्यो मोक्ष येन व्यापारमपेक्षेत । सस्कारो हि नाम सस्कार्यस्य गुणाधानेन वा स्यात्, दोषापनयनेन वा । न तावद् गुणाधानेन सभवति । अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य । नापि दोषापनयनेन । नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य ॥ सू भा १-१-४, पा १७

इति श्रीमत्परमहसपरिव्राजकाचार्य[illegible]चरणपरिचयावाप्त
वेदान्तप्रवशन श्रीबोधानन्देन्द्रसरस्वतीशिष्यसच्चिदानन्देन्द्रसरस्वत्याख्येन
भिक्षुणा प्रणीताया वेदान्तप्रक्रियाप्रत्यभिज्ञाया
श्रीशङ्करभगवत्पादभाष्यपरिशीलन नाम
तृतीय काण्ड

---

# ४. प्राचीनप्रस्थानपरीक्षा

**काण्डसम्बन्धः—**

६२ अथेदानी श्रीशङ्करभगवत्पादेभ्य प्राक् स्थिताना वेदान्त प्रक्रियाणा परीक्षा क्रियते ।, ताश्च प्रक्रिया श्रीगौडपादकारिकासु, प्रस्थानत्रयभाष्येषु, सुरेश्वरवार्तिके च तत्र तत्र परामृश्य दूषिता इति तत एवोद्धृत्येह समालोच्यन्ते । मूलान्तरानुपलम्भात् । समालोचनस्य फल तु भाष्यकारसम्प्रदायानुमतप्रक्रियाया वैशिष्ट्यबुद्धिदार्ढ्यमेव ॥

**कर्ममात्रस्य मोक्षसाधनं कृत्स्नवेदार्थ इति मतम्—**

६३ प्रक्रियारचयितारश्च प्राचीना कर्मकाण्डेऽभिनिविष्टा वेदान्तविद्वेषिण, वेदान्तप्रामाणिका अपि विधिरसिका इति च द्वेधा वर्गीकरणमर्हन्ति । तत्र कर्मकाण्डीयेषु मध्ये कर्मणामेव केवल पुरुषार्थ-साधनत्व मन्यमाना केचित् तावदूचिरे 'आम्नायस्य क्रियार्थत्वादानर्थक्य-मतदर्थानाम्' (जै १–२–१) इति यथाश्रुतार्थावलम्बनेन—वेदान्ताना मक्रियार्थत्वादानर्थक्यमेव । तेषाम् अध्ययनमात्रादेव तु पुण्यम् । स्वर्गस्यैव निरतिशयप्रीतिरूपस्य मोक्षापराभिधानत्वात् कर्मभ्य एव मोक्ष इति । सर्ववेदार्थज्ञानवत एव कर्मण्यधिकारात्, कृत्स्नस्य च वेदस्य कर्मार्थत्वात्, कर्मभ्यो मोक्षाभावे वेदस्यानर्थक्यप्रसङ्गाच्चेति तेषामाकूतम् ॥

तदिद न युक्तिमत् । मोक्षस्य नित्यत्वाभ्युपगमात् सर्वैर्मोक्षवादिभि, कर्मसाध्यस्य चानित्यत्वध्रौव्यात् – इत्याचार्यैं प्रत्युक्तम् । कर्माधिकारे वेदज्ञानस्यावश्यकत्वेऽपि वेदोक्तोपासनस्य श्रावणज्ञानादर्थान्तरत्वात्, वस्तुतस्त्वात्मज्ञानस्य कर्माधिकारेऽनपेक्षितत्वात्, अध्ययनमात्रवत एव कर्मण्यधिकारसम्भवात्, औपनिषदात्मज्ञानस्य सर्वविधद्वैतोपमर्दकत्वाच्च तत पर कर्माधिकारानुपपत्तेरिति ॥

(१) यच्चोक्तं निरतिशयप्रीते स्वर्गशब्दवाच्यायाः कर्मनिमित्तत्वात् कर्मभ्य एव मोक्ष इति । तन्न । नित्यत्वान्मोक्षस्य । न हि नित्यं किञ्चिदारभ्यते लोके । यदारब्धं तदनित्यमिति ॥ तै अव, पा २५९

(२) यदुक्तं 'समस्तवेदार्थज्ञानवतः कर्माधिकारात्' इत्यादि । तच्च न । श्रुतज्ञानव्यतिरेकादुपासनस्य । श्रुतज्ञानमात्रेण हि कर्मण्यधिक्रियते, नोपासनमपेक्षते । उपासनं च श्रुतज्ञानादर्थान्तरं विधीयते मोक्षफलम् । अर्थान्तरप्रसिद्धिश्च स्यात् । 'श्रोतव्य' - इत्युक्त्वा तद्व्यतिरेकेण 'मन्तव्यो निदिध्यासितव्य' इति यत्नान्तरविधानात् । मनननिदिध्यासनयोश्च प्रसिद्धं श्रवणज्ञानादर्थान्तरत्वम् ॥ तै शी उपस, पा २७६

[ अत्र श्रावणज्ञानं कर्मण्यपेक्ष्यत इत्युक्ते, अध्ययनमात्रं श्रवणमिताङ्गीकृत्येदमुच्यत इति गम्यते ॥ ]

(३) 'आचार्यकुलाद्वेदमधीत्य' (छा ८-१५-१) इत्यत्र अध्ययनमात्रस्य श्रवणात् अध्ययनमात्रवत एव कर्मविधिरित्यध्यवस्यामः । नन्वेवं सत्याविद्यत्वादनधिकारः कर्मसु प्रसज्येत । नैष दोषः । न वयम् अध्ययनप्रभवं कर्मावबोधनम् अधिकारकारणं वारयामः किं तर्हि, औपनिषदमात्मज्ञानं स्वातन्त्र्येणैव प्रयोजनवत् प्रतीयमानं न कर्माधिकारकारणतां प्रतिपद्यत इत्येतावत् प्रतिपादयामः । यथा च न क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारेणापेक्ष्यते, एवमेतदपि द्रष्टव्यमिति ॥

सू भा ३-४-१२, पा ४३७

(४) अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्याविद्याकृतस्य विद्यासामर्थ्यात् स्वरूपोपमर्दमामनन्ति - 'यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्' (बृ २-४-११) इत्यादिना । वेदान्तोदितात्मज्ञानपूर्विका तु कर्माधिकारसिद्धिं प्रत्याशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत ॥ सू भा ३-४-१६, पा ४३८

[ वेदान्तानामर्थवत्त्वेऽपि तज्ज्ञानस्य कर्माधिकारकारणत्वमेवेति मतं निरसितुमेवमुक्तम् ॥ ]

## वेदान्ता आत्मादिप्रकाशनद्वारा कर्मसंबन्धिन इति मतम्-

६४ कर्तृभूतमात्मानं देवतास्वरूपं ब्रह्म च प्रकाशयद् वेदान्तज्ञानं कर्मसंबन्ध्येव । अतस्तज्ज्ञाने फलश्रुतिरर्थवादमात्रम्, पर्णमयजुह्वादि-

वाक्यवत् । अथवा स्ववाक्यगतोपासनार्थत्वमेवास्तु वेदान्तानाम् इति केचिन्मेनिरे । परिनिष्ठितवस्तुन प्रमाणान्तरगोचरत्वनियमात्, शास्त्रस्य च विधिसस्पर्श विना प्रामाण्याभावात्, विधेश्च क्रियैकविषयत्वात्, वस्तु-परत्वासभव, तत्प्रतिपादने प्रयोजनाभावाच्च– इति तषामाशय ॥

अय च मीमासकपक्ष इत्थ परिहृत आचार्यै । कर्तृत्वादिरहितस्य ब्रह्मण एवोपनिषत्सु वेद्यत्वेनोपदेशात्, न तस्य तज्ज्ञानस्य वा कर्मशेष-त्वानुपपत्ति । उपासनावाक्यगतदेवतादीना तदर्थत्वेऽपि तात्पर्येण ब्रह्मात्म बोधकाना वेदान्ताना (४९) न तदर्थता कल्पनीया । वेदान्तोपदिष्टस्य ब्रह्मात्मत्वस्य प्रमाणान्तरागोचरत्वात्, अत एव निश्चितफलवद्विज्ञानजनक त्वान्नानर्थक्यम्, अर्थवादत्व विधिसस्पर्शाभावादप्रामाण्य वा शक्य-शङ्क वेदान्तानाम् इति मुक्तावप्यभ्युदयवद् विधिलक्षणत्वमिति शङ्का भाष्ये वार्तिके च प्रत्युक्ता ॥

(१) यदि ससार्येवात्मा शारीर कर्ता भोक्ता च शरीरमात्र व्यतिरेकेण वेदान्तेषूपदिष्ट स्यात् ततो वर्णितेन प्रकारेण फलश्रुतेरर्थवादत्व स्यात् । अधिकस्तावच्छारीरादात्मनोऽससारी, ईश्वर, कर्तृत्वादिससारिधर्म-रहितोऽपहतपाप्मत्वादिविशेषण, परमात्मा वेद्यत्वेनोपदिश्यते वेदान्तेषु । न च तद्विज्ञान कर्मणा प्रवर्तक भवति, प्रत्युत कर्माण्युच्छिनत्ति ॥

सू भा ३-४-८, पा ४३५

(२) देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद् विरोध । न तु तथा ब्रह्मण उपासनाविधिशेषत्व सभवति । एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्ते ॥

सू भा १-१-४, पा ११

(३) सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि। न च तद्गतानां पदाना ब्रह्मस्वरूपविषये निश्चिते समन्वये अवगम्यमाने अर्थान्तरकल्पना युक्ता । श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । न च तेषा कर्तृस्वरूपप्रतिपादनपरता अवसीयते । 'तत् केन क पश्येत्' (बृ २-४-१३) इत्यादिक्रियाकारकफलनिराकरणश्रुते ॥

सू भा १-१ ४, पा ११

(४) न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्व ब्रह्मण । 'तत्त्वमसि' (छा ६-८-७) इति ब्रह्मात्मभावस्य शास्त्रमन्तरेण अनव गम्यमानत्वात् ॥ सू भा १-१-४, पा ११

(५) आत्मस्वरूपान्वाख्यानपरेषु वाक्येषु फलवन्निश्चित च विज्ञान मुत्पद्यते न वा ? उत्पद्यते चेत् । कथमप्रामाण्यमिति ? कि वा न पश्यसि अविद्याशोकमोहभयादिससारबीजदोषनिवृत्ति विज्ञानफलम् ? एव विद्यते किम्, 'सोऽरोदीत्' (तै स १-५-१) इत्यादिषु निश्चित फलवच्च विज्ञानम् ? न चेद् विद्यते, अस्त्वप्रामाण्यम् । तदप्रामाण्ये फलवन्निश्चितविज्ञानोत्पादकस्य किमित्यप्रामाण्य स्यात् ?

बृ भा १-४-७, पा ६६४

(६) यद्यप्यन्यत्र वेदवाक्याना विधिसस्पर्शमन्तरेण प्रमाणत्व न दृष्टम्, तथाप्यात्मविज्ञानस्य फलपर्यन्तत्वात्, न शास्त्रस्य प्रामाण्य शक्य प्रत्याख्यातुम् । न चानुमानगम्य शास्त्रप्रामाण्यम्, येनान्यत्र दृष्ट निदर्शन मपेक्षेत ॥ सू भा १-१-४, पा १२

(७) अभ्युदयफल धर्मज्ञानम् । तच्चानुष्ठानापेक्षम् । नि श्रेयसफल तु ब्रह्मविज्ञानम्, न चानुष्ठानान्तरापेक्षम् । भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति । पुरुषव्यापारतन्त्रत्वात् । इह तु भूत ब्रह्म जिज्ञास्य नित्यत्वान्न पुरुषव्यापारतन्त्रम् । चोदनाप्रवृत्तिभेदाच्च । या हि चोदना धर्मस्य लक्षण सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति । ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम् । अवबोधस्य चोदनाजन्यत्वान्न पुरुषोऽव बोधे नियुज्यते । यथाक्षार्थसनिकर्षेणार्थावबोधे, तद्वत् ॥

सू भा १-१-१, पा ४, ५

(८) नन्वभ्युदयवत्साध्या मुक्तिरप्राप्तरूपत ।
नैव साध्यापि नो मुक्तिर्न त्वभ्युदयवद्यत ॥ २६ ॥
चिकित्सयेव सप्राप्य स्वास्थ्य रोगार्दितस्य तु ।
आत्माविद्याहतेर्बोधात्तत्कैवल्यमवाप्यते ॥ २८ ॥
किमत्र विधिना कार्य अनृतन्त्रत्वहेतुत ।
श्रुतोऽप्यनर्थकोऽत्र स्याद्विध्यर्थासभवत्वत ॥ ३० ॥

सबन्धवार्तिक, पा १५, १६

## काम्यनिषिद्धवर्जनान्मोक्ष इति मतम्–

६५ अन्ये तु काम्यप्रतिषिद्धयोरनारम्भात्, आरब्धस्य च कर्मण उपभोगेन क्षयात्, नित्यानुष्ठानाच्च प्रत्यवायानुत्पत्ते, ज्ञाननिरपेक्ष एव मोक्ष – इति स्वीकृत्याप्यात्मन्यवस्थानरूप मोक्ष कर्मत्यागादेव साधयन्ति स्म । तदिद ज्ञानात् कैवल्यमिति श्रुतिसिद्धान्तमविगणय्य तर्कमात्रकल्पित मतम् [illegible] श्रुत्युपबृंहितेन [illegible]रयामासु । अनन्तत्वात्कर्मणा सर्वकर्मक्षपणासभवात्, नित्याना चानुष्ठानादवश्य फलप्राप्ते, [illegible] मोक्षप्राप्तिमार्गवर्णनम् । कर्मशेषनिमित्तशरीरग्रहणस्य [illegible] ति । अस्य मतस्यानुवाद, तत्खण्डन च तैत्तिरीयोपनिषद्भाष्ये, गीताभाष्ये, सूत्रभाष्ये च दृश्यते, सबन्धवार्तिकेऽपि व्याख्यातमेतत् ॥

(१) न । कर्मानेकत्वात् । अनेकानि हि, आरब्धफलानि अनारब्धफलानि चानेकजन्मान्तरकृतानि विरुद्धफलानि कर्माणि सभवन्ति । अतस्तेष्वनारब्धफलानामेकस्मिन् जन्मन्युपभोगेन क्षयासभवात्, शेषकर्मनिमित्तशरीरारम्भोपपत्ति । कर्मशेषसद्भावसिद्धिश्च । 'तद्य इह रमणीयचरणा' (छा ५–१० ७), 'तत शेषेण' (गौ ध २–२९) इत्यादिश्रुतिस्मृतिशतेभ्य ॥ तै भा अव, पा २५८, २५९

(२) न । 'तमेव विदित्वातिमृत्युमेति नान्य पन्था विद्यतेऽयनाय' (श्वे ३–८) इति श्रुते चर्मवदाकाशपरिवेष्टनासभववदविदुषो मोक्षासभवश्रुते, 'ज्ञानात्कैवल्यम्' इति च पुराणस्मृते, अनारब्धफलाना पुण्याना कर्मणा क्षयानुपपत्तेश्च ॥ गी भा १८–६६, पा २९०

(३) न ह्येतच्छास्त्रेण केनचित् प्रतिपादितम् 'मोक्षार्थी इत्थ समाचरेत्' इति । स्वमनीषिकया त्वेतत् तर्कितम् 'यस्मात् कर्मनिमित्त ससार, निमित्ताभावान्न भविष्यति' इति । न चैतत्तर्कयितुमपि शक्यते । निमित्ताभावस्य दुर्ज्ञानत्वात् ॥ सू भा ४–३–१४, पा ४९९, ५००

(४) न च नित्यनैमित्तिकानुष्ठानात् प्रत्यवायानुत्पत्तिमात्रम्, न पुन फलान्तरोत्पत्ति –इति प्रमाणमस्ति । फलान्तरस्याप्यनुनिष्पादिन

सम्भवात् । स्मरति ह्यापस्तम्ब – 'तद् यथाम्रे फलार्थे निमिते छायागन्धावनूत्पद्येते एव धर्म चर्यमाणम् अर्था अनूत्पद्यन्ते' (आ ध १ ७ २० ३) इति । न चासति सम्यग्दर्शने सर्वात्मना काम्यप्रतिषिद्धवर्जन जन्मप्रयाणान्तराले केनचित् प्रतिज्ञातु शक्यम् । सुनिपुणानामपि सूक्ष्मापराध दर्शनात् । सशयितव्य तु भवति । तथापि निमित्ताभावस्य दुर्ज्ञानत्वमेव ॥
सू भा ४-३-१४, पा ७००

(५) नित्याना चाकरणमभाव, तत प्रत्यवायानुपपत्तिरित्यत पूर्वोपचितदुरितेभ्य प्राप्यमाणाया प्रत्यवायक्रियाया नित्याकरण लक्षणम् इति 'अकुर्वन विहित कर्म' (मनु) इति हि शतुर्नानुपपत्ति ॥
तै भा अव २५९

(६) नित्यानि प्रत्यवायपरिहारार्थमनुष्ठेयानीति चेत् । न । असन्यासिविषयत्वात् प्रत्यवायप्राप्ते । न हि अग्निकार्याद्यकरणात् सन्यासिन प्रत्यवाय कल्पयितु शक्य, यथा ब्रह्मचारिणामसन्यासिनामपि कर्मिणाम् । न तावन्नित्याना कर्मणामभावादेव भावरूपस्य प्रत्यवायस्योत्पत्ति कल्पयितु शक्या युक्ता च । 'कथमसत सज्जायेत' (छा ६-२-२) इत्यसत सज्जन्मासम्भवश्रुते ॥ गी भा ३-१०, पा ४३

(७) एतेषा जातिविहिताना कर्मणा सम्यगनुष्ठिताना स्वर्गप्राप्ति फल स्वभावत । 'वर्णा आश्रमाश्च स्वकर्मनिष्ठा प्रेत्य कर्मफलमनुभूय तत शेषेण विशिष्टदेशजातिकुलधर्मायु श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' (गौ ध २-२-२३) इत्यादिस्मृतिभ्य । पुराणे च वर्णिनामाश्रमिणा च लोकफलभेदविशेषस्मरणात् ॥ गी भा १८-४५, पा २७४, २७५

[अत्र 'तत शेषेण' इति आमुष्मिकफले कर्मजाते उपभुक्तेऽवशिष्टमैहिकफल कर्मान्तरजातम् अनुशयशब्दवाच्यम् – इति सूत्रभाष्ये (३-१-८) निर्णीतम् ॥ सू भा पा ३३३ ]

(८) सबन्धवार्तिके (स ४७तमश्लोकमारभ्य १०१तमपर्यन्तम्) विस्तरेण मतमिद प्रत्याख्यातम् ॥

## ज्ञानकर्मसमुच्चयवाद: –

६६ स्वत कर्मणा मोक्षारम्भकत्वासामर्थ्येऽपि विद्यासहिताना तादृशसामर्थ्योपपत्ति । विषदध्यादीना मरणज्वरादिकार्यारम्भकाणामपि

मन्त्रशर्करादिसयुक्ताना कार्यान्तरारम्भसामर्थ्यदर्शनादिति केचित् कल्पित वन्त । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तर भवति' (छा १-१-१०) इति श्रुति च तत्रोदाजह्रु प्रमाणत्वेन । विद्याकर्मणो समप्राधान्येन समुच्चितयोर्वा तत्सामर्थ्यमिति केषाञ्चिदूह । 'त विद्या कर्मणी' (बृ ४-४-२) इति श्रुते । गृहस्थानामपि विद्यासप्रदाय प्रवर्तकत्व श्रूयत इत्येतदपि स्वमतोपोद्बलक लिङ्ग मन्यन्ते ते । तदेतदुभय मप्यसत् । कर्मणो हि सफलस्य व्याकृतनामरूपविषयत्वमेव दृश्यते श्रूयते च, न तु तद्विलक्षणे मोक्षेऽपि तद्व्यापार शक्यशङ्क । कृतकस्यानित्य त्वध्रौव्यात् । कर्मफलत्वे च मोक्षस्य तत्फलेष्वेवान्यतमत्वमवश्य प्राप्नोति । अतो 'यदेव विद्यया करोति' इत्यादिश्रुतिवचनानि गृहस्थेष्वपि विद्या सप्रदायकर्तृत्वदर्शन चान्यथैव प्रतिनेतव्यानि । अन्यथा यथोक्तन्याय-विरोधप्रसङ्गात् । अज्ञानमात्रव्यवधानाच्च मोक्षस्य कर्मकार्यत्वानुपपत्ति । न हि ज्ञानव्यतिरिक्तेन केनचिदपि निवर्त्यमज्ञानम् । तद्व्यतिरिक्तस्याज्ञान-कार्यत्वनियमात् । न हि तमस्तमसो निवर्तकम् । न च नित्याना फल-विशेषस्याश्रवणात्, विहितत्वान्यथानुपपत्त्यैव तत्फलत्वेन कल्प्यो भवति मोक्ष इति वाच्यम् । उत्पत्त्याप्तिविकारसस्काराणामन्यतमस्य कर्मफलत्व दृष्टेस्तदनुगुणस्यैव कस्यचित् फलत्वकल्पनेनाप्युपपत्तेर्नित्यविधानस्य । न च विद्याकर्मणो सहभाव समस्ति, येन तत्समुच्चय कल्प्येतापि । स्वभावत एव तयोर्विरोधात् । मुमुक्षो सर्वकर्मसन्यासविधानाच्च समुच्चयाभावोऽव गम्यते । सगुणविद्यासु तु सभवत्येव कर्मणा समुच्चय । उपासनादशायामपि कर्तृत्वानुवृत्ते । निर्गुणविद्यायामपि कर्मण आरादुपकारकत्वान्मोक्षे क्रम-समुच्चयो भविष्यतीति भाष्ये सबन्धवार्तिके च (स वा ३५७-३७७) प्रत्याख्यातोऽय समुच्चयवाद ॥

(१) ज्ञानसहितस्य च प्रकृष्टस्य कर्मण एतावती गति । व्याकृत-नामरूपास्पदत्वात् कर्मणस्तत्फलस्य च । न त्वकार्ये नित्येऽव्याकृतधर्मिणि,

अनामरूपात्मके क्रियाकारकफलस्वभाववर्जिते कर्मणो व्यापारोऽस्ति ॥
बृ भा ३-३-१, अव , पा ७९८

(२) परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृत कृतेन ॥ मु १-२-१२

भाष्यम् - सर्वे एव हि लोका कर्मचिता कर्मकृतत्वाच्चानित्या । न नित्य किञ्चिदस्तीत्यभिप्राय । सर्वं तु कर्मानित्यस्यैव साधनम् ॥ पा १५२

(३) 'यदेव विद्यया करोति' (छा १-१-१०) इत्येषा श्रुतिर्न सर्वविद्याविषया । प्रकृतविद्याभिसम्बन्धात् । प्रकृता चोद्गीथविद्या 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा १-१-१) इत्यत्र ॥
सू भा ३-४-१०, पा ४३७

[अत्रोद्गीथविद्याया कर्मशेषत्वम्, कर्मणो वीर्यवत्त्वाय च विद्यासमुच्चय इत्युक्तम् । वस्तुतन्त्रज्ञान नैव प्रकृतम् इत्युक्तम् ॥]

(४) यदप्युक्तम् 'त विद्याकर्मणी समन्वारभेते' (बृ ४-४-२) इत्येतत् समन्वारम्भवचनमस्वातन्त्र्ये विद्याया लिङ्गमिति, तत् प्रत्युच्यते - विभागोऽत्र द्रष्टव्य, विद्यान्य पुरुषमन्वारभते, कर्मान्यमिति । यथा 'शतमाभ्या दीयताम्' इत्युक्ते विभज्य दीयते पञ्चाशदेकस्मै, पञ्चाशद् परस्मै-तद्वत् ॥ सू भा ३-४-११, पा ४३७

[अभ्युपगमवादोऽयमिति भाष्यस्वरसेन गम्यते । तद् यथा-]

न चेद समन्वारम्भवचन मुमुक्षुविषयम् । 'इति नु कामयमान' (बृ ४-४-६) इति ससारिविषयत्वोपसहारात् । 'अथाकामयमान' इति च मुमुक्षो पृथगुपक्रमात् । तत्र ससारिविषये विद्या विहिता प्रतिषिद्धा च परिगृह्यते । विशेषाभावात् । कर्मापि विहित प्रतिषिद्ध च । यथा प्राप्तानुवादित्वात् । एव सत्यविभागेनापीद समन्वारम्भवचनम् अवकल्पते ॥
सू भा ३-४-११, पा ४३७

(५) न चाज्ञानव्यतिरेकेण मोक्षस्य व्यवधानान्तर कल्पयितु शक्यम् - नित्यत्वान्मोक्षस्य । साधकस्वरूपाव्यतिरेकाच्च - यत् कर्मणा निवर्त्येत ॥ बृ भा ३-३, अव , पा ७९९

(६) नापि ज्ञानस्य कैवल्यफलस्य कर्मसाहाय्यापेक्षा । अविद्या निवर्तकत्वेन विरोधात् । न हि तमस्तमसो निवर्तकम् ॥
गी भा १८-६६, पा २८९

(७) उत्पत्त्याप्तिविकारसंस्कराणाम् अन्यतममपि नित्याना कर्मणा फलम् उपपद्यत इति क्षीणा श्रुतार्थापत्ति ॥

बृ भा ३-३-१ अव, पा ८००

(८) 'ब्रह्मैवेद सर्वम्' इति शास्त्रजन्य प्रत्ययो विद्यारूप स्वाभाविक क्रियाकारकफलभेदप्रत्यय कर्मविधिनिमित्तम् अनुपमृद्य न जायते। भेदाभेदप्रत्यययोर्विरोधात्। न हि तैमिरिकद्विचन्द्रादिभेदप्रत्यय मनुपमृद्य तिमिरापगमे चन्द्राद्येकत्वप्रत्यय उपजायते। विद्याविद्याप्रत्यययो विरोधात् ॥ छा २-२३-१, पा ८०६

(९) सिद्धस्तर्हि सर्वाश्रमिणा ज्ञानकर्मणो समुच्चय। न। मुमुक्षो सर्वकर्मसन्न्यासविधानात् ॥ गी भा ३-१ अव, पा ४२

(१०) ऊर्ध्वरेत सु च शब्दे हि ॥ वे सू ३-४-१७

भाष्यम् – ऊर्ध्वरेत सु चाश्रमेषु विद्या श्रूयते। न च तत्र कर्माङ्गत्व विद्याया उपपद्यते। कर्माभावात्। न ह्यग्निहोत्रादीनि वैदिकानि कर्माणि तेषा सन्ति ॥ पा ४३८, ४३९

(११) ज्ञानस्यैव हि प्रापक सत् कर्म प्रणाड्या मोक्षकारणमित्युप चर्यते। अत एव चातिक्रान्तविषयमेतत् कार्यैकत्वाभिधानम्। न हि ब्रह्मविद् आगाम्यग्निहोत्रादि सभवति। अनियोज्यब्रह्मात्मत्वप्रतिपत्ते शास्त्रस्य अविषयत्वात्। सगुणासु तु विद्यासु कर्तृत्वानतिवृत्ते सभवत्यागा म्यग्निहोत्रादि। तस्यापि निरभिसधिन कार्यान्तराभावाद् विद्यासगत्युपपत्ति ॥

सू भा ४-१-१६, पा ४७६

## ज्ञानोपासनयोरैक्ये सत्युपासनाविधिशेषता ब्रह्मण इति वादः–

६७ अपरे तु वादिनो ब्रह्मज्ञानस्योपासनात्मकतामेवाभ्युपयन्तो मन्यन्ते स्म। 'आत्मा वा अरे द्रष्टव्य' (बृ २-४-५), 'सोऽन्वेष्टव्य', (छा ८-७-१), 'आत्मेत्येवोपासीत' (बृ १-४-७)–इत्याद्युपासना-विधिषु सत्सु तत्रोपास्यस्वरूपविशेषसमर्पणेनैव वस्तुबोधकान्यपि वेदान्त-वाक्यानि, कर्मविधिशेषभूतयूपाहवनीयाद्यलौकिकवस्तुसमर्पकवाक्यवत्। तथा चोपासनाफलमदृष्टो मोक्ष। स्वर्गादिवत्। अथवा अविद्यानिवृत्तिरेवास्तू पासनाफलमिति। तदेतन्मतमित्थ प्रत्याख्यातमाचार्यै –ब्रह्मात्मवस्तुसमर्पका

णामेव वाक्यानां श्रवणमात्रात् आत्मदर्शनस्य सिद्धत्वात् न द्रष्टव्यादिविधे कर्तव्यान्तरमवशिष्यते । ज्ञानसमनन्तरमेव मोक्षं श्रावयन्त्यः श्रुतयस्तद्मध्ये कर्तव्यान्तरमनवकाशीकुर्वन्ति । मोक्षस्याशरीरत्वलक्षणस्य प्रियाप्रियसम्पर्शनिषेधश्रुतेः स्वाभाविकत्वज्ञापकश्रुतेश्च तस्य धर्मकार्यत्वं निषिध्यत इति गम्यते । मोक्षस्य कूटस्थनित्यस्योत्पाद्यादिचतुर्विधवस्तुविलक्षणत्वाच्च कार्यत्वानुपपत्तिः । अत एव ब्रह्मातिरिक्तस्यास्य यूपादिसाध्यपस्तुतो वैलक्षण्यम् । न चोपासनमेव ज्ञानमिति साम्प्रतम् । यतो वस्तुमात्रबोधकस्यापि ज्ञानस्य श्रौतत्वं पूर्वमेव (५०) प्रसाधितम् । तस्य च ज्ञानस्य मोक्षप्रतिबन्धभूताविद्यादिनिवृत्तिमात्रं कृत्यम् । न चेदं ज्ञानं ब्रह्मात्मैकत्वविज्ञानं सम्पदादिरूपम् । निराकाङ्क्षत्वेन वस्तुप्रतिपादनमात्रेणोपक्षीणत्वात् तद्वाक्यस्य । न चोपासनया अविद्यानिवृत्तिरिति युक्तम् । तस्या अपि क्रियात्वाविशेषादविद्याकार्यत्वे सति तन्निवर्तकत्वानुपपत्तेरिति ॥

(१) द्रष्टव्यविधेर्विषयसमर्पकाण्येतानि इति चेत् । न । अर्थान्तराभावादित्युक्तोत्तरत्वात् । आत्मवस्तुस्वरूपसमर्पकैरेव वाक्यैः 'तत्त्वमसि' इत्यादिभिः श्रवणकाल एव तद्दर्शनस्य कृतत्वात् द्रष्टव्यविधेर्नानुष्ठानान्तरं कर्तव्यम् इत्युक्तोत्तरमेतत् ॥ बृ भा १-४-७, पा ६६२

(२) न च 'आत्मेत्येवोपासीत' इत्यपूर्वविधिः । कस्मात् ? आत्मस्वरूपकथनानात्मप्रतिषेधवाक्यजनितविज्ञानव्यतिरेकेणार्थान्तरस्य कर्तव्यस्य मानसस्य बाह्यस्य वा अभावात् । तत्र हि विधेः साफल्यं यत्र विधिवाक्यश्रवणमात्रजनितविज्ञानव्यतिरेकेण पुरुषप्रवृत्तिर्गम्यते ॥

बृ भा १-४-७, पा ६६२

(३) अपि च 'ब्रह्म वेद ब्रह्मैव भवति' (मु ३-२-९), 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु २-२-८), 'आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चन' (तै २ ९), 'अभयं वै जनक प्राप्तोऽसि' (बृ ४-२-४), 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' (बृ १ ४-१), 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' (ई ७) इत्येवमाद्याः श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति ॥ सू भा १-१-४, पा १४ १५

(४) 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति यथावर्णितं संसाररूपमनुवदति । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा ८-१२-१) इति प्रियाप्रियस्पर्शनप्रतिषेधात्, चोदनालक्षणधर्मकार्यत्वं मोक्षाख्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते । अशरीरत्वमेव धर्मकार्यमिति चेत् । न । तस्य स्वाभाविकत्वात् 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।' इत्यादिश्रुतिभ्यः ॥ सू भा १-१-४, पा १४

(५) न हि दध्यादि विकार्यम्, उत्पाद्यं वा घटादि नित्यं दृष्टं लोके । न चाप्यत्वेनापि कार्यापेक्षा । स्वात्मस्वरूपत्वे सत्यनाप्यत्वात् । नापि संस्कार्यो मोक्षः, येन व्यापारमपेक्षेत, ॥ सू भा १-१-४, पा १७

(६) न च यूपादिवच्छक्यं वेदेनैव समर्पणम् ।
ऐकात्म्यस्य स्वतः सिद्धेः साध्यत्वाद्यूपवस्तुनः ॥
म वा ६५७

(७) ध्यानं चिन्तनं यद्यपि मानसम्, तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यम्, पुरुषतन्त्रत्वात् । ज्ञानं तु प्रमाणजन्यम् । प्रमाणं च यथाभूतवस्तुविषयम् । अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुम् अशक्यम् । केवलं वस्तुतन्त्रमेव तत् ॥ सू भा १-१-४, पा १८

(८) 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' (प्र ६-८), 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु' (छा ७-१-३), 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः' (छा ७-२६-२) इति चैवमाद्याः श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति ॥ सू भा १-१-४, पा १५

(९) सम्पदादिरूपे च ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने 'तत्त्वमसि', 'अहं ब्रह्मास्मि', 'अयमात्मा ब्रह्म' – इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत ॥ सू भा १ १ ४, पा १५, १६

(१०) यदि ज्ञानाभावो, यदि संशयज्ञानं, यदि विपरीतज्ञानं वा उच्यते अज्ञानमिति, सर्वं हि तज्ज्ञानेनैव निवर्त्यते न तु कर्मणा । अन्यतमेनापि विरोधाभावात् ॥ बृ भा ३-३-१, पा ७९९

(११) तत्राविद्यावस्थायां ब्रह्मण उपास्योपासकादिलक्षणः सर्वो व्यवहारः ॥ सू भा १-१-१२, पा ३५

## ज्ञाने विधिमङ्गीकुर्वतां मतम् –

६८ केचित्तु ज्ञानेऽपि विधिरस्तु, अन्यथा चोदनालक्षणार्थत्वाभावे जगदार्थत्वप्रसङ्गादिति मन्यन्ते स्म । तत्तु न विचारसहम् । कुतः ? न हि शब्दजन्यज्ञानं नियोगमपेक्षते । ब्रह्मवाक्यं हि पुरुषमेव बोधयत्येव, न तु स्वार्थबोधने नियोजयत्यपि । वाक्यश्रवणकाले एव ज्ञानस्य जातत्वात् । न हि वाक्यं प्रमाणं सत्, स्वार्थबोधने विधिमपेक्षत इति युज्यते । प्रमाणान्तरेषु तादृशापेक्षाया अदर्शनात् । तस्मात्, 'विजिज्ञासस्व', 'द्रष्टव्य' – इत्यादिवाक्येषु श्रूयमाणा अपि विधिविभक्तयो – ज्ञानस्य स्वयं नियोगविषयत्वाभावात्, ज्ञानविषयस्य ब्रह्मात्मनो हेयोपादेयत्वाभावात्, स्वात्मनि कस्यचिदपि प्रवर्तकप्रमाणापेक्षाभावाच्च – कथञ्चिदन्यथैव नेया, प्रत्यगात्माभिमुखीकरणत्वेन प्रवर्तकत्वोपपत्तेरिति, अनात्मविमुखीकरणेन निवर्तकत्वोपपत्तेरिति वा । बोधकज्ञानेऽपि विध्यपेक्षाङ्गीकारे ह्यतिप्रसङ्गो दुर्वारः स्यात् सर्वत्रापि विध्यपेक्षापत्तेरिति भाष्यकारैः प्रत्युक्तोऽयं पक्षः ॥

(१) या हि चोदना धर्मस्य लक्षणम्, सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति । ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम्, अवबोधस्य चोदनाजन्यत्वान्न पुरुषोऽवबोधे नियुज्यते । यथाक्षार्थसन्निकर्षेणार्थावबोधे, तद्वत् ॥ सू भा १-१-१, पा ५

(२) या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा, नापि पुरुषतन्त्रा, किं तर्हि, प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतत्, न क्रिया । एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम् । तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम् । तद्विषये लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात् कुण्ठीभवन्ति, उपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत् । अहेयानुपादेयवस्तुविषयत्वात् ॥ सू भा १-१-४ पा १८, १९

(३) किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादीनि विधिच्छायानि वचनानि ? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति

ब्रूम । यो हि बहिर्मुख प्रवर्तते पुरुष 'इष्ट मे भूयात्, अनिष्ट मा भूत्' इति, न च तत्रात्यन्तिक पुरुषार्थ लभते, तमात्यन्तिकपुरुषार्थवाञ्छिन स्वाभाविककार्यकरणसघातप्रवृत्तिगोचरात् विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्य' इत्यादीनि । तस्यात्मान्वेषणाय प्रवृत्तस्य अहेयमनुपादेय चात्मतत्त्वमुपदिश्यते ॥

सू भा १-१-४, पा १९

(४) द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठिता, तत्त्वाभिमुखीकरणप्रधाना न तत्त्वावबोधविधिप्रधाना भवन्ति । लोकेऽपि 'इद पश्य', 'इदमाकर्णय' इति चैवजातीयकेषु निर्देशेषु 'प्रणिधानमात्र कुरु' इत्युच्यते, न साक्षाज्ज्ञानमेव कुर्विति ॥ सू भा ३-२-२१, पा २६२

(५) बुद्ध्याद्युपाधिकृत तु विशेषमाश्रित्य ब्रह्मैव सन् जीव कर्ता भोक्ता चेत्युच्यते । तस्योपाधिकृतविशेषपरित्यागेन स्वरूप ब्रह्म दर्शयितु 'न वाच विजिज्ञासीत वक्तार विद्यात्' इत्यादिना प्रत्यगात्माभिमुखीकरणार्थमुपदेशो न विरुध्यते ॥ सू भा १-१-३१ पा ६१

(६) आत्मस्वरूपान्वाख्यानमात्रेणात्मविज्ञाने विधिमन्तरेण न प्रवर्तत इति चेत् । न । आत्मवादिवाक्यश्रवणेनात्मविज्ञानस्य जनितत्वात्, कि भो कृतस्य करणेन ? तच्छ्रवणेऽपि न प्रवर्तत इति चेत् । न । अनवस्था प्रसङ्गात् । यथा आत्मवादिवाक्यार्थश्रवणे विधिमन्तरेण न प्रवर्तते, तथा विधिवाक्यार्थश्रवणेऽपि विधिमन्तरेण न प्रवर्तिष्यत इति विध्यन्तरापेक्षा । तथा तदर्थश्रवणेऽपीत्यनवस्था प्रसज्येत ॥ बृ भा १-४-७, पा ६६२

(७) न ह्यात्मन स्वात्मनि प्रवर्तकप्रमाणापेक्षता । आत्मत्वादेव । तदन्तत्वाच्च सर्वप्रमाणाना प्रमाणत्वस्य । न ह्यात्मस्वरूपाधिगमे सति पुन प्रमाणप्रमेयव्यवहार सभवति ॥ गी भा २-६९ पा ३९

## ज्ञानाभ्यास(प्रसंख्यान)वादः –

६९ यद्यपि ज्ञाने न विधिरवकल्पते, तथापि तु तदभ्यासे विधिरपेक्ष्यत एव वेदान्तेषु । सकृच्छ्रवणमात्रेणात्मज्ञानजन्मानुपपत्ते । अथवा युक्ति विना वाक्यमात्रेणात्मज्ञानासभवात् तदर्थं ज्ञानाभ्यास । यद्वा वाक्ययुक्तिभ्या सामान्यज्ञानमात्रलाभात्, विशेषरूपेणानुभवार्थं ज्ञानाभ्यास कार्य । अथवा पुनरस्तु सकृज्ज्ञानजन्मना भवत्येवाविद्याध्वस

इति । तथापि हि नैसर्गिकत्वात् सा विषयविषयकागन्तुकाविद्येव नात्यन्ताय निवर्तते, अनेकजन्मवासनावशात् तु पुनरप्युद्भवत्येवेति तन्निवृत्त्यर्थं ज्ञानाभ्यास कार्य । 'विज्ञाय प्रज्ञा कुर्वीत ब्राह्मण' (बृ ४-४-२१) इति श्रुते । अथवा वाक्यात् पदार्थसंसृष्टमेव ज्ञान-मुत्पद्यते, नाससृष्टम् । अतोऽससृष्टज्ञानार्थं ज्ञानाभ्यास कार्य । अत शब्दयुक्तितदावृत्त्यात्माख्यपादचतुष्टयोपेत प्रमाणमैकात्म्ये इति 'शब्दयुक्ति प्रसख्यानैरात्मना च मुमुक्षव । पश्यन्ति मुक्तमात्मान प्रमाणेन चतुष्पदा ॥' इति **प्रसख्यानवादिनः** प्राहु ॥

तदेतत् सर्वमयुक्तम् । वाक्येन ज्ञानानुत्पत्तौ तस्य प्रामाण्यहान प्रसङ्गात्, युक्ते प्रामाण्याभावात्, सकृत्प्रवृत्तवाक्ययुक्तिभ्यामजात ज्ञानम् आवृत्त्यापि जायत इति प्रत्याशानुपपत्ते । आवृत्ते प्रसख्यान सज्ञितस्य श्रुतौ कुत्रापि विधानादर्शनात्, सकृत्प्रयुक्तशास्त्रयुक्तिभ्यामस जातस्य विशेषानुभवस्यावृत्त्याप्युत्पत्त्यसभवात् । ज्ञानसन्ततेश्चेयत्तानव-धारणात् शास्त्रार्थानवधारणदोषप्रसङ्गाच्च । ज्ञानेन ध्वस्तस्याप्यज्ञानस्य पुनरुद्भवकल्पनानुपपत्ते, उद्भवे वा प्रसख्यानेनापि तदुच्छेदप्रत्याशानुपपत्ते । प्रमाणभूतवाक्यात् समृष्टपरोक्षज्ञाने सजाते तदेव परमार्थभूत ज्ञानमित्यङ्गी-कर्तव्यत्वात्, प्रमाणानामभ्यासेन कारकाणामिव प्रमातारतम्यजनकत्वा-सभवात्, प्रमाणान्तराज्ज्ञातेऽज्ञाते वा अससृष्टब्रह्मणि तज्ज्ञाने विव्यसभवात्, मिथ्याज्ञानाभ्यासात् सम्यग्ज्ञानोत्पत्त्यसभवात् प्रत्युत तस्यैव दार्ढ्यापत्तेश्च— इति भाष्यवार्तिकयो प्रत्याख्यात ज्ञानाभ्यासवादिमतम् ॥

(१) स्वय प्रबोधितेऽप्यर्थे यदि युक्त्याद्यपेक्षते ।
शास्त्र सापेक्षमेव स्यात् स्वत प्रामाण्यवर्जनात् ॥ स वा ८०९

(२) सभूय यदि सर्वाणि फलमेक प्रतन्वते ।
प्रत्येक प्रमितेर्वृद्धिरित्येतत् स्यात्तदा मृषा ॥ स वा ८१२

[ प्रमाणस्यैकैकस्मात्पादादभिवृद्धि प्रमितेरित्यतेषा वादिना मतम् ॥]

(३) स्वप्नादियुक्तिभिश्चेत्तल्लौकिकीभि प्रसाध्यते ।
अवैदिक भवेद्वस्तु स्याच्च शास्त्रानुवादता ॥
वैदिकत्वेऽपि युक्तीनामागमार्थप्रबोधत ।
अनुवादत्वमेव स्यात् स्याच्च शास्त्रादभिन्नता ॥
स वा ८१६, ८१७

[ एव च युक्तीना शब्दागृहायत्वमित्यर्थ ॥ ]

(४) यदि हि 'तत्त्वमसि' इत्येवजातीयक वाक्य सकृच्छ्रूयमाण ब्रह्मात्मत्वप्रतीति नोत्पादयेत्, ततस्तदेवावर्त्यमानमुत्पादयिष्यतीति का प्रत्याशा स्यात् ? अथोच्येत, न केवल वाक्य कञ्चिदर्थं साक्षात्कर्तुं शक्नोति, अतो युक्त्यपेक्ष वाक्यमनुभावयिष्यति ब्रह्मात्मत्वमिति । तथाप्यावृत्त्यानर्थक्यमेव ॥ सू भा ४-१-२, पा ४६१

(५) आवृत्तिश्च प्रसख्यान कुर्यात्सातिशय कथम् ।
न ह्यावृत्तौ प्रमाणस्य प्रमेयेऽतिशयो यत ॥ स वा ८१८

(६) प्रमातात्मा न मानाशो यद्वय व्यावहारिक ।
परश्चेत्स प्रमेय स्यात् कथ चानुभव फलम् ॥ स वा ८२४

[ एवमुभयथाप्यात्मा न मानाशो भवेत् – इत्यर्थ ॥ ]

(७) अथापि स्यात्, युक्त्या वाक्येन च सामान्यविषयमेव विज्ञान क्रियते न विशेषविषयम् । विशेषानुभवश्चाविद्याया निवर्तक । ततस्तदर्था आवृत्तिरिति चेत् । न । असकृदपि तावन्मात्रे क्रियमाणे विशेषविज्ञानोत्पत्त्यसभवात् ॥ सू भा ४–१–२, पा ४६१

(८) एव तर्हि विद्याप्रत्ययसतत्यभावात्, विपरीतप्रत्ययतत्कार्ययोश्च दर्शनात्, अन्त्य एवात्मप्रत्ययोऽविद्यानिवर्तको न तु पूर्व इति । न । प्रथमेनानैकान्तिकत्वात् । यदि हि प्रथम आत्मविषय प्रत्ययोऽविद्या न निवर्तयति तथान्त्योऽपि, तुल्यविषयत्वात् । एव तर्हि सन्ततोऽविद्यानिवर्तको, न विच्छिन्न इति । न । जीवनादौ सति सतत्यनुपपत्ते । न हि जीवनादिहेतुके प्रत्यये सति विद्याप्रत्ययसततिरुपपद्यते, विरोधात् । अथ जीवनादिप्रत्ययतिरस्करणेनैव आमरणान्ताद्विद्यासततिरिति चेत् । न । प्रत्ययेयत्तासतानानवधारणात् शास्त्रार्थानवधारणादोषात् ॥
बृ भा १–४–१०, पा ६७७

(९) अविद्या पूर्ववच्चेत्स्यात्सम्यग्ज्ञातेऽपि वस्तुनि ।
भूयोऽपि सा मृतेरूर्ध्वं नेष्यतीत्यत्र का प्रमा ॥
अविद्याविद्ययोर्यस्माद्बाध्यबाधकसङ्गतिम् ।
मुक्त्वाऽन्यो नास्ति सबन्धो दाह्यदाहकयोरिव ॥
बाध्याऽविद्या कथ विद्या बाधिका बाधते वद ।
दाहकस्य न दाहोऽस्ति वह्नेर्दाह्येन वस्तुना ॥
विद्यमानाप्यविद्येय विद्या चेन्नावधीत्पुरा ।
ध्वस्ता बाधिष्यतेऽविद्या विद्यामित्यत्र का प्रमा ॥
बृ वा ४-४-९१४, ९१५, ९१६, ९१७

(१०) प्रमाणादेव यत्प्राप्त कथ तदतिशङ्क्यते ।
ब्रह्म सम्सर्गरूप वा यदि वाऽतोऽन्यथा श्रुते ॥
न चापि स्वप्रमेयेऽस्ति मानाना बोधहेतुत ।
तारतम्य यथा कार्ये कारकाणामसभवात् ॥
न च प्रमान्तरै साक्षादज्ञाते ब्रह्मवस्तुनि ।
अयथावस्त्विति ज्ञान वक्तु शक्य विपश्चिता ॥
अपि मानान्तराज्ज्ञाते तद्विरुद्धस्वभावके ।
न चैव युज्यते वक्तु द्वयोरपि मितित्वत ॥
प्रमान्तरेण चेज्ज्ञात ब्रह्मासंसर्गरूपकम् ।
कृतत्वात्तर्हि प्रज्ञाया निष्फलोऽय पुनर्विधि ॥
वाक्यमानोद्भव ज्ञानमयथावस्त्वितीर्यते ।
यथावस्त्वप्रमोत्थ च चित्र सर्वज्ञचेष्टितम् ॥
सम्यग्ज्ञानप्रसूतेश्च विघातायैव जायते ।
मिथ्याज्ञानाभ्यासहेतु सस्कारो न तु जन्मने ॥
अपि चाभ्यस्यमानस्य दार्ढ्यं दृष्ट जगत्यपि ।
तदभ्यासवशादेवमत्राप्यध्यवसीयताम् ॥
बृ वा ४-४-८१३, ८१५ ८१८, ८२०, ८२३, ८३०

## प्रपञ्चविलयवादः—

७० केचित्तु प्रपञ्चविलयनमेव वेदार्थं मन्यमाना वदन्ति स्म । सर्वत्रापि यथायथ कस्यचिद् भेदस्य लय एव नियुज्यते पुरुष । तद्यथा 'स्वर्गकामो यजेत' इत्यत्र देहात्मवादविलय, 'गोदोहनेन पशुकामस्य', इत्यत्रात्मादिग्रामविलय, निषेधवचनाना रागाद्युत्थप्रवृत्तिप्रविलय, नित्य-

नैमित्तिकेषु स्वाभाविकप्रवृत्तिप्रविलयश्च नियोगविरुद्ध । एव च भेदविलय-मार्गेणात्मज्ञानाधिकारितासपादनार्थं वाक्यानि भवन्तीति कर्मकाण्डस्य विनियोग । एव मध्यास्मरवादिन्योऽपि श्रुतय प्रपञ्चप्रविलयमुखेनानाकार-प्रतिपत्त्यर्था एव न पृथगर्था । ब्रह्मवाक्येषु च प्रपञ्चप्रविलापन स्पष्टमेव । इत्येव सर्वोऽपि वेद प्रपञ्चप्रविलयनिष्ठ इति ॥

तत्र ब्रह्मवाक्येषु तावन्नियोगादर्शनात्, अविद्याध्यारोपितस्य तु प्रपञ्चस्य ब्रह्मस्वरूपावेदकवाक्यैरेव स्वयविलयात्, अनावेदिते च ब्रह्मणि नियोगमात्रेण प्रपञ्चविलयस्याशक्यसपादनत्वात्, जीवस्य प्रपञ्चकुक्षि-निक्षिप्तत्वे प्रपञ्चप्रविलयेन तस्यापि प्रविलयप्रसङ्गात्, ब्रह्मपक्षत्वे तु तस्य ब्रह्मस्वरूपत्वावेदकवाक्यैरनियोज्यस्वरूपत्वावगमात्, न प्रपञ्चप्रविलय-नियोगस्यावकाश । उपासनाधिकारश्रुतीना प्रपञ्चाना मनोमयत्वादीना तु प्रविलयार्थत्व न शक्यशङ्कम् । प्रकृतोपासनाविधिनैव तेषा सबन्धात्, प्रविलयनियोगादर्शनात्, सगुणनिर्गुणवाक्येषु प्रयाजादिष्विवाधिकाराशे-नाभेदानवगमाच्च । कर्मकाण्डवाक्येषु पुन प्रपञ्चप्रविलयविधे कथमपि नावकाश । न हि 'ग्रामकामो यजेत' इत्यादिश्रुतीना प्रपञ्चप्रविलयेन मोक्षार्थता अवगन्तु शक्यते । ग्रामादीना फलाना प्रपञ्चान्तर्गताना प्रत्यक्षग्रहणात् । कर्मश्रुतीना नियमेन तदर्थत्वे ससारस्यैवादर्शनप्रसङ्गात्, मोक्षार्थानामपि कर्मणा ग्रामादिफलस्यानुनिष्पादितत्वकल्पने प्रमाणाभावात् । सोपानमार्गेण हर्म्यारोहणवत् स्वर्गादिद्वारा मोक्षार्थत्वकल्पनमप्यशक्यम् । स्वर्गादीना पुरुषार्थत्वे सति दृष्टान्तवैषम्यात्, न च कुल्याप्रणयनादिवत् उभयनिष्ठता । प्रमाणाभावात्, प्रवृत्तिनिवृत्त्योर्विरोधाच्च । प्रतिषेधवाक्याना रागादिनिवृत्त्युपकारकत्वेऽपि विधीना तथात्वे गमकाभावात्, प्रवृत्तीना स्वभावत एव प्रपञ्चाभिनिवेशपूर्वकत्वात्, देहादिलयस्यास्थूलादिवचनै साक्षात् सिद्धत्वाच्च । कर्मणा परस्परानपेक्षया स्वस्वकार्यजननेनोपक्षयात्, परम्परया ज्ञानाधिकारहेतुत्वसभवाच्चैतदेवम् । अपि च नियोगपरत्वेनैवोपक्षीणे

वेदे जीवस्यानियोज्यब्रह्मात्मत्वाभ्युपगमहानि, शास्त्रस्याप्रामाण्यप्रसङ्गश्च। मोक्षस्य दृष्टफलत्वमनित्यत्व चेत्यादयो दोषा दुर्निवारा स्यु-इति भाष्ये (सू भा ३-२-२२, बृ भा पा ७९१), वार्तिके च (स वा ३८४-४२३) वितत्य निरस्तोऽय वाद ॥

(१) पार्थगर्थ्यमेवोपासनावाक्याना ब्रह्मवाक्याना च न्याय्य नैक वाक्यत्वम्। कथ चैषाम् एकवाक्यतोपेक्ष्यत इति वक्तव्यम्। एकनियोग-प्रतीते प्रयाजदर्शपूर्णमासवाक्यवद् इति चेत्। न। ब्रह्मवाक्येषु नियोगा भावात् ॥ सू भा ३-२-२१ पा ३६१

(२) यदि तावद्विद्यमानोऽय प्रपञ्चो देहादिलक्षण आध्यात्मिको बाह्यश्च पृथिव्यादिलक्षण प्रविलापयितव्य इत्युच्येत स पुरुषमात्रेणाशक्य प्रविलापयितुमिति तत्प्रविलयोपदेशोऽशक्यविषय एव स्यात्। एकेन चादिमुक्तेन पृथिव्यादिप्रविलय कृत इतीदानीं पृथिव्यादिशून्य जगद्भवि ष्यत्। अथाविद्याध्यस्तो ब्रह्मण्येकस्मिन्नय प्रपञ्चो विद्यया प्रविलाप्यत इति ब्रूयात्, ततो ब्रह्मैवाविद्याध्यस्तप्रपञ्चप्रत्याख्यानेनावेदयितव्यम् 'एकमेवाद्वितीय ब्रह्म तत्सत्य स आत्मा तत्त्वमसि' इति, तस्मिन्नावेदिते विद्या स्वयमेवोत्पद्यते तया चाविद्या बाध्यते, ततश्चाविद्याध्यस्त सकलोऽय नामरूपप्रपञ्च स्वप्नप्रपञ्चवत् प्रविलीयते। अनावेदिते तु ब्रह्मणि 'ब्रह्मविज्ञान कुरु प्रपञ्चविलय च' इति शतकृत्वोऽप्युक्ते न ब्रह्मविज्ञान प्रपञ्चप्रविलयो वा जायते ॥ सू भा ३-२-२१, पा ३६२

(३) नियोज्योऽपि च प्रपञ्चावस्थाया योऽवगम्यते जीवो नाम स प्रपञ्चपक्षस्यैव वा स्यात्, ब्रह्मपक्षस्यैव वा। प्रथमे विकल्पे निष्प्रपञ्च ब्रह्मतत्त्वप्रतिपादनेन पृथिव्यादिवज्जीवस्यापि प्रविलापितत्वात् कस्य प्रपञ्च-विलये नियोग उच्येत, कस्य वा नियोगनिष्ठतया मोक्षोऽवाप्तव्य उच्येत? द्वितीयेऽपि ब्रह्मैवानियोज्यस्वभाव जीवस्य स्वरूपम्, जीवत्व त्वविद्याकृत मेवेति प्रतिपादिते ब्रह्मणि नियोज्याभावान्नियोगाभाव एव ॥

सू भा ३-२-२१, पा ३६२

(४) ये पुनरुपासनाधिकारे प्रपञ्चा उच्यन्ते यथा 'मनोमय प्राणशरीरो भारूप' (छा ३-१४-२) इत्येवमादय, न तेषा प्रविलयार्थत्व न्याय्यम्। 'स क्रतु कुर्वीत' (छा ३-१४-१) इत्येवजातीयकेन प्रकृते-नैवोपासनविधिना तेषा सबन्धात् ॥ सू भा ३-२-२१, पा ३६१

(५) श्रुत्या चैवञ्जातीयकानां गुणानाम् उपासनार्थत्वेऽवकल्पमाने न लक्षणया प्रविलयार्थत्वमवकल्पते ॥ सू भा ३-२-२१, पा ३६१

(६) प्रयाजदर्शपूर्णमासाद्यंशेषु त्वधिकारांशेनाभेदात् युक्तमेकत्वम्। न त्विह सगुणनिर्गुणचोदनासु कश्चिदेकत्वाधिकारांशोऽस्ति । न हि भारूपत्वादयो गुणाः प्रपञ्चप्रविलयोपकारिणः नापि प्रपञ्चप्रविलयो भारूपत्वादिगुणोपकारी । परस्परविरोधित्वात् । न हि कृत्स्नप्रपञ्चप्रविलापनं प्रपञ्चैकदेशापेक्षणं चैकस्मिन् धर्मिणि युक्तं समावेशयितुम् ॥

सू भा ३-२-२१, पा ३६३

(७) ननु सर्वैकत्वं मोक्षः । 'तस्मात् तत् सर्वमभवत्' इति श्रुतेः । बाढम्, भवत्येतदपि । न तु 'ग्रामकामो यजेत', 'पशुकामो यजेत' इत्यादिश्रुतीनां तादर्थ्यम् । यदि ह्यद्वैतार्थत्वमेवासाम्, ग्रामपशुस्वर्गाद्यर्थत्वं नास्तीति ग्रामपशुस्वर्गादयो न गृह्येरन् । गृह्यन्ते तु कर्मफलवैचित्र्यविशेषाः । यदि च वैदिकानां कर्मणां तादर्थ्यमेव, संसार एव नाभविष्यत् ॥

बृ भा ३-२, अव पा ७९१

(८) अथ तादर्थ्येऽपि, अनुनिष्पादितपदार्थस्वभावः संसार इति चेत्, यथा च रूपदर्शनार्थ आलोके सर्वोऽपि तत्रस्थः प्रकाश्यत एव । न । प्रमाणानुपपत्तेः । अद्वैतार्थत्वे वैदिकानां कर्मणां विद्यासहितानाम् अन्यस्यानुनिष्पादितत्वे प्रमाणानुपपत्तिः । न प्रत्यक्षम्, नानुमानम्, अत एव च नागमः ॥ बृ भा ३-२, अव पा ७९१, ७९२

(९) स्वर्गादिकार्यमार्गेण मन्यसे यदि कर्मणाम् ।
सोपानपङ्क्तिगत्येव हर्म्यपृष्ठाधिरोहणम् ।
आत्मज्ञानाधिकारानुप्रवेशित्वं भविष्यति ॥ स वा ४००
स्वर्गादेर्न तु शेषत्वं पुरुषार्थत्वहेतुतः ॥ स वा ४०२

(१०) उभयमेकेन वाक्येन प्रदर्श्यत इति चेत्, कुल्याप्रणयनालोकादिवत् । तन्नैवम्, वाक्यधर्मानुपपत्तेः । न चैकवाक्यगतस्यार्थस्य प्रवृत्तिनिवृत्तिसाधनत्वमवगन्तुं शक्यते । कुल्याप्रणयनालोकादौ अर्थस्य प्रत्यक्षत्वाददोषः ॥ बृ भा ३-२, अव पा ७९२

(११) जायापुत्रवित्तादिलक्षणं पाङ्क्तं कर्मविद्याविषयं यस्मान्नात्मप्राप्तिसाधनम् । अन्यसाधनं ह्यन्यस्मै फलसाधनाय प्रयुज्यमानं प्रतिकूलं भवति । न हि बुभुक्षापिपासानिवृत्त्यर्थं धावनं गमनं वा साधनम् ॥

बृ भा २-४, अव पा ७५७

(१२) सुविचारित चैतत् यदेव प्रवृत्तिकारण तदेव निवृत्तिकारण न भवतीति ॥ बृ भा ३-२ स, पा ७९१

(१३) रागाद्याक्षिप्तदृष्टार्थप्रवृत्तिप्रतिषेधत ।
अस्त्वेव प्रतिषेधेषु निवृत्तेरुपकारत ॥
विधयस्तु कथ राग निरुन्धन्तीति भण्यताम् ।
न हि ते परिसख्यार्था नापि चते नियामका ॥
दृष्टादृष्टप्रवृत्त्योश्च न विशेषोऽस्ति कश्चन ।
उपायत्वेन काम्याना रागाद्याक्षिप्तहेतुत ॥
प्रपञ्चाभिनिवेशित्वहेतौ तुल्येऽपि चानयो ।
क विशेषमपेक्ष्यैका चेष्टा मुक्त्यनुरोधिनी ॥
स वा ४११ ४१२ ४१८, ४१९

(१४) श्रुतेऽपि स्वर्गतात्पर्ये कल्पना चेल्लयेऽथत ।
तन्न प्रत्यक्षवचनाद्देहादिलयसिद्धित ॥
साक्षाद्धस्तिनि दृष्टेऽपि न हि हस्तिपदानुमा ।
अस्थूलादिवच साक्षाद्देहादिप्रतिषेधकृत् ॥
स वा ४२१, ४२६

(१५) स्वकार्योपक्षयादेव विधीना च परस्परम् ।
कुत एवाधिकारस्त्वमपेक्षाभावतो वद ॥ स वा ३९८

(१६) किञ्चान्यत्, नियोगनिष्ठतयैव पर्यवस्यत्याम्नाये यदभ्युपगतम् अनियोज्यब्रह्मात्मत्व जीवस्य, तदप्रमाणकमेव स्यात्, अथ शास्त्रमेवानियोज्य ब्रह्मात्मत्वमप्याचक्षीत, तदवबोधे च पुरुष नियुञ्जीत, ततो ब्रह्मशास्त्रस्यैकस्य द्व्यर्थपरता विरुद्धार्थपरता च प्रसज्येयाताम् । नियोगपरतायां च श्रुतहानि रश्रुतकल्पना, कर्मफलवन्मोक्षस्यादृष्टफलत्वम् , अनित्यत्वं च-इत्येवमादयो दोषा न केनचित् परिहर्तुं शक्या ॥ सू भा ३-२-२१, पा ३६३

[ यद्यप्यविद्याकृतक्रियाकारकफलात्मकप्रपञ्चस्य विद्यया प्रविलय सिद्धान्तेऽपीष्ट, तथापि सवस्य शास्त्रस्य प्रपञ्चविलयनियोगपरतामाश्रितवता दूषणानामानि समन्वयाधिकरणन्यायेन वस्तुमात्रनिष्ठ ज्ञानकाण्डमाम्नाय कर्मवाक्याना मुपासनावाक्याना च तत्तद्विधिपरत्व स्थापयितुमिति बोध्यम् ॥]

कामविलयवादः –

७१ अपरे तु वदन्ति स्म कामदूषितान्तःकरणाना परमाद्वैत ज्ञानाधिकाराभावात्, द्वैतैकत्वबुद्धिसमुच्चितकर्मभि प्राजापत्य पद प्राप्य प्रविलीनसर्वकाम परमाद्वैत प्रपद्यत इति। तदप्यसारम्। कामोपभोगेन कामशान्त्यनुपपत्ते, अनुपशान्तकामेन श्रुतोऽपि ब्रह्मानन्दो न विषयविषय काम मन्दीकुर्यादित्यतो न कर्मसमुच्चितया द्वैतैकत्वधिया परमपुरुषार्थ लाभ स्यात्। कर्मणा कामनिवृद्धिहेतुत्वात्। न च प्राजापत्यस्य नियमेन द्वारत्व मुक्ते। सर्वभूतेषु च समत्वात् परमानन्दरूपस्य ब्रह्मण। न हि प्राजापत्योपाधौ तदितरस्माद् कश्चन विशेषोऽस्ति, न च तस्यैवात्मज्ञानेन मुक्तिरिति श्रुतिरस्ति–इति वार्तिके प्रत्याख्यातमिद मतम्। भाष्ये च यदेव प्राजापत्यप्राप्तिसाधन तदेव न विरक्तिसाधन भवेदित्युक्तम्॥

(१) नैव न कामसप्राप्त्या तन्नाशोऽब्दशतैरपि।
तत्सेवातोऽतिवृद्धि स्यान्निवृत्तिर्दोषदर्शनात्॥
(२) अथानन्द श्रुत साक्षान्मानेनाविषयीकृत।
दृष्टानन्दाभिलाष स न मन्दीकर्तुमप्यलम्॥
(३) कामप्रविलयायातस्तद्विपक्षाथभावनम्।
विधयस्तत्क्रियाणा स्युस्तद्विपर्ययहेतव॥
(४) द्वार न नियत मुक्ते प्राजापत्य पर भवेत्।
न ह्युपाधिषु तत्त्वस्य विशेष कश्चिदीक्ष्यते॥
अत प्रजापतौ तत्र कृमौ वा न विशिष्यते।
तर्कादागमतश्चापि तद्यो य इति हीदृशात्॥
स वा ३४५ ३४८–३५०, ३५४

(५) 'हिरण्यगर्भप्राप्तिसाधन चेन्न ततो व्यावृत्तिसाधनम्। परमात्माभिमुखीकरणस्य भोज्याद्व्यावृत्ते साधन चेन्न हिरण्यगर्भप्राप्ति साधनम्। न हि यद्गतिसाधन तद्गतिनिवृत्तेरपि। अथ मृत्वा हिरण्यगर्भं प्राप्य तत समुन्नीतप्राणो नामावशिष्ट परमात्मज्ञानेऽधिक्रियते, ततोऽस्म दाद्यर्थं परमात्मज्ञानोपदेशोऽनर्थक स्यात्। सर्वेषा हि ब्रह्मविद्या पुरुषार्थो योपलिप्यते 'तद्यो यो देवानाम्' (बृ १–४–१०) इत्याद्यया श्रुत्या॥
बृ भा ३–२–१३, पा ७९६

## अवस्थात्रयवासनानिरोधवादिमतम् –

७२ केचित् तु पदार्थत्वादात्मन प्रमाणान्तरगम्यत्वमेवेति मन्वाना प्रवदन्ति स्म – अन्वयव्यतिरेकाभ्यामात्मनो जाग्रत्स्वप्नसुषुप्तिभ्यो विवेकेन प्रत्यभिज्ञानात्, न तत्र शास्त्रप्रमाणापेक्षा । अतो जाग्रदादि-वासनानिरोधे श्रुत्या पुरुषो नियुज्यते । आत्मा च स्वयसिद्धत्वाद् वासना-निरोधमात्रात् स्वय प्रकाशते । एव च कार्यमुखेनैव ज्योतिष्टोमादिवाक्य वदेव वेदान्ताना प्रामाण्य न तु प्रत्यक्षादिवद् वस्तुनि । अत सत्यसति वा अन्योपाये निरोधादेव मुक्तिर्भवित्रीति ॥

तदेतदयुक्तम् । यतोऽयमात्मा स्वयम्सिद्धो मानान्तरगम्य पदार्थ-त्वादित्यनुपपन्नम् । पदार्थत्वादिविशेषप्रत्याख्यानेनैव तत्त्त्वावबोधनदर्श नात्, नैवाय पदार्थ, नापि वाक्यार्थ–इत्यवसीयते । अपि च मानान्तर-गम्यत्वाभ्युपगमे तत एवानर्थतद्धेतुभूतवासनाना तद्ध्वसेनानर्थनिवृत्तेश्चाव गमाद् वैदिकवचनस्य ध्रुवमानर्थक्य प्राप्नुयात् । नियोगमन्तरेणैव पुरुषार्थ-प्राप्ते । अनेकजन्मोपचितवासनाना चैकस्मिन्नेव जन्मनि निरोध स्यादिति च न सभाव्यमेतत् । यदि च साक्षाज्ज्ञानेन न विनाश्या वासना, तद्भावनया सा नश्येदिति का प्रमा ? अतो ज्ञानभावनाया पुरुषो नियुज्यत इति न सम्यक् । सुषुप्त्याद्यवस्थासु वासनानामभावेऽपि नास्ति मुक्तत्वम्, तत्र शास्त्रप्रमाणव्यापारानवकाशाच्चात्मसाक्षात्कारोऽपि नास्ति । अतोऽपि वासनानिरोधमात्रान्मुक्तिरिति न साधु पक्ष । किञ्च, आत्मनोऽज्ञानप्रमाणो-भयसाक्षिणस्ताभ्या सिद्ध्यसिद्धिशङ्कानुपपत्तौ तस्य नियोगाद्यपेक्षया सिद्धि-रित्युपहास्यम् । न च स्वयसिद्धस्य बोधने वाक्यस्यानुवादकत्वेनाप्रामाण्य प्रसङ्ग । यतो व्युत्पत्ते प्रागज्ञातत्वस्य व्युत्पत्तिमात्रेण च ज्ञानोत्पत्तेश्चानु भवसिद्धत्वात्, न दृष्टेऽप्यनुपपत्ति शक्यशङ्का । यच्चोच्यते ज्योतिष्टोमादि वाक्यवत् कार्यमुखेनैव वेदान्तवाक्यानामपि प्रामाण्यम् इति, तदसत् । यत्र हि कार्यता बुद्ध्वा तदनन्तर प्रवृत्ति स्यात्, तत्र नियोग स्यादपि,

इह पुनर्बोधमात्रात् पुरुषार्थसिद्धेः कार्यं नावशिष्यत इति वैषम्यम् । किञ्चान्यत्, इष्टसाधनमबुद्धं बोधयन् वेद प्रेरक इत्युच्यते, न तु तदन्या प्रेरणा वेदे संभवति । अतश्चात्रापि वस्तुतत्त्वज्ञापनेनैव वेदस्य प्रामाण्यं न प्रवर्तकत्वेन, प्रत्यक्षादिष्वेवमेव प्रामाण्यदर्शनादिति युक्तम् । अपि च वासनानामनर्थकारित्वेऽप्यविद्यैव कारणम् । न ह्यविद्याया ऋतेऽसङ्गस्य वासनासंबन्धोऽवकल्पते । अवस्थात्रयव्यतिरिक्तत्वरूपाल्लिङ्गाज्ज्ञातेऽप्यात्मनि तस्य ब्रह्मत्वं नैव ज्ञातं भवेदित्यतोऽप्यविद्याविनाश एवैषितव्यः । अतो नित्यनिवृत्तस्य संसारस्य निवृत्तिः, नित्यप्राप्तस्य ब्रह्मात्मत्वस्य च प्राप्तिरज्ञानमात्रव्यवहितत्वात् 'तत्त्वमसि' इत्यादिवेदवाक्यजन्यज्ञानादेवाज्ञाननिवर्तकात्, न निरोधादिति सिद्धम् । न च श्रुत्याप्यवस्थात्रयसाक्षिणः कथं ब्रह्मत्वं बोध्यत इति शङ्क्यम् । सर्वप्रमाणसर्वावस्थाभावाभावसाक्षी हि स्वार्थो निष्प्रपञ्चचैतन्यात्मस्वरूपः साक्ष्यापेक्षयैव साक्षी नाम । तस्याविद्यामात्रव्यवहितस्य व्यवधाननिरसनेनैव तत्त्वमस्यादिवचसा ब्रह्मत्वेन शक्यज्ञापनात् – इति वासनानिरोधवादः प्रत्युक्तो वार्तिके ॥

(१) न पदार्थो न वाक्यार्थ आत्माऽयं वस्तुतो यतः ।
तत्प्रत्याख्यानश्रुत्यैव तद्याथात्म्यावबोधनात् ॥ स वा ४६२

(२) तस्मात्संसारसंबन्धनिदानस्य प्रसिद्धितः ।
लिङ्गादेव तमस्तस्य ध्वंसेऽनर्थो निवर्तते ।
अन्तरेणापि वचनं बौद्धादेरिव सिद्धितः ।
मोक्षस्य पुरुषार्थस्य वचोऽतो निष्फलं भवेत् ॥ स वा ४५७, ४५८

(३) व्यतीतानेकजन्मोत्थवासनानामनन्ततः ।
तासां निरोधोऽसंभाव्यो जन्मन्येकत्र मानवैः ॥ स वा ४५९

(४) साक्षादात्मावबोधेन प्रत्यग्ध्वान्तच्छिदा न चेत् ।
दुःखादिभावना ध्वस्ता कथं तद्भावना नुदेत् ॥ स वा ४६०

(५) वासनानामभावेऽपि सुषुप्त्यादौ न मुक्तता ।
मानव्यापारविरहात्प्रधानं वा दृगात्मनः ॥ स वा ४६३

(६) यस्याप्रसिद्धिर्नाज्ञानात्प्रसिद्धिर्नापि मानत ।
तस्यानुभवतस्त्वस्य पुन सापेक्षतोच्यते ॥ स वा ४६७

(७) ननु प्रमाणविरहात्स्वत सिद्धो यदीष्यते ।
वचसो बुद्धबोधित्वादप्रामाण्य प्रसज्यते ॥
नैवमप्रतिपन्नत्वादनुभूत्यैव वस्तुन ।
तद्व्युत्पत्ते पुरा साक्षाद्बोधो व्युत्पत्तिमात्रत ॥
स वा ५४६, ५४७

[अज्ञानमनुभवमात्रगम्यम् , ज्ञान तु प्रमाणजनित सद् स्वत सिद्धत्वेन युष्मान्यत्यात्मान तज्ज्ञानपरिहारेण । अतो नानुवादत्वम् शास्त्रस्य-इत्यर्थ ॥ ]

बोधाबोधौ यतो दृष्टौ स्वानुभूत्यनुसारत ।
दृष्टे चानुपपन्नत्व किंबलादभिधीयते ॥ स वा ५४८

[अनाद्यज्ञान, कादाचित्क च ज्ञानम्-इत्यनुभवबलादाश्रीयत । न हि दृष्टेऽनुपपन्न नामेत्यर्थ ॥ ]

(८) न्याय्यो नियोगस्तत्रैव यत्र बुद्ध्वास्य कार्यताम् ।
अनन्तर प्रवृत्ति स्याद्विषये तस्य सिद्धये ॥
इह त्वैकात्म्यवाक्येषु तत्त्वमात्रावबोधत ।
सद्य पुमर्थससिद्धे कार्यसिद्धिर्न वीक्ष्यते ॥
स वा ५८६, ५८७

(९) अत समीहितोपायतया वस्त्ववबोधयन् ।
अबुद्ध प्रेरको वेदो ज्ञापना प्रेरणा मता ॥
तया च वस्तुयाथात्म्यज्ञापनेन प्रमाणता ।
न प्रेरकतया सा स्यात्प्रत्यक्षादेरनीक्षणात् ॥
स वा ६३७, ६३८

(१०) सर्वानर्थाभिसबन्धे ह्यविद्यैवास्य कारणम् ।
वासनानामपि युतौ सैव यस्मादपेक्ष्यते ॥
जाग्रत्स्वप्नसुषुप्तेभ्यो यदि नामातिरेकत ।
व्यक्तिभ्यो गोत्ववद् दृष्ट ब्रह्मत्वेऽस्य किमागतम् ॥
स वा ४६४, ४८५

(११) अज्ञानान्तरितत्वेन सप्राप्तत्यक्तयो पुन ।
याथात्म्यज्ञानतो नान्यत्पुरुषार्थाय कल्पते ॥
अशेषानर्थविच्छेद वाञ्छत श्रुतित श्रुते ।
त्व ब्रह्मेति हताशेषक्लेशो मोहप्रहाणत ॥ स वा ८८८, ८८९

(१२) यतो मानानि सिध्यन्ति जाग्रदादित्रयं तथा ।
भावाभावविभागश्च स ब्रह्मास्मीति बोध्यते ॥
यतोऽसिद्धानि सिध्यन्ति भावाभावौ यदाश्रयौ ।
योऽनन्यार्थो यदर्थं च सर्वं योऽनन्यदृक्सदा ॥
प्रमेयादित्रयं यस्मात्परस्परविलक्षणम् ।
आत्मानं लभते सत्यं सोऽध्यक्षोऽत्राभ्युपेयताम् ॥
असङ्कुचितचिद्रश्मि प्राज्ञे स्वप्नप्रबोधवत् ।
तथाऽप्रफुल्लबोधाब्जं प्राज्ञं स्वप्नप्रबोधयोः ॥
साध्यसम्बन्धतः साक्षी न स्वतः साक्षितात्मनः ।
प्रत्यङ्मात्रैकदृष्टित्वाद्धिया वाचामगोचरः ॥
एवम्भूतोऽयं प्रत्यक्स्वात्मानुभवसंश्रयात् ।
व्युत्पत्तेः प्रागविज्ञातः सर्वाज्ञानादिसाक्ष्यपि ॥
तत्त्वमस्यादितस्तस्मादागमादेव नान्यतः ।
ऐकात्म्यवस्तुनः साक्षाद् व्युत्पत्तिर्विचारिणी ॥

सं. वा. १०८२-१०८६, १०९०, १०९१

## विज्ञानस्मृतिसंततिविधिवादः –

७३. अन्ये पुनरेव मन्यन्ते स्म – श्रवणविज्ञानमात्रान्न पुरुषार्थः सिध्येत्, तद्व्यतिरेकेण विज्ञानस्मृतिसन्तानोऽपि कार्यः । तत एव तु पुरुषार्थप्राप्तिरिति । तत्रोदिते आत्मविज्ञाने तत्स्मृतिसन्ततेरवश्यंभावान्नैषा विधेयेत्याचार्यैः प्रत्याख्यातस्तेषां पक्षः । अस्तु वा विधिरपि नियमार्था, प्रारब्धकर्मवशात् प्राप्ते ज्ञानसन्ततिदौर्बल्ये–इति प्रौढिवादेन विधिमप्यङ्गीचक्रुर्भाष्यकाराः । अपूर्वविधित्वं तु सर्वथा निराकृतं तैः ॥

(१) वाक्यजनितात्मज्ञानस्मृतिसन्ततेः श्रवणविज्ञानमात्रादर्थान्तरत्वमिति चेत् । न । अर्थप्राप्तत्वात् । यदैवाद्वैतात्मप्रतिपादकवाक्यश्रवणादात्मविषयं विज्ञानमुत्पद्यते तदैव तदुत्पद्यमानं तद्विषयं मिथ्याज्ञानं निवर्तयदेवोत्पद्यते । आत्मविषयमिथ्याज्ञाननिवृत्तौ च तत्प्रभवाः स्मृतयो न भवन्ति स्वाभाविक्योऽनात्मवस्तुभेदविषयाः । अनर्थत्वावगतेश्च । आत्मावगतौ हि सत्याम् अन्यद्वस्तु अनर्थत्वेनावगम्यते । अनित्यदुःखाशुद्ध्यादिबहुदोषवत्त्वात्,

आत्मवस्तुनश्च तद्विलक्षणत्वात् । तस्मात् अनात्मविज्ञानस्मृतीनामात्मावगतेरभावप्राप्तिः । पारिशेष्यात् आत्मैकत्वविज्ञानस्मृतिसततेरर्थत एव भावान्न विधेयत्वम् । शोकमोहभयायासादिदु खदोषनिवर्तकत्वाच्च तत्स्मृते । विपरीतज्ञानप्रभवो हि शोकमोहादिदोष । तथा च 'को मोह ' (ई), 'विद्वान् न बिभेति कुतश्चन ' ( तै ), 'अभय वै जनक प्राप्तोऽसि ' (बृ ), 'भिद्यते हृदयग्रन्थि ' (मु ) इत्यादिश्रुतय ॥

बृ भा १-४-७ पा ६६२, ६६३

(२) यत्तूक्त 'विज्ञाय प्रज्ञा कुर्वीत ' इत्यादिवचनाना वाक्यार्थविज्ञानव्यतिरेकेणोपासनार्थत्वमिति सत्यमेतत् , किं तु नापूर्वविध्यर्थता । पक्षे प्राप्तस्य नियमार्थतैव । कथ पुनरुपासनस्य पक्षप्राप्ति ? यावता पारिशेष्यादात्मविज्ञानस्मृतिसन्ततिर्नित्यैवेत्यभिहितम् । बाढम् । यद्यप्येव शरीरारम्भकस्य कर्मणो नियतफलत्वात्, सम्यग्ज्ञानप्राप्तावप्यवश्यभाविनी प्रवृत्तिर्वाङ्मन कायानाम् । लब्धवृत्ते कर्मणो बलीयस्त्वात् । मुक्तेष्वादि प्रवृत्तिवत् । तेन पक्षे प्राप्त ज्ञानप्रवृत्तिदौर्बल्यम् । तस्मात्, त्यागवैराग्यादि साधनबलावलम्बनेनात्मविज्ञानस्मृतिसन्ततिर्नियन्तव्या भवति , न त्वपूर्वा कर्तव्या, प्राप्तत्वात् - इत्यवोचाम । तस्मात्, प्राप्तविज्ञानस्मृतिसतानानियम विध्यर्थानि 'विज्ञाय प्रज्ञा कुर्वीत ' इत्यादिवाक्यानि । अन्यार्थासंभवात् ॥

बृ भा १-४-७, पा ६६४

[मौनविधिसमर्थन सूत्र भाष्य चैवमर्थकमिति प्रतीयते ॥]

## चित्तवृत्तिनिरोधविधिवाद: –

७४ एके तु श्रावणविज्ञानादर्थान्तर चित्तवृत्तिनिरोधरूप विवित्सित वेदान्तेष्विति मन्यन्ते स्म । उपनिषत्सु योगविधानदर्शनात् । तन्त्रान्तरे च सम्यग्दर्शनोपायत्वेन तस्याङ्गीकारात् । उपनिषदि च 'तत्कारण साख्ययोगाभिपन्न ज्ञात्वा देव मुच्यते सर्वपाशै ' (श्वे ६-१३) इति योगदर्शनस्य श्रौतलिङ्गोपबृहितत्वाच्च-इति ॥

एतदपि निराकृतमाचार्यै । ब्रह्मात्मज्ञानादन्यस्य मोक्षस्य साधनत्वेनानवगमात् । 'साख्ययोगाभिपन्नम्' इत्यत्र वैदिकयोरेव ज्ञानध्यानयो परामर्शात् , सर्वथाचित्तवृत्तिनिरोधस्य ज्ञानस्मृतिसतानैरलभ्यत्वाच्चेति ॥

(१) उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते ।
प्रागुत्पत्तेरज सर्वं तेनासौ कृपण स्मृत ॥ गौ का ३-१

(२) 'अह तु ससारी सुखी दु खी च । ससारो ऽरमश्च मम कर्तव्य , क्षेत्रक्षेत्रज्ञविज्ञानेन, ध्यानेन चेश्वर क्षेत्रज्ञ साक्षात्कृत्वा तत्स्वरूपावस्थानेन - इति । यश्चैव बुध्यते, यश्च बोधयति 'नासौ क्षेत्रज्ञ' इति , एव मन्वानो य स पण्डितापसद ससारमोक्षयो शास्त्रस्य चार्थवत्त्व करोमीति, आत्महा स्वय मूढोऽन्याश्च व्यामोहयति शास्त्रार्थसप्रदायरहितत्वात् श्रुत हानिमश्रुनकल्पना च कुर्वन् । तस्मात् , असप्रदायवित् सर्वशास्त्रविदपि मूर्खवदेवोपेक्षणीय ॥ गी भा १३-२, पा १९५

(३) न । मन्त्रब्राह्मणवादेभ्यस्तस्यैव प्रवेशश्रवणात् । 'पुरश्चक्रे' इति प्रकृत्य 'पुर पुरुष आविशत्' (बृ २-५-१८), 'रूप रूप प्रतिरूपो बभूव तदस्य रूप प्रतिचक्षणाय' (बृ २-५-१९), 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' (तै आ ३-१२-७) - इति सर्वशाखासु सहस्रशो मन्त्रवादा सृष्टिकर्तुरेवाससारिण शरीरप्रवेश दर्शयन्ति । तथा ब्राह्मणवादा 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै २-६), 'स एतमेव सीमान विदार्यैतया द्वारा प्रापद्यत' (ऐ १-३-१२), 'सेय देवतेमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य ' (छां ६-३-२), 'एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते' (का १-३-१२) इत्याद्या ॥
बृ भा २-१-२०, पा ७३६

(४) सर्वश्रुतिषु च ब्रह्मण्यात्मशब्दप्रयोगात्, आत्मशब्दस्य च प्रत्यगात्माभिधायकत्वात् , 'एष सर्वभूतान्तरात्मा' (मु २-१-४) इति च श्रुते । परमात्मव्यतिरेकेण ससारिणोऽभावात् , 'एकमेवाद्वितीयम्' (छा ६-२-१), 'ब्रह्मैवेदम्' (मु २-२-११), 'आत्मैवेदम्' (छा ७-२५-२) इत्यादिश्रुतिभ्यो युक्तमेव 'अह ब्रह्मास्मि' इत्यवधारयितुम् ॥ बृ भा २-१-२०, पा ७३६

(५) स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्माभय वै ब्रह्माभय हि वै ब्रह्म भवति य एव वेद ॥ बृ ४-४-२५

भाष्यम्-अभय वै ब्रह्म । प्रसिद्धमेतल्लोकेऽभय ब्रह्मेति , तस्माद्युक्तम् एवगुणविशिष्ट आत्मा ब्रह्मेति ॥ बृ भा पा ९३८

(६) न चायं व्यवहाराभावोऽवस्थाविशेषनिबद्धोऽभिधीयत इति युक्तं वक्तुम्। 'तत्त्वमसि' इति ब्रह्मात्मभावस्यानवस्थाविशेषनिबन्धनत्वात् ॥

सू भा २-१-१४, पा १९८

अनुभवारूढं तु ज्ञानफलम्। 'यत्साक्षादपरोक्षाद्ब्रह्म' (बृ ३ ४ १) इति श्रुतेः। 'तत्त्वमसि' (छा ६-८-७) इति च सिद्धवदुपदेशात् ॥

सू भा ३-३-३२, पा ४०७

(७) जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते।
नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसम् ॥ गौ का ३ १३

(८) आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः।
घटादिवच्च संघातैर्जातावेतन्निदर्शनम् ॥ गौ का ३-३

भाष्यम् – यदा मन्दबुद्धिप्रतिपिपादयिषया श्रुत्या आत्मनो जातिरुच्यते। जीवादीनाम्, तदा जातावुपगम्यमानायाम्, एतन्निदर्शनं दृष्टान्तो यथोदिताकाशवदित्यादि ॥ पा २०९

मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा।
उपायः सोऽवताराय नास्ति भेदः कथञ्चन ॥ गौ का ३-१५

भाष्यम् – तस्मादुत्पत्त्यादिश्रुतय आत्मैकत्वबुद्ध्यवतारायैव नान्यार्थाः कल्पयितुं युक्ताः। अतो नास्त्युत्पत्त्यादिकृतो भेदः कथञ्चन ॥ पा २१५

(९) अत्र राजपुत्रस्य राजप्रत्ययवद् ब्रह्मप्रत्ययो दृढीभवति विस्फुलिङ्गवदेव त्वं परस्माद्ब्रह्मणो भ्रष्ट इत्युक्ते। विस्फुलिङ्गस्य प्रागग्नेर्भ्रंशादग्न्येकत्वदर्शनात्। तस्मादेकत्वप्रत्ययदार्ढ्याय सुवर्णमणिलोहाग्निविस्फुलिङ्गदृष्टान्ता नोत्पत्त्यादिभेदप्रतिपादनपराः ॥ बृ भा २-१-२०, पा ७३९

(१०) न वासुदेवसञ्ज्ञकात् परमात्मनः सङ्कर्षणसञ्ज्ञकस्य जीवस्योत्पत्तिः सम्भवति। अनित्यत्वादिदोषप्रसङ्गात्, उत्पत्तिमत्त्वे हि जीवस्यानित्यत्वादयो दोषाः प्रसज्येरन्। ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात्। कारणप्राप्तौ कार्यस्य प्रविलयप्रसङ्गात् ॥ सू भा २-२-४२, पा २६०

(११) यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनम् अजस्रमनन्यचित्ततयाभिप्रेयते, तदपि न प्रतिषिध्यते। श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात् ॥ सू भा २-२-४२, पा २६०

(१२) आश्रमास्त्रिविधा हीनमध्यमोत्कृष्टदृष्टय ।
उपासनोपदिष्टेय तदर्थमनुकम्पया ॥ गौ का ३-१६

भाष्यम् – उपासनोपदिष्टेय तदर्थं मन्दमध्यमदृष्ट्याश्रमाद्यर्थं कर्माणि च । न चात्मैक एवाद्वितीय इति निश्चितोत्तमदृष्ट्यर्थम् । दयालुना वेदेन, अनुकम्पया सन्मार्गगा सन्त कथमिमम् उत्तमाम् एकत्वदृष्टि प्राप्नुयुरिति ॥ पा २१७-२१६

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्येण श्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिचयावाप्त-
वेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्यसच्चिदानन्देन्द्रसरस्वत्याख्येन
भिक्षुणा प्रणीताया वेदान्तप्रक्रियाप्रत्यभिज्ञाया
**प्राचीनप्रस्थानपरीक्षा नाम**
**चतुर्थं काण्ड**

# ५. भर्तृप्रपञ्चप्रस्थानपरीक्षा

**भर्तृप्रपञ्चप्रस्थानपरिशीलनावश्यकता–**

७६ भगवत्पादीयकाल यावन् प्रचलितानि विविधवेदान्तप्रस्थानानि [illegible] त्रेधा राशीकृत्य परिशीलनीयानि भवन्ति – भेददर्शनम्, अभेददर्शनम्, भेदाभेददर्शन चेति । तत्र भेद दर्शन तावद् बादरायणाचार्येणोपस्थापितम् **औडुलोमि**मतत्वेन 'उत्क्रमिष्यत एवभावादित्यौडुलोमि' (वे सू १–४–२१) इति । देहेन्द्रियमनोबुद्धि सघातोपाधिसपर्कात् कलुषीभूतस्य ज्ञानध्यानादिसाधनानुष्ठानात् सप्रसन्नस्य देहादिसघातादुत्क्रमिष्यत परमात्मैक्य भविष्यतीति भेदवादिना मतम् । तत्र भागवताना मत भेददर्शनमेवेति स्पष्टम् । परमेश्वर भगवन्तम् अभिगमनादिना वर्षशतमिष्ट्वा क्षीणक्लेशस्तमेव प्रतिपद्यते जीव इति खलु तेषामभ्युपगम इति । ज्ञानकर्मसमुच्चयवादिन (ख ६६), उपासनावादिन (ख ६७), कामविलयवादिनश्च (ख ७१) भेदवादपक्षावलम्बिन एव । मोक्षस्य साधनविशेषायत्तादृष्टफलत्वेन स्वीकारात् तै । ज्ञानविधिवादिन (ख ६८), ज्ञानाभ्यासवादिन (ख ६९), प्रपञ्च विलयवादिन (ख ७०), वासनानिरोधवादिन (ख ७२), विज्ञान स्मृतिसततिवादिन (ख ७३), चित्तवृत्तिनिरोधवादिनश्च (ख ७४) – इत्येते तु यद्यपि मोक्ष दृष्टफलत्वेनैवाभ्युपयन्ति, तथापि नि श्रेयसस्यादृष्ट फलत्व वदन्त इव शास्त्रविहितसाधनायत्तामेव पुरुषार्थसिद्धि काङ्क्षन्तीति यावन्मोक्ष जीवेश्वरभेद एव प्रकारान्तरेण कक्षीकृतस्तैरपीति पर्यवस्यति । अभेददर्शन तु 'अवस्थितेरिति काशकृत्स्न' (वे सू १-४-२२) इति **काशकृत्स्न**मतत्वेन सूत्रितमनुसृत श्रीगौडपादाचार्यादिभिराचार्यै । परमात्मन एव व्यवहारावस्थाया मायिकजीवभावेनावस्थितिरित्यभिमतमेषाम् । इदमेव तु वेदान्तप्रक्रियानुसारीति भगवत्पादै प्रतिपाद्यते । एतच्च मत

विस्तरेण परिशीलित तृतीयकाण्डे । अथ तृतीय भेदाभेददर्शन 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य (वे सू १-४-२०) इति सूत्रितम् **आश्मरथ्य-**मतत्वेन । तस्यास्य प्रातिनिध्य भर्तृप्रपञ्चानामेव देत्र भगवत्पादसमकालिकत्वेन सभाव्यमानानाम् । तत प्राच्यतराणा भेदाभेदवादावलम्बिनाम् आचार्याणा श्रवणपथेऽद्यापि केनाप्यनानीतत्वात् । भर्तृप्रपञ्चाना वृत्तयोऽपि न समग्रतयोपलभ्यन्ते । प्रक्रियातत्त्व निश्चिचीषूणा सौभाग्यवशात्तु बृहदारण्यकभाष्यतद्वार्तिकयोस्तट्टीकयोश्च परामृष्टा अभिप्राया सन्ति, खण्डशो वाक्यानि च वृत्तित उद्धृतानि-यैर्विचारितैरेतस्य भेदाभेददर्शनस्य प्राचीनतम रूपम् ईषदनावृत भवेत् । अतस्तादृशानि वाक्यानि सकलय्य, भाष्यवार्तिकोपजीवनेन यत्किञ्चिदभ्यूह्य च प्रस्थानमिद यथा साध्यमनुशील्यते । अनुशीलिते हि तस्मिन् प्रायश सर्वे समुपलभ्यमाना प्राचीनवेदान्तप्रक्रिया परिशीलिता भवन्ति । तथा च वेदान्तादृता प्रक्रिया यथावर्णितैवेत्येतन्निराबाध स्थास्यतीति ॥

## द्वैताद्वैतप्रस्थाने कार्यकारणप्रक्रिया-

७७ कार्यकारणप्रक्रिया भर्तृप्रपञ्चाभिमता तावत् सग्रहेण वर्ण्यते । बृहदारण्यके पञ्चमाध्यायस्य प्रथमकण्डिकाया ऐदम्पर्यमिद यद् द्वैताद्वैतात्मकमेव ब्रह्म न त्वेकान्तेन द्वैतम्, नाद्वैतमेव वा इति । तथा हि – यद्यद्वैतमेव परमार्थत, द्वैत तु मृगतृष्णिकोदकादिवदनृतम्, तदा कर्मकाण्डमनर्थक स्यात् । तथा सृष्टिस्थितिप्रलयवर्णन श्रवणादिविधान च व्यर्थमेव स्यात् । अथ द्वैत स्वेन रूपेणैव सत्यम्, तदा अद्वैतदर्शनस्य मृषात्व प्राप्नोति-इति प्राप्ते शङ्कापरिहाराय प्रकृताध्यायगता 'पूर्णमद' इति कण्डिका प्रारब्धा । तत्र 'पूर्णमद' इति कारणस्य परमार्थत्वमाह, 'पूर्णमिदम्' इति च कार्यस्यापि । कार्य ह्युत्पन्न कारणाव्यतिरिक्तत्वेन पूर्णमेव, पुनरपि प्रलयकाले पूर्णमेव भविष्यति कारणरूपेणेति । एव च

त्रिष्वपि कालेषु कार्यकारणयोः पूर्णतैव मन्तव्या । सा चेकैव पूर्णता कार्यकारणयोर्भेदेन व्यपदिश्यते । एवं च द्वैताद्वैतात्मकं ब्रह्म । यथा किल समुद्रो जलतरङ्गफेनबुद्बुदाद्यात्मक एव, यथा च जलं सत्यम् तदुद्भवाश्च तरङ्गफेनबुद्बुदादयः समुद्रात्मभूता एव, आविर्भावतिरोभावधर्मिणः परमार्थसत्या एव, एवं सर्वमिदं द्वैतं परमार्थसत्यमेव जलतरङ्गस्थानीयम् । समुद्रजलस्थानीयं तु परं ब्रह्म । एवं च किल द्वैतस्य सत्यत्वे कर्मकाण्डस्य प्रामाण्यम्—इति 'पूर्णमदः' इति कण्डिकाभाष्यवार्तिकयोरियं प्रक्रियानूदिता । सूत्रभाष्येऽपीयमनूदिता (सू. भा. २-१-१४) । "नन्वनेकात्मकं ब्रह्म । यथा वृक्षोऽनेकशाखः, एवमनेकशक्तिप्रवृत्तियुक्तं ब्रह्म । अत एकत्वं नानात्वं चोभयमपि सत्यमेव । यथा 'वृक्ष' इति एकत्वं 'शाखा' इति नानात्वम्, यथा च समुद्रात्मना एकत्वम्, फेनतरङ्गाद्यात्मना नानात्वम् । तत्रैकत्वांशेन ज्ञानान्मोक्षव्यवहारः सेत्स्यति । नानात्वांशेन तु कर्मकाण्डाश्रयौ लौकिकवैदिकव्यवहारौ सेत्स्यतः" इति ॥

अत्र क्रियास्विव वस्तुन्युत्सर्गापवादविकल्पानामसंभवात्, द्वैताद्वैतयोर्विरोधात्, प्रज्ञानघनैकरसश्रुतेरप्रामाण्यप्रसङ्गात्, ब्रह्मणः समुद्रादिवद् द्वैताद्वैतात्मकत्वे सावयवस्यानित्यत्वध्रौव्यात्, द्वैताद्वैतस्याध्येयत्वात्, भेददृष्ट्यपवादश्रुतेः कारणस्यैव सत्यत्वावधारणश्रुतेश्च प्रामाण्यहानाच्च न युक्तमिदं मतम् । श्रुत्युपदिष्टनित्यसिद्धब्रह्मात्मताज्ञानेन शारीरत्वे बाधिते तदर्थं नानात्वांशकल्पनानवसरात्, प्राग्ब्रह्मात्मताबोधाद् सर्वव्यवहाराणामपि सत्यत्वोपपत्तेस्तदर्थं नानात्वसत्यत्वकल्पनावश्यकताभावात्, अङ्गीकृतेऽपि द्वैताद्वैतात्मकत्वे शास्त्रोपदेशानुपपत्तिपरिहाराभावाच्च न युक्तं द्वैताद्वैतात्मकब्रह्मकल्पनमिति भाष्यवार्तिकयोर्निरस्तमिदं मतम् ॥

(१) यथा क्रियाविषये उत्सर्गप्राप्तस्य एकदेशे अपवादः क्रियते—यथा 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः' (छा. ८. १५. १) इति हिंसा सर्वभूतविषया उत्सर्गेण निवारिता तीर्थे विशिष्टविषये ज्योतिष्टोमादौ अनुज्ञायते, न च तथा वस्तुविषये इह अद्वैतं ब्रह्म उत्सर्गेण प्रतिपाद्य पुनस्तदेकदेशो अपवदितुं

शक्यते । ब्रह्मणोऽद्वैतत्वादेव एकदेशानुपपत्ते । तथा विकल्पानुपपत्तेश्च यथा 'अतिरात्रे षोडशिन गृह्णाति', 'नातिरात्रे षोडशिन गृह्णाति' (?) इति ग्रहणाग्रहणयो पुरुषाधीनत्वात् विकल्पो भवति । न त्विह तथा वस्तुविषये द्वैत वा स्यात्, अद्वैत वा इति विकल्प सभवति । अपुरुष-तन्त्रत्वादात्मवस्तुन । विरोधाच्च द्वैताद्वैतयोरेकत्वस्य ॥

बृ भा ५-१-१, पा ९५२

(२) श्रुतिन्यायविरोधाच्च । 'सैन्धवघनवत् प्रज्ञानैकरसघन निरन्तरम्' (२-४-११), 'पूर्वापरबाह्याभ्यन्तरभेदविवर्जितम्' (२-५-१९) 'बाह्याभ्यन्तरमजम्'(मु २-१-५) नेति नेति'(२-३-६) 'अस्थूलमनण्वह्रस्वम्' (३-८-८) 'अजमजरमभयममृतम्' (४-४-२५) - इत्येवमाद्या श्रुतयो निश्चितार्था सशयविपर्यासाशङ्कारहिता सर्वा समुद्रे प्रक्षिप्ता स्यु । अकिञ्चित्करत्वात् । तथा न्यायविरोधोऽपि । सावयवस्य अनेकात्मकस्य, क्रियावतो नित्यत्वानुपपत्ते । नित्यत्व चात्मन स्मृत्यादिदर्शनादनुमीयते । तद्विरोधश्च प्राप्नोत्यनित्यत्वे ॥ बृ भा ५-१-१, पा ९५२

(३) भवत्कल्पनानर्थक्य च । स्फुटमेव चास्मिन् पक्षे कर्मकाण्डा-नर्थक्यम् । अकृताभ्यागमकृतविप्रणाशप्रसङ्गात् ॥

बृ भा ५-१-१, पा ९५२

(४) ननु ब्रह्मणो द्वैताद्वैतात्मकत्वे समुद्रादिदृष्टान्ता विद्यन्ते । कथ मुच्यते भवता, एकस्य द्वैताद्वैतत्व विरुद्धमिति ? न अन्यविषयत्वात् । नित्यनिरवयववस्तुविषय हि विरुद्धत्वम् अवोचाम द्वैताद्वैतत्वस्य न कार्यविषये सावयवे । तस्मात् श्रुतिस्मृतिन्यायविरोधात्, अनुपपन्नेय कल्पना ॥

बृ भा ५-१-१, पा ९५२

(५) अध्येयत्वाच्च न शास्त्रार्थेय कल्पना । न हि जननमरणाद्यनर्थ-शतसहस्रभेदसमाकुल समुद्रवनादिवत् सावयवम् अनेकरस ब्रह्म ध्येयत्वेन विज्ञेयत्वेन वा श्रुत्या उपदिश्यते, प्रज्ञानघनता चोपदिशति 'एकधैवानु-द्रष्टव्यम्' इति च । अनेकधादर्शनापवादाच्च 'मृत्यो स मृत्युमाप्नोति य इह नानेव पश्यति' इति । यच्च श्रुत्या निन्दित तन्न कर्तव्यम् ॥

बृ भा ५-१-१, पा ९५२, ९५३

(६) यदापि समुद्रादिवत् द्वैताद्वैतात्मकमेव ब्रह्म अभ्युपगच्छामो नान्यद् वस्त्वन्तरम्, तदापि भवदुक्ताच्छास्त्रविरोधान्न मुच्यामहे । कथम् ?

एव हि पर ब्रह्म द्वैताद्वैतात्मकम् । तच्छोकमोहाद्यतीतत्वात् उपदेश न काङ्क्षति । न चोपदेष्टाऽन्यो ब्रह्मण । न च समुद्रोदकैकत्ववद् विज्ञानैकत्वे ब्रह्मणोऽन्यत्र उपदेशग्रहणादिकल्पना सभवति । न हि हस्तादि-द्वैताद्वैतात्मके देवदत्ते वाक्कर्णयोर्देवदत्तैकदेशभूतयो वाक् उपदेष्ट्री, कर्ण केवल उपदेशस्य गृहीता, देवदत्तस्तु नोपदेष्टा नाप्युपदेशस्य गृहीता – इति कल्पयितु शक्यते । समुद्रैकोदकात्मत्ववदेकविज्ञानवत्त्वाद् देवदत्तस्य । तस्मात् श्रुतिन्यायविरोधश्च, अभिप्रेतार्थासिद्धिश्च एव कल्पनाया स्यात् ॥

बृ भा ५-१-१, पा ९५४

(७) अतश्चेद शास्त्रीय ब्रह्मात्मत्वम् अवगम्यमान स्वाभाविकस्य शरीरात्मत्वस्य बाधक सपद्यते । रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनाम् । बाधिते च शारीरात्मत्वे तदाश्रय समस्त स्वाभाविको व्यवहारो बाधितो भवति, यत्प्रसिद्धयै नानात्वांशोऽपरो ब्रह्मण कल्प्येत ॥

सू भा २-१-१४, पा १९७

(८) न चास्मिन् दर्शने ज्ञानान्मोक्ष इत्युपपद्यते । सम्यग्ज्ञानाप नोद्यस्य कस्यचिन्मिथ्याज्ञानस्य ससारकारणत्वेन अनभ्युपगमात् । उभय-सत्यताया हि कथम् एकत्वज्ञानेन नानात्वज्ञानम् अपनुद्यत इत्युच्यते ॥

सू भा २-१-१४, पा १९८

(९) अत, अद शब्दवाच्य पूर्ण ब्रह्म । तदेवेद पूर्ण कार्यस्थ नामरूपोपाधिसयुक्तम् अविद्यया उद्रिक्तम्, तस्मादेव परमार्थस्वरूपादन्यदिव प्रत्यवभासमानम् । तद्यदा आत्मानमेव पर पूर्ण ब्रह्म विदित्वा 'अहमद पूर्ण ब्रह्मास्मि' इत्येव पूर्णमादाय तिरस्कृत्य अपूर्णस्वरूपताम् अविद्याकृता नामरूपोपाधिसपर्कजाम् एतया ब्रह्मविद्यया पूर्णमेव केवलम् अवशिष्यते ॥

बृ भा ५-१-१, पा ९५१

## ब्रह्मणोऽष्टावस्थाः–

७८ परस्य महासमुद्रस्थानीयस्य ब्रह्मणोऽप्रचलितावस्था अक्षरम्, ईषत्प्रचलितावस्था अन्तर्यामी, अत्यन्तप्रचलितावस्था क्षेत्रज्ञ – इति तिस्रो अवस्था, तथा विराडादयोऽन्या पञ्च[1] – इत्येवम् अष्टौ अवस्था ब्रह्मण इति **भर्तृप्रपञ्चाः** । अन्ये त्वेता ब्रह्मण शक्तय इति वदन्ति स्म, तस्य विकारा इत्यपि केचित् ॥

---

1 पिण्डो, जाति, विराट्, सूत्र, दैवम्-इति आ॥ गि॥ (पा ४१२)

तदेतन्मत प्रत्याख्यान बृहदारण्यकभाष्ये –

'अवस्थाशक्ती तावन्नोपपद्येते । अक्षरस्य अशनायादिसंसारधर्मातीतत्वश्रुते । न हि अशनायाद्यतीतत्वम्, अशनायादिधर्मवदवस्थावत्त्व चैकस्य युगपदुपपद्यते । तथा शक्तिमत्त्व च । विकारावयवत्वे च दोषा प्रदर्शिताश्चतुर्थे । तस्मादेता असत्य सर्वा, कल्पना ॥

बृ ३-८-१२, पा ८३२

इति । वार्तिककारैश्च तत्र तत्र निराकृतोऽष्टावस्थावाद ॥

(१) अतत्त्वज्ञस्य तमसो रज्ज्वज्ञानोरगादिवत् ।
अष्टावस्थाप्रभेदेन मिथ्याज्ञान प्रजायते ॥ वा १-३-३१४

(२) ईश्वराव्याकृतप्राणविराड्भूतेन्द्रियादिकम् ।
नाविद्योपाश्रय मुक्त्वा सभाव्य प्रत्यगात्मनि ॥ वा १ ४ ४८७

(३) यस्य त्वष्टास्ववस्थासु प्रत्यक्त्व समम्रि यते ।
तस्यान्तरतम इति दुर्घट वचन भवेत् ॥ वा १-४-१०४३

[ 'सर्वस्मादन्तरतर यदयमात्मा' (बृ १-४-८) इति वाक्यमिह परामृष्टम् । अत्रानन्दगिरि – अन्तरतरवचन स्वमतेनोपपाद्य भर्तृप्रपञ्चमते न युक्तम् इत्याह यस्येति । पिण्डो जातिविराट् सूत्रम्, दैवम्, अव्याकृतम्, अन्तर्यामी, साक्षी–इत्यष्टावस्थाना न बाह्याभ्यन्तरभाव । यथा घटशरावादीना मृद्विकाराणा मृदेव तत्त्वम्, तथा सामान्यमात्मतत्त्वम्, अतस्तासु प्रत्यक्त्व समम् – इति पक्षे नात्मनोऽन्तरतमत्वसिद्धिरित्यर्थ ॥ पा ६४३ ]

(४) कस्तर्हि भेद एषाम्? उपाधिकृत इति ब्रूम । न स्वत एषा भेद अभेदो वा । सैन्धवघनवत् प्रज्ञानघनैकरसस्वाभाव्यात् । 'अपूर्व मनपरमनन्तरमबाह्यम्' (२-५-१९), 'अयमात्मा ब्रह्म' (२-५-१९) इति च श्रुते । 'स बाह्याभ्यन्तरो ह्यज' (मु २-१-२) इति चाथर्वणे । तस्मात्, निरुपाधिकस्य आत्मनो निरुपाख्यत्वात्, निर्विशेषत्वात्, एकत्वाच्च 'नेति नेति' इति व्यपदेशो भवति । अविद्याकामकर्मविशिष्टकार्यकरणोपाधिरात्मा ससारी जीव उच्यते । नित्यनिरतिशयज्ञानशक्त्युपाधिरात्मा अन्तर्यामी ईश्वर उच्यते । स एव निरुपाधि केवल शुद्ध स्वेन स्वभावेन अक्षर पर उच्यते । तथा हिरण्यगर्भाव्याकृतदेवताजातिपिण्डमनुष्यतिर्यक्प्रेतादिकार्यकरणोपाधिभिर्विशिष्टस्तदाख्यस्तद्रूपो भवति । तस्मात् उपाधिभेदेनैवैषा भेदो नान्यथा ॥ बृ ३-८-१२, पा ८३२

## विज्ञानात्मनो विकारत्वम्–

७९ भर्तृप्रपञ्चाना मतमिद यत् परमात्मा न साक्षाद् भूतेष्वनुप्रविष्ट स्वेन रूपेण, किं तर्हि, विकारभावमापन्नो विज्ञानात्मत्व प्रतिपेदे । स च विज्ञानात्मा, परस्मादन्योऽनन्यश्च । येनान्य , तेन ससारि च सबन्धी, येनानन्य तेन 'अह ब्रह्म' इत्युपगमनार्ह । एव सर्वमविरुद्ध भविष्यति–इति (बृ भा २–१–२०, पा ७३६)। यद्यपि वार्तिके टीकाया वा इद मत भर्तृप्रपञ्चनाम्ना सब य नोल्लिखित दृश्यते , तथापि अन्यत्र समुद्रदृष्टान्ते कार्यकारणयो सत्यत्ववर्णन, ब्रह्मणोऽष्टावस्थाविवर्णन च तदीयत्वेनोक्तमालक्ष्य एतदपि तदीयमेवेति युज्यते ॥

अतश्च । मूर्तामूर्तब्राह्मणे भाष्ये भर्तृप्रपञ्चप्रक्रिया 'औपनिषदमन्या अपि केचित् प्रक्रिया रचयन्ति' इति सोपहासम् एवमनूदिता–

"मूर्तामूर्तराशिरेक , परमात्मराशिरुत्तम , वाभ्यामन्योऽय मध्यम किल तृतीय , कर्त्रा भोक्त्रा विज्ञानमयेन अजातशत्रुप्रतिबोधितेन सह विद्याकर्मपूर्वप्रज्ञासमुदाय । प्रयोक्ता कर्मराशि , प्रयोज्य पूर्वोक्तो मूर्तामूर्त भूतराशि , साधन चेति । तत्र च तार्किकै सह सन्धि कुर्वन्ति । 'लिङ्गाश्रयश्चैष कर्मराशि ' इत्युक्त्वा पुनस्ततस्त्रस्यन्त साङ्ख्यत्वभयात् 'सर्व कर्मराशि पुष्पाश्रय इव गन्ध पुष्पवियोगेऽपि पुटतैलाश्रयो भवति । तद्वल्लिङ्गवियोगेऽपि परमात्मैकदेशमाश्रयति । स परमात्मैकदेश किलान्यत आगतेन गुणेन कर्मणा सगुणो भवति निर्गुणोऽपि सन् स कर्ता भोक्ता बध्यते मुच्यते च विज्ञानात्मा' इति वैशेषिकचित्तमप्यनुसरन्ति । स च कर्मराशि , भूतराशेरागन्तुक स्वतो निर्गुण एव परमात्मैकदेशत्वात् " (बृ भा २–३–६, पा ७५२–७५३ ) ॥

इति । किञ्च 'कतम आत्मेति योऽय विज्ञानमय प्राणेषु' (बृ ४–३–७) इति वाक्यव्याख्यानसमये भर्तृप्रपञ्चै कण्ठरवेणैवोक्त 'विज्ञान पर ब्रह्म तत् प्रकृतिको जीवो विज्ञानमय' (आ गि पा ५६०) इति । तदेतदपि भाष्ये अनूदित दृश्यते 'येषा परमात्मविज्ञप्तिविकार इति व्याख्यानम्' (पा ८६८) इति ॥

तत्र विकारत्व परमात्मन एकदेशविपरिणामो वा, समान-जातीयकानेकद्रव्यसमूहस्य घटादिवत् पृथिव्या, अथवा अवयविन परमात्मनस्तथावस्थितस्यैवैकदेशपरिणाम केशोपरादि[illegible], आहोस्वित् सर्वस्यैव परिणाम क्षीरस्येव दधि – इति त्रेवा विकल्प्य प्रथमे कल्पे समुदायस्य समुदायिना ऐक्य गौणमेव स्यात्, न परमार्थत । तथा सति सिद्धान्तविरोध, द्वितीये अवयविन एव स्यादवयवगतो गुणो वा दोषो वा, तृतीये तु निरवयवत्वश्रुतिविरोध इति न परस्य विकारो विज्ञानात्मा– इत्युक्त भाष्ये (पा ७३७) ॥

मूर्तामूर्तादिराशित्रयकल्पना तु एव प्रत्याख्याता –

उक्ता एव तावत् सावयवत्वे परमात्मन ससारित्वसव्रणत्वकर्मफल-देशससरणानुपपत्त्यादयो दोषा । नित्यभेदे च विज्ञानात्मन परेणैकत्वा नुपपत्ति । लिङ्गमेवेति चेत् परमात्मन उपचरितदेशत्वेन कल्पित घटकर-काभूच्छिद्राकाशादिवत् तथा लिङ्गवियोगेऽपि परमात्मदेशाश्रयण वासनाया, अविद्यायाश्च स्वत उत्थानम् ऊषरवत् – इत्यादिकल्पना अनुपपन्नैव । न च वास्यदेशव्यतिरेकेण वासनाया वस्त्वन्तरसञ्चरण मनसापि कल्पयितु शक्यम् । न च श्रुतयोऽनुगच्छन्ति 'काम सकल्पो विचिकित्सा' (बृ १–५–६), 'हृदये ह्येव रूपाणि' (बृ ३–९–२०), 'ध्यायतीव लेलायतीव' (बृ ४–३–७) 'कामा येऽस्य हृदि श्रिता' (बृ ४–४–७), 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य' (बृ ४–३–२२) इत्याद्या ।' अथ मूर्तामूर्ते एव परमात्मनो रूपे, वासनास्तु विज्ञानात्मन –इति चेत् । तदा 'विज्ञानात्म-द्वारेण विक्रियमाणस्य परमात्मन' इतीय वाचोयुक्तिरनर्थिका स्यात् । वासनाया अपि विज्ञानात्मद्वारत्वस्य अविशिष्टत्वात् । न च वस्तु वस्त्वन्तर-द्वारेण विक्रियत इति मुख्यया वृत्त्या शक्य कल्पयितुम् । न च विज्ञानात्मा परमात्मनो वस्त्वन्तरम्, तथा कल्पनाया सिद्धान्तहानात्' ॥

बृ भा २–३–६, पा ७५३–७५४

मयटो विकारार्थत्वमेव निराकृतम् –

'येषा परमात्मविज्ञप्तिविकार इति व्याख्यानम्, तेषा 'विज्ञानमयो मनोमय' (४–४–५) इत्यादौ विज्ञानमयशब्दस्य अन्यार्थदर्शनात् अश्रौतार्थता अवसीयते । 'सधी' इति चोत्तरत्र पाठात्, 'ह्यन्त' इति वचनाद् युक्त विज्ञानप्रायत्वमेव ॥ बृ ४–३–७, पा ८६८

वार्तिके तु एवं स्थितम् –

'व्याचख्युर्मैयट ये तु विकारार्थे महाधियः ।'
स्वव्याख्यानविरोधः स्यात् तेषां चानर्थसंगतिः ॥
आत्मनश्चापि निःशेषाविकारप्रतिषेधतः ।
न जायत इति स्पष्टं श्रुतिमन्त्रोक्तिसंश्रयात् ॥
अनिर्मोक्षप्रसक्तिश्च विकारत्वेन् परात्मनः ।
मयट नातो विकारे स्यात् प्रायार्थस्तत्र युज्यते ॥
बृ वा ४-३-३१८, ३१९, ३२० पा १४३२-१४३३

एवं च भर्तृप्रपञ्चप्रस्थाने विज्ञानात्मा ब्रह्मविज्ञप्तिविकार [illegible]
इति स्थितम् ॥

द्रष्टृदृष्टिविवेकः –

८० 'कतमो याज्ञवल्क्य सर्वान्तर' इत्युपस्तेन पृष्टो याज्ञवल्क्य आचष्टे 'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया' (बृ ३-४-२) इति । तदेतत् प्रतिवचनं भर्तृप्रपञ्चा एवं व्याचक्रुः 'दृष्टिः क्रिया । तस्या यद्रूपं तत् कर्म । तद्धि ईप्सिततमम् । चक्षुः, मनः, बुद्धिः इति करणानि । विज्ञानात्मा कर्ता । विज्ञानात्मनिर्वृत्ताया दृष्टिक्रियाया फलं रूपोपलब्धिः । कर्ता क्रियासाधनत्वेन विनियुक्तः, क्रियासिद्ध्युत्तरकाले फलं कस्यापि भविष्यति । तद्दर्शयितव्यं न कर्ता' (वा आ गि पा १२३६-१२३७)[1] इति ॥

तदेतदेव प्रत्युक्तं भाष्ये –

तृजन्तेनैव दृष्टिकर्तृत्वस्य सिद्धत्वात्, 'दृष्टेः' इति निरर्थकम् । तदा 'द्रष्टारं न पश्येः' इत्येतावदेव वक्तव्यम् । यस्माद् धातोः परस्तृच् श्रूयते । तद्धात्वर्थकर्तरि हि तृज् स्मर्यते । 'गन्तारं भेत्तारं वा नयति' इत्येतावानेव हि शब्दः प्रयुज्यते, न तु 'गतेर्गन्तारम्', 'भिदेर्भेत्तारम्' इति

1 भर्तृप्रपञ्चवाक्यानि टीकायां तत्र तत्रोदाहृतानि समाहृत्य प्रायशस्तथैवोद्धृतानि बृहदारण्यकभाष्यतद्वार्तिकान्यतरपृष्ठसंख्यया परामृश्यन्ते इति सर्वत्रात्र बोध्यम् ॥

असति अर्थविशेषे प्रयोक्तव्य । न चार्थवाहुल्येन हातव्य सत्या गतौ । न च प्रमादपाठ । सर्वेषाम् अविगानात्' (बृ भा ३-४-२, पा ८०८) इति ॥

वार्तिके च–

> यथा प्रश्नमिय तावत् प्रत्युक्तिर्नोपपद्यते ।
> यतो दृष्ट्यर्थसभाव्य उक्त प्रश्नविशेषणम् ॥
> साक्षादित्यादिक यस्माद्वचनागापि युज्यते ।
> विशेषण यथोक्त तत् कारके दृष्टिकारिणि ॥
>
> वा ३-४-१७७, १७८ इति ॥

उषस्तप्रश्नो विज्ञानात्मविषयक, कहोलप्रश्नस्तु परमात्मविषयक – इति भर्तृप्रपञ्चमतम् । यतो माध्यन्दिनपाठमनुसृत्योपनिषद व्याकुर्वद्भि स्तैर्लिखित 'पूर्व प्रश्न परमात्मविषयकोऽय विज्ञानात्मविषय । अस्य हि विज्ञानात्मन परमात्मन्यप्ययो वक्तव्य । एकस्मिन् प्रकरणे द्वयोरुक्तेरन्तरतमत्व परमात्मन्युच्यमान विज्ञानात्मनि सिद्ध भविष्यति शोकमोहाद्यतीतता प्रकाशमात्ररूपता च विज्ञानात्मन्युच्यमाना परमात्मनि सिद्धा भविष्यति । पञ्चमाध्यायशेषेण परमात्मनो निर्णयो वक्ष्यमाण, षष्ठेन विज्ञानात्मन । अपुनरुक्तेन हि द्वितीयेन प्रश्नेन भवितव्यम्' (वा आ गि पा १२४१–१२४२) इति ॥

"अत्र 'दृष्टेर्द्रष्टा' इति वाक्यस्य भाष्यसमताभिप्राय प्रागेव (ख ३८) वर्णित । प्रश्नयोर्भिन्नविषयत्व त्वेव निराकृतम् –

> " तन्न । 'ते' इति प्रतिज्ञानात् । ' एष त आत्मा ' इति हि प्रतिवचने प्रतिज्ञातम् । न चैकस्य कार्यकरणसघातस्य द्वौ आत्मानौ उपपद्येते । एको हि कार्यकरणसघात एकेनात्मना आत्मवान् । न च उषस्तस्यान्य , कहोलस्यान्यो जातितो भिन्न आत्मा भवति । द्वयोरगौणत्वात्मत्वसर्वान्तरत्वानुपपत्ते । यद्येकम् अगौण ब्रह्म द्वयो , इतरेण अवश्य गौणेन भवितव्यम् , तथा आत्मत्व सर्वान्तरत्व च । विरुद्धत्वात् पदार्थानाम् । यद्येक सर्वान्तर ब्रह्म आत्मा मुख्य , इतरेण असर्वान्तरेण अनात्मना अमुख्येन अवश्य भवितव्यम् । तस्मादेकस्यैव द्वि श्रवण विशेषविवक्षया " बृ भा ३–५–१, पा ८१० ॥

पुनरुक्तिदोषस्तु, एव परिहृत –

" पूर्वस्मिन् प्रश्ने अस्ति व्यतिरिक्त आत्मा यस्याय सप्रयोजको बन्ध उक्त –इति । द्वितीये तु तस्यैव आत्मनोऽशनायादिसंसारधर्मातीतत्व विशेष उच्यते, यद्विशेषपरिज्ञानात् सन्न्याससहितात् पूर्वोक्ताद् बन्धनाद् विमुच्यते । तस्मात् प्रश्नप्रतिवचनयो 'एष त आत्मा' इत्येवमन्तयो स्तुल्यार्थत्वं " ॥ पा ८१०

'पश्यन् वै तन्न पश्यति' इत्यादिश्रुतिव्याख्यानम् –

८१ 'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति, न हि द्रष्टु दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्त यत्पश्येत्' (बृ ४–३–२३) इत्यारभ्य 'यद् वै तन्न विजानाति ' (बृ ४–३–३०) इत्यन्त सुषुप्तसंधिरूप्याम्नातम् । तत्र स्वय-ज्योति स्वभावोऽप्यात्मा किमिति तत्रावस्थाया न पश्यति ? –इत्याशङ्का-परिहारत्वेन भर्तृप्रपञ्चा एव व्याचख्यु –

" पश्यन्नेवाय तस्मिन् काले भवति । न चास्य विशेषज्ञान प्रादुरस्ति । द्रष्टाय पुरुषो दृष्टिक्रियाया कर्ता दृष्टिक्रियाभिव्यक्तस्य रूपस्य बुद्ध्या उप हृतस्य विज्ञाता । तत्रापि बुद्धिप्रत्ययस्य घटादेश्च ग्राह्यग्राहकभावेन सबन्धात् क्रियान्तरनिर्वृत्तौ द्रष्टैव । तत्र यस्मिन पुरुषे दृक्शक्ती रूपग्रहणादि सदन्विनी, विज्ञानात्माधीनो यो दर्शिक्रियाभाव, स कर्तृगत । यावद्गुणि-भाविनो हि गुणा, यावदग्निस्तावदौष्ण्यम् । तस्माद् यावद्द्रष्टा तावद् दृष्टि रिस्यपरिलोप । नित्यो हि द्रष्टा । न ह्यस्य विनष्टु शील विद्यते । सर्वात्मभावात्, अद्वैतत्वाच्च । येन ह्यस्यान्येन द्वितीयेन नाश आशङ्क्यते न तदस्ति, तेनाविभक्तत्वात्तस्य । न च तेनैव तस्य विनाशोऽस्ति । अविनाशित्वान्नित्य । तस्य नित्यस्य द्रष्टुर्नित्यो गुणो दृष्टिरवस्थितैवास्ते । स तया दृष्ट्या अविपरिलुप्तया पश्यन्नेवास्ते इति स्थितम् । यदि पश्यन्नेवास्ते कथ न पश्यतीति ? शृणु यथा पश्यति, न पश्यति च । तत्तु द्वितीय नास्ति यत्सबन्धात् विशेषविज्ञान प्रादु ष्यात् । ननु च द्वैताद्वैतविषयत्वे स्यादेव विभक्त द्रष्टव्यम् । स्याद्विभक्तम्, न त्वन्यत्वत । यदि हि ततोऽन्यद् विभक्त स्यात्, पश्येत्, न तु तद्द्वितीयमस्ति । तस्मात्,

दृक्शक्तेर्विद्यमानत्वात् पश्यन्नेवास्ते, न तु द्रष्टव्य प्राप्नोति यतोऽतो नोपलभते । तद्यथा अग्निर्ज्वलन्नपि नानभ्याहित दहति तद्वत् । " (वा पृ १६५२-१६५६) ॥

अत्र दृष्टिश्रुत्यादीना भिन्नधर्मत्व विज्ञानात्मनो धर्मित्व चाङ्गीकृत्य व्याख्यातमिति स्पष्टम् । तत्र धर्मभेदपक्ष इत्थमनूदित आचार्यै –

'किं पुनर्दृष्ट्यादीनाम् अग्नेरौष्ण्यप्रकाशज्वलनादिवद् धर्मभेद, आहोस्वित् अभिन्नस्यैव धर्मस्य परोपाधिनिमित्त धर्मान्यत्वमिति ? अत्र केचिद् व्याचक्षते । आत्मवस्तुन स्वत एवैकत्व नानात्व च । यथा गोर्गोद्रव्यतया एकत्वम्, सास्नादीना धर्माणा परस्परतो भेद । यथा स्थूलेष्वेकत्व नानात्व च तथा निरवयवेष्वमूर्तवस्तुषु एकत्व नानात्व चानुमेयम् । सर्वत्राव्यभिचारदर्शनात् आत्मनोऽपि तद्वदेव दृष्ट्यादीना परस्पर नानात्वम्, आत्मना चैकत्वम्-इति (बृ भा पा ८९८) ॥

इति । निरसन त्वित्थ कृतम् –

न । अन्यपरत्वात् । न हि दृष्ट्यादिधर्मभेदप्रदर्शनपरमिद वाक्य किं तर्हि, 'यदि चैतन्यात्मज्योति, कथ न जानाति सुषुप्ते ? नूनमतो न चैतन्यात्मज्योति – इत्येवमाशङ्काप्राप्तौ तन्निराकरणायैतदारब्ध यद्वैत-तदित्यादि । तत्र दृष्ट्यादिधर्मभेदकल्पना विवक्षितार्थानभिज्ञतया । सैन्धवघनप्रज्ञानैकरसघनश्रुतिविरोधाच्च न च निरवयवेष्वनेकात्मता शक्यते कल्पयितुम् । दृष्टान्ताभावात् । यदप्याकाशस्य सर्वगतत्वादिधर्मभेद परिकल्प्यते परमाण्वादीना च गन्धरसाद्यनेकगुणत्वम्, तदपि निरूप्यमाणे परोपाधिनिमित्तमेव भवति । तस्मान्न निरवयवस्यानेकधर्मवत्त्वे दृष्टान्तोऽस्ति । एतेन दृगादिशक्तिभेदाना पृथक् चक्षूरूपादिभेदेन परिणाम-भेदकल्पना परमात्मनि प्रत्युक्ता ॥ " बृ भा पा ८९८-९००

[ अत्र भाष्यकारमत तु पूर्वमेव द्रष्टद्रष्टव्यविवेकप्रकरणे प्रदर्शितम् (ख ३८) तत एवानुसधेयम् ॥ ]

वार्तिकेऽपि भर्तृप्रपञ्चव्याख्यानमिद विस्तरतो निरस्तम् । तत्रैष सार । 'पश्यन्' इति यदि द्रष्टुर्याथात्म्यमुच्यते, तर्हि न तस्य दृष्टिक्रिया उच्येत । दृष्टि क्रिया चेत् तस्य क्रियात्वादेव विपरिलोप स्यादेव ।

द्रष्ट्रा क्रियते न चासौ दृष्टिर्विपरिलुप्यते इत्येतद् वचो व्याहतम्, श्रुत्य प्रामाण्यावहम्, पुनरमनित्यानित्यसगुणानि च । न पश्यतीत्यनुवाद-मात्रत्वात् नैतद्धर्मान्तरवाचकम् । न च कूटस्थस्य दृष्टिकर्तृत्व रूपादि-विज्ञातृत्व वा घटते । न च गुणिस्थित्यनुरोधित्व गुणानाम् । केशकृष्ण त्वादिनाशदर्शनात्, अङ्गीकृतेऽप्यनुरोधित्वे अगुणभूताया दृष्टिक्रियाया नात्मानुरोधित्व भवति । द्रष्टुर्निर्विशेषत्वे तद्धर्मस्यालोप इत्ययुक्तम्, कारक रूपश्चेत् न तस्यापि नित्यत्वम् । द्रष्टव्याभावात् दृष्ट्यभाव इत्यप्ययुक्तम् । यस्माद्द्रष्टृदृष्ट्योरप्यभाव एव तदानीमवगम्यते । तद्भावे हि तयो सुप्तावप्यनुभव स्यात् । सुप्तौ दृश्यसत्त्वेऽपि न तदन्यत्ववतोऽस्ति, अतो न पश्यति–इत्यपव्याख्यानम् । यतो जागरितेऽपि भेदाभेदसत्त्वात् तत्रात्यन्त विभक्तमस्ति । अन्यद् विभक्त द्रष्टव्य नास्तीति द्वैताद्वैतवादे पुनरुक्तिरेव स्यात् । अस्मन्मते साक्ष्य द्रष्टव्यम्, द्रष्टादि त्वकल्पितात्मापेक्षया विलक्षणमित्यन्यत, द्रष्टृदृश्यदर्शनार्थास्तु मिथो विभक्ता – इत्यपौनरुक्त्य मिति । भेदाभेदवादोऽपि विस्तरशोऽत्र वार्तिके निरस्त । (वा पा १६४७ प्रभृति) ॥

**ब्रह्मविद्याधिकारी –**

८२ 'आत्मेत्येवोपासीत' इति सूत्रिताया ब्रह्मविद्याया प्रयोजनाभिवित्सया 'किमु तद्ब्रह्मावेद् यस्मात् तत्सर्वमभवत्' इति चोदनामुत्थाप्य प्राह श्रुति – 'ब्रह्म वा इदमग्र आसीत् तदात्मान मेवावेत् अह ब्रह्मास्मीति । तस्मात्तत् सर्वमभवत्' (बृ १–४–१०) इति । तत्र ब्रह्मशब्दस्य भर्तृप्रपञ्चाना व्याख्यानम् 'ब्रह्मभावी पुरुषो ब्राह्मण' इति । द्वैतैकत्वापरब्रह्मविद्यया कर्मसहितया अपरब्रह्मभावमुपसपन्नो भोज्यादपावृत्त, सर्वप्राप्त्या उच्छिन्नकामकर्मबन्धन परब्रह्मभावी ब्रह्म-विद्याहेतो ब्रह्मेत्यभिधीयते' (बृ भा पा ६६९) इति तेषा मतमनूदित भाष्ये ॥

खण्डित च–'तन्न । सर्वभावापत्तेरनित्यत्वदोषात् । न हि सोऽस्ति लोके परमार्थत , यो निमित्तवशात् भावान्तरमापद्यते, नित्यश्च–इति । तथा ब्रह्मविज्ञाननिमित्तकृता चेत्(च ?) सर्वभावापत्ति , नित्या च इति विरुद्धम् (पा ६६९) इति । अविद्याकृतम् अब्रह्मत्वम् असर्वत्व च ब्रह्मविद्यया निवर्त्यते, न तु वस्तुधर्मभूतम्–इति भाष्यकाराणामाशयो वाक्यशेषे आविष्कृत । तथा चात्रापि अध्यारोपापवादप्रक्रियैवाश्रयितव्या इति फलिष्यति ॥

वार्तिके तु–भर्तृप्रपञ्चानाम् उपोद्घातभाष्यम् इत्थ वर्णितम् –

"द्वैतैक्यात्मक कर्मज्ञानफलमनुभूय तस्मादप्युत्कृष्टसाधन बुभुत्सव पृच्छन्ति 'किमु तद्ब्रह्मावेद् यस्माद् तत्सर्वमभवत्' इति । सर्वैकत्व पर ब्रह्म परमात्मा य , स आत्मा । अनेनात्मनात्मवन्ति भूतानि । तत प्रच्युतानाम् अविद्याकृतो हिरण्यगर्भ आत्मा सर्वसाधारण , तेनात्मना सर्वसत्त्वान्यात्मवन्ति । यावत् किञ्चिदन्यत् विराड्देवतादि तत्सर्वमविद्याकृतम् । एते सर्वेऽप्येकैकस्यात्मनो यथादर्शनमनुभूयन्ते । तत्फल ता एता दर्शनावस्था , एतदेव चासा कार्यम् । तद्यथा पिण्डात्मदर्शी पिण्डात्मानमेवाभिसपद्यते प्रेत्य । एव दैवम् , एव विराजम् , एव सूत्र च । एव परमात्मदर्शनावस्थाया परमात्मभाव एव कार्यम् । तत्र परमात्मा नित्य । कदाचिद्दर्शनमनित्यम् । कदाचिदविद्यातिरस्कृत भवति । सा अविद्या 'अहमेवेद सर्वम्' इत्येतस्यार्थस्यासबोध । स एष सबोधो नित्य परमात्मनि, अनित्य इतरस्मिन् तिरस्कृतविज्ञाने सासारिके । तत्रैव सति योऽविद्यया असर्वभावमित्वाविद्यया सर्वात्मदर्शनेन सर्वभावमभिसपन्न , स पुरापि ब्रह्मैवाभूदित्यत सबोधाद् ब्रह्म सपद्यते " ॥ आ गि वा ११२४–११६२, पा ६५८–६६६

अत्र टीकाकृता यानि यानि भर्तृप्रपञ्चवाक्यानि उद्धृतानि, तानि तानि प्रायशस्तथैव विलिख्य वार्तिकाक्षरै शेषपूरण कृतम् । अत्रैतद् विचिन्त्यम् – किं भर्तृप्रपञ्चा यथावार्तिकव्याख्यान भगवत्पादसमताविद्याध्यारोपितद्वैतनिवृत्तिर्विद्यया भवतीत्यभिप्रयन्ति, अथवा अविद्यया जीवत्व प्राप्तस्य ब्रह्मोपासनारूपविद्यया विनिवृत्ति ततो ब्रह्मप्राप्ति चेच्छन्तीति ? तत्र वार्तिकोक्तप्रकारेणाधस्ताद्वर्णितनीत्या 'सर्वैकत्वावबोधोऽय ब्रह्मविद्या

गिरोच्यते । द्वैतम्य [illegible] कल्पसर्पादितत्त्ववत् ॥ ' (वा १२३८, पा ६६१) इति सदृष्टान्त यद्यमीभिराचार्यै ब्रह्माध्यारोपितमेव तु सर्वमविद्यया इत्यभ्युपगतमभविष्यत् तदा 'पूर्णमद' इति वाक्यस्य कार्यकरणोभयसत्यत्वपरत्वेन व्याख्यानम्, सर्वथा द्वैताद्वैतात्मकत्व च ब्रह्म, अन्यत्रोपवर्णित व्यरोत्स्यत इत्यतस्तदीय भाष्य वार्तिककारैरेवेत्थ नीतमिति वय युक्तमुत्पश्याम । तथा सतीदमपि वार्तिक सगच्छते 'भर्तृप्रपञ्च प्रस्थानमेवमेतद्यथोदितम् । इतोऽन्यत्रापि तद्भाष्य गमयेदेवमेव तु ॥ ' (वा १९६४ पा ६६६) इति । टीका च– 'कथमुपोद्घातसबन्धि तद्भाष्य विवर्तानुमारि व्याख्यातम् ? तदीयभाष्यान्तरस्य परिणामानुसारित्वाद्– इत्याशङ्क्याह' इति ॥

ननु च 'ब्रह्मभाविरव श्रुत्वा ये तु व्याचक्षतेऽन्यथा । तानुद्दिश्य विचारोऽय प्रारब्धो गुरुभि स्फुट ॥ (वा ११६५, पा ६६६) इति समनन्तरोत्तरवार्तिके भर्तृप्रपञ्चमतमन्यथाव्याचक्षाणा एव भाष्यकारैर्निराकृता इति स्पष्टमभिहितम् । टीकाकारोऽप्याह ' विवर्तवाद ते नेच्छन्तीति ये भ्राम्यन्ति तानुद्दिश्य तद्भ्रान्तिध्वस्त्यर्थं विचारो भाष्यकारैरवतारित ' इति । तत् कथ सगमनीयम् अस्मिन् पक्षे इति चेत् । अत्र विभज्योत्तर देयम् । ' सा अविद्या अहमेवेद सर्वम् इत्यस्यार्थस्यासबोध ' इतीहोक्त भर्तृप्रपञ्चै , 'ब्रह्म वा इदमग्र असीत्' इत्यादिवाक्यव्याख्यानेऽपि लिखितम् " 'इदम्' इति नामरूपव्याकृत जगन्निर्दिश्यते । स इद जगदात्मत्वेनाभिसपन्नोऽभूदविद्यया । अय पुन समतीत्य स्वयमेवात्मानम् अवेत् " (पा ६६९) इति । अतोऽविद्यया यो नामरूपजगदात्मत्व प्रपेदे इव, स एव ब्रह्मात्मविद्यया सर्वमभवत्–इत्यपि तदीयभाष्यार्थो वर्णयितु शक्यत एव । तथा चेदस्मदभिमतसिद्धि । यदा पुन ' तत्फल ता एता दर्शनावस्था:, एतदेव चासा कार्यम् । पिण्डदेवविराट्सूत्रादि यथा । एव परमात्मदर्शनावस्थाया परमात्मभावकार्यम् ' इति तद्भाष्याक्षरालोचनया परमात्मभावस्य उपासना-

रूपविद्याकार्यत्व स्वीक्रियते । तदा भाष्यकारोक्तखण्डनमुपतिष्ठते 'सर्वे भावापत्तेरनित्यत्वदोषात्' इत्यादि। अतो भर्तृप्रपञ्चमतमेव गमयित श्रुति युक्तिसमत भवेत्–इत्यभिप्रायक वार्तिकम् । अत एव हि उत्तरत्र 'भर्तृ प्रपञ्चभाष्यस्य प्रचारोऽस्य प्रदर्शित । श्रुत्यक्षरानुसारेण तथानुभववर्त्मना ॥' (वा ११८८, पा ६७१) इत्याह । टीकाकृदप्याह 'प्रचार, विवर्तवादानुसारेण प्रवृत्तिप्रकार । किमित्येव तदीयभाष्यस्य गतिरुच्यते? तत्राह– श्रुतीति ॥' इति ॥

अत एव भाष्यकारै वार्तिककृद्भिश्च सममेव मूर्तामूर्तब्राह्मणवाक्य-व्याख्यानावसरे भर्तृप्रपञ्चमतम् 'अविद्या स्वत उत्थिता अनागन्तुकाप्यूषर वदनात्मधर्म' (बृ भा पा ७५३) इति कल्पना निरस्ता दृश्यते । इहाप्युक्तम् –

> "अनित्यत्वे च कर्मफलतुल्यता–इत्युक्तो दोष । अविद्याकृतासर्वत्व-निवृत्ति चेत् सर्वाभावापत्ति ब्रह्मविद्याफल मन्यसे, ब्रह्मभाविपुरुषकल्पना व्यर्था स्यात् । तदा युक्त यत् परमार्थत आसीत् पर ब्रह्म ब्रह्मशब्दस्य मुख्यार्थभूतम्, 'ब्रह्म वा इदमग्र आसीत्' इत्यस्मिन् वाक्ये उच्यते इति वक्तुम् । यथाभूतार्थवादित्वाद् वेदस्य । न त्वियं कल्पना युक्ता ब्रह्म-शब्दार्थविपरीतो ब्रह्मभावी पुरुषो ब्रह्मेत्युच्यत इति । श्रुतहान्यश्रुतकल्पनाया अन्याय्यत्वात् ॥" बृ भा १-४-१०, पा ६६९

इत्यादि । तत सर्वमनवद्यम् ॥

## अवस्थात्रयपरीक्षणम्–

८३ अस्मिन् प्रस्थाने जाग्रत्स्वप्नाद्यवस्थापरीक्षणस्य स्थान निर्णिनीषूणा कृते वार्तिकटीकाया तत्र तत्र प्रकीर्णतयोदाहृतानि वाक्यानि सकलय्यात्र प्रदर्श्यन्ते ॥

(१) तत्र गार्ग्याजातशत्रुसवादरूपग्रन्थस्य सुप्तपुरुषविचार-गर्भितस्य सबन्धोक्तिरियम् –

> प्रवेशवाक्ये सूत्रितो विज्ञानात्मा । अत्रेतिहासे तस्य निर्णय क्रियते । तत्र भोक्तृश्च देवता, करणाधिष्ठात्र्यश्च, किमन्यद्विज्ञानात्मना कार्यमस्ति?

– इत्येतस्मिन् दर्शने स्थितो गार्ग्यः पूर्वपक्षपरिग्रहायोत्थाप्यते । काश्यात्मना श्रुतिः सिद्धान्तमुक्तवती ॥ वा पा ८९०, ८९१

सेयं सबन्धोक्तिरयुक्ता । आनन्दानन्मुक्तिरिति प्रकृतार्थासगते । देवतास्तित्वनिरासश्रमस्य निष्फलत्वाच्च । देवतास्तित्वपक्षेऽपि देहाद्भिन्नस्य विज्ञातुरस्तित्वादेरिष्टत्वात् – इति वार्तिके खण्डितमिदं व्याख्यानम् (वा २–१–२४, २५) ॥

(२) सुप्तोत्थितं पुरुषं प्रति काश्यस्यायं प्रश्नः –

**यत्रैष एतत् सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदा-भूत्कुत एतदागात् (बृ २–१–१६) ॥**

इति प्रश्नाभिप्राय एवं व्याख्यातो भर्तृप्रपञ्चैः ॥

**चोद्यगर्भप्रश्नोक्तिरियम् । भोक्तुर्ज्ञानस्वभावत्वे करणेषु विद्यमानेषु कथं कदाचित् प्रतिबोधः ? अथ पुनर्विहायैतच्छरीरम् असंनिहितोऽभूत् विनष्टो वा, कुतः प्रत्यागमनम् ? ॥ वा पा ९१९**

अस्य व्याख्यानस्य निरास एवं वार्तिके कृतः । भोक्तुर्ज्ञानस्वभावत्वे कथं कादाचित्कः प्रतिबोधः – इति प्रश्नार्थवर्णनम् असंगतम् । 'प्रत्यगात्मन्येवाभूत्, तत एव चागात्' इति वक्ष्यमाणप्रत्युक्तिप्रतिकूलत्वात् । 'अथ पुनर्विहायैतच्छरीरम् असंनिहितः' इत्यपि न प्रश्नो युक्तिमान् । यतो गत्यादिसाधनानां देह एव स्थितेः कुतो देशान्तर-गतिर्भवेत् ? ज्ञानस्वरूपस्य, पुनरुत्थाप्यमानस्यास्य कुतो विनाशशङ्का ? (वा २–१–२०३, २०४) इति ॥

**(३) यत्रैष एतत् सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते । तानि यदा गृह्णात्यथ हैतत् पुरुषः स्वपिति नाम ॥ बृ. २–१–१७**

इत्यादिवाक्यशेषम् एव व्याचक्रुर्भर्तृप्रपञ्चा –

> बुद्धिविज्ञानेन वागादिविज्ञानम् आदाय हृदयाकाशे शेते। ततो नाडीभि प्रसृत्य स्वप्न पश्यति। अतोऽत्र 'विज्ञानेन विज्ञानम्' इत्युभयत्रापि करणसाधन एव विज्ञानशब्द । तस्य हि ज्ञानात्मनो या च स्वप्रकाशवृत्ति, सा हृदयद्वारेण व्युच्चरतीति हृदय विशेषायतनम् । तत्र हि भावनाविज्ञान विशेषेणाभिव्यक्तमास्ते यत, एव कृत्वा 'तस्मिन् शेते' इत्युच्यते ॥ वा पा ९२८-९२९

अस्य विमर्शनावसरे वार्तिककारैरेवमुक्तम् । 'गृहीत मन' इति वाक्यशेषे सवासनस्य मनस स्वापे उपसहारश्रुते, बुद्धिविज्ञानेनेति कल्पना व्यर्था । अथ वागादीनि स्वय गृह्णाति तदैन स्वपितीत्याचक्षते–इत्येव सुव्याख्यानम् । 'स्वमपीतो भवति' (छा ६-८-१) इति समाख्यावशात्, 'गृहीत एव प्राणो भवति' इत्यादियुक्तिप्रदर्शनाच्च' इति (वा २-१-२५६, २५७) । **भाष्येऽपि** 'सत्यम्, स्वपितीति नामप्रसिद्ध्या आत्मन ससारधर्मविलक्षण रूपमवगम्यते, न त्वत्र युक्तिरस्तीत्याशङ्क्याह तस्मादुपसहृतेषु वागादिषु क्रियाकारकफलात्मताभावात् स्वात्मस्थ एवात्मा भवतीत्यवगम्यते' (बृ भा २-१-१७) इत्युक्तम् ॥

(४) सुषुप्तावस्थाया किमित्यात्माद्वितीय न पश्यति ? – इत्यत्र भर्तृप्रपञ्चानामभिप्राय प्रागेव (ख ८१) अनूद्य विमृष्टमिहाप्यनुसधेयम् ॥

(५) **कूर्चब्राह्मणे** याज्ञवल्क्य पृच्छति जनकम् '**इतो विमुच्यमानः क्व गमिष्यसि**' इति (बृ ४-२-१) । जनकस्योत्तरम् '**नाह तद्भगवन् वेद यत्र गमिष्यामीति**' अस्य ग्रन्थस्याभिप्राय एवमभिहितो भर्तृप्रपञ्चै –

> 'यज्जनको वेद तत्त्वम्, न तत्प्रतिपत्तौ मार्गम्, स तु तद्दर्शनेन परिशोध्य । जनकस्तु जानन्नपि परमात्मान दर्शनमार्गस्य परोक्षत्वादाह नाह तद्भगवन् वेदेति' ॥ वा पा १२६१-१२६२

एतस्य वार्तिके निराकरणं त्वित्थम् – पूर्वस्मिन् ग्रन्थे नात्मज्ञानमुक्तम्, अतो राज्ञो ब्रह्मवित्त्वे प्रमाणं न पश्यामः । न च 'क्व गमिष्यसि ?' इति गत्यर्थः प्रश्नः । गन्तव्यमेव हि पृच्छ्यते, न गतिरिति । न च ब्रह्मणि 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा' (बृ ३–४–१) इत्यात्मानन्यत्वेनावगते गतिरवकल्पते । 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ ४-४-६), 'गतिरत्र नास्ति' (का १–२–८), 'आत्मैवेदं सर्वम्' (छा ७–२५–२), 'ब्रह्मैवेदं विश्वम्' (मु २–२–११)- इत्यादिश्रुतिविरुद्धा चेयं कल्पना । मुक्तेरविद्यामात्रव्यवहितत्वाच्च (वा ४–२–२० प्रभृति २९ पर्यन्तम्, पा १३६२–१३६३) इति ॥

एतेन वैश्वानरादितुरीयान्तमुक्तमत्रोपासनार्थमेवेति स्याद् भर्तृप्रपञ्चमतमित्युन्नीयते । उत्तरत्र 'ज्ञानादन्या गतिश्चेत् स्यात् प्राप्स्यसीत्येव तं वदेत्' (बृ ४–२–९५) इति वार्तिकदर्शनात् 'अभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः' (बृ ४–२–४) इति वाक्यव्याख्यानावसरे ॥

(५) उत्तरस्मिन्नपि ब्राह्मणे जाग्रत्स्वप्नादिपरीक्षा वितानिता । तत्र '**स समानः सन्नुभौ लोकावनुसञ्चरति**' (बृ ४–३–७) इत्यादि विषयवाक्यम् । तत्र भर्तृप्रपञ्चव्याख्या –

> मिथो विलक्षणानामपि चक्षुरादीनां एकदेहस्थत्वेन सालक्षण्यमप्यस्ति । एवं सालक्षण्येऽपि सत्येव बुद्धेरेव धर्मो विलक्षणोऽस्य भोक्तृत्वम् । तत्र कथं व्यतिरिक्ततोपपद्यते ? – इति शङ्कां निरसितुं वाक्यम् । स एष यदि व्यतिरिक्तो न स्यात्, उभयोरपि लोकयोर्भूतसमुदायाविशेषात्, उभयत्रापि भोग उत्पद्येत । न तु भवतीत्यतोऽवगम्यते अस्ति किञ्चित् व्यतिरिक्तं यद्भावाद् भवति, यदभावान्न भवतीति ॥ वा ४-३-४२४ प्रभृति ४२९ पर्यन्तम्, पा १४५०, १४५१

तदेतदनुमोदितं वार्तिके ॥

(७) 'तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने' (बृ ४-३-९) इत्यादिवाक्यस्य भर्तृप्रपञ्चोक्त सबन्ध –

'कतम आत्मेति, योऽय विज्ञानमय प्राणेपु हृद्यन्तर्ज्योति' (बृ ४-३-७), 'स समान सन्' (४-३-७), 'स वा अय पुरुषो म्रियमाण पाप्मनो विजहाति' (बृ ४-३-८) इति च तान्येतानि त्रीणि वस्तून्युपन्यस्तानि । एतेषा निर्णय स्वप्नदृष्टान्तेन वाच्य ॥ वा पा १५३१

वार्तिके नैतत्तिरस्कृतम्, टीकाया चोक्तम् उक्त 'सबन्धमनुजानाति' इति ॥ आ गि वा ८३४, पा १५३२

(८) स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति ह्यसङ्गो ह्यय पुरुषः ॥ (बृ ४–३–१६) इत्यत्र अनन्वागतत्वम् असङ्गत्व च कीदृशम्? – इत्यत्र भर्तृप्रपञ्चा –

अनन्वागतवाक्येन कर्मविवेक कृत, असङ्गवाक्येन कामनिर्मोक उच्यते । ननु जागरितदेशेऽप्युपचयापचये न क्रियैव हेतु, किं तर्हि कामो हेतु । स चास्योपचयमूलम् अनुच्छिन्न काम स्वप्ने, तस्माद्भवितव्य मुपचयेन स्वप्नेऽपि । न । य काममासङ्गम् उपचयमूल वृत्तिरूप पश्यसि, तेन विमुक्तश्चायमस्मिन् काले । मनस स्वप्ने ग्रस्तत्वात्, वासनामात्रशेषत्वात् । शरीरसबन्धिनश्च कामा मृत्यो रूपाणि, प्रविभक्तश्चाय शरीरेण भवति । यथैव रथादीनाम् असता निर्माण बाह्यानाम्, तथा शरीरेन्द्रियाणा चाऽऽन्तराणाम्, यथैव सर्वस्यासतो विनिर्माणम्, असतो दर्शनम् - एवमासङ्गस्यापि शरीरे न्द्रियपक्षभूतस्य असतो दर्शनम् । अतो निरासङ्ग शुद्धोऽय पुरुष । भावना हि कर्मगुण एव सती पुरुष भावयति । यथा पुष्पगन्ध पुट भावयति, स पुष्पगुण एव न पुटगुण, एव भावना कर्मगुण एव नात्मगुण । भावनानु रञ्जिते विज्ञानात्मविज्ञाने कर्तृत्वोपचार । तामेवानुरञ्जना कर्तृत्वेनाङ्गीकुरुते कर्म उत्पत्तिभोगकालयो । कर्मणोऽप्यत्यन्त प्रयोगाश्रितत्वाद् बुद्ध्यादि सनिकर्षपक्षतैव न कदाचनात्मगुणता । बुद्ध्यादिक्षयेऽपि कर्मप्रयोगापेक्ष मेवास्ते स्वात्मलाभाय, नात्मानमपेक्षते । तस्मात् अयमेकस्मिन् स्वप्ने कर्म-गुणस्यैवासङ्गस्य कर्मस्थस्य द्रष्टा प्रविविक्त आत्मा निरासङ्ग । यस्माचासङ्ग, अतो न कर्मोपचय स्वप्ने इति ॥ (वा १०१५-१०४२, पा १५६३-१५६४

इदमपि व्याख्यानमनिराकृतत्वादङ्गीकृतमिति भाति । पुष्पगन्धवत् अन्यगुणस्य अन्यजातीयवस्तुभावयितृत्व परम् एव निराकृतमन्यत्र –

पुष्पादिवासनाना हि वस्त्रादिष्वेव सगति ।
सजातीयेषु नियता दृश्यते नान्यजातिषु ॥
द्रव्येऽपि न खलु व्योम्नि वासना काचिदीक्ष्यते ।
अद्रव्ये चासजातीये चैतन्ये वासना कुत ॥
वासनाकारता गच्छेच्चैतन्य चेत् कपालवत् ।
वासनानि फलत्व स्याच्चैतन्यादपृथक्स्थिते ॥
न हि श्रोत्रोत्थविज्ञान रूपवासनयाञ्च्यते ।
विषयस्वाविशेषेऽपि कुतोऽसङ्गस्वतश्च्युते ॥

बृ वा २-३-१०५ प्रभृति १०८ पर्यन्तम् , पा १०१०

(९) 'तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्व चापर चैवमेवायं पुरुष एतावुभावन्तावनुसचरति स्वप्नान्त च बुद्धान्त च ॥' इत्यारभ्य 'तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभय रूपम् । तद्यथा प्रियया स्त्रिया सपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवाय पुरुषः प्राज्ञेनात्मना सपरिष्वक्तो न बाह्य किञ्चन वेद नान्तर तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूप शोकान्तरम् ॥ (बृ ४-३-१८ ४-३-२१) इत्यन्तवाक्यस्य भर्तृप्रपञ्चोक्त सबन्ध –

अस्य हि पुरुषस्य बाह्य कर्म बुद्ध्यादिप्रयोगाश्रितम् । तत कर्मणो भावना समेत्यैवम् आस्कन्दति । तयोर्विवेको व्याख्यात । अविद्या पुन स्वविज्ञानाश्रयैव, तदेव विज्ञान विकृत्य विपरीतग्रहाय प्रकल्पयति । स विज्ञानविशेषो बुद्ध्यादिपरपरया स्थूलीभूतो बाह्य प्रकाशो व्यवहाराय कल्पते । य आसङ्गकृत ससर्ग, तेन विवेको व्याख्यात । यस्त्वविद्याकृत समर्ग, तेन विवेको व्याख्यातव्य । आसङ्गस्तु विषयेन्द्रियद्वारेण बहिश्च समागम्य आत्मानमनुप्रविशति । तमेवानुसृत्य विज्ञान निर्गम्य बाह्यतो व्यवतिष्ठते । अविद्याद्वारा तस्यात्मसबन्ध, तत्रानर्थाधायकत्व च ।

तस्मान्निरासङ्गस्याविद्यारहितस्य मुक्ति , रोगादिसंगत्यभावे स्वास्थ्यवत् । अतोऽविद्याप्रविवेकार्थमेतावदुक्तम् । सुषुप्तौ ह्यविद्याकामकर्मविनिर्मुक्त स्वस्थो लक्ष्यते ॥ वा पा १५७३–१५७५

तदेतन्मतमेव निराकृत वार्तिके – आत्मातिरिक्त यदि नास्त्येवेत्यभ्युपगम्यते, तर्हि विषयेन्द्रियादि नास्त्येवाविद्याव्यतिरिक्तमिति सिध्यति। अत आसङ्गो विषयेन्द्रियद्वारा आगच्छतीति कल्पना अयुक्ता। न चाविद्या तमानयेत्, मिथ्याज्ञानमात्र हि तत्कार्यं नान्यत्। न चाविद्या आत्मसंश्रितेति युक्तिमत्। अविद्याप्रसिद्धयैव हि सा आत्मनीष्यते। अतो न स्वतो नापि परत अविद्या प्रत्यगात्मन्याश्रयिनव्या। आत्मन्यशेषविकारप्रतिषेधश्रुते, आत्मविज्ञान विकृत्याविद्या विपरीतज्ञान प्रकल्पतीत्यपि न युक्तम्। अतोऽविचारितसिद्धयैवाविद्या चिदाभासव्याप्ता – इति स्वीकार्यम् (वा ४–३–११०५ प्रभृति ११११ पर्यन्तम्, पा १५७६–१५७७) ॥

(१०) महामत्स्यदृष्टान्तस्तु भर्तृप्रपञ्चैरेव व्याख्यात –

यथैव बाह्यचक्षुष प्रकाशाथयो संसर्गाद् विशेषप्रकाशनाभिव्यक्ति, एव बुद्धीन्द्रियसंसर्गादुपलब्धिविज्ञानाभिव्यक्ति , तस्माद् व्यतिरिक्त विज्ञातुर्विज्ञाने न किञ्चित् प्रयोजनमिति चेत्, यदि व्यतिरिक्तो विज्ञाता न स्यात् तेन स्वप्नकाले भौतिकस्यैव ज्योतिषोऽविशेषारम्भे सति स्वप्नबुद्धान्तयो भूतमात्राणामविशेषेण विद्यमानत्वाद् यौगपद्येनोभयत्रोपलब्धि स्यात्, न तु भवति । अत उभयोरप्यनयो कुलाययो स्वप्नबुद्धान्तयोरन्यो व्यतिरिक्त परिद्रष्टा । ननु चात्मनोऽपि व्यापित्वे स्वप्नबुद्धान्तयो सान्निध्याद् यौगपद्येनोपलब्धिविज्ञानेन भवितव्यम् । अतो देवताहेतुक एवास्तु क्रम । ताता चाधिष्ठात्रीणा पर्यायेण वृत्तिरुपपद्यत इति । तदपि न । यतो देवताया विभुत्वात् प्रयत्नकार्येषु यौगपद्य न तु विज्ञानात्मन । अधिष्ठेयेन्द्रियाणा स्वप्नभूमावसंभवाच्च । धर्माद्यपेक्षया त्वात्मनस्तत्संभव । अनेन भोक्तृत्वप्रयुक्तत्वेन हेतुना प्रयत्नायौगपद्येन व्यतिरिक्तद्रष्टृग्रहणसिद्धि । तस्य हि स्वप्नान्तबुद्धान्तयोर्व्यापित्वेऽपि, योऽसौ द्रष्टृत्वेन कर्तृत्व प्रति यत्न, न स यौगपद्येन संभवति , तस्मात् तस्य पर्यायेण द्रष्टृत्वे

प्रवृत्तिरित्यवस्थित भवति । तदेवम् उपलब्ध्ययौगपद्यम् आत्मास्तित्वे लिङ्गम् । न हि देवताना स्वप्नकाले स्वव्यापार, ता उच्चिक्रमिषोर्लोकान्तर प्रति विशेषकार्याण्याध्यात्मिकानि हित्वा स्वानि स्थानानि प्रतिपद्यन्ते । 'अग्नि वागप्येति ' (बृ ३-२-१३) इत्यादिश्रुते । तथा स्वप्नकार्यं प्रनिपित्सोर्देवता अपक्रान्ता भवन्ति । न हि देवता कदाचिल्लिङ्ग जहाति , सा त्वनभिव्यक्ते लिङ्गे नाल विशेषकार्याय । उभयो कालयोर्व्यतिरेकात् व्यतिरिक्तो द्रष्टा , न भौतिक दर्शनम् , नापि देवताकृतम् ॥ वा पा १५७८-१५८३

अत्र भौतिकदर्शननिराकरणं न प्रत्युक्त वार्तिके । देवतायाम्तु भूतेभ्यो व्यतिरिक्तत्वेऽव्यतिरिक्तत्वे वा पृथङ्निराकरण व्यर्थमि युक्तम् (वा ४-३-११४७) । टीकायामप्युक्तम् 'महामत्स्यवाक्यस्य भर्तृप्रपञ्च व्याख्या उक्ता । तत्र देहात्मवादापोहार्थं तत्प्रवृत्तिमङ्गीकृत्य देवताया ज्ञानकर्महेतुत्वमाशङ्क्य निराकरणमयुक्तमित्याह ' (आ गि वा पा १५८३) इति ॥

(११) सुषुप्तप्रवेशमात्मनो दर्शयन्ती श्रुतिर्दृष्टान्तमाह –

**तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियत एवमेवाय पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्न पश्यति (बृ ४-३-१९) इति ॥**

तत्र भर्तृप्रपञ्चभूमिका –

अस्य हि द्वैतविषये विशेषविज्ञानम् आदित्यरश्मिवद् विकीर्णं जागरित देशवत् समन्तादवभासते । तत्र काम कर्मण फलम् , कर्मण एव तु वासना । यथालक्षणयैव भावनया तत्कर्म कृतम् , तथालक्षणमेव फल तस्य विज्ञानात्मन । सा भावना तदेव स्वप्रयुक्त फल प्रत्येकीभूता भवति । तदनुरञ्जितो विज्ञानात्मा काम कामयत इत्येतद् भवति । तत्र कामत स्वप्ननिर्माण सुखदु ख दर्शयति । विज्ञान पुनर्भावनापरिच्छेदविनिर्मातृ , विज्ञानानुविधायिनी हि कर्मणो विक्रिया । विज्ञानमप्येतद् विपरीतदर्शन मविद्या । सापि सति द्रष्टव्ये विपरीत ग्राहयेत् । स एष बाह्यो विज्ञानात्मन इत्युक्तम् । तत्र प्रयोक्त्री भावना, कर्म विकर्तृ । एव कामकर्मभावनाविज्ञानानां

परस्परापेक्षत्वादेकार्थता । तत्र भावनया कामयते (अ?)विद्यया पश्यति द्वैतविषयम् । अद्वैतविषये पुन सुषुप्तिस्थाने बाह्यस्य प्रयोज्यस्याभावात् कर्म निस्पन्दमास्ते , विज्ञानात्मगतापि भावना कार्याभावाच्छाम्यति । विद्यापि विपरीतस्य प्रविभक्तस्य ग्राहयितव्यस्याभावान्न विशेषविज्ञानाय कल्पते, दग्धेन्धनवह्निवत् । एव कृत्वा श्रुतिराह 'न कञ्चन काम कामयते, न कञ्चन स्वप्न पश्यति' इति कामकर्मादिनिर्मुक्तरूपमात्मनो वक्तुम् ॥ वा पा १५९०-१५९३

अत्र वार्तिके खण्डन न कण्ठरवेणोक्तम्, 'इद व्याख्यान युक्त मयुक्त वेति पक्षपातरहितै स्वयमेव विचार्यताम्' (वा ४-३-१२०३, १२०४) – इत्येतावदुक्तम् । टीकाकारेण तु लिखितम् 'जाग्रत्स्वप्नयोर्द्वैतविषयत्वम्, सुषुप्तस्याद्वैतविषयत्वम् – इति विभागोऽयुक्त । अवस्थात्रयस्य वस्तुत्वे अवस्तुत्वे वा तदयोगात्, आद्ये द्वैतस्यैव भावात्, द्वितीये अद्वैतस्यैव सत्त्वात्, समस्तव्यस्तताया निरस्तत्वादिति भाव' इति ॥ (आ गि वा पा १५९३)

(१२) सुषुप्ते दृष्ट्याद्यभावमुपपादयन्ती श्रुति –

**'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त यत्पश्येत्' (बृ ४-३-२३) इत्याद्या ॥**

अस्य भर्तृप्रपञ्चव्याख्यान वार्तिककारकृततद्दूषण च प्रागेव (ख ८१) सगृहीतमिति तत एवावगन्तव्यम् । तत्र सबन्धोक्तिस्त्वित्थ वर्तते –

अशोकान्तरम् (बृ मा) इत्युक्तम् । तदेवास्मिन् काले स्वेनात्मना ज्योतिर्मात्रेण भवति । आदित्यादिव्यतिरेकेण स्वयज्योतिष्ट्वम् । ननूक्त तद्विशेषज्ञानमविद्यापक्षस्यैवेति । तस्मात् 'अहमेवेद सर्वम्' इत्यपि तथैव स्यात् । न । सर्वोऽस्मीति ज्ञान विशेषवद्विज्ञानमपि नाविद्यापक्षस्य । नानात्व दर्शनकार्यरूप हि भयमविद्येत्युक्तम् । अहमेवेदम् सर्वमिति प्रतिपक्षभूता विद्येति च । तदेतदेकत्वदर्शन मथ्यमान सदा शुद्ध प्रसन्न भवति । विशेषदर्शनोत्पत्त्यभावात्तदा आत्मनोऽसबोध । स्वेन विशेषविज्ञानात्मना

देदीप्यमानो भवति । विज्ञाने सति कथमसंबोध इति चेत्, अनाशङ्कैषा । परिष्वक्तदृष्टान्तेन प्रत्युक्तत्वात् । ननु विषमो दृष्टान्तः । तत्र हि विद्यमानेषु विशेषज्ञानकार्येषु अप्रविभक्तो भवति, एवमसंबोधस्तत्र । इह तु न तदस्तित्वम् । अतः सति ज्ञाने कथमसंबोध इति ? अतस्तम एवैतद्रूपं स्यान्न ज्योतिरिति । नैवम् । ज्योतीरूपत्वस्य महता प्रयत्नेन विभावितत्वात्, स्थितत्वाच्च सिद्धान्तस्य । सुप्तोत्थितस्य स एवाहमिति प्रत्यभिज्ञानात् । तस्मादस्यात्र स्वात्मनैव ज्योतिषा दर्शनमिति ॥ वा पा १६२५-१६२९

अत्र वार्तिकखण्डनं न दृश्यते । अतोऽत्रानिष्टांशः प्रागुदाहृत (ख ८१) व्याख्यानविमर्शेत ऐवोह्य । टीकाया चोक्तम् – 'परेष्वसंबन्ध उक्त । तत्रानिष्टमंशमग्रे निरसिष्यति' (आ गि वा १४०८, पा १६२९) ॥

## मोक्षविचारः–

८४ विश्वतैजसप्राज्ञतुरीयात्मना पूर्वपूर्वस्योत्तरस्मिन्नुत्तरस्मिन् प्रविलयं कृत्वा 'स एष नेति नेत्यात्मा' इत्यादिप्रकारेण तुरीयमुपदिश्य 'अभयं वै जनक प्राप्तोऽसि' इत्युक्तं याज्ञवल्क्येन । ततो जनकोऽपि प्रत्युवाच '**अभयं त्वा गच्छताद् याज्ञवल्क्य**' इति (बृ ४-२-४) । अत्र शङ्का भवति स्वयं प्राप्ताभय एव गुरुः, कथमेवमाशीस्तं प्रतीर्यत इति ? तत्र भर्तृप्रपञ्चाना परिहारः –

प्राप्तमभयं याज्ञवल्क्येन नाप्राप्तम्, न तु साक्षात्कृतम् । अत एव मुच्यते । अथवा द्विविधो मोक्षः, अस्मिन्नेव शरीरे साक्षात्कृतब्रह्मा मुक्त इत्युच्यते न ब्रह्मणि लीनः । तस्य शरीरपातोत्तरकाले ब्रह्मणि लयो द्वितीयो मोक्षः । स त्वाशासितव्यः ॥ वा पा १३७५

अस्य वार्तिके खण्डनमित्थं कृतम् – आत्मज्ञानमात्रमुक्त्वा 'अभयं प्राप्तोऽसि' इति याज्ञवल्क्येनोक्तत्वान्न ततोऽन्यः साक्षात्कारः लयो वा अपेक्ष्यत इति गम्यते । न चाब्रह्मनिष्ठस्य गुरुत्वं समस्ति नापि 'अभयं त्वा गच्छताद्याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे' इति युक्तं राज्ञो वचनं गुरोः शब्दमात्रपरिज्ञाने कल्प्यमाने । नापि साक्षात्कृततत्त्वस्य

ब्रह्मणि लय प्रत्याकाङ्क्षा काचिदस्ति, येनेत्थमाग्नी सम्प्रयुज्येत । तस्मान्नेद सम्यग्व्याख्यानमिति ॥ वा ४-२-१०४ आरभ्य १०८

एतेन जीवन्मुक्तिविदेहमुक्तिलक्षणमुक्तिद्वय भर्तृप्रपञ्चसमत न वार्तिकाभिमतमिति गम्यते । जीवन्मुक्तिरेव मुख्यो मोक्ष इति यथा वार्तिककाराणा तथाऽऽचार्याणा भगवत्पादानामपीत्येतत् पूर्वमेव (ख ६०) प्रादर्शि ॥

अन्तरालावस्था –

८५ आर्तभागप्रश्ने इदमाम्नातम् –

**याज्ञवल्क्येति होवाच यत्राय पुरुषो म्रियते किमेन न जहातीति नामेत्यनन्त वै नामानन्ता विश्वेदेवा अनन्तमेव स तेन लोक जयति (बृ ३-२-१२) ॥ याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्नि वागप्येति वात प्राणश्चक्षुरादित्य मनश्चन्द्र दिशः श्रोत्र पृथिवी शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते क्वाय तदा पुरुषो भवतीत्याहर सोम्य हस्तमार्तभागावामेवैतस्य वेदिष्यावो न नावेतत्सजन इति । तौ होत्क्रम्य मन्त्रयाञ्चक्राते तौ ह यदूचतुः कर्म हैव तदूचतुरथ यत्प्रशशसतुः कर्म हैव तत्प्रशशसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति ततो ह जारत्कारव आर्तभाग उपरराम (बृ ३-२-१३) इति च ॥**

अस्य त्रयोदशकण्डिकास्थप्रश्नस्याय भाष्यकृद्दर्शित सबन्ध –

**ग्रहातिग्रहरूप बन्धनमुक्त** (नवमकण्डिकापर्यन्तम्) **मृत्युरूपम्** । **तस्य च मृत्योर्मृत्युसद्भावान्मोक्षश्चोपपद्यते** (इति दशमकण्डिकयोक्तम्) । **स च मोक्षो ग्रहातिग्रहरूपाणाम् इहैव प्रलय प्रदीपनिर्वाणवत्** (इत्येकादश

[illegible])। यत् तद् ग्रहातिग्रहाख्य बन्धन मृत्युरूप, तस्य यत् प्रयोजकम्, तत्स्वरूपनिर्धारणार्थम् इदमारभ्यते 'याज्ञवल्क्येति होवाच' (बृ ३-२-१३, पा ७९६) ॥

भर्तृप्रपञ्चसमतसबन्धस्तु भाष्यकृद्भिरेवम् अनूदित –

अत्र केचिद् वर्णयन्ति। ग्रहातिग्रहस्य सप्रयोजकस्य विनाशेऽपि किल न मुच्यते। नामावशिष्टोऽविद्यया ऊषरस्थानीयया स्वात्मप्रभवया परमात्मन परिच्छिन्नो भोज्याच्च जगतो व्यावृत्त उच्छिन्नकामकर्मा अन्तराले व्यवतिष्ठते। तस्य परमात्मैकत्वदर्शनेन द्वैतदर्शनम् अपनेतव्यमित्यत पर परमात्मदर्शनमारब्धव्यम् – इत्येवम् अपवर्गाख्याम् अन्तरालावस्था परिकल्प्योत्तरग्रन्थसबन्ध कुर्वन्ति' (बृ भा पा ७९६) ॥

तत्र भर्तृप्रपञ्चवाक्यानि टीकोपात्तानीह सगृह्यन्ते –

'द्वैतदर्शनेन कृत्स्नद्वैतकार्यमुच्छिन्नम्, न भूतमात्रोपादाने बीजम्। तेनैवापावृत्त पुरुष कृतार्थ शास्त्रात्, नेदानीम् अद्वैतदर्शने प्रयोजनमस्ति' इत्याशङ्क्य परिहार उच्यते 'द्वैतदर्शनेन आसङ्गकार्यमुच्छिन्नम्, आसङ्ग उपादान भूतानाम्। स एष कामपक्ष उच्छिन्न। कामश्च कर्मपक्षस्यैव। विज्ञानात्मन किमवशिष्यते? विज्ञानम् (अविद्यैव) अवशिष्यते। अविद्याकर्मणोरारम्भेऽत्यन्त हि कर्म विकर्त्रैव केवलमाकारपरिणामावस्था विशेषेषु, विज्ञान परिच्छेत्तृ। सैषा अविद्या परिच्छेदक विज्ञानम्। यस्मात् परिच्छिन्न परमात्मन पृथग्भूत आस्ते स एष ससारविषयस्थ एव द्वैतात्मा। अस्य ब्रह्मणि लय कर्तव्य। 'तस्य प्रलय कर्तव्य' इत्यनव सितार्थमेव वाक्य प्रवर्तते आप्रलयात् – इत्येकवाक्यता द्वैताद्वैतार्थ वाक्ययो। अविद्योच्छेदे हि परिच्छेदक स्यान्निवृत्तम्, न तु कर्मणो विकर्तृत्वम् आसङ्गश्च। ते आसङ्गकर्मणी अनिवृत्ते पुनर्विज्ञान प्रयुञ्जीयाताम्, तेषा परस्परेणाविनिर्भागवृत्तित्वात्। न चाशुद्धे द्वैतार्थे, अद्वैतदर्शन शक्यम् ॥ वा पा ११५५-११५८

तत्र द्वैतक्षयोक्तिस्तावत् श्रुतिविरुद्धा स्वव्याख्यानविरुद्धा च 'पुरुषो वा अक्षिति यद्द्वैतन्न कुर्यात् क्षीयेत ह' (बृ १-५-२)। 'अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते' (बृ १-४-१५) इत्यादि-वाक्यैर्हि द्वैताक्षयो बोध्यते। 'तद्धेद तर्ह्यव्याकृतमासीत्' (बृ १-४-७)

इति [illegible]ाकरण्यश्रुतेरपि द्वैताक्षयो ज्ञाप्यते । तस्मान्न सूत्रग्राह्या कामकर्मोच्छित्तिराद्यसमुच्चयबलात् । अव्याकृतरूपाप्तिस्तु सुषुप्तेऽप्यस्तीति न तन्मात्रेण पुरुषार्थता ॥

अज्ञानमन्यथाज्ञान वा अविद्या ? उभयथापि न तस्या परिच्छेत्तृत्वम् । अज्ञानस्याच्छादनत्वात्, मिथ्यारूपस्य नीलज्ञानादेर्व्योमादिपरिच्छेदादर्शनाच्च । 'क्षितेरूषरवदविद्या परस्मात् स्वतो जायते, कामकर्मणी तु सवासने पूर्वपूर्वप्रापञ्चिवशादुत्तरोत्तरे प्रतीच्युत्पद्येते, नाविद्याकृते' इति भर्तृप्रपञ्चैरेवोच्यते । तस्मान्नाविद्या जगदुपादानम् ॥

न च नष्टामविद्या कामकर्मणी पुनर्विज्ञान प्रयुञ्जीयाताम् – इति सम्यक् । तदकारणत्वात् । कारणत्वेऽपि न नष्टा कर्तुमलम् । न हि सुवृष्ट्यापि भूमि विना आकाशात् पद्मिनीजन्मास्तीति । ब्रह्मैव चेदविद्योपादानम्, तस्मिन् सति तस्या समुच्छित्ति कथ भवेत् ? तस्मिन् सत्येव नश्वरी चेदविद्या न साधनै प्रयोजन स्यात् । यदि विद्यमाना रक्षितुमपि कामकर्मणी न प्रभवत, ततो विनष्टामुत्पादयितु कथ शक्नुयाताम् ?

कामकर्मनाशेऽप्यविद्या अवशिष्यत इत्येतत् भर्तृप्रपञ्चाना नेति नेति वाक्यव्याख्याविरुद्धमपि । प्रथमनेतिशब्दो मूर्तामूर्तनिषेद्धा, द्वितीयस्तु भावनाप्रतिषेद्धा । भावनादिसर्वविशेषशान्तौ यदवशिष्यते तत्पर ब्रह्म निष्कल 'नेति नेति' इत्युपदिश्यत–इति हि ते व्याचख्यु ॥

नेतिवाक्यज्ञानेऽपि ब्रह्मणि नापैत्यविद्या – इति कथमविरुद्ध स्यादुच ? 'अविशुद्धे द्वैतार्थे अद्वैतदर्शन न शक्यम्' इत्यत्र च कीदृशी विशुद्धिर्द्वैतस्य विवक्षितेति, किमद्वैतानभिसम्बन्ध, नाशो वेति वक्तव्यम् । एक वस्तु समस्तव्यस्तात्मकमिति भर्तृप्रपञ्चमते न तावदनभिसबन्ध शक्यो वक्तुम्, द्वैतनाशे तु नैव स्यात् समस्तव्यस्तदर्शनमिति सिद्धान्तहानि स्यात् ॥

समस्तव्यस्ततैव तावदेकत्र नोपपद्यते, शीतोष्णयोरिव परस्पर विरोधात्तयो । 'अपूर्वमनपरम्' (बृ २-५-१९) इत्यादिश्रुतिविरोधाच्च । आत्मनि विज्ञाते सर्वं विज्ञात भवतीति श्रुतिरप्रमाण च स्याद् यदि समस्तदर्शनेनैव व्यस्तदर्शनमपि न समवाप्येत । न च समस्तदर्शने जाते किञ्चिदप्यवशिष्यते ज्ञातव्यम्, रज्जौ ज्ञाताया सर्पादिविकल्पानवशेषवत् । न च सर्वान् द्वैतभेदान् द्रष्टु कोऽपि शक्नुयात्, दृष्टेष्वपि भेदेषु ब्रह्मण आनन्त्य न घटेत । आत्मानात्मदृष्टी हि परस्पर विरुध्येते । 'पराञ्चि खानि' (का २-१-१) इत्यादिश्रुते - इत्यादियुक्त्युपन्यासेन विस्तरेण भर्तृप्रपञ्चमत वार्तिके प्रत्याख्यातम् ॥ वा ३-२-६३ प्रभृति १२० पर्यन्तम् ।

भाष्ये (बृ भा ३-२-१२) त्वेवमधिक दृश्यते खण्डनम् -

तत्र वक्तव्य विशीर्णेषु करणेषु विदेहस्य परमात्मदर्शनश्रवणमनन निदिध्यासनानि कथम् इति ? समवनीतप्राणस्य हि नाममात्रावशिष्टस्य (अधिकारो विद्यायाम्) इति हि तैरुच्यते । 'मृत शेते' (बृ ३-२-११) इति ह्युक्तम् । न मनोरथेनाप्येतदुपपादयितु शक्यते । अथ जीवन्नेवाविद्या-मात्रावशिष्टो भोज्यादपावृत्त - इति परिकल्प्यते, तत्तु किन्निमित्तम् ? - इति वक्तव्यम् । समस्तद्वैतैकत्वात्मप्राप्तिनिमित्तमिति यद्युच्येत, तत्पूर्वमेव निराकृतम् । कर्मसहितेन द्वैतैकत्वात्मदर्शनेन सपन्नो विद्वान् मृत समव नीतप्राणो जगदात्मत्व हिरण्यगर्भस्वरूप वा प्राप्नुयात्, असमवनीतप्राणो भोज्याज्जीवन्नेव वा व्यावृत्तो विरक्त परमात्मदर्शनाभिमुख स्यात् । न चोभयम् एकप्रयत्ननिष्पाद्येन साधनेन लभ्यम् । हिरण्यगर्भप्राप्तिसाधन चेत्, न ततो व्यावृत्तिसाधनम्, परमात्माभिमुखीकरणस्य भोज्याद् व्यावृत्ते साधन चेत् न हिरण्यगर्भप्राप्तिसाधनम् । न हि यद् गतिसाधन तद् गतिनिवृत्तेरपि । अथ मृत्वा हिरण्यगर्भं प्राप्य तत समवनीतप्राणो नामावशिष्ट परमात्मज्ञानेऽधिक्रियते, ततोऽस्मदाद्यर्थं परमात्मज्ञानोपदेशोऽ-नर्थक स्यात् । सर्वेषा हि ब्रह्मविद्या पुरुषार्थायोपदिश्यते ' तद् यो यो देवानाम्' (बृ १-४-१०) इत्याद्यया श्रुत्या । तस्मादत्यन्तनिकृष्टा शास्त्र-बाह्येय कल्पना ॥ बृ भा पा ७९६

**श्रवणमननिदिध्यासनानि –**

८६ यथैव ब्रह्मस्वरूपविषये द्वैताद्वैतवादमास्थिता, तथैव मुक्तिसाधनविषयेऽपि शङ्करभगवत्पादसम्प्रदायतो भिन्नामेव सरणिम् अनुसृतवन्तो भर्तृप्रपञ्चा ॥

तद्यथा–'**आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि**' (बृ २–४–५) इत्यत्र दर्शनप्रकारा उक्ता । तत्र श्रोतव्य आचार्यागमाभ्याम्, मन्तव्यस्तर्कत । तत्र च तर्क उक्त 'आत्मैवेद सर्वम्' इति प्रतिज्ञातस्य हेतुवचनात्मैकसामान्यत्वम्, आत्मैकोद्भवत्वम्, आत्मैकप्रलयत्व च । तत्राय हेतुरसिद्ध इत्याशङ्क्यते आत्मैकसामान्योद्भवप्रलयाख्य । तदाशङ्कानिवृत्त्यर्थं मधुब्राह्मणम् (बृ भा ७६९) – इति भाष्यकारीय सबन्ध, प्रतिज्ञातस्य हेतुमुक्त्वा निगमनार्थम् – इति वा (पा ७७०) ॥

भर्तृप्रपञ्चैस्तु व्याख्यातम् –

**'आ दुन्दुभिदृष्टान्तात् श्रोतव्यार्थमागमवचनम्, प्राङ्मधुब्राह्मणात् मन्तव्यार्थमुपपत्तिप्रदर्शनेन, मधुब्राह्मणेन तु निदिध्यासनविधिरुच्यते' इति ॥ बृ भा २–५, पा ७७०**

तदेतदनूद्य भाष्यकारैरुक्तम् –

**'सर्वथापि तु यथा आगमेनावधारितम्, तर्कतस्तथैव मन्तव्यम् । यथा तर्कतो मतम्, तस्य तर्कागमाभ्या निश्चितस्य तथैव निदिध्यासन क्रियत इति पृथङ्निदिध्यासनविधिरनर्थक एव । तस्मात् पृथक्प्रकरणविभागोऽनर्थक इत्यस्मदभिप्राय श्रवणमनननिदिध्यासनानाम् इति ॥' बृ भा पा ७७०**

अत्र विधिमात्र वार्यते भाष्ये न तु श्रवणमनननिदिध्यासनोपदेशविभाग इति भाति । अन्यथा श्रीगौडपादाचार्यैरागमप्रकरणे श्रुत्यर्थं व्याख्याय, वैतथ्यप्रकरणे तर्कतो द्वैतमिथ्यात्वमुपपाद्य, अद्वैते पुनरपि आत्मसत्यानुबोधेनैवोत्तमाधिकारिणाम् अमनस्तासिद्धिमुक्त्वा, तदनु हीन-

मध्यमदृष्टीना तदर्थमेव मनोनिग्रहो विभक्त उपदिष्टो व्यर्थ इत्यपि शङ्क्येत । इहापि मधुकाण्डे आगमप्राधान्येनोक्तस्य पुनरप्युपपत्तिप्रधानमुनिकाण्डेन प्रतिपादनम्, तस्यैवोपासनाप्रणाड्या परमफल वेनोपन्यासश्चेत्येषोऽपि विभागो व्यर्थ एवेति शङ्क्येत । तस्मात्, भर्तृप्रपञ्चोक्तनिदिध्यासनविधिनिरास एवात्र भाष्यकृतामित्युत्पश्याम । निदिध्यासन चैतद् अस्या कण्डिकाया विहितमित्यभिनिवेश स्याद् [illegible] ॥

स वा अयमात्मा सर्वेषा भूतानामधिपतिः सर्वेषा भूताना राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिताः एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥
बृ २-५-१५

अस्या कण्डिकाया भर्तृप्रपञ्चव्याख्यानमित्थ वार्तिके सगृहीतम् –

> स्वमात्मानम् अक्षरे परमात्मन्येकीकृत्य, त चात्मान चक्रनाभिस्थानीय देवतादि जगत् सर्वमरवत् तत्रार्पित कल्पयित्वा तद्भावभावितो निदिध्यासेत् । तस्यैव सतत ध्यायमानस्य तप्तलोहवत्तस्मिन्नेकत्व पुनरावृत्ति रहितमाप्यते । ध्यातृत्ववर्जित ध्येयत्व चाधिगम्यते । यद्यप्येतद् ब्रह्मचक्र सर्वप्राणिष्वपि सस्थितम्, तथापि तदसबोधात्तैर्न तदनुभूयते ॥
>
> वा २-५-६८ प्रभृति ७३, पा ११२३, ११२४

नैतद् युक्त व्याख्यानम् । यश्चार्थादर्थो न स चोदनार्थ –इति न्याय विरोधात् । दृष्टान्तबलाद्धि सर्वमिद कल्प्यते । न तु यथोक्त चक्रकल्पनमत्र श्रुत्यक्षरगम्य, नापि 'निदिध्यासेत्' इत्येव विधि कुत्राप्यस्मिन् ब्राह्मणे श्रुतोऽस्ति । नाभिनेमिदृष्टान्तेन सर्वमात्मनि समर्पितम्-इत्येतावन्मात्र श्रुतम् । एव च श्रुतहान अश्रुतकल्पन च स्याद् विधिं कल्पयताम् । किञ्च "तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्" (बृ २-५-१९) इत्यत्रैव ब्राह्मणे आत्मनि बहिरन्तर्विभाग कार्यकारण-भावश्च निवार्यते । "अथ योऽन्या देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति

न स वेद" (बृ १-४-१०) इति भेददृष्टिरपोद्यते, 'नेदं यदिदमुपासते' (के १-५) इति चोपास्तिविषयमिदं न ब्रह्मणो निषिध्यते। 'दृश्यते त्वग्र्यया बुद्ध्या' (का १-३-१२) इति त्वात्मविद्याविधानं नोपासनाविधानम्, शुद्धचित्तेन विज्ञेयं ब्रह्मेत्यर्थकत्वात्, अथवा अनात्मसंबन्धात् प्रागेवात्मबुद्धिः स्थिता– इत्यर्थोऽस्य वाक्यस्य। तस्मात् चक्रकल्पनं समस्तव्यस्तादिप्रतिज्ञार्थसिद्ध्यर्थमुक्तमयुक्तमिति वार्तिके खण्डितमिदम्॥ वा ३-५-७४ प्रभृति ८९ पर्यन्तम्॥

[एतेन निदिध्यासनं नाम काचिदुपासना भर्तृप्रपञ्चमते इत्यवगम्यते। भाष्यकारमते निदिध्यासनलक्षणं प्राक् (ख ५६) कथितम्। वार्तिककारमतं तु स्वावसरे वक्ष्यते॥]

**ज्ञानकर्मसमुच्चयवादः –**

८७ भर्तृप्रपञ्चा ज्ञानशब्दस्योपासनाशब्दार्थत्वम् अङ्गीकुर्वाणा ज्ञानकर्मसमुच्चयं मोक्षसाधनं मन्यन्ते, यथैवान्ये ज्ञानविधिवादिनः। अत एव तत्र तत्र कर्मणो मोक्षसाधनत्वं तैरुक्तं भाष्यवार्तिकयोर्निराकृतं दृश्यते। तद्यथा –

**(१) तदेतद् ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्यां हि रूपाभ्यां ब्रह्माभवत्। अथ यो ह वा अस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननुक्तोऽन्यद्वा कर्माकृतं यदिह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते अस्माद्ध्येवात्मनो यद्यत् कामयते तत्तद् सृजते॥ बृ १-४-१५**

अत्र भर्तृप्रपञ्चानामित्थं ग्रन्थावतरणिका –

न तावत् कर्म मोक्षकारणम् । मोक्षस्यानित्यत्वापत्तेः । न देवता । ता हि कर्माधिकृताः कर्मस्वेवैनं नियच्छन्ति । न च ताभ्यो व्युत्थायात्मदर्शनमुपपद्यते । आत्मापि त्वसदृश्यमान आत्मत्वेन नोपतिष्ठते । देवताज्ञाकरत्वेन तु ब्रह्मविद्या निरूप्यते । अतो न समुच्चयतो नापि विकल्पतो मुक्तिः । न च ऋणत्रयमनपाकृत्य कर्मत्यागः । तस्मात्, न कर्मणा, न ज्ञानात्, न चोभाभ्यां मोक्षः इति प्राप्ते परा श्रुतिः प्रवृत्ता । ज्ञानकर्मसमुच्चयमाप्या द्वैतैकत्वावस्था । स्या द्वैतत्वात् क्षयात्मिका । या त्वविशेषावस्था अनभिव्यक्ता परमात्मावस्थैव सा इत्यविनश्वरी । तत्रैव सति यो द्वैतावस्थामुपास्ते तस्य लोकः क्षीयत एव । यस्तु तामव्यक्तावस्थामापाद्य उपास्ते तस्यात्मैव कर्म भवति न ह्यस्य कर्म क्षीयते । एवं कर्माप्यनुष्ठितं स्यात्, ब्रह्माप्युपासितम् । तदेव सूत्रोपास्तिकर्मसमुच्चयः आद्यः, द्वितीयस्तु व्यक्तसूत्रात्मविद्याया अव्यक्तब्रह्मविद्यया समुच्चयः ॥ वा पा ७६७-७७०

अत्र भाष्यकृद्भिरेव भर्तृप्रपञ्चमतं प्रत्याख्यातम् –

अत्र तु (अग्नौ हुत्वा ब्राह्मणे च दत्त्वा परमात्मलक्षणं लोकमाप्तुमिच्छन्तीति) परमात्मलोकमग्नौ ब्राह्मणे चेच्छन्ति केचित् । तदसत् । अविद्याधिकारे कर्माधिकारार्थं वर्णविभागस्य प्रस्तुतत्वात्, परेण च (स्वं लोकम् इति) विशेषणात् । विदुषो विद्यासंयोगात् कर्मैव न क्षीयत इत्यपरे । भवतीयं शोभना कल्पना, न तु श्रौती । स्वलोकशब्देन प्रकृतस्य परमात्मनोऽभिहितत्वात् । 'स्वं लोकम्' इति प्रस्तुत्य स्वशब्दं विहाय, आत्मशब्दप्रक्षेपेणैव पुनस्तस्यैव प्रतिनिर्देशात् 'आत्मानमेव लोकमुपासीत' इति । तत्र कर्मसमवायिलोककल्पनाया अनवसर एव । परेण च केवलविद्याविषयेण विशेषणात् 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' (बृ ४-४-२२) इति । पुत्रकर्मापरविद्याकृतेभ्यो हि लोकेभ्यो विशिनष्टि 'अयमात्मा नो लोकः' इति । 'न ह्यस्य केनचन कर्मणा लोको मीयते' (कौ ३-१), 'एषोऽस्य परमो लोकः' (बृ ४-३-३२) इति च । तैः सह सविशेषणैरस्यैकवाक्यता युक्ता । इहापि 'स्वं लोकम्' इति विशेषणदर्शनात् । यदि हि पर एवात्मा सम्पद्यते तदा युक्तो 'अस्माद्ध्येवात्मनः' इत्यात्मशब्दप्रयोगः, स्वस्मादेव प्रकृतादात्मनो लोकात् – इत्येवमर्थः । अन्यथा हि 'अव्याकृतावस्थात् कर्मणो लोकात्' इति सविशेषणमवक्ष्यत्, प्रकृतपरमात्मलोकव्यावृत्तये, व्याकृता-

वस्थाव्यावृत्तये च । न ह्यस्मिन् प्रकृते विशेषिते अश्रुतान्तरालावस्था प्रतिपत्तु शक्यते' इति ॥ बृ भा पा ६८४, ६८५, ६८६

## दैवाद् वित्ताद् व्युत्थानम् –

८८ कर्मज्ञानसमुच्चयाङ्गीकारादेव भर्तृप्रपञ्चा सर्वकर्मसन्न्यासं नानुमन्यन्त इति व्यक्तम् । अत एव भाष्ये एवं लिखितं दृश्यते –

(१) केचित्तु ब्रह्मविदोऽप्येषणासबन्ध कल्पयन्ति । बृ भा पा ७२७

(२) दैवाद वित्ताद व्युत्थानमेव नास्तीति केचित् । यस्मात् तद्बलेन हि किल व्युत्थानमिति ॥ बृ भा पा ८१२

(३) 'व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति वर्तमानापदेशादर्थवादोऽयम् । परिव्राजकधर्मेषु च गुरूपासनस्वाध्यायभोजनाचमनादीनां कर्मणा श्रुतिस्मृतिषु कर्तव्यतया चोदितत्वात्, गुर्वाद्युपासनाङ्गत्वेन यज्ञोपवीतस्य विहितत्वात् तत्परित्यागो नैवावगन्तु शक्यते । यद्यप्येषणाभ्यो व्युत्थानं विधीयत एव, तथापि पुत्राद्येषणाभ्यस्तिसृभ्य एव व्युत्थानम् । न तु सर्वस्मात्कर्मणः कर्मसाधनाच्च व्युत्थानम् । सर्वपरित्यागे चाश्रुत कृत स्यात् श्रुत च यज्ञोपवीतादि हापित स्यात् । तथा च महानपराधो विहिताकरण प्रतिषिद्धाचरणनिमित्त कृत स्यात् । तस्मात्, यज्ञोपवीतादिलिङ्गपरित्यागोऽन्धपरम्परैव ॥ बृ भा पा ८१३

इति चैवमादिस्थलेषु सन्यासविरोधित्वेन परामृष्टा इमे एव वृत्तिकारा स्युरित्यनुमीयते ॥

(४) 'ये तु प्रत्यवायपरिहारार्थं कर्म कल्पयन्ति ब्रह्मविदोऽपि' (पा ९१७) ॥

इति च । त्रिदण्डसन्यासमात्राङ्गीकर्तारश्च एते एव स्यु । यानुद्दिश्य भाष्यकारैर्लिखितम् –

(५) 'यद्वि तदेषणाभ्यो व्युत्थानलक्षण पारिव्राज्य तदात्मज्ञानाङ्गम् । आत्मज्ञानविरोध्येषणापरित्यागरूपत्वात् । अविद्याविषयत्वाच्चैषणाया । तद्व्यतिरेकेण चास्त्याश्रमरूप पारिव्राज्य ब्रह्मलोकादिफलप्राप्तिसाधनम् यद्विषय यज्ञोपवीतादिसाधनविधान लिङ्गविधान च' (बृ भा पा ८१५) ॥

इति ॥

**'अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकाना श्रेष्ठस्तस्माद् विद्या प्रशसन्ति' (बृ १-५-१६)**

# ९ मण्डनप्रस्थानपरीक्षा

## व्याख्यानप्रस्थानपरीक्षावश्यकता –

८८ अथेदानीं शाङ्करभाष्यव्याख्यातृप्रस्थानानि विमृश्यन्ते । ग्रन्थादौ दिङ्मात्रेण दर्शितो व्याख्यानप्रस्थानानां परस्परं भाष्येण च विसंवादः, कथं नाम सर्वत्र प्रक्रियाभेदः स्फुटं विज्ञायेतेति । अत्र नाय मभिप्रायोऽस्माकमवमेयो यद् व्याख्यानानि सर्वथा भाष्याशयग्रहणे नैवो- पकुर्वन्तीति, यतो भूयांसोंऽशा व्याख्यानकर्तृभिः प्रकटीकृताः सन्ति, ये भाष्ये सूचिता अपि स्थूलमतीनां न सुविज्ञेयाः । भाष्येऽविचारितानां मपि विषयाणामालापश्च व्याख्यानेषु दृश्यते जिज्ञासुजनमतिवैशद्यकारीति प्रसिद्धमेवैतत् । तथापि यत्र यत्र क्वचिद् व्याख्याने भाष्योपात्तप्रक्रिया पथात् प्रच्युतिरिव, विरुद्धप्रक्रियालिङ्गनमिव च प्रतीतिः, यत्र यत्र वा व्याख्यानप्रस्थानेषु परस्पराभ्युपगतविरुद्ध एवाभ्युपगम इति प्रतीतिः, तत्र तत्र व्यक्तम्, विमृश्यैव तत्तद्ग्रन्थसंदर्भम् एकवाक्यता तदभावो वा निर्धारणीय इति । विद्यन्ते चैतादृशि नैकानि संदेहस्थानानि – इत्यतः आवश्यको यत्नः सविस्तरं व्याख्यानप्रस्थानानां प्रत्येकं विमर्शने ॥

## व्याख्यातृषु मध्ये वार्तिककारस्य प्रथमं स्थानम् –

९० तत्र सर्वप्रथमतो भगवत्पादानां साक्षाच्छिष्यत्वेन सुनिश्चितानां श्रीमत्सुरेश्वराचार्याणामेव प्रस्थानं तावद् विमर्शनीयम् । ते हि भगवत्पादीयसंप्रदायपरिरक्षणार्थं सर्वानपि प्राक्तनप्रक्रियाभेदान् श्रुतियुक्त्यनुभवावष्टम्भेन स्वीयबृहदारण्यकसंबन्धभाष्यवार्तिके निराकृत्य जिज्ञासुजनानवमर्णानकार्षुः । सुप्रथितपूर्वमीमांसाभाष्यवार्तिककारेभ्यः कुमारिलभट्टेभ्योऽन्यूनयशः संपादकं बृहदारण्यकभाष्यवार्तिकं च प्राणैषुरिति ॥

## सुरेश्वरप्रस्थानावेक्षणार्थं मण्डनप्रस्थानविमर्शनमावश्यकम् –

९१ वार्तिकप्रस्थानविमर्शप्रस्तावात् प्रागेव तु तत्र वाचकानां प्रवेशसौकर्यार्थं प्रथमतो ब्रह्मसिद्धिप्रस्थानविमर्शनमपेक्ष्यते । यस्माद् ब्रह्मसिद्धिकृता अनेका विचारसरण्यो वार्तिके तथैवानुसृता, तत्रत्यशब्द वाक्ययुक्तिजातानि च तत्र तत्र तथैवानुकृतानि लक्ष्यन्ते । अत किमनयो रेकैव प्रक्रिया समता, उत भिन्ने एव प्रक्रिये? यदापि भिन्ने, तदा कतर कतरस्मात् कस्य हेतो शब्दयुक्त्यादीन् गृहीतवान् स्वप्रक्रियापोषणार्थम्– इत्येतौ प्रश्नौ निर्णेयौ भवत ॥

तत्र केचिद् वदन्ति – **ब्रह्मसिद्धिकारो मण्डनमिश्रः** भट्टकुमारिलशिष्य श्रीशङ्करभगवत्पादैर्वादे पराजित सन् तुरीयाश्रम स्वीकृत्य सुरेश्वराचार्यनाम्ना तदीयशिष्यता प्राप्त – इति । अन्ये तु विश्वरूपाख्योऽन्य एवैवमाचार्यैर्वादे जित सुरेश्वराचार्य सवृत्त इति । तिष्ठतु तावदय विवादग्रस्त ऐतिहासिकविषय । ग्रन्थशैलीप्रक्रियारचन वैलक्षण्यमालक्ष्यापि मण्डनसुरेश्वरयोरैक्य दुरध्यवसायमिति भाति । यत्कारण ब्रह्मसिद्धिगद्यपद्यशैली तावन्नैष्कर्म्य[illegible] ललिततरा लक्ष्यते, प्रक्रियारचने, अद्वैतात्मप्राप्तिसाधनप्रकारपरिशीलने चोभयोर्भेद- एव दृश्यमागच्छति । यदि हि मण्डन एव सुरेश्वरा चार्योऽभवदिति निश्चय, यदि वा भिन्नावेतौ, ब्रह्मसिद्धिरचनादूर्ध्वमेव च नैष्कर्म्यसिद्धेर्वार्तिकयोश्च निर्माणमासीदित्यभ्युपगम्यते, तर्हि मण्डनप्रक्रि याया दृश्यमाणविशेषा सर्वे भगवत्पादीयप्रक्रियाविरुद्धा अवश्य खण्डनीया भवेयु सुरेश्वराचार्यैं । न चैतदस्ति । अथ सुरेश्वरवार्तिकप्रणयनात् परस्तादेव ब्रह्मसिद्धिर्विरचितेत्यभ्युपगम्यते, तदापि वार्तिकप्रस्थानगता वादा किमिति न कटाक्षिता मण्डनेनेत्येषोऽपि दुरुत्तर एव भवति प्रश्न – इत्युभयथापि जटिलोऽय विचारविषय । अतोऽय पुरातनग्रन्थतत्त्वशोधन कोविदैरेव निर्णेय इति मण्डन साप्रदायिकमतेन सुरेश्वराचार्येभ्य,

पूर्वकालिकमुपेत्यैव तत्प्रक्रियापरीक्षामत्र वर्तयिष्याम । तावतैव प्रकृत ग्रन्थोद्देशपरिपूर्त्युपपत्तेरिति विदाङ्कुर्वन्तु जिज्ञासव ॥

## मण्डनप्रस्थाने अविद्यास्वरूपम्–

९२ ब्रह्मणो वेदान्तैकगम्यत्व प्रसाधयितु ब्रह्मसिद्धि प्रणीतेति भाति । ब्रह्मज्ञान तूपनिषद्वाक्यजन्यज्ञानाभ्यासजसाक्षात्काररूपमिति मण्डनाचार्यस्य मतम् । तदुपरिष्टाद् विमृश्यते । तत्र

आनन्दमेकममृतमज विज्ञानमक्षरम् ।
असर्व सर्वमभय नमस्याम प्रजापतिम् ॥ ब्र १-१

इति मङ्गलश्लोकेन ब्रह्मस्वभावो वर्णित । ईदृशेऽपि ब्रह्मणि जीवभावोऽविद्यया कृत इति प्रतिपादयितुम् अविद्याविचार आनीत । अविद्यालक्षण विस्पष्टतया नाचार्यमण्डनेन कुत्रापि निष्कृष्योक्त दृश्यते । पर त्वग्रहण विपर्ययग्रहण चेत्यविद्याद्वैविध्य पदे पदे (ब्र सि 9, 20, 32, 33, 122) तेन प्रदर्शितम् । तत्रापि 'न खल्वग्रहणमभाव कस्यचिन्निमित्तम् । मूर्छादिषु प्रसङ्गात् । कि तर्हि निमित्तम् ? अनादिरप्रयोजना चाविद्या – इत्युक्तम् । तत्र च हेत्वनुयोगो निरवकाश । विपर्यासतत्संस्कारयोश्च परस्परहेतुफलभावेन व्यवस्थानान्न दोष ।' (ब्र सि 33) इति विपर्यासस्यैव विशेषतोऽविद्यात्वमुपपादित मण्डनेन ॥

अत्राविद्या भगवत्पादै आत्मानात्मनो सत्यानृतयोरितरेतराध्यासरूपत्वेन सूत्रभाष्यस्योपोद्घात एव सूत्रिता, गीताबृहदारण्यकयोरपि परामृष्टा, किमिति न कटाक्षेणापि वीक्षिता ब्रह्मसिद्धिकारेणेति तु न विज्ञायते । अध्यासरूपेयमविद्येति न ज्ञातमाचार्यमण्डनेनेति त्वसभावितम् । यत स एवान्यत्रैव लिखति स्म (ब्र सि 20) 'भावो हि यथावदप्रकाशमानोऽध्यस्त। विद्यमानरूप प्रकाशते, शून्ये तु क्वाध्यास , कि प्रकाशताम् ? – इति निर्बीजतैव स्यात्' इति ॥

## अविद्याया अनिर्वचनीयत्वम् –

९३ अविद्या किं सती, असती वा? – इति विषये ब्रह्मसिद्धिकारेणोक्तम् –

" नाविद्या ब्रह्मण स्वभाव नार्थान्तरम्, नात्यन्तमसती, नापि सती । एवमेवेयम् 'अविद्या' 'माया', 'मिथ्यावभास' इत्युच्यते । स्वभावश्चेत् कस्यचित्, अन्योऽनन्यो वा परमार्थ एवेति नाविद्या । अत्यन्तासत्त्वे खपुष्पसदृशी न व्यवहाराङ्गम् । तस्मादनिर्वचनीया । । स्यादेतत्-अवभासमान रूप मा भूत्, अवभासस्तु सन्नेव, स चाविद्येति गीयते । नैतत् सारम् । अवभासमानेऽसति तदवभासोऽपि सत्यतो दुर्निरूप । अवभासमात्र तु स्यात्, तदवभास इत्यपि भ्रान्तिरेव । तस्मान्नाविद्या सती नाप्यसती अत एव चास्या निवृत्तिरदृढस्वभावाया । मायामात्रत्वात् । अन्यथा स्वभावे दृढ व्यवस्थिताया कथमन्यथात्वम् ? स्वभावाहानात् शून्यत्वे स्वय निवृत्तत्वात् । एव च नाद्वैतहानम् न निवर्तनीयस्याभावो वा ॥" ब्र सि 9

अत्र सच्छब्दवाच्य चेद् ब्रह्म, ततस्तद्व्यतिरिक्तमसन्नाम किञ्चिदस्तीति कथ निश्चितमिति न विज्ञायते । सर्वोऽपि हि सदसद्व्यवहारोऽविद्याभूमावेव । स्वतस्तु न सत्तन्नासदुच्यते परमार्थवस्तु – इति हि (गी १३–१२) सिद्धान्त । अत एव हि तत्त्व निर्विशेषत्वात् परप्रतिषेधेनैव बोध्यते, श्रुत्यन्तेष्विति । तस्मात्, सदसत्त्वाभ्यामनिर्वचनीयेयमविद्येति न सम्यक् । एवमियम् 'अविद्या', 'माया', 'मिथ्यावभास' इत्युच्यते इत्यपि न वेदान्तप्रक्रियासमतम् । 'अविद्या हि नाम अध्यसनम्, विपर्ययग्रहणम्–इति स्वेनैवोक्तम् । माया त्वविद्याध्यस्ता नामरूपबीजभूता प्रकृति । 'माया तु प्रकृति विद्यात्' (श्वे) इति श्रुते । सा च प्रतीयमानरूपेण परमात्मनस्तत्त्वान्यत्वाभ्यामनिर्वचनीया (सू भा २–१–१४, पा २०१) व्यवहारत । तत्त्वे स्वभावाहानादनिवृत्तिप्रसङ्गात्, अन्यत्वे तु स्वातन्त्र्येण सत्त्वप्रसङ्गान्नाविद्याकल्पितत्व स्यादिति । परमार्थरूपेण तु परमात्मानन्यत्वमेव नामरूपयोरिति नाद्वैतहानि । "यदा तु परमार्थदृष्ट्या परमार्थतत्त्वात् श्रुत्यनुसारिभिरन्यत्वेन निरूप्यमाणे नामरूप

मृदादिविकारवद् वस्त्वन्तरे तत्त्वतो न स्त –सलिलफेनघटादिविकारवदेव– तदा तदपेक्ष्य 'एकमेवाद्वितीयम्' (छा ६–२–१), 'नेह नानास्ति किञ्चन' (का २–१–११) इत्यादिपरमार्थदर्शनगोचरत्व प्रतिपद्यते" (बृ भा ३-५-१, पा ८११) इति भगवत्पादीयपक्ष एवाश्रयणीयोऽत्र ॥

## अविद्याश्रयः –

९४ अविद्याया आश्रय क ? - इत्यत्र सिद्धि –

"यत्तु – कस्याविद्येति, जीवानामिति ब्रूम । ननु न जीवा ब्रह्मणो भिद्यन्ते । एव ह्याह–'अनेन जीवेनात्मनानुप्रविश्य' (छा ६–३–२) इति । सत्य परमार्थत । कल्पनया तु भिद्यन्ते । कस्य पुन कल्पना भेदिका ? न तावद् ब्रह्मण । तस्य विद्यात्मन कल्पनाशून्यत्वात् । नापि जीवानाम् । कल्पनाया प्राक् तदभावात् । इतरेतराश्रयप्रसङ्गात्, कल्पनाधीनो हि जीवविभाग जीवाश्रया कल्पनेति । अत्र केचिदाहु – वस्तुसिद्धावेष दोष, नासिद्ध वस्तु वस्त्वन्तरनिष्पत्तयेऽलम् । न मायामात्रे, न हि मायाया काचिदनुपपत्ति । अनुपपद्यमानार्थैव हि माया । उपपद्यमानार्थत्वे यथार्थभावान्न माया स्यात् । अन्ये तु – अनादित्वादुभयोरविद्याजीवयो बीजाङ्कुरसतानयोरिव नेतरेतराश्रयत्वप्रक्लृप्तिमावहतीति वर्णयन्ति । तथा चोक्तमविद्योपादानभेदवादिभि – 'अनादिरप्रयोजना चाविद्या' इति । तत्रानादित्वान्नेतरेतराश्रयत्वदोष, अप्रयोजनत्वान्न भेदप्रपञ्चसर्गप्रयोजनपर्यनुयोगावकाश ॥ ब्र सि 10

अत्र जीवानामविद्येति यदुच्यते तद्युज्यते, अनुभवानुसारित्वात् । यस्त्वाक्षेप 'कस्य पुन कल्पना भेदिका ?' इति, जीवानामित्युत्तरमाशङ्क्य चेतरेतराश्रयप्रसञ्जनम्, यश्चात्र समाधानप्रयास, तदुभय शुष्कतर्कमात्रमित्युपेक्ष्यम् । न हि कल्पनाश्रयो जीवविभाग पूर्वमात्मान लभते जीवाना च कल्पना पश्चादिति, विपर्ययेण वा, कालकृत क्रम स्वीकृत्य कल्पनाजीवविभागयो सिद्धिरुपपादनीया, येन चोद्यस्यावकाशो भवेदपि । अविद्या हि सर्वव्यवहारप्रयोजिका, सर्वोऽपि व्यवहारोऽविद्ययैव अप्रविहायाविद्याव्यवहारमपीति (ख २९) स्थिते किं कुत्र चोद्येत ?

एतेनाविद्याजीवयोर्बीजाङ्कुरसतानयोरिवानादित्वमपि प्रत्युक्तम् । जीवस्य तदविद्यायाश्च कालाधिकरणकत्वानङ्गीकाराद्बीजाङ्कुरयोरिव । इतश्चाविद्याश्रयो न चोद्य । अद्वैततत्त्वमभ्युपगम्य हि तावन्न चोद्यमवतरति । तत्राविद्यादि दोषगन्धस्याप्यनाशङ्कनीयत्वात् । 'तत्केन क पश्येत्' (बृ २-४-१४) इति श्रुते । व्यवहारे तु यत्र यथा दृष्टा ऽविद्या, तत्र तथैवाङ्गीकर्तव्येति न चोदयितव्या परिहर्तव्या वेति । अत एव हि सूत्रभाष्ये 'कस्य पुनरयमप्रबोध इति चेत्' इति चोद्यमुद्भाव्य प्रतिसमाहितम् 'यस्त्व पृच्छसि, तस्य ते इति वदाम' इति । तत परम् 'नन्वहमीश्वर एवोक्त श्रुत्या' इति प्रतिवादिशङ्कामुद्भाव्योक्तम् 'यद्येव प्रतिबुद्धोऽसि, नास्ति कस्य चिदप्रबोध' (सू भा ४-१-३, पा ४६५) इति ॥

एव गीताभाष्येऽपि – 'अत्राह सा अविद्या कस्येति ? यस्य दृश्यते तस्यैव । ननु ममैवाविद्या । जानासि तर्ह्यविद्या तद्वन्त चात्मानम्' इत्यादि (गी भा १३-२, पृ १९६) ॥

## स्वाभाविकाविद्यानिवृत्तिः –

९५ ननु स्वाभाविकमपि किञ्चिद्विलक्षणप्रत्ययोपनिपातान्निवर्तताम् । गेहात्स्वरूपादिवत् स्वनागन्तुकधर्मस्य तदभावात् कुतो निवृत्ति ?– इत्याशङ्क्य प्राह सिद्धि –

'अत्रोच्यते उक्तमेतज्जीवानाम् अविद्याकलुषितत्वम्, न ब्रह्मण । तद्धि सदा विशुद्धनित्यप्रकाशमनागन्तुकाथम् । अन्यथा ब्रह्मभूय गतस्यापि नाविद्या निवर्तेत । तत्रानिर्मोक्ष । अथ ब्रह्मैव ससरति ब्रह्मैव मुच्यते, एकमुक्तौ सर्वमुक्तिप्रसङ्ग । तस्मादविद्यया जीवा ससारिण, विद्यया मुच्यन्ते । तेषा च निसर्गजाविद्याकलुषाणा विलक्षणप्रत्ययविद्योदयेनोपपद्यतेऽविद्यानिवृत्ति । न हि जीवेषु निसर्गजा विद्यास्ति । अविद्यैव हि नैसर्गिकी । तस्य आगन्तुक्या विद्यया प्रविलय । अव्यतिरेकेऽपि च ब्रह्मणो जीवाना बिम्बप्रतिबिम्बवद्विद्याविद्याव्यवस्था व्याख्याता ॥ (ब्र सि 12) विद्यैव चाविद्यानिवृत्ति, यद्ग्रहणमविद्या । यतो भाव एवाभावव्यावृत्ति ।

अथ विपर्यास, तथापि विरोधितत्त्वज्ञानोदय एव तन्निवृत्ति । न हि शुक्तिकाज्ञानोत्पादादन्या रजतज्ञाननिवृत्तिस्तत्साध्या, प्रयत्नान्तरसाध्या वा । तयोर्यौगपद्यात् प्रयत्नान्तरानपेक्षणाच्च ॥ ब्र सि 121, 122

अत्र यदुच्यते जीवानामेवाविद्यादिरूपिणि न ब्रह्मण – इति, तत्र यद्ययमभिप्राय, 'व्यवहारे जीवस्य परमात्माभासमात्रत्वात् सूर्यकादिगतदोषस्य परमार्थसूर्येऽभाव इव कल्पितजीवगता अविद्यादिदोषा परमात्मनि नित्यशुद्धबुद्धमुक्तस्वभावे न जातु सन्तीति । तत्रोमिति ब्रूम । 'आभास एव चैष जीव परमात्मनो जलसूर्यकादिवत् प्रतिपत्तव्य । न स एव साक्षात् । नापि वस्त्वन्तरम् (सू भा २–३–५०, पा ३०२), 'जलगत हि सूर्यप्रतिबिम्ब जलवृद्धौ वर्धते, जलह्रासे ह्रसति, जलचलने चलति, जलभेदे भिद्यत – इत्येव जलधर्मानुविधायि भवति, न तु परमार्थत सूर्यस्य तथात्वमस्ति' (सू भा ३–२–२०, पा ३५९) इति च भाष्यवचनानुसारित्वात् । अथ ब्रह्मणो नित्यासंसारित्वम्, जीवस्यैव त्वविद्यादिससार – इत्याग्रह, न तत् साधूच्यते । ससारिदशायामपि जीवस्य ब्रह्मण सकाशादव्यतिरेकात् । ब्रह्मण्येव जीवत्वस्याप्यध्यासात्, अविद्यादिव्यवहारस्यापि तदतिरेकेणान्यत्र कल्पनानुपपत्ते । तथा हि **बृहदारण्यकभाष्यवचनम्** 'परस्यादु खित्वेऽन्यस्य च दु खिनोऽभावे दु खोपशमनाय शास्त्रारम्भानर्थक्यमिति चेत् । न । अविद्याध्यारोपितदु खित्वभ्रमापोहार्थत्वात् । आत्मनि प्रकृतसङ्ख्यापूरणभ्रमापोहवत् । कल्पितदु ख्यात्माभ्युपगमाच्च' (बृ भा १–४–७, पा ६५८) इति ॥

यदप्युच्यते, 'यदि ब्रह्मैव ससरति मुच्यते च, एकमुक्तौ सर्वमुक्तिप्रसङ्ग' इति । तदपि न चारु । यत परमार्थतो ब्रह्मेव जीवोऽपि न ससरति मुच्यते वा । अङ्गीक्रियते हि भवतापि–कल्पितविषयावेव ससारमोक्षौ, न परस्मिन् परमार्थतो विद्येते (ब्र सि 15) इति । अथोच्येत–मम तावत् कल्पितजीवविषयौ ससारमोक्षौ, प्रतिबिम्बविषय इव श्यामतादि,

प्रतिवादिनस्तु ब्रह्मण्येव तावुच्येते इति वैषम्यमिति । अहो विस्मृतिः ! ननु जीवत्वमपि ब्रह्मण्येव कल्पितम् । न हि हित्वा ब्रह्मान्यद् वस्तुसदस्ति यदास्पदं स्याज्जीवत्वादिविकल्पानामित्यविद्याश्रयत्वमपि ब्रह्मण्येव विकल्पितमिति बलादायाति । यथोक्तं बृहदारण्यकभाष्य एव "ब्रह्मणि साधकत्वकल्पना अस्मदादिष्विवापेशला 'तदात्मानमेवावेत्तस्मात्तत्सर्वमभवत्' इति चेत् । न । शास्त्रोपालम्भात् । न ह्यस्मत्कल्पनेयम् । शास्त्रकृता तु" (बृ भा १–४–१०, पा ६७२) इति । न चैनस्मिन् पक्षे एकमुक्तौ सर्वमुक्तिप्रसङ्गः । व्यवहारे हि यस्य दृश्यतेऽविद्यानिवृत्तिस्तस्यैव मुक्तिरपि भविष्यति, न त्वितरेषाम् । परमार्थतस्तु ब्रह्मणि नैव बन्धो मोक्षो वेति क्व प्रसङ्गः सर्वमुक्तेर्नानात्वरहिते वस्तुनीति । तथा ह्यभियुक्तवचनम् 'न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' (गौ का २–३२) इति । भाष्यवचनं च 'भवत्वेव नाविद्याकर्तृ भ्रान्तं च ब्रह्म, किं तु नैवाब्रह्माविद्याकर्तृ चेतनो भ्रान्तोऽन्य इष्यते' (बृ भा १–४–१०, पा ६७०) इति । अतोऽप्राप्तनिषेधोऽयं ब्रह्मणि नाह्यविद्या बन्धमोक्षौ वेतीत्यवधेयम् ॥

**ख्यातिबाधविचारः –**

९६ अस्मिन् ग्रन्थे नियोगकाण्डे 'प्रतिपत्तिर्हि विषयविशेषविशिष्टा प्रमीयमाणा न विषयविशेषस्य सद्भावं गमयति । अन्यथाभूते तथाभावसमारोपेणापि संभवात् । असौ वाव लोको गौतमाग्निः '(छा ५–४–१) इति यथा द्युप्रभृतिष्वग्निदृष्टेः' (ब्र सि 136) – इत्युक्तमस्ति । तत्र विपरीतख्यातिमसहमानो नियोगवादी शङ्कते शुक्तौ रजतबुद्धिर्नास्ति, किं तु रजतस्मृतिरेवेयम् । प्रत्यक्षस्मर्यमाणयोर्विवेकग्रहणासमर्थाना भेदाग्रहणेऽभेदग्रहणाभिमान एव चायमिति । शुक्तौ रजतार्थिप्रवृत्त्यन्यथानुपपत्तेः' (ब्र सि 137), 'रजतबाधानुपपत्तिप्रसङ्गाच्च' (ब्र सि 142) न युक्तमिदं दर्शनम् । सर्वत्राख्यात्यङ्गीकारे लयविक्षेपसञ्ज्ञकाविद्याद्वयस्य

(ब्र सि 149) दुरुपपादत्वप्रसङ्गाच्चान्यथाख्यात्यादिमतमिदमयुक्तमिति विपरीतख्यातिरेव स्वीकार्येत्युक्त ब्रह्मसिद्धौ ॥

अत्रेदमवधेयम् । अनेनैव ग्रन्थकर्त्रा स्वीये **विभ्रमविवेकेऽपि** आत्मख्याति, असत्ख्याति, अख्याति – इति ख्यातित्रितयमपि प्रत्याख्याय विपरीतख्यातिवाद प्रतिष्ठापित । भगवत्पादैरपि मिथ्याज्ञानमध्यास ब्रुवाणै 'सर्वथापि तु अन्यस्यान्यधर्मावभासता न व्यभिचरति' [illegible] स्वाभिमत सर्वतन्त्रसिद्धान्ततया प्रतिष्ठापितमस्ति । तथा चोभयाचार्यसमतैव विपरीतख्यातिरिति यद्यप्युभयो साम्यमापातत प्रतिभाति, तथापि अख्यातिवादिना भेदाग्रहणे [illegible] अन्यथाख्यातिमनिच्छताप्यङ्गीकृता भवतीति यथाचार्यैस्तथा मण्डनाचार्येण नोद्घाटित परपक्षे प्रतिज्ञाहानिदोष । 'प्रत्येत्येव हि केवल रजतमिति, न तु तत्र रजतमस्ति' (सू भा ४–१–५, पा ४६७) इति रजताद्यभाव शुक्तिकादौ दर्शयित्वा दार्ष्टान्तिकेऽपि 'यथा हि सुषुप्तिसमाध्यादावपि सत्या स्वाभाविक्यामविभागप्राप्तौ' (सू भा २–१–९, पा १९१) इत्यादिभिर्यत्नेष्वा मनि प्रपञ्चाभाव, 'अविद्याकामकर्मविनिर्मुक्तमेव तद्रूप यत् सुषुप्ते गृह्यते प्रत्यक्षत' (बृ भा ४-३-२२, पा ८९३) इत्यात्मनि ससाराभावश्च यथा स्पष्ट प्रदर्शित, न तथाचार्यमण्डनेनानुभवमारोपित । प्रत्युत 'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञ कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यत' (गौ का १–११) इति गौडपादीयकारिकाया यथाश्रुतार्थं स्वीकृत्य 'सुषुप्ते तु विक्षेपमात्र निवृत्तम् । तत्संस्कारोऽग्रहण च नैव निवृत्ते । अन्यथा न तुरीयाद् भिद्येत । विक्षेपमात्राभावात्तु ब्रह्मप्राप्त्यभिधानम्' (ब्र सि 22) इति श्रुतियुक्त्यनुभवविरुद्धमुक्तम् । तुरीय हि नाम जागरितादिविकल्पवर्जितात्मा स्वभाव एव, न त्ववस्थान्तरम् – इति सप्रदायोऽपि तेन विस्मृत । 'अन्यथा गृह्णत स्वप्नो निद्रा तत्त्वमजानत । विपर्यासे तयो क्षीणे तुरीय पदमश्नुते' इत्यभियुक्तोक्तिरहस्यमप्यविगणितमिति ॥

**प्रमाणव्यवहारः –**

९७ केन पुनः प्रमाणेनास्य समधिगमः ? न तावत् प्रत्यक्षेण । तस्यैतद्विपरीतभेदविषयत्वात् । नाप्यनुमानेन । तत्पूर्वकत्वात् । नोपमानेन । सादृश्याविषयत्वात्, तस्य च भेदाधिष्ठानत्वात् । अर्थापत्तिस्तु विपर्यये । न भेदमन्तरेण कश्चिद् व्यवहार उपपद्यते यतः । अभेदोऽपि हि प्रमात्रादिविभागाद् ऋते दुरवगमः । अभावोऽपि नाभावरूपतत्त्वावगमायालम्, नापि प्रपञ्चाभावावगमाय, प्रत्यक्षादिषु सत्सु तदसम्भवात् । आगमोऽपि न तावदाप्तप्रणेतृकोऽत्र क्रमते । प्रमाणान्तराविगतगोचरत्वात् । नापि स्वतन्त्रः । विधिनिषेधरूपत्वात् । तयोश्च स्थिते तत्त्वेऽसम्भवात् । नापि तदनपेक्ष व्यवस्थितवस्तुविषयमेव प्रामाण्यम् । भूतानुवादत्वे प्रमाणान्तरापेक्षत्वात् ' (ब्र सि 22, 23) इत्याद्याक्षेपमुद्भाव्य

आम्नायत प्रसिद्धिं च कवयोऽस्य प्रचक्षते ।
भेदप्रपञ्चविलयद्वारेण च निरूपणाम् ॥ (१-२)

इति ब्रह्मसिद्धि ॥

तथा तर्ककाण्डे ' प्रत्यक्षादिभिर्व्यावृत्ताना भावस्वभावानामवगमात् नैकस्मिन्नद्वये शब्द प्रमाणम् । प्रत्यक्षादिविरोधात्, ग्रावप्लवनाद्यर्थवचोवत्' इत्याक्षेपमुत्थाप्य प्रत्यक्षादिविरोधे आम्नायस्य दौर्बल्यम्, उभयोरपि तुल्य बलत्वम् – इति पक्षद्वयमुदस्य सिद्धावुक्तम् –

आम्नाय एव बलवांस्तद्विरोधे 'पौर्वापर्ये पूर्वदौर्बल्य प्रकृतिवत्' (जै सू ६-५-५४), 'पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति' (श्लो वा १-१-२, ५७) । तथा हि – सर्वस्य निसर्गज प्रत्यक्षादिनिबन्धन किल विभक्तवस्तुपरिच्छेद । तदपेक्षस्तु तत्पूर्वकोऽनिसर्गज कस्यचिदेवागन्तुरद्वैतावगम । न पूर्वमनुपमृद्योदेतुमशक्नुवस्तदपबाधात्मा उदीयते । इतश्च । सम्भवद्विचित्रविभ्रमहेतुत्वात् प्रत्यक्षादीनाम्, विगलितनिखिल-दोषाशङ्कत्वाच्च आम्नायस्य । पुरुषाश्रयाणा हि दोषाणा शब्दे पुरुषाभावे असम्भवात् । शक्यो ह्याम्नायादेवानादिरविद्यासंस्कारो विभ्रमहेतु प्रत्यक्षादिषु सम्भावयितुम्, निश्चेतुं च देहात्माभिमान इव । न चैवमपौरुषेये

शब्दे काचिद्दोषाशङ्का। सत्या वा प्रमाणमेव न स्यात्। प्रत्यक्षादीनां तु व्यावहारिक प्रामाण्यम्। अविद्यासंस्कारस्य स्थेम्ना व्यवहारविपर्ययाभावात्। यत्र च व्यवहारविपर्ययो न तत्र प्रामाण्यम्। । प्रत्यक्षादीनां तु व्यवहारे संवादान्न शक्यते व्यवहारविसंवादिज्ञानहेतुर्दोषः कल्पयितुम्। व्यवहारविपर्ययाद्धि स कल्प्येत। तत्त्वदर्शनस्य तु वेदान्तजन्मनः प्रतिपक्षत्वात् तत्त्वप्रतिहतिमात्रहेतुरेवानादिरविद्यानुबन्धः कल्प्यते। ततो दोषानुबन्धः प्रामाण्यं चेति न विरोधः ॥ ब्र सि 40

इति ॥

अत्र यत् पूर्वपक्षिणा चोद्यते प्रत्यक्षाद्यविषयत्वं ब्रह्मण इति, यच्च सिद्धान्तिना मण्डनाचार्येणोच्यते तस्याम्नायमात्रसिद्धत्वम्, तदुभयमपि सम्यगेव। 'रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षगोचरः, लिङ्गाद्यभावाच्च नानुमानादीनाम्। आगममात्रसमधिगम्य एव त्वयमर्थो धर्मवत् (सू भा २-१-६, पा १८८) - इति युक्त्युपबृंहितभाष्यवचनात्। यदपि प्रत्यक्षादिप्रमाणानां व्यवहाराविसंवादिजनकत्वे व्यावहारिकं प्रामाण्यमिति, तदपि सम्यगेव। यावद्व्यवहारं प्रमाणत्वेन ग्रहणात्, बाधाभावाच्च प्रत्यक्षादीनाम्। स्वाप्नप्रत्यक्षादिप्रमाणवत्। तथा ह्याहुर्भाष्यकाराः - 'सर्वव्यवहाराणामेव प्राग् ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्तेः। स्वप्नव्यवहारस्येव प्राक् प्रबोधात्। यथा सुप्तस्य प्राकृतस्य जनस्य स्वप्ने उच्चावचान् भावान् पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक् प्रबोधात्, न च प्रत्यक्षाभासाभिप्रायस्तत्काले भवति - तद्वत्' (सू भा २ १ १४, पा १९८) इति। यत् पुनः प्रत्यक्षादिविरोधे आगमस्यैव प्राबल्यमिति। तदसत्। प्रमाणानां पृथक्पृथग्विषयत्वेन मिथोविरोधस्यैवासंभवात्। यथोक्तं बृहदारण्यकभाष्ये 'स्वविषयशूराणि हि प्रमाणानि श्रोत्रादिवत्' (बृ भा २-१-२०, पा. ७४३) इति। यदपि प्रत्यक्षादिविरोधे आगमस्यैव प्राबल्याय तस्यापौरुषेयत्वात्, तज्जन्यज्ञानस्यानिसर्गजत्वाच्च दोषाभावसंभावना, तादृशागमबलादेव चानाद्यविद्यासंस्कारदोषसंसर्गसंभावना च प्रत्यक्षादिष्विति, तदपि संभावनामात्रत्वात्

वैदिकेष्वास्तिकेषु श्रद्धोत्पादकं भवदपि नागमस्य निःसंशयं प्राबल्यावधारणे प्रभवेत् सर्वत्रेति नायं पन्थाः । सर्वेषामप्यविशेषेण प्रमाणप्रमेयव्यवहाराणामविद्यापुरःसरत्वं सार्वत्रिकानुभवावष्टम्भेनोपपादितमस्त्यध्यासभाष्ये भगवत्पादैः । 'कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ? उच्यते । देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः' इत्यत्र । तत् किमित्युपेक्ष्यते ? विवृतं चेदमस्माभिः पुरस्तात् (ख २४, २५), मोक्षशास्त्रस्य चाविद्यापुरःसरत्वेऽप्यन्त्यप्रमाणत्वादन्ति विशेषः । सोऽपि प्रदर्शितः प्राक् (ख २८, २९) । न चोत्पन्ने शास्त्रजन्येऽद्वितीयज्ञाने पुनरबाधितः प्रत्यक्षादिव्यवहारोऽवशिष्यते, येन तत्प्राबल्यं दौर्बल्यं वा विचारणीयं भवेत् । 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति ... यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' (बृ ४-५-१५) इति श्रुतेरिति ॥

## शास्त्रप्रामाण्ये आक्षेपसमाधानानि –

९८ ब्रह्मणि शास्त्रप्रामाण्यमधिकृत्य विविधानाक्षेपान् अनूद्य चार्यमण्डनेन परिहारा उक्ताः । ते च प्रायशो वार्तिकानूदिताः, परिहारार्थं समावेशिताश्च । अतस्तत्र केचिदेवाक्षेपा अत्र सगृह्यन्ते –

(१) शास्त्रस्य स्वरूपसिद्ध्यर्थं प्रत्यक्षाद्यपेक्षणात् तदपबाधनेनाद्वितीयब्रह्मबोधनमप्रामाण्यकारणमित्याक्षेपः, 'न प्रमितावपेक्षावत्ता शब्दस्य प्रत्यक्षादिषु, किं तु स्वरूपसिद्धौ । अन्यथा प्रमाणमेव न स्यात् । तथा च स्वकार्येऽनपेक्षत्वान्न प्रत्यक्षादिभ्यो हीयते' (ब्र सि 40) इति परिहारः ॥

(२) नाभेदो भेदमन्तरेण शक्योऽवसातुम् । भेदोपाया हि तस्य प्रतिपत्तिः । तत्राभेदः समाक्षिप्तभेद एव प्रतीयत इति व्याघातः' इत्याक्षेपः, 'उपायमाक्षिपति प्रतिपत्तिः, नोपायस्य परमार्थताम्, मिथ्याज्ञानादपि तत्त्वप्रतिपत्तेः' (ब्र सि 41) इति परिहारः ॥

(३) 'कर्मविधयो भेदाश्रयाः, अभेदाश्रयाश्च वेदान्ताः परस्पराहताः' इत्याक्षेपः, स्याद्व्याकुलत्वं यदि कर्मविधयो भेदप्रतिपादनपराः स्युः,

ते तु सिद्धं भेदमुपाश्रित्य इदमनेनेत्थं साधयेत् – इति पुरुषहितानुशासनप्रधाना ' (ब्र सि 43) इति समाधानम् ॥

(४) कार्य एवार्थे कृत्स्नस्य वेदस्य प्रामाण्यम् , अत कार्यमर्थमवगमयन्ती चोदनैव भूतादिकमर्थमप्यवगमयति । 'चोदना हि भूतं भवन्तम्' (शा भा १-१-२) इत्याद्यभियुक्तोक्तेः । न तु साक्षाद्वस्तुनि प्रामाण्यमासा भवितुमर्हन्ति, अनुवादकत्वप्रसङ्गात्-इत्याक्षेप ॥

यच्छब्दादेव ज्ञानं तदविधेयम् । विधिमन्तरेण भावात्, कर्मावबोधवत् (ब्र सि 74), न च भूतार्थविषयकत्वादनुवादकत्वम् । अपौरुषेयवेदमात्रगम्यस्य ब्रह्मण पूर्वाधिगमसस्पर्शेन प्रतिपत्तेरभावात् (ब्र सि 79) । न च साक्षात्काररूपप्रतिपत्तौ विधिरपेक्ष्यते । फलरूपा हि सा , 'न च पुरुषार्थे फले विधायकस्य व्यापार । स्वय प्रवृत्ते (ब्र सि 116) । शाब्दज्ञानसतानरूपप्रतिपत्तौ विधिरिति चेत् । 'भवतु न कश्चिद्विरोध ' (ब्र सि 154) । तदपि वा व्यर्थमेव प्राप्तार्थत्वात् । साक्षात्करणफल हि तत्तदनुचिन्तन दृष्टार्थम् । न ततोऽन्यफलमाकाङ्क्षते । अमृतत्व हि न स्वरूपाविर्भावादन्यदिति प्राग् वर्णितम् । दृष्टा च ज्ञानाभ्यासस्य सम्यग्ज्ञानप्रसादहेतुता लोके । भावनाविशेषाद्धि अभूतमप्यनुभवमापाद्यते, किं पुनर्भूतम् ' (ब्र सि 154) इति परिहार ॥

अत्र यदुक्त मिथ्याज्ञानेनापि तत्त्वप्रतिपत्तेर्वाक्यस्य प्रत्यक्षापेक्षत्व न दोषायेति, यच्च कर्मवाक्यानि न भेदप्रतिपादनपराणि किं तु पुरुषार्थोपायप्रदर्शनपराणीति–तदुभयमपि साध्वेव । तथा दृष्टत्वात् । असत्येन वेदान्तवाक्येनापि सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिर्भवेदित्यप्यनेनैव न्यायेनानुमन्तव्यम् । आहुर्हि भाष्यकारा 'शङ्काविषादिनिमित्तमरणादिकार्योपलब्धे । स्वप्नदर्शनावस्थस्य च सर्पदशनोदकस्नानादिकार्यदर्शनात् । (सू भा २-१ १४, पा १९९) इति । ब्रह्मसिद्धिकृताप्युक्तम् 'नाय नियम – असत्य न कस्मैचित् कार्याय भवतीति । भवति हि माया प्रीतेर्भयस्य च निमित्तम् । असत्य च सत्यप्रतिपत्ते यथा रेखागवय , लिप्यक्षराणि चेति (ब्र सि 13, 14) इति । इद चोपायोपेययोर्व्यावहारिकसत्यत्वमादाय । परमार्थदृष्ट्या तूभयमपि सत्यमेवेत्यवधेयम् । यदाह ब्रह्मसिद्धिकारोऽपि

'अपि च–अभेददर्शनोपाया अपि न स्वरूपेण मिथ्या, यतो ब्रह्मैवैषा स्वरूपम् । तत्र ब्रह्मैवाविद्यानुबद्धब्रह्मप्राप्त्युपाय ' (ब्र सि 14) इति । यच्चेदमुच्यते वाक्यजन्यबोधो न विधेय इति । तदपि युक्तमेव । एव दृष्टत्वाल्लोकेऽपि ॥

यत्तु शाब्दज्ञानसंतति साक्षात्कारार्थं विधेयेति । न तद् ग्राह्यम् । शाब्दज्ञानाभ्यासवादस्य प्रागेव (ख ६९) निरस्तत्वात् । केवलेनैव शाब्दज्ञानेन दशमज्ञानेनेव तदसाक्षात्कारभ्रमनिवृत्त्युपपत्तेश्च । यथोक्त तैत्तिरीयभाष्ये 'तस्यैवमविद्यया अनाप्तब्रह्मस्वरूपस्य–प्रकृत सङ्ख्यापूरणस्यात्मनोऽविद्ययानाप्तस्य सत केनचित् स्मारितस्य पुनस्तस्यैव विद्यया आप्तिर्यथा तथा – श्रुत्युपदिष्टस्य सर्वात्मब्रह्मण आत्मत्वदर्शनेन विद्यया तदाप्तिरुपपद्यत एव' (तै २–१, पा २८२) इति । या तु मनीषा 'साक्षात्करणफल तत्तदनुचिन्तनम् । दृष्टा च ज्ञानाभ्यासस्य सम्यग्ज्ञानप्रसादहेतुता लोके' इति, तत्र षड्जादिष्वागमबलात् प्रत्यक्षमिति दृष्टत्वादस्त्वनात्मविषये लोके तथा, इह पुनर्ब्रह्म न भिन्नमात्मन, विषयीकरणयोग्य परोक्ष वा 'यत्साक्षादपरोक्षाद्ब्रह्म' (बृ ३–४–१) इति श्रुतेर्नित्यापरोक्षात्तस्येति विषमो दृष्टान्त । यदपि भावनाविशेषादभूत मप्यनुभवमापाद्यते इति तदपि लौकिक चेत् प्रातिभमात्र न वस्तुतन्त्र ज्ञानमित्यनुदाहरणम् । चोदनावशेन प्राप्त साक्षात्काररूप चेत्, तत्तथैवे त्यनुमन्यते, तत्र तु न प्रमाणज्ञानावृत्ति, कि तु मानसक्रियालक्षण-ध्यानावृत्ति । न च तथा वस्तुतन्त्रज्ञाने चोदना समस्ति, नापि प्रमाणावृत्त्या प्रमेयेऽतिशय क्वचिदपि दृष्टो वेत्यलमस्थाने आवृत्त्या साक्षात्कारगवेषणेन ॥

**ब्रह्मणः शास्त्रप्रमाणकत्वे आक्षेपसमाधानानि –**

९९ वाक्यधर्मपर्यालोचनया शास्त्रप्रमाणकत्व ब्रह्मणो युज्यते न वेति चिन्ता प्रक्रम्याक्षेपत्रयमत्र समुद्भाव्य समाहित ब्रह्मसिद्धिकारेण –

(१) ब्रह्मवाक्येष्वाख्यातपदादर्शनात् – आख्यातपदार्थमन्तरेण च नामपदार्थाना ससर्गासभवात् तदभावे च साकाङ्क्षत्वात् सिद्धोऽर्थो ब्रह्मादि. न शास्त्रगोचर इत्याक्षेप. (ब्र सि 85)

"क्रिया सर्वत्र सुलभैवाश्रयणाणाद्यस्त्यादि । 'अस्तिर्भवन्ती पर प्रथमपुरुषोऽप्रयुज्यमानोऽपि गम्यते' (पा भा २-३-१, वा १४६६) इति तत्र ब्रह्मस्वरूपप्रतिपत्तिपर वाक्यमस्त्यर्थनिष्ठम् । तन्निबन्धनस्तत्र पदार्थसश्लेष । सत्तायाश्च प्रकृत्येव सत्प्रधानत्वात् तद्द्वारेण विशिष्टवस्तुसिद्धि' (ब्र सि 85) । अन्तरेणापि क्रिया 'राज्ञोऽय पुरुष', 'फलिता एते वनस्पतय' इति ससर्गप्रतीतेश्च नायमाक्षेप (ब्र सि 99), क्रियारहित वाक्य नास्त्येव, अस्तिक्रियाया च प्रमाणान्तर सापेक्षता-इत्याग्रहेऽपि जनिक्रियानिष्ठादपि वाक्यात् जगत्कारणसत्ता शक्यते प्रतिपत्तुम् (ब्र सि 100)। अतो नाय दोष - इति समाधानम् ॥

(२) न शब्दो ब्रह्मणि प्रमाणम् । तथा हि । न तावद् ब्रह्मान्तर्याम्यादि पद प्रमाणम् । सबन्धज्ञानापेक्षया पूर्वसिद्धे प्रत्ययहेतुत्वेन । नापि वाक्यम् । पदार्थ एव हि विशिष्टो वाक्यार्थो भवतीति । तत्रात्यन्तापरिदृष्टब्रह्माद्यर्थ प्रमाणाभिमतेषु वाक्येषु तद्वाचीनि पदानि स्यु, न वा । यदि न सन्ति, न त इतरै ससृज्येरन् न भिद्येरन् इति न तेषा प्रमेया । अथ तु सन्ति, तथापि तैरनधिगतसबन्धैर्न प्रतिपाद्येरन् । अप्रतिपन्नाश्च न विशिष्टवाक्यार्थ प्रतिपत्तिहेतव - इत्याक्षिप्ते -

सिद्धिकारसमाधानम् - कारणसामान्य वा सत्सामान्य वा 'यतो वा इमानि भूतानि जायन्ते' (तै) इति, 'अस्थूलमनण्वह्रस्वम्' इत्यादिपदार्थैं ससर्गाद्भेदाच्च प्रमाणान्तरानधिगत विशेषरूपमरादयति वाक्यस्य च प्रमेय भवति । तदेव लोकसिद्धपदार्थान्वयेनैवापूर्वार्थ प्रतिपत्तेर्नानवबोधकत्वम्, अनुवादकत्व वा । अथवा न लोकेऽत्यन्त मप्रसिद्ध ब्रह्म सर्वप्रत्ययवेद्यत्वात् ब्रह्मणो व्यतिरेकेण प्रत्येतव्यस्याभावात् । विशेषप्रत्ययाना च सामान्यरूपानुगमात् । भेदोपसहारावशिष्ट च सत्य ब्रह्म - इति प्रतिपादनात् । 'वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम्' (छा) इति दृष्टान्तात् । कि तर्हि शब्देन प्रतिपाद्यते ? प्रपञ्चाभाव । तत्र प्रपञ्चपदार्थोऽपि सिद्ध । निषेधोऽपि सिद्ध । तयो ससर्गात्तदभावप्रतिपत्ति । आम्नायैकनिबन्धनत्व तु तस्योच्यते प्रत्यक्षादीना मविद्यासभिन्नत्वात् प्रत्यस्तमितनिखिलभेदेन रूपेणाविषयीकरणात्, भेद प्रत्यस्तमयस्याम्नायावगम्यत्वात् - इति ॥ ब्र सि 157

अत्रास्तिक्रियाध्याहार ससर्गार्थं क्रियतामिति समाधान तावत् सम्यगेव । 'अस्तिपदसहिताना परमात्मेश्वरादिप्रतिपादकवाक्यपदाना

विशेषणविशेष्यभावेन सहति केन वार्यते' (बृ भा १ ३ १, पा ६२७) इति बृहदारण्यकभाष्यवचनात् । 'अह ब्रह्मास्मि', 'तत्त्वमसि' इत्यादिषु प्रत्यक्ष तथा प्रयोगदर्शनाच्च श्रुत्यन्तेषु । क्रियापदरहितानामपि पदसहति-प्रतीतिरित्यपि साधु । 'अयमात्मा ब्रह्म' (बृ २–५–१९) इत्यादिषु तथैव पदसमन्वयदर्शनात् । न चात्र कार्यवाचिपदाध्याहारेण पूर्ववाद्यभिमतसिद्धि शङ्क्या । 'सपदादिरूपे ब्रह्मात्मैकत्वविज्ञाने अभ्युपगम्यमाने 'तत्त्वमसि', 'अह ब्रह्मास्मि', 'अयमात्मा ब्रह्म' इत्येवमादीना वाक्याना ब्रह्मात्मैकत्ववस्तु-प्रतिपादनपर पदसमन्वय पीड्येत' (सू भा १–१–४, पा १६) इति भाष्यप्रत्याख्यातत्वादस्य पक्षस्य ॥

यत्तूच्यते जनिक्रियानिष्ठादपि वाक्यादपि जगत्कारणसत्ता शक्यते प्रतिपत्तुमिति, न तद्वेदान्तविदा हृदयगमम् । न हि 'यतो वा इमानि भूतानि जायन्ते' इत्यादीनि वाक्यानि जनिक्रियानिष्ठानि, कि तर्हि, 'तद् ब्रह्म' इत्यत्रैव समन्वितानीति ब्रह्मस्वरूपनिष्ठान्येव । अत एव 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा) इत्यादिश्रुत्यवगम्य ब्रह्मात्मनोऽद्वितीयस्याविद्यातत्कार्यातीतस्याविद्यामात्रगोचरभेदससर्गानर्हत्वे सति पदार्थत्ववाक्यार्थत्वयोरयोगात्, सर्वथा सामान्यविशेषकार्यकारणभावरहिते निर्विशेषे 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' (तै २–९) इति मनोवागगोचरे तस्मिन् पदार्थत्ववाक्यार्थत्वयोश्चिन्तयितुमप्यशक्यत्वात्, न युक्त वक्तु कारणसामान्य वा सत्सामान्य वा श्रुति पदार्थै ससर्गा द्भेदाच्च विशेषरूपमापादयतीति । प्रपञ्चपदार्थतन्निषेधससर्गात् प्रपञ्चाभाव बोधयतीति वा । यदा पुनरुच्यते 'सामान्य तूक्त ब्रह्मवादिभिर्विशेषप्रत्यस्त मयमुखेन निरूपणादुपचारत' (ब्र सि 38), न तदा वाक्यार्थत्वमिति । किञ्च, प्रपञ्चाभावो ब्रह्मणीति नैव साधूक्तम् । न हि प्रपञ्चव्यतिरिक्तस्त दभावस्तदधिकरणत्व वा ब्रह्मणि समस्तीति । एतेन यदुक्तमनेनाचार्येण "'तत्तु समन्वयात्' इति चोदनालक्षणाद्धर्मात् तुशब्देन विशेष्य ब्रह्म समन्वयगम्यमुक्तम् । समन्वयो हि पदार्थाना ससर्गो विनियोग, ततो

गम्यते" (ब्र सि 155) इति, तदपि प्रत्याख्यात भवति । न हि ब्रह्मणि ससर्गोऽस्तीति । तस्मात्, न ससर्गद्वारेण भेदद्वारेण वा पदार्थविशिष्टवाक्यार्थत्वेन ब्रह्म प्रतिपादयन्ति श्रुतय, कि तु तत्तद्व्यान्याविवर्तयन्तो लक्षयन्त्येव तत् । यथोक्त तैत्तिरीयभाष्यकारै – "एव सत्यादिशब्दा इतरेतरसनिधानादन्योन्यनियम्यनियामका सन्त सत्यादिशब्दवाच्यात्तन्निवर्तका ब्रह्मणो लक्षणार्थाश्च भवन्तीत्यत सिद्ध 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' 'अनिरुक्तेऽनिलयने' इति चावाच्यत्वम्, नीलोत्पलवदवाक्यार्थत्व च ब्रह्मण (तै भा २ १, पा २८५) इति । तदेव शब्दाविषयत्वेऽप्याम्नायैकनिबन्धनत्व तु ब्रह्मण प्रत्यगात्मत्वेनाविषयीकरणादितरप्रमाणै, आम्नायेन च तस्मिन कल्पितवेद्यत्वादिभेदापनयनेनात्मत्वेन समर्पणात् । यथोक्त सूत्रभाष्ये – 'अविषयत्वे ब्रह्मण शास्त्रयोनित्वानुपपत्तिरिति चेत् । न । अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । न हि शास्त्रमिदतया विषयीभूत ब्रह्म प्रतिपिपादयिषति, कि तर्हि, प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पित वेद्यवेदितृवेदनादिभेदमपनयति' (सू भा १ १ ४, पा १६) इति ॥

## ध्यानाभ्यासकर्मसमुच्चयः –

१०० मण्डनाचार्यो कर्मध्यानाभ्यासयो समुच्चितानुष्ठानेन मिथ्याज्ञानसस्कारनिवृत्ति मनुते । तत्रैतानि तद्वचनानि –

> योऽय श्रवणमननपूर्वको ध्यानाभ्यास प्रतिषिद्धाखिलभेदप्रपञ्चे 'स एष नेतिनेत्यात्मनि, स व्यक्तमेव भेददर्शनप्रतियोगी तन्निवर्तयति । स च सामान्येन भेददर्शन प्रविलापयन् आत्मनापि प्रविलीयते । यथा पय पयो जरयति स्वय च जीर्यति, यथा च विष विषान्तर शमयति स्वय च शाम्यति ॥ (ब्र सि 12-13) । निश्चितेऽपि प्रमाणात् तत्त्वे, सर्वत्र मिथ्यावभासा निवर्तन्ते, हेतुविशेषादनुवर्तन्तेऽपि । यथा द्विचन्द्रदिग्विपर्यासादय आप्तवचन विनिश्चितदिक्चन्द्रतत्त्वानाम् । तथा निर्विचिकित्सादाम्नायादवगतात्मतत्त्व स्यानादिमिथ्यादर्शनाभ्यासोपचितबलवत्सस्कारसामर्थ्यान्मिथ्यावभासानु-

वृत्ति । तन्निवृत्तयेऽस्त्यन्यदपेक्ष्यम् । तच्च तत्त्वदर्शनाभ्यासो लोकसिद्ध । यज्ञादयश्च शब्दप्रमाणका । अभ्यासो हि सस्कार द्रढयन् पूर्वसस्कार प्रतिबद्ध्य स्वकार्य सतनोति। यज्ञादयश्च केनाप्यदृष्टेन प्रकारेण । श्रेय - परिपन्थिकलुषनिबर्हणद्वारेणेत्यन्ये । नित्याना कर्मणा दुरितक्षयार्थत्वात् ।

जातेऽपि तत्त्वदर्शने, अनाहिते च पटौ सस्कारे, द्रढीयसि च मिथ्यादर्शनजे सस्कारे निश्चया अपि मिथ्यार्था भवन्ति । यथा दिङ्मूढस्या नुसहितासवचस प्रागिव प्रवृत्तिदर्शनात् । तथा प्रमितरज्जुभावाया अपि रज्ज्वा प्रमाणाननुसधाने सर्पभ्रान्त्या भयदर्शनम् । तस्माज्जातेऽपि प्रमाणात् तत्त्वदर्शने, अनादिमिथ्यादर्शनाभ्यासपरिनिष्पन्नस्य द्रढीयस सस्कारस्याभिभवाय, उच्छेदाय वा तत्त्वदर्शनाभ्यास मन्यन्ते । तथा च ' मन्तव्यो निदिध्यासितव्य ' इत्युच्यते । शमदमब्रह्मचर्ययज्ञादिसाधनविधान च । अन्यथा कस्तदुपदेशार्थ (ब्र सि 35) ? ननु विद्यारूप ब्रह्मैव । न विद्या ब्रह्मणोऽन्या । तच्च नित्यमकार्यम् । तत्र कथ किञ्चिदपेक्ष्येत ? उच्यते । यथोपधानतिरोहितरूपस्फटिकमणिरुपधानापकर्षण स्वरूपाभिव्यक्तयेऽपेक्षते, तथेहापि द्रष्टव्यम् ॥ ब्र सि 37

अत्र ध्यानाभ्यासेन यदाशास्यते भेददर्शनतत्सस्कारयो प्रविलापन पयोविषादिवदिति तत्र ध्यानस्य क्रियारूपत्वात् तत्कार्यस्याप्यनित्यत्व दुर्वारमिति नालोचितम् । 'नास्त्यकृत कृतेन' (मु) इति हि न्यायोपबृहिता श्रुति । दिङ्मोहद्विचन्द्रादिमिथ्यावभासानुवृत्ति, रज्ज्वादिनिश्चयानामपि सस्कारबलीयस्त्वान्मिथ्यार्थावभासश्चेत्येतदनात्मभूतेषु, दोषप्रयुक्तेषु, प्रमातृत्वानुवृत्तियुक्तेषु दर्शनेषु सभवदपि भय 'स एष नेतिनेत्यात्मा' (बृ), 'तत्त्वमसि' (छा), 'यत्साक्षादपरोक्षाद्ब्रह्म' (बृ) इत्यादिवाक्यजन्ये नित्यापरोक्षात्मविषयके दर्शने कथमपि न सभावितमिति न चिन्तितम् । नेति नेतीति सर्वविकल्पापह्नवसमकालमेव सकलद्वैतनिवृत्तिफलस्य प्राप्तत्वात् पुनरपि प्रमाणान्तरापेक्षण किमर्थमिति च न मनसि कृतम् । अत्रानुसधेयमिद भाष्यवचनम् —

रज्जुरिव सर्पादिभिर्विकल्प्यमाना स्थानत्रयेऽप्यात्मैक एवान्त प्रज्ञत्वादित्वेन विकल्प्यते यदा, तदा अन्त प्रज्ञादित्वप्रतिषेधविज्ञानप्रमाणसमकालमेव आत्मन्यनर्थप्रपञ्चनिवृत्तिलक्षणफल परिसमाप्तमिति तुरीयाधिगमे प्रमाणान्तर साधनान्तर वा न मृग्यम ' ॥ मा भा ७. पा १८६

यदप्युच्यते शाब्दज्ञानस्य क्षणिकत्वमिति, अस्त्येव तत्। न हि ज्ञातृज्ञानादिद्वैतं द्वैतनिवृत्तेरूर्ध्वमप्यवशिष्यते। 'ज्ञानस्य द्वैतनिवृत्ति क्षणव्यतिरेकेण क्षणान्तरानवस्थानात्, अवस्थाने चानवस्थाप्रसङ्गाद् द्वैतानिवृत्ति' (मा भा ७, पा १८७) इति भाष्यात्। यस्तु न शक्नोति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुम्, त प्रत्यनुमन्यत एवास्माभि पदार्थविवेकार्थं शास्त्रयुक्त्यभ्यास। नन्वेतदेव मयाप्युच्यमान श्रवणमननपूर्वक ध्यानाभ्यास इत्येतदेव तर्हि मयोक्तमुपासनं त्वयापि वाचोयुक्त्यन्तरेणानुज्ञातमिति चेत्। न। त्वदुक्तोपासनस्य शाब्दज्ञान संतानस्य कर्तृतन्त्रभावनारूपत्वेन, तेन वास्तवज्ञानोत्पत्त्यनुपपत्ते, तत्फलस्य स्थैर्यासंभवाच्च। अपि च परोक्षज्ञानस्यावृत्त्या साक्षाज्ज्ञानमाविर्भवतीति लोकविरुद्धमेवाङ्गीक्रियते त्वया। अस्मदभिमतज्ञानस्य तु वस्तुतन्त्र त्वात्, शास्त्रयुक्त्यभ्यासस्य चाध्यारोपिताशापनयनेनानुभवजननार्थत्वात्। ज्ञानस्मृतिसंतानस्य चार्थप्राप्तत्वात्, संस्काराभिभवाय यत्नान्तरगवेषण व्यर्थप्रयासमात्रमिति प्रागेवावेदितत्वाच्च (ख ७३) न किञ्चित्कृत्यमिह ध्यानाभ्यासस्य॥

कस्तर्हि निदिध्यासनशमदमाद्युपदेशार्थ इति? उक्तमेतत् पदार्थ-ज्ञानप्रयोजन श्रवणमननाभ्यास इति। निदिध्यासन तु यथा शास्त्रोपदेशं स्वसंवेद्यतापादने प्रयत्नविशेष, अध्यात्मयोगाद्यपराभिधान। स च वर्णित प्राक् (ख ५६)। शमादीनि च यमप्रधानानि प्रत्यक्प्रवणतापादनेन ज्ञानोत्पत्त्यर्थानि। 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षु समाहितो भूत्वात्मन्येवात्मानं पश्यति' (बृ ४-४-२३) इति श्रुते। ननु नाम्नायोऽवाचक, नाप्यनिश्चायक प्राक् साधनविशेषेभ्य। किं तत्र साधनै? न। देहेन्द्रियादिष्वहममाभिमानवतो बहिर्मुखस्य प्रत्यक्पदार्थ-ज्ञानाशक्तौ वाक्यार्थज्ञानानुदयात्। शमादिसंस्कृतान्त करणस्तु प्रत्यङ्मुखो भूत्वा पदार्थं जानाति वाक्यार्थं चानुभवतीति न चित्रम्। तदुक्त

गीताभाष्ये–'शास्त्राचार्योपदेशशमदमादिसंस्कृत मन आत्मदर्शने करणम्' (गी भा २–२१, पा २०) इति ॥

अनुवृत्तमिथ्याभ्यासोच्छेदाय यज्ञादय शब्दप्रमाणका इ त्वत्यन्तोपहास्यम् । यज्ञाद्यनुष्ठान हि कर्तृ वस्वागमि याजानदार्ढ्याय भवति, कुतस्तेन मिथ्यावभासोच्छित्तिप्रत्याशा ? न हि सतमसेन तम उच्छेदो भवेदिति । एतेनेदमप्यपहस्तितम् – 'यज्ञेन दानेन' इति श्रवणा कर्माण्यपेक्ष्यन्ते विद्यायामभ्यासलभ्यायामपि । यथा अन्तरेणाप्यश्व ग्रामप्राप्तौ सिद्ध्यन्त्या शैघ्र्यायाक्लेशाय वा अश्वोऽपेक्ष्यते (ब्र सि 37)· इति । न हि स्वय खञ्जस्य शृङ्खलाबन्ध शीघ्रगमनायेति । यदप्युच्य यज्ञादय केनाप्यदृष्टेन प्रकारेण मिथ्यावभासानुवृत्तिनिबर्हणाय सहार्य भवेयुरिति, तदप्यनुचितमनुपपन्न च । ज्ञानेनाज्ञाननिवृत्तौ तत्संस्कारेणै त्वसभावितबाधकेन अज्ञानसंस्कारस्य तत्कार्यस्य च निवृत्त्युपपत्ते । यदु **बृहदारण्यकभाष्ये** 'ज्ञानेनाज्ञाननिवृत्तौ गम्यमानायाम् अदृष्टनिवृत्ति कल्पनानुपपत्ते । यथा अवघातेन व्रीहीणा तुषनिवृत्तौ गम्यमानाया अग्निहोत्रादिनित्यकर्मकार्या अदृष्टा न कल्प्यते तुषनिवृत्ति, तद्वदज्ञान निवृत्तिरपि नित्यकर्मकार्या अदृष्टा न कल्प्यते ' (बृ भा स ३–३ पा ८००) इति । किमर्थस्तर्हि तेषामुपदेश इति ? तदेतच्छ्रुत्यैवाभिहित 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशके (बृ ४–४–२२) इति । बुद्धिशुद्धिद्वारा विद्योत्पत्तिसाधनत्वमेषामि स्मर्यते 'यज्ञो दान तपश्चैव पावनानि मनीषिणाम्' (गी १८–५) इत्यादि स्थलेषु । उक्त च भाष्ये 'स्मृतिष्वपि भगवद्गीताद्यास्वनभिसधाय फल अनुष्ठितानि यज्ञादीनि मुमुक्षोर्ज्ञानसाधनानि भवन्तीति प्रपञ्चितम्' (सू भा ३–४–२७, पा ४४६) इति । "तस्मात्, यज्ञादीनि शमदमादीनि यथाश्रम सर्वाण्येवाश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि । तत्रापि 'एववित इति विद्यासयोगात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि, विविदिषा

सयोगात्तु बाह्यतराणि यज्ञादीनि–इति विवेक्तव्यम् ” (सू भा ३-४-२७, पा ४४६) इति च ॥

## मोक्षप्राप्तिप्रकार: –

१०१ ब्रह्मसिद्धिकारेण यद्यप्यविद्यैव बन्ध, तदस्तमय एव मोक्ष – इति स्पष्टमुदीर्यते, तथाप्यविद्याकर्मक्षयस्य यत्किञ्चिद् वस्तुवृत्तत्वमपि स्वीक्रियत एवेति भाति । अत्रानुसधेयानि वाक्यानि –

(१) अविद्यास्तमय एव मोक्ष, यतोऽविद्यैव ससार । अविद्यास्तमयस्तु विद्योदय एव नान्य (ब्र सि 119) । स्फटिकस्येव रागाद्यपकर्षणेन स्वरूपाविर्भावो ब्रह्मप्राप्ति । ब्रह्मरूपत्वाद् विज्ञानात्मन । तत्र यथा मलापगमे शुक्लमेव सद् वस्त्र ‘शुक्ल जातम्’ इत्युच्यते, तथा मोहावरणविगमे स्वरूपावि र्भावे ‘स्वेन रूपेणाभिनिष्पद्यते’ (छा) इत्युच्यते । तथा ‘ब्रह्मैव सन् ब्रह्माप्येति’ (बृ) इति । विद्यैव चाविद्यानिवृत्ति, यद्ग्रहणमविद्या, यतो भाव एवाभावनिवृत्ति । अथ विपर्यास, तथापि विरोधितत्त्वज्ञानोदय एव तन्निवृत्ति । न हि शुक्तिकाज्ञानोत्पादादन्या रजतज्ञाननिवृत्तिस्तत्साध्या, प्रयत्नान्तरसाध्या वा । तयोर्यौगपद्यात् ॥ ब्र सि 121, 122

(२) यतश्चाविद्योच्छेदेनैव कर्मोच्छेद, अतस्तुल्यवत् सशयविपर्यासाभ्या प्रसख्यातानि कर्माणि ‘क्षीयन्ते चास्य कर्माणि’ (मु २-२-९) इति । न च कर्मक्षये तत्त्वदर्शनसमनन्तरमेव मुक्ति स्यात् । तथा च ‘तस्य तावदेव चिर यावन्न विमोक्ष्ये ।’ (छा) इति श्रुतिविरोध –इति शङ्क्यम् । यत इय श्रुति क्षिप्रैव मुक्तिरित्याह, न देहपातप्रतीक्षाम् । अथवा यदि कस्यचिच्चिरम्, तावदेव यावन्न विमोक्ष्यत इत्याह । अत कस्यचित् सद्य एव देहपातेन तत्कालिकोऽपवर्ग, कस्यचित् कियाश्चित् क्षेप । द्वितीयो आरब्धकर्मक्षय भोगेन प्रतीक्षत इति । न च प्रथमपक्षे स्थितप्रज्ञलक्षणाभिधानायोग । यत स्थितप्रज्ञो नाम साधक एवावस्थाविशेष प्राप्त । द्वितीयस्मिस्तु पक्षे आरब्धविपाकसस्काराद् भोक्तारमिवात्मान प्रत्येत्याभासमात्रेण विद्वान् । न त्वविद्वानिवारूढाभिनिवेश (ब्र सि 130, 131) । स च सस्कारोऽल्प कालस्थायि, न च तन्निवृत्तये हेत्वन्तरमपेक्ष्यते । तत्त्वदर्शनादेव, स्वयमेव वा तस्यापि निवृत्ते । सा चेयमवस्था जीवन्मुक्तिरिति गीयते । कारणविगमेऽपि कार्यशेषानुवृत्ति सस्कारात्, अतो लब्धवृत्तिकर्मसस्कारात्, तद्विपाक सस्काराद् वा विदुषोऽपि शरीरस्थिति ॥ ब्र सि 132

अत्र यदुक्त विद्योदय एवाविद्यास्तमय इति । तदप्रतिषेध्यम् । आनन्द ब्रह्मणो विद्वान् न बिभेति ' (तै ), ' तत्र को मोह क शोक एकत्वमनुपश्यत ' (ई ) इत्यादि श्रुतिवाक्य नानात्वात् । ' यथा लोके द्रष्टुश्चक्षुष आलोकेन सयोगो यत्कालस्तत्काल एव रूपाभिव्यक्ति , एवम् आत्मविषय विज्ञान यत्काल तत्काल एव तद्विषयाज्ञानतिरोभाव स्यात् ' (बृ भा १–४–१०, पा ६७६) इति भाष्यवचनाच्च । यत्तु स्फटिकस्येव रागाद्यपकर्षणेन स्वरूपाविर्भावो ब्रह्मप्राप्तिरिति, तदपि युज्यते यदि दृष्टान्ते रागाद्यपकर्षणशब्देन निवृत्तिमात्र विवक्षितम् । यदि तु दृष्टान्तगतरागादि रिव वस्तुवृत्तेनैवापबाध्यतेऽविद्यादिरिति तन्नानुमन्यते । यदपि शुक्तिका ज्ञानमेव रजतज्ञाननिवृत्तिरिति । तदपि युज्यत एव । तथा दृष्टत्वात् । पर यद्यात्मज्ञानमपि, शुक्तिकामिव तज्ज्ञानम्, आत्मान प्रत्यक्षीकरोतीत्युच्यते, तदा तदप्यसदेवेति ब्रूम । न हि स्फटिके रागाद्यपकर्षणमेवापेक्ष्यते, तत्स्वरूप ज्ञानगम्य, कि तर्हि विवेकज्ञानमात्रमिति । अत्र भाष्यम् –

> " यथा शुद्धस्य स्फटिकस्य स्वाच्छय शौक्ल्य च स्वरूप प्राग् विवेक ग्रहणाद्रक्तनीलाद्युपाधिभिरविविक्तमिव भवति, प्रमाणजनितविवेकग्रहणात्तु पराचीन स्फटिक स्वाच्छयेन शौक्ल्येन च स्वरूपेणाभिनिष्पद्यत इत्युच्यते प्रागपि तथैव सन् , तथा देहाद्युपाध्यविविक्तस्येव सतो जीवस्य श्रुतिकृत विवेकविज्ञान शरीरात् समुत्थान विवेकविज्ञानफल स्वरूपेण निष्पत्ति केवला त्मावगति । तथा विवेकाविवेकमात्रेणैवात्मनोऽशरीरत्व सशरीरत्व च । मन्त्रवर्णात् 'अशरीर शरीरेषु' (का १–२–२२), ' शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ' (गी १३–३१) इति च सशरीरत्वाशरीरत्वविशेषा भावस्मरणात् ॥ " सू भा १-३-१९, पा ११३

स्थितप्रज्ञत्व सिद्धिरेवेति भगवतैवोक्तम् ' एषा ब्राह्मी स्थिति पार्थ ' (गी २–७२) इति । अतोऽसमीचीन एष वाद कर्मक्षये सद्य शरीरपात इति । द्वितीयस्तु पक्ष साधीयान् जीवन्मुक्त एव स्थितप्रज्ञ इति । ' स चक्षुरचक्षुरिव ' (?), ' अशरीर वाव सन्तम् ' (छा ) इत्यादिश्रुति-

प्रमाणकत्वात् । शरीरधारण संस्कारानुवृत्तिश्च व्यवहारदृष्ट्या चेदभ्युपगम्यते, तदप्यस्तु ।

(१) अपि च नैवात्र विवदितव्यं ब्रह्मविदा कञ्चित् कालं शरीरं ध्रियते न वा ध्रियत इति । कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं च परेण प्रतिक्षेप्तुं शक्येत ? श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेनैतदेव निरुच्यते ॥ सू भा ४-१-१५ पा ४७५

(२) 'बाधितमपि तु मिथ्याज्ञानं द्विचन्द्रज्ञानवत् संस्कारवशात् कञ्चित्कालमनुवर्तत एव ॥ सू भा ४-१-१५ पा ४७५

इति च भाष्येऽभ्युपगमात् । अत एवात्मज्ञानबाधित प्रपञ्चावभासो नात्मसंस्पर्शीति न स बन्ध इति कृत्वा शब्दादेव तादृशज्ञानोत्पत्तेरत ऊर्ध्वं ज्ञानाभ्यासकल्पनं मुधेत्यवोचाम (ख १००) प्राक् । यस्तु 'परोक्षरूपं शब्दज्ञानं प्रत्यक्षरूपश्च प्रपञ्चावभास । तेन तयोरविरोधेन प्रपञ्चावभासो नात्मसंस्पर्शी । उपासनादिना साक्षात्कृतात्मतत्त्वस्य तु विरोधात् सन्नपि प्रपञ्चावभासो नात्मसंस्पर्शीति दुराग्रहव्याधि (ब्र सि 134) सोऽपि तत एव (ख १००) चिकित्सित इति नात्र वक्तव्यमवशिष्यते । उक्तं च मुण्डकभाष्ये –

(1) 'यथा विधिविषये कर्त्राद्यनेककारकोपसंहारद्वारेण वाक्यार्थज्ञानकालादन्यत्रानुष्ठेयोऽर्थोऽस्त्यग्निहोत्रादिलक्षण, न तथेह परविद्याविषये । वाक्यार्थज्ञानसमकालमेव तु पर्यवसितो भवति । केवलशब्दप्रकाशितार्थज्ञानमात्रनिष्ठाव्यतिरिक्ताभावात् ॥ मु भा १-१-६, पा १४५

इति । तदेव व्यवहारदृष्ट्या यथैव शरीरित्वं सेन्द्रियत्वं चात्मन, तथैवास्याविद्याकामकर्मयोगोऽविद्यादृष्ट्यैवेति कृत्वा अविद्यादीनां क्षय श्रूयते – 'भिद्यते हृदयग्रन्थि' (मु) इत्यादिना । विद्वद्दृष्ट्या तु नित्यनिरविद्यो निष्कामो निष्कर्मा चास्यात्मा । अत परमार्थतो देहपाताविद्याक्षय विदेहमुक्त्यादि वार्ता मृषैवेति ज्ञेयम् । तदुक्तम् –

(2) 'अविद्यावतोऽविद्यानिवृत्त्यनिवृत्तिकृतो विशेष आत्मन स्यादिति चेत् । न । अविद्याकल्पनाविषयत्वाभ्युपगमात् रज्जूषरशुक्तिगगनानां मिथ्या

सर्पोदकरजतमलिनत्वादिवद्दोष इत्यवोचाम । तिमिरातिमिरदृष्टिवदविद्या कर्तृत्वाकर्तृत्वकृत आत्मनो विशेष स्यादिति चेन्न । 'ध्यायतीव लेलायतीव' (बृ ४-३-७) इति स्वतोऽविद्याकर्तृत्वस्य प्रतिषिद्धत्वात् । अनेकव्यापार सनिपातजनितत्वाच्चाविद्याभ्रमस्य । विषयत्वोपपत्तेश्च " (बृ भा ४-४-६, पा ९१९)

इति । अतो यत्किञ्चिदेतत् ॥

## अद्वैतप्रक्रियान्तराणामनुमोदनम् –

१०२ ब्रह्मसिद्धौ कर्मसमुच्चितशाब्दज्ञानाभ्यासजनितब्रह्म साक्षात्काररूपज्ञानेनाद्वैताधिगम इत्येषा मुख्या प्रक्रिया । शब्दप्रामाण्य-निर्वाहप्रसङ्गेन प्रपञ्चप्रविलयप्रक्रियाया अप्यशत प्रवेशोऽत्र लम्भित । तथा अध्यारोपापवादप्रक्रिया च –

(१) अनधिगतमपि प्रमाणान्तरेणानधिगतसबन्ध च स्वशब्देन शक्य शब्देन निरूपयितु विशेषप्रतिषेधमुखेन । विशेषशब्दाना नञश्च यथायथ-मर्थैर्विदितसगतित्वात् । तथा च, इत्थमेव तदुपदिश्यते 'अस्थूलम्' इति सर्वविशेषरहितम् । एतत् कथयति – भेदप्रपञ्चविलयेनेति ॥ ब्र सि 26

(२) विशेषनिवृत्त्यैव तत् शब्देन बुद्धौ निधीयते । सुवर्णतत्त्ववत् । न हि सुवर्णतत्त्व पिण्डरुचकादिसस्थानभेदोपप्लवरहित दृश्यते । न च त एव सुवर्णतत्त्वम् । तत्परित्यागेऽपि भावात् सस्थानान्तरे । अथ चादृष्टसस्थान भेदोपप्लवविवेकमपि बुद्ध्या भेदापोहद्वारेण स्वय प्रतीयते । परस्मै च प्रतिपाद्यते । स एष प्रतिपत्तिक्रम श्रुत्यैव दर्शित 'स एष नेति नेति' इति । तथान्यै 'सत्यमाकृतिसहारे यदन्ते व्यवतिष्ठते ।' तथा परै 'अध्यारोपापवादाभ्या निष्प्रपञ्च प्रपञ्च्यते' इति ॥ ब्र सि 26

[अत्राध्यारोपितस्य मिथ्यात्व नोपपादितमिति भगवत्पादसमताध्यारोपाप वादप्रक्रियातो वैलक्षण्य द्रष्टव्यम् ॥ ]

ब्रह्मस्वरूपप्रतिपादनप्रसङ्गेन तु शब्दाद्वैतसत्ताद्वैतभावाद्वैतप्रक्रिया अपि किञ्चित्किञ्चिद्रूपान्तरीकृता स्वीकृता उपलभ्यन्ते । तत्र **शब्दाद्वैत-वादो**[1] यथा –

---

1 अत्र सर्वत्र सिद्धिग्रन्थो न यथावदुदाहृत, कि तु तत्तद्वाद सङ्क्षेपेणैव सगृहीत इति बोध्यम् ॥

(३) 'पर चापर च ब्रह्म यदोङ्कार' (प्र) इत्यादिश्रुतिषु ध्यान विधेरश्रवणात्, तच्छ्रवणस्थलेऽपि सर्वात्मभावप्रतिपादनपूर्वकत्वात्, शास्त्रैकगम्यरूपस्य प्रत्यक्षाद्यविरोधात्, रूपजगतो वाग्रूपात्यागात्, वाक्सूक्ते वाच सर्वात्मत्वसर्वेशित्वयो प्रदर्शनात्, नागुपरागविज्ञानवेदनीयस्य जगतो वाग्रूपान्वितत्वावगमात्, शब्दसस्पर्शेऽर्थे बोधोत्कर्षदर्शनात्, तत्प्रतिसहारे सचेतितानामप्यसचेतितकल्पत्वात्, वाग्रूपाधीनमेव चित श्चितित्वम्, वाक्छक्तिरेव वा चिति । सर्वथापि वाग्रूपाधीनो ज्ञेयबोध इति सर्व ज्ञेय वाग्रूपान्वित गम्यते इति तद्विकारस्तद्विवर्तो वेति सिद्धम् ॥

ब्र सि 17-19

सत्ताद्वैत यथा –

(४) सर्वभेदप्रत्यस्तमयमुखेन श्रुतिषु निरूपणाद् ब्रह्म सत्तासामान्य-मित्युच्यते । निर्विशेषस्य सामान्यस्याभाव एव शशविषाणवदिति ये मन्यन्ते मीमासका, तेषा निर्विशेषविशेषैरेव हेतोर्व्यभिचारो दर्शयितव्य इति ॥

ब्र सि 37

भावाद्वैत यथा –

(५) द्विविधा धर्मा –भावरूपा, अभावरूपाश्चेति । तत्राभावरूपा नाद्वैत विघ्नन्ति । 'विज्ञानमानन्दम्' (बृ) इत्यत्र यद्यानन्दो भाव, तस्य धर्मित्वे विज्ञान धर्म स्यात्, विज्ञानस्य धर्मित्वे आनन्दो धर्म स्यात् । तथा च धर्मधर्मिणोर्भेदादद्वैतविघात । एवमेकस्य रूपद्वयप्रतिपत्तौ । तस्मात्, विज्ञानात्मनो ब्रह्मणो दु खाभावोपाधिरेवानन्दशब्द ॥ ब्र सि 4

तत्र 'नामरूपे व्याकरवाणि' (छा) इति श्रुते, 'ओमित्येतदक्षर सर्वम्', 'सर्व ह्येतद् ब्रह्म' इति च पर्यायेणाभिधानप्राधान्येनाभिधेय प्राधान्येन च निर्देशात्, तुरीयात्मन ओकारस्य च सममेव प्रपञ्चोपशमा-द्वैतात्मत्वेनैवोपसहारात् शब्दार्थयोरुभयोरपि तत्त्व ब्रह्मेत्यवसीयते । तथैव सुषुप्तादावनुभूयते चेति शब्दब्रह्मवाद्युदाहृतश्रुतयो युक्तयश्चैतदविरोधेन नेया–इति स्पष्टम् ॥

**सत्ताद्वैतवादे** सन्मात्र ब्रह्म सर्वत्र भेदेष्वनुगतम् इति कृत्वा सामान्य मित्युच्यते चेत्, न कोऽपि दोष । सन् घट, सन् पट, सन् हस्तीति

नत्रैवानुमानादेव । उक्तं हि मण्डनाचार्येणापि वाक्यशेषेण 'सामान्य तूक्तं ब्रह्मवादिभिर्विशेषप्रत्यस्तमयमुखेन निरूपणादुपचारात्' (ब्र सि 38) इति । यदि तु वैशेषिकाभिमतसत्तासामान्याभेदोऽपीष्ट, तर्हि नेति वक्तव्यम् । काणादकल्पिताया सत्ताया प्रागुत्पत्ते कार्यसमवायादर्शनात् । यथोक्तं छान्दोग्यभाष्ये – 'नैवेद कार्य सदेवासीदित्यभ्युपगम्यते वैशेषिकै । प्रागुत्पत्ते कार्यस्यासत्त्वाभ्युपगमात् । न चैकमेव सदद्वितीय प्रागुत्पत्तेरिच्छन्ति' (छा ६-२-१, पा ५०७) इति । अधिक तु सामान्यविशेषप्रक्रियाप्रकरणतो(ख ३७)ऽवगन्तव्यम् ॥

सिद्धिकाण्डे 'किं तर्हि शब्देन प्रतिपाद्यते ? प्रपञ्चाभाव' (ब्र सि 157) इति लिखितं दृष्ट्वा केचिदाहुर्भावाद्वैतवादोऽपि ग्रन्थकारस्य सम्मत एवेति । नैतत् साधु लक्ष्यते । यत्कारणम् भावाद्वैतमतमनूद्य ब्रह्मकाण्डे सिद्धान्तं प्रक्रमते मण्डनाचार्य – 'अत्रोच्यते । विशिष्टस्याह्लादात्मन प्रकाशस्य चान्द्रमसस्येव शब्दद्वयेन प्रतिपादनान्न दोष' इति । उपसहरति च 'विज्ञानमानन्दं ब्रह्म' इत्यानन्दभेदो विज्ञानभेदो वा ब्रह्मरूपमिति शब्दद्वयेनावगम्यते । तस्मादात्मप्रकाशप्रहृष्टानन्दस्वभावमेव ब्रह्मेति युक्तम्' (ब्र सि 5) इति । सिद्धिकाण्डवाक्य तु ससृष्टार्थतामाह शब्दस्य । शाब्दज्ञानाभ्यासजन्यसाक्षात्कारेणैव तु परमपुरुषार्थप्राप्तिमङ्गीकुरुते ग्रन्थकार (ब्र सि 35, 36, 154) इत्युक्तम् । साक्षात्कृतात्मतत्त्वस्यापि तु प्रपञ्चावभासमनुमन्यतेऽसाविति (ब्र सि 134) च । अतो भावाद्वैतवाद पक्षपात्येव ग्रन्थकार इतीदं विमृश्य निर्णेयं विद्वद्भिरिति भाति ॥

### उपसंहारः –

१०३ अनुशाङ्करवेदान्तप्रास्थानिकेषु प्रायशो नैव सन्ति तादृशा ये मीमासानिष्णातमण्डनाचार्यविचारसरण्या न प्रभाविता । ख्यातिबाधविचार, प्रमाणस्वभावनिरूपणम्, प्रत्यक्षागमयोर्विरोधे सत्यतर स्वीकारे विनिगमना, पदार्थवाक्यार्थतत्त्वम्, ब्रह्मणि शास्त्रप्रामाण्यम्,

प्रतिपत्तिविधिपरीक्षा, ज्ञानकर्मसबन्धनिर्णय , श्रवणादीना विधेयत्वाविधेयत्वे निर्णय , अविद्यास्वरूपाश्रयविषयविमर्शनम् , वेदान्ते तर्कस्थानपरीक्षा, भेदनिरास , शाब्दज्ञानाभ्यासविचार , ब्रह्मसाक्षात्कारविमर्श , जीवन्मुक्ति-विदेहमुक्तिविवेक – इत्यादिषु विचारगोचरेष्वद्य यावन्मण्डनमिश्राभिमत-रीतिरेव प्रीत्यावहा वेदान्ततत्त्वपरिशीलनरसिकानामित्येषा नैवातिशयोक्ति । अत एव ब्रह्मसिद्धिरर्वाचीनसर्ववेदान्तप्रस्थानप्रवेशिकास्थानीयेति कृत्वेह तदादृतप्रक्रिया वितत्य परिशीलितेति क्षन्तव्य ग्रन्थपरिमाणवैरूप्यमुत्तर-ग्रन्थार्थवैशद्यमभिलक्षयद्भिर्जिज्ञासुभि ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिचयावाप्त-
वेदान्तप्रवेशेन श्रीनोवानन्देन्द्रसरस्वतीशिष्यसच्चिदानन्देन्द्रसरस्वत्याख्येन
भिक्षुणा प्रणीताया वेदान्तप्रक्रियाप्रत्यभिज्ञाया
**मण्डनप्रस्थानपरीक्षा नाम षष्ठ काण्ड**

---

# ७. वार्तिकप्रस्थानपरीक्षा

## वार्तिकप्रस्थानस्याकरग्रन्थाः –

१०४ अथ वार्तिकप्रस्थानसमालोचनं प्रारभ्यते। तत्र तैत्तिरीय बृहदारण्यकभाष्यवार्तिके नैष्कर्म्यसिद्धिश्चेत्येते श्रीमत्सुरेश्वराचार्यकृतत्वेन सर्वग्रन्थशोधकसप्रतिपन्ना – इति तानेवाश्रित्येह चिन्ता प्रतायते। मानसोल्लासाख्यं दक्षिणामूर्तिस्तोत्रव्याख्यानम्, याज्ञवल्क्यस्मृतिव्याख्या बालक्रीडाख्या च विश्वरूपाचार्याभिधैर्विरचितत्वेन ख्याते न केवलमैतिहासिकविप्रतिपत्तिहेतो, किं तु वार्तिकाभिप्रायविसंवादख्यापनादपि नात्र वार्तिकप्रस्थानाकरत्वेन स्वीक्रियेते। पञ्चीकरणवार्तिकमप्यत एव कारणादत्र नालम्ब्यते विचारणे। तदत्राधस्तान्निर्दिष्टग्रन्थत्रयमेव तूपजीव्य वार्तिक प्रस्थानतत्त्वनिर्णयश्चिकीर्ष्यते॥

## ब्रह्मसिद्धिसबन्धवार्तिकयोर्निकटसंबन्धः –

१०५ तत्र ब्रह्मसिद्धिसुरेश्वरवार्तिकयो – विशिष्य च सिद्धि बृहदारण्यकसबन्धवार्तिकयो – परमतखण्डने विचारानुक्रमसाम्यं च बहुशो दरीदृश्यते इत्यवोचाम (ख ९१) मण्डनप्रस्थानपरीक्षारम्भे। तदत्र किञ्चित् प्रपञ्च्यते उभयप्रस्थानतुलनाकुतूहलिना सौकर्यार्थम्॥

तत्र ब्रह्मसिद्धौ ब्रह्मकाण्डे ब्रह्मण आम्नायैकसमधिगम्यत्वप्रतिपादन-प्रस्तावेन कर्मज्ञानकाण्डयो सबन्धे विविधानि प्रस्थानान्यनुक्रम्य दूषितानि। वार्तिकेऽपि तानि तथैव प्रायशोऽक्षरशोऽपि तदनुक्रमेणैव दूषणायानुक्रान्तानि। तद्यथा –

(१) भेदप्रपञ्चविलयवाद – सर्वत्रैवाम्नाये क्वचित् कस्यचिद् भेदस्य प्रविलयो गम्यते। तथा च भेदविलयद्वारेण दृष्टैनैव कर्मविधय आत्मज्ञानाधिकारोपयोगिन इति मतम्॥ ब्र सि 27, स वा ३७८–३८३, तत्खण्डनं च (ब्र सि 28–30, वा ३८४, ३९८, ४२४–४२६)[1]

1 अत्र दत्ता सङ्ख्या सिद्धिपत्रपार्श्वसूचका, वार्तिकसूचकाश्च॥

(२) कामविलयवाद – सर्वकामावाप्तिद्वारा आत्मज्ञानेऽधिकार प्रापयति कर्मकाण्ड इति मतम् ॥ (ब्र सि 27, वा ३४३–३४४), तद्दूषण च (ब्र सि 30, वा ३४५–३५४) ॥

(३) ऋणत्रयापाकरणवाद –देवर्णादिऋणत्रयापकरणादधि ज्ञानाधिकारमवतारयन्ति कर्मविधय इति मतम् । तद्दूषण च (ब्र सि 36, वा ४३६) ॥

(४) आत्मज्ञान कर्तृसस्कारतया कर्माधिकारानुप्रवेशीति मतम् (ब्र सि 28), तद्दूषण च (ब्र सि 31, वा ४२७–४३५) ॥

(५) अखिलस्याप्याम्नायस्य कार्यैकनिष्ठत्वम् (ब्र सि 23, नियोग काण्डश्च, वा ४७७–५४१)। तत्प्रत्याख्यान च (ब्र सि 25–26, वा ५४२–७६०) ॥

(६) सयोगपृथक्त्वेन ज्ञानोत्पत्त्यर्थतया

(७) पुरुषसस्कारतया वा विद्याङ्गभाव कर्मणाम् इति पक्षद्वयम्, तदङ्गीकरण च (ब्र सि 27–28, 36, विविदिषार्थं कर्माणि ब्रह्मावाप्त्यर्थं तत्त्याग इति तु वा १४, ३२२, सस्कारापक्षाङ्गीकार वा ८७, १९२, ३०१) ॥

(८) भेदनिराकरणम् (ब्र सि तर्ककाण्ड, स वा ९१७–९८६)–

इत्येतेषु प्रस्थानान्तरविमर्शनेषु भूरिश शब्दतोऽर्थतश्च साम्य लक्ष्यते उभयोरपि ॥

## वार्तिके परामृष्टानि वादान्तराणि –

१०६ तत्र सबन्धवार्तिके ब्रह्मसिद्धावलक्षितानि एतानि मतान्तराणि दूषणायानूदितानि दृश्यन्ते –

(१) मुक्त्यर्थम् उपासना विधीयत इति वाद (स वा २०), (२) कर्मभ्य एवात्मन्यवस्थानलक्षणो मोक्ष प्राप्यत इति वाद (स वा ३२), (३) ज्ञानकर्मणोस्त्रेधा समुच्चयेन मोक्ष इति वादभेदा (स वा ३५७), (४) प्रसख्यान(ज्ञानाभ्यास)विधिवाद (स वा ७६१), (५) भावनार्थं ज्ञानमिति वाद (स वा ४३८), (६) ऐकात्म्यज्ञान सापादिकमिति वाद (स वा ४३९), (७) जागरितादिवासनानिरोधवाद (स वा ४४१–४४२), (८) मनोनिरोधवाद (स वा ४४३) – इत्यादय । ते ब्रह्मसिद्धिकारेण किमिति नानूदिता इति न ज्ञायते ॥

**मण्डनप्रस्थानदूषणं वार्तिके –**

१०७ मण्डनसुरेश्वरयोरैक्यमिदानीं वादग्रस्तमेव वर्तते । भेदेऽपि तयोः, अद्वैतित्वाविशेषाद् द्वैतिविरुद्धयुक्तीरन्योन्येनान्योन्यस्य ग्रन्थादाहृत्य स्वग्रन्थे निवेशनं नाशक्योहनम् । यस्मान्मण्डनग्रन्थेऽपि क्वचित् क्वचिद् भाष्यकारीययुक्तयो वचनव्यक्तयश्च उपलभ्यन्त एव । तस्मादद्वैतिनो द्वैतिखण्डनार्थं ता एव युक्तीः किञ्चिद्विकृत्य प्रयुञ्जते स्म बहो कालात्–इत्यपि शक्यं कल्पयितुम् । तदानीं सुरेश्वराचार्याः परमत-खण्डनाय मण्डनादियुक्तीर्यावदविरोधम् अङ्गीकृत्य स्वप्रक्रियाविरुद्धानि तु स्वपूर्व्यकल्पनान्यपि खण्डयामासुः, तदर्थमेव च ते नियुक्ताः स्वगुरुभिरिति सम्भाव्यते ॥

नैष्कर्म्यसिद्धिग्रन्थस्थविषयसमालोचनयाऽपि एतद् दृढीभवति –

> वेदान्तोदरसंगूढं संसारोत्सारि वस्तुगम् ।
> ज्ञानं व्याकृतमप्यन्यैर्वक्ष्ये गुर्वनुशिक्षया ॥ नै १–३
> न ख्यातिलाभपूजार्थं ग्रन्थोऽस्माभिरुदीर्यते ।
> स्वबोधपरिशुद्ध्यर्थं ब्रह्मवित्निकषाश्मसु ॥ नै १–६

– इति श्लोकयोरवलोकनादिदं भाति यन्मण्डनाचार्यस्य ख्यातिर्यदा विप्रसृता, तदा ज्ञानकर्मणोः समुच्चयं (ब्र सि 154) मोक्षार्थमिच्छतस्तस्य पराभवार्थं ज्ञानकर्मणोरत्यन्तविरोधं केवलज्ञानेनैव निष्क्रियात्मन्यवस्थानं च तिष्ठापयिषयैव नैष्कर्म्यसिद्धिं नामान्वर्थाभिधानं प्रकरणं सुरेश्वराचार्याः प्राणैषुरिति ॥

परोक्षरूपं शाब्दज्ञानम्, उपासनादिना साक्षात्कृतात्मन एव तु मुक्तिः (ब्र सि 134), तत्त्वदर्शनाभ्यासाद् यज्ञाद्यनुष्ठानसमुच्चितादेव च मिथ्यावभासानुवृत्तिनिवृत्तिः (ब्र सि 35) इति चैतत् प्रत्याख्यातम् –

> नित्यमुक्तत्वविज्ञानं वाक्याद्भवति नान्यतः ।
> वाक्यार्थस्यापि विज्ञानं पदार्थस्मृतिपूर्वकम् ॥

अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् ।
एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते ॥
सदेवेत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत् ।
दशमस्त्वमसीत्यस्माद्यथैवं प्रत्यगात्मनि ॥

उ सा १८-१८२ प्रभृति १८४

–इति न्यग्रोधफलबीजसमाख्योदाहरणेनैव (नै ४–३१, ३२, ३३, स वा २०६, २०७, २०८) प्रसङ्ख्यानवादश्च दूषितः, समुच्चयवादोऽपि निरस्तो वार्तिके, नैष्कर्म्यसिद्धौ च । समुच्चयनिषेधार्थमेवोक्तं वार्तिककारैः –

पराचः कामानित्येवं कामानित्यपरं तथा ।
योऽकाम इति तद्वच्च श्रुतिः कामनिषेधनी ॥

इति इहामुत्रार्थभोगविरक्तस्यैव मोक्षेऽधिकारमुक्त्वा –

अविद्याया न चोच्छित्तौ ज्ञानादन्यदपेक्ष्यते ।
ज्ञानोत्पत्तौ न चैवान्यच्छमादिभ्यो ह्यपेक्ष्यते ॥
शमाद्युत्पत्तये नान्यद् बुद्धिशुद्धेरपेक्ष्यते ।
बुद्धिशुद्धौ च नित्यादि कर्मभ्यो नान्यदिष्यते ॥
आत्मज्ञानैकहेतुत्वाद् वाङ्मनःकायकर्मणाम् ।
आत्मज्ञानेन तद्बाधात् कर्मापेक्षा कुतो भवेत् ॥

वा १–३–९७, ९८, ९९, १००

इति । एवम्–सर्वस्यैव वाक्यस्यानधिगतो विशेष एव प्रमेयः । ब्रह्मवाक्येषु कारणसामान्यं वा सत्सामान्यं वा 'यतो वा', 'अस्थूलम्' इत्यादिपदार्थैः संसर्गाद् भेदाच्च प्रमाणान्तरानधिगतं विशेषरूपमासादयति, वाक्यस्य च प्रमेयं भवति (ब्र सि 157)-इति, अथवा शब्देन प्रपञ्चप्रविलयः प्रतिपाद्यते । तत्र प्रपञ्चाभावोऽपि सिद्धः निषेधोऽपि सिद्धः, तयोः संसर्गात्तदभावप्रतिपत्तिः (ब्र सि 157) इति मतद्वयमपि वार्तिककारैः खण्डितम् । ब्रह्मात्मैकत्ववाक्येषु पदार्थसंसर्गो भेदो वा नोच्यते, अद्वितीय-प्रत्यगात्मनोऽवाक्यार्थत्वात् इति पदे पदे ब्रुवाणैः (नै ३–२५, २६, ७६, स वा ९०२, ९०९, ९१०, वा १–४–१४०६, १४०७,

१४०८, १४३१, वा ३-४-२९, ३३ ४६, वा ३-५-१००, १८४, १९०), 'पूर्णमेवावशिष्यते' इति वाक्यव्याख्यानावसरे च –

क्षेत्रज्ञेश्वरभेदेन ह्यभिन्न वस्त्वविद्यया ।
भिन्न बोधात्तमोध्वस्तौ नेतीत्यात्माऽवशिष्यते ॥
न भेदो न च ससर्गो नाप्यभावोऽवसीयते ।
तन्मूलाज्ञानविध्वस्तेर्यथोक्तागममानत ॥ वा ५-१-२१, २२

इति ॥

## वार्तिके भर्तृप्रपञ्चमतविमर्शः –

१०८ इतीद सर्वमुच्यते मण्डनमतमेव प्राधान्येन नैष्कर्म्यसिद्धौ वार्तिकयोश्च निराचिकीर्षितमिति कृत्वा । भर्तृप्रपञ्चनिराकरणाभिप्रायेऽपि कल्प्यमाने सर्वमिद यथोपवर्णितम् उपनेतु शक्यत एवेति तु न प्रस्मर्तव्यम् । तस्मिन् हि कल्पने जाग्रति नैका प्रबलतरा युक्तय । यतो भर्तृप्रपञ्चा अपि द्वैताद्वैतवादित्वात् ससर्ग भेद चाङ्गीकुर्वन्त्येव वाक्यार्थत्वेन । तदीयमेव हि व्याख्यान 'पूर्णमद' इति वाक्यस्यानूद्य प्रतिविधानावसरे उपस्थापित यथोदाहृत वार्तिक 'न भेदो न च ससर्गो नाप्यभावोऽवसीयते' (वा ५-१-२२) इत्यादि । भर्तृप्रपञ्चा ज्ञानकर्मसमुच्चयवादिन एव (ख ८७) मण्डनवत्, शाब्दज्ञानव्यतिरेकेण साक्षात्काररूप ज्ञानान्तरमप्यपेक्षितव्यमिति तैरप्यङ्गीकृतमेव (ख ८४)। नैष्कर्म्यसिद्धौ यद्यपि 'वाक्यजनितम् अह ब्रह्मेति विज्ञान ससर्गात्मकत्वादात्मवस्तुयाथात्म्यावगाह्येव न भवति' इति वादिनामपि मतमनूदितम् (नै १-६७ स), तथापि तद् 'विज्ञाय प्रज्ञा कुर्वीत ब्राह्मण' (बृ ४-४-२१) इति विधिमङ्गीकुर्वाणानामेव, न तु 'तदपि वा (विधान) व्यर्थमेव, प्राप्तार्थत्वात् । साक्षात्करणफल हि तत्तदनुचिन्तन' दृष्टार्थम् (ब्र सि 154) इति मण्डनसमत विकल्पान्तर क्वापि विमृष्ट सुरेश्वराचार्यै । किञ्चान्यत् बृहदारण्यकभाष्यप्रणयनमेव कृत्स्न भर्तृप्रपञ्चनिराकरणपूर्वक

स्वप्रक्रियास्थापनाय, तदर्थमेव तु भाष्यवार्तिकनिर्माणम् इत्यपि कल्पयितु शक्यतेतराम् । यस्मात् प्रतिपद भाष्ये वार्तिके च तन्मतदूषण प्रदर्श्यैव स्वाभिमत श्रुत्यर्थ उपस्थाप्यत [illegible] पञ्चमे काण्डे विस्तरश । न त्वेवविधो मण्डनखण्डनप्रपञ्चो दृश्यते भाष्ये वार्तिके वा । अपि चेद वाक्य लिखितमुपलभ्यते भाष्ये भर्तृप्रपञ्चानुद्दिश्य – 'तस्मात्, श्रुत्यर्थकल्पनाकुशला सर्व एवोपनिषदर्थमन्यथा कुर्वन्ति । तथापि वेदार्थश्चेत् स्यात् काम भवतु न मे द्वेष' (बृ भा पा ७५२) इति । वार्तिककारैश्च –

सामान्येन समस्त तद्विशेषैर्व्यस्तमेव च ।
कृत्स्नमेव पर ब्रह्म सदोपासीत यत्नत ॥
अवस्थावदवस्थाभि क्वचित्कात्स्न्र्य प्रचक्षते ।
कार्यकारणरूपेण क्वचिद्व्याचक्षते तथा ॥
भागभागिविभागेन नाभिनेम्यरवत्तथा ।
व्याचक्षते महात्मान सप्रदायबलात् किल ॥

वा १-४-९४८ प्रभृति ९५०, पा ६२३-६२४

सप्रदायविदस्त्वत्र नानात्वैकत्ववादिन ।
भिन्नाभिन्नात्मक ब्रह्म नामरूपादिवज्जगु ॥

वा १-६-४६, पा ८७६

'अन्ये त्वत्राभिसबन्धमेव व्याचक्षते बुधा' (वा २-१-२१, पा ८९०), 'परीक्ष्यैतद् द्वय ग्राह्य स्वयमेव परीक्षकै' (वा २-१-२५५, पा ९२९), 'अप्यौपनिषदमन्या केचिदत्यन्तनैपुणात् । प्रक्रिया रचयित्वाहुर्वेदान्तार्थविपश्चित ॥' (वा २-२-९०, पा १००७), व्याचक्षतेऽन्यथैवेम दृष्टान्त केचिदात्मन । समस्तादिप्रतिज्ञार्थसिद्धये ब्रह्मवादिन ॥ (वा २-५-६७, पा ११२३), 'वैश्वानरवरादत्र केचिदाहुर्महाधिय । देहद्वयविमोकेऽपि नैव मुक्त पुमानिति ॥' (वा ३-२-४१, पा ११५४), 'समस्तव्यस्तताव्याख्या तस्मादन्धपरम्परा । वैश्वानरवरादेव न तु न्यायानुसारत ॥' (वा ४-३-११८७, पा १५९०), 'हुतभुग्वरसश्रयात्' (वा पा १७८५), 'इति श्रीमन्महाभर्तृप्रपञ्चस्य महीयत । व्याख्यामधीयते धीरा न्यायागमबहिष्कृतम्' (वा ४-४-४१२, पा १७८९), 'व्याचख्युरतिनैपुणात्' (वा पा १९५३) –

इत्यादिस्थलेषु शतश भेदरहित नानारसब्रह्मवादो समुच्चयवादश्चोपहास-पूर्वक विनिन्दित । अव्यावृत्ताननुगत ब्रह्मात्मस्वरूपम् इति पदे पदे (वा पा ५४०, ५६५, ७२०, ९०१, ९४७, ९९४, १०३७, ११०२, ११११, १३४२, १४४१, १८१४, १८५९, १८६०, १९३६, १९५०) विशिषन्तो वार्तिककारा समस्तव्यस्तब्रह्मवादिन एव भर्तृप्रपञ्चान् मनसि निधापितवन्त इति सभाव्यते । तदेतत् सर्वमालोच्य भर्तृप्रपञ्चा एव प्राधान्येन व्युदसनीयतया समुद्दिष्टा इति कल्पयितु युक्ततर-मिति प्रतिभाति । अत्रैतदपि प्रसक्तानुप्रसक्त चिन्तनीयम्, यदि मण्डनकाले भर्तृप्रपञ्चवृत्तिरेतादृश सुप्रसिद्धा आसीत्, तत्किमिति स विद्वान् नैव तन्मत कटाक्षेणापि वीक्षितवानिति ? अत्र तत्त्व निर्णेतुमशक्ता वय ग्रन्थ-पुरातत्त्वशोधकाना सविधे विनिर्णयायेम सशयग्रस्तविचारनुपस्थाप्य प्रकृतमेवानुवर्तामहे ॥

## आत्मैकत्वस्यानुभवस्वरूपत्वात् स्वतःसिद्धत्वम् –

१०९ यथैव भाष्यकारैरात्मन स्वत सिद्धत्वमुपक्षिप्तम् 'न ह्यात्मा आगन्तुक कस्यचित्, स्वयसिद्धत्वात् । न ह्यात्मा आत्मन प्रमाण-मपेक्ष्य सिध्यति ' (सू भा १–१–७, पा २६८) इति ब्रुवाणै, एवमेव वार्तिककारैरपि ' न हि वय प्रमाणबलेनैकात्म्य प्रतिपद्यामहे । ऐकात्म्यस्य स्वत एवानुभवमात्रात्मकत्वात् । अत एव सर्वप्रमाणावतारासभव वक्ष्यति, प्रमाणव्यवस्थायाश्चानुभवमात्राश्रयत्वात् (नै १–८९)–इति वदद्भि । प्रमाता च प्रमाण च प्रमेयौ निश्चितिस्तथा । यत्सान्निध्यात् प्रसिध्यन्ति तत्सिद्धौ किमपेक्ष्यते ॥ (वा १–४–८७०, पा ६०७) इत्यादि-स्थलेषु (पा ९७८, १२२३, १४१०, १५३९, ) प्रमाण तदभावादीनामप्यनुभवरूपात्मनैव सिद्धम् आत्मनश्च स्वयसिद्धता भूरिश आहुर्वार्तिककृत ॥

## वार्तिकप्रस्थाने अविद्या –

११० भाष्यकारैस्तावत् 'तमेतमेवं लक्षणम् अध्यास पण्डिता अविद्येति मन्यन्ते' (सू भा पा २) इत्युक्तम्। ब्रह्मसिद्धिकारेण तु जीवेषु 'नैसर्गिकी अविद्या' (ब्र सि 12) इत्युक्त्वा 'अग्रहणम् विपर्ययग्रहण वा' (ब्र सि 9) इति विकल्प्य 'विभ्रम एवाविद्या' (ब्र सि 11) इति पक्षे आदर कृत, 'अनादित्वादुभयोरविद्याजीवयोर्बीजाङ्कुरसतानयोरिव नेतरेतराश्रयत्वप्रक्लृप्तिमावहति' (ब्र सि 10)-इति चोक्तम्। भर्तृप्रपञ्चैस्तु– 'अह सर्वोऽस्मीत्यसर्वोबोधोऽविद्या (ख ८२, पा १६१), सा च भूम्येकदेशोत्थोषरवत् आत्मन स्वत उत्थिता' (ख ७९, पा १५५)[1] इत्युक्तम्। वार्तिककारा पुनर्ज्ञानाभाव तत्कार्यं चाविद्येत्याचक्षते । सा च स्वानुभवैकसिद्धा, न प्रमाणसिद्धेति च । एवमनुभवमात्रसिद्धत्वात् प्रमाणादपैति सा सकार्यम्, अविचारितसिद्धत्वात् – इतीद चासकृदुक्त तै 'ऐकात्म्याप्रतिपत्तिर्या स्वात्मानुभवसश्रया। साविद्या ससृतेर्बीज तन्नाशो मुक्तिरात्मन ॥' (नै १–७), 'अविचारितससिद्धि तमोवत्स्यात्तदुद्भवम्। कृत्स्न जगदतो मोहध्वस्तौ ध्वस्त भवेच्चिति ॥' (वा १–४–१३२९, पा ६९८), 'यतोऽनुभवतोऽविद्या ब्रह्मास्मीत्यनुभूतिवत्। अतो मानोत्थविज्ञानध्वस्ता साप्येत्यथात्मताम् (स वा १७७)–इति च प्रमाणबाध्यत्व तस्यास्तत्र तत्रोच्यते। अत्र वार्तिकश्लोका विलिख्यन्ते यथोक्तार्थप्रकाशनाय–

**(१) न जानामीत्यविद्यैका नित्या तत्कारण मता।**
**स्वप्रसिद्धयैव सा सिध्येन्निशौलूकीव वासरे ॥ तै वा २–१७६**

[तत्कारणम् – आत्मावच्छेदकारणम्, स्वप्रसिद्धयैव – स्वानुभवेनैव।]

---

1 भर्तृप्रपञ्चमतविमर्शावसरे भाष्येऽनूदित वाक्यमिह कसे परामृष्टम्। **वार्तिके तु स्पष्ट परामृष्ट टीकाया चोल्लिखित वाक्यमित्थमस्ति –**

(a) **भगवत शक्तिरविद्या नैसर्गिक्यपि तस्मादेव व्यक्ता सती तदेकदेश विकृत्य तस्मिन्नेव जीवे तिष्ठति ॥**

(b) **यथोषरादिर्भूम्येकदेशधर्मो न सर्वभूधर्म, तथा अविद्या परस्य धर्मो न ॥ वा २–३–१२२, १२३, पा १०१३**

(२) प्रमाणोत्पन्नया दृष्ट्या योऽविद्या द्रष्टुमिच्छति ।
दीपेनाग्नौ ध्रुव पश्येद् गुहाऽऽक्षिगत तम ॥ तै वा २ १७७

(३) अनात्मेतीह यद्भाति तदविद्याविजृम्भितम् ।
तस्मादविद्या साप्युक्ता विद्या त्वात्मैकरूपिणी ॥ तै वा २-१७८

(४) आत्माग्रहातिरेकेण तस्या रूप न विद्यते ।
अमित्रवदविद्येति सत्येव घटते सदा ॥ तै वा २-१७९

[आत्माग्रहणमेव तस्या अनात्मरूपाया रूपम् । अत एव विद्याविरुद्धत्वात् अविद्येति तस्या अपि व्यपदेश इत्यर्थ ॥ ]

(५) उत्थान चाप्यविद्याया परस्मादात्मन स्वत ।
ऊषरादिवदित्यादिकल्पना नोपपद्यते ॥
अनिर्मोक्षप्रसक्ति स्याद्यद्यविद्या परात्मन ।
निरात्मवादसक्तिश्च मोहोच्छेदे भवेदिह ॥
बृ वा २-३-१३०, १३१

[भर्तृप्रपञ्चमतनिरासार्थमिद श्लोकद्वयम् । ]

## अज्ञानविषये आक्षेपपरिहाराः –

१११ (१) ब्रह्मसिद्धौ अविद्यानिवृत्तिविचारप्रसङ्गादिद चोद्य मुत्थापितम् –

'नित्यस्य ब्रह्मण स्वभावस्यानुच्छेद । अथाविद्या न तत्स्वभाव, अर्थान्तर ब्रह्मण आपद्येत, न वा स्यात् । तत्र कि निवर्त्यम् ? अथाग्रहण-मविद्या । सा कथमर्थान्तर स्यात् ? विद्या तु तन्निवर्तिका नित्या ब्रह्मणि, न च ब्रह्मणोऽन्योऽस्ति । यदि विपर्ययग्रहणमविद्या, तर्हि कथ तस्या निवृत्ति ? तस्या ब्रह्मस्वभावत्वेऽस्वभावत्वे वा कथितदोषात् इति ॥
ब्र सि 8-9

[ अत्राक्षेपसारमात्र सगृहीतम् । ]

अस्य च परिहार –

'नाविद्या ब्रह्मण स्वभाव, नार्थान्तरम्, नात्यन्तमसती, नापि सती । एवमेवेयम् अविद्या, माया, मिथ्यावभास इत्युच्यते । स्वभावश्चेत् कस्यचित्, अन्योऽनन्यो वा परमार्थ एवेति नाविद्या । अत्यन्तासत्त्वे खपुष्पसदृशी न व्यवहाराङ्गम् । तस्मादनिर्वचनीया (ब्र सि 9) इति कल्पनया ब्रह्मभिन्नानामेव जीवानामविद्येति च नोक्तो दोष ॥ ब्र सि 10

इह चोद्यमनूदित श्लोकवार्तिकात् –

> स्वाभाविकीमविद्या तु नोच्छेत्तु कश्चिदर्हति ।
> विलक्षणोपपाते हि नश्येत् स्वाभाविक क्वचित् ।
> न त्वैकात्म्याभ्युपायाना हेतुरस्ति विलक्षण ॥ श्लो वा पा ६६३

इति । परिहारस्त्वविद्याया अनिर्वचनीयत्वाभ्युपगमेन । वार्तिके तु नाविद्याया अनिर्वचनीयत्वमुपदिष्ट दृश्यते क्वचिदपि । 'न जानामीत्यविद्या' इत्यग्रहणरूपत्व च तस्या स्वीकृतम् । अतोऽस्य चोद्यस्य तत्र कथ परिहारोऽभीष्ट इति विचारणीयम् । तत्रेमे श्लोका परिभावनीया –

> स्वाभाविक्यप्यविद्येयमनुभूत्याऽवभासिता ।
> तम सूर्योदयेनेव ज्ञानेनोत्कृत्य नाश्यते ॥
> अनादिकालमज्ञान ज्ञानेनादिमता क्षणात् ।
> दृश्यते नाश्यमान हि न चास्यावृत्तिरीक्ष्यते ॥
> एवभूतोऽप्यय प्रत्यक्स्वात्मानुभवसश्रयात् ।
> व्युत्पत्ते प्रागविज्ञात सर्वाज्ञानादिसाक्ष्यपि ॥
> स वा १०८८–१०९०

अयमभिप्राय । अविद्या हि स्वाभाविकी, न जानामीत्यनुभवदर्शनात् । ज्ञानप्रागभावस्य आगन्तुकेन ज्ञानेनावृत्तिशङ्कारहित विनाश्यत्वदर्शनात् सर्वत्र । न च विद्यास्वभावे ब्रह्मणि कथमज्ञानमिति शङ्क्यम् । सर्वज्ञाना-ज्ञानादिसाक्षिणोऽपि प्रागागमाद् व्युत्पत्तेरज्ञत्वाज्ञातत्वयो सभवात्–इति । एव च स्वाभाविक्येवेयमविद्या आगन्तुकेन श्रुतिवाक्यजनितेन ज्ञानेन निवर्त्यते । न च ब्रह्मणोऽन्यस्याभावात् कथमिदम्?–इति शङ्कासमुन्मेष । प्राग् व्युत्पत्ते सर्वस्यापि व्यवहारस्य यथाप्रसिद्धस्य स्वीकारादिति ॥

(२) स्यादेतत् । अविद्याया अनुभवसिद्धत्वमेव कथम्? तथा सिद्धत्वे वा कथ ब्रह्मण्यविद्यातत्कार्यसपर्कजो दोषो न स्यात्? कथ वा तादृश्यास्तस्या निवृत्तिरिति? तत्रेमे श्लोका भवन्ति –

> (अ) सर्वोऽप्यनुभवात् सिद्धा बालोऽप्यज्ञातता स्वत ।
> न किञ्चिज्जान इत्येव पृष्टो वक्ति प्रमा विना ॥ स वा ९९३

(३) वार्तिककारमते ज्ञानाभाव एव संसारकारणम् । अत एव ते– 'ऐकात्म्याप्रतिपत्तिर्या स्वात्मानुभवसंश्रया । साऽविद्या संसृतेर्बीजं तन्नाशो मुक्तिरात्मनः ॥' (नै १–७) इति प्रतिजानते । अत्र मीमांसकाश्च चोदयन्ति – 'अज्ञानमन्ये त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः । वस्तुत्वाद् द्विविधस्यात्र संभवो दुष्टकारणात् ॥' (श्लो वा १–२–५४) इत्यभियुक्त वचनात् मिथ्याज्ञानस्य वस्तुत्वात् कारणत्वं भवति, न त्वज्ञानस्य संसार कारणत्वं युक्तमभ्युपगन्तुम्, अवस्तुत्वादिति । अत एव हेतोः स्यात्, आचार्यमण्डनो मिथ्याज्ञानस्यैव विशेषतोऽविद्यात्वम् अभ्युपजगाम । 'न खल्वग्रहणमभावः कस्यचिन्निमित्तम्' (ब्र सि 32) इति वदन् । तत्र वार्तिककाराः प्रत्याहुः –

किं भोः सदपि मानेन वस्तु साक्षान्निरस्यते ।
तस्मिन्निरस्ते किंशेषं यस्मिन्मानस्य मानता ॥ वा १–४–४२३
मिथ्याज्ञानं कथं वस्तु न हि मिथ्येति वस्तुमत् ।
मिथ्या तद् वस्तु चेत्युक्तिर्महतामेव शोभते ॥ वा १–४–४२५
स्वतोऽपि यदि सा वस्तु रज्ज्वा सर्पादिका सति ।
रज्ज्वात्मना तथापीयमवस्त्वेवात्र बाध्यते ॥ वा १–४–४२६
मिथ्याज्ञानस्य कार्यत्वात् किं तत्कारणमुच्यताम् ।
अकारणं सत्कार्यं चेद्डिम्भकैरपि हस्यते ॥ वा १–४–४२७
अज्ञानं संशयज्ञानं मिथ्याज्ञानमिति त्रिकम् ।
अज्ञानं कारणं तत्र कार्यत्वं परिशिष्टयोः ॥ वा १–४–१३६८

[अत्र मिथ्याज्ञानस्यापि ज्ञानाभाववदवस्तुत्वादेव प्रमाणज्ञानेन बाध्यत्व मित्युक्तम् । अज्ञानादेव मिथ्याज्ञानस्योत्पत्तेर्न मीमांसकचोद्यं सम्यगिति च ॥]

## भाष्यवार्तिककारयोरविद्याप्रक्रिये –

११२ सूत्रभाष्ये 'अन्योन्यस्मिन् अन्योन्यात्मकताम्, अन्योन्य धर्मांश्चाध्यस्येतरेतराविवेकेन, अत्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञान निमित्तः, सत्यानृते मिथुनीकृत्य अहमिदं ममेदमिति नैसर्गिकोऽयं लोक व्यवहारः' इति मिथ्याज्ञानस्याध्यासत्वमुक्तम् । 'अध्यासो मिथ्याप्रत्यय रूपः' इति च । तस्यैव च मिथ्याज्ञानस्याध्यासापरनाम्नः अविद्यात्वमुक्तम्

(सू भा पा २)। वार्तिके तु 'आत्मात्मवस्त्वसबन्ध आत्माऽऽत्माज्ञानयोर्मत । परोऽविवेको भूतानामात्माविद्येति कथ्यते' (वा १-४-३८१)–इत्यविवेक स्यैव ज्ञानाभावरूपस्य पतिज्ञातम् अविद्यात्वम्। 'यदेव नित्यमज्ञान मिथ्याज्ञान तदेव तु । कारणेतररूपेण तयोरव्यभिचारत ॥ (बृ वा १-४-३८६) इत्युच्यते मिथ्याज्ञानस्य अज्ञानैकसारवस्त्वस्यापनार्थम्। 'अज्ञान सशयत्वाच्चो मिथ्याज्ञानात्तथैव च । तयोस्तत्त्वविवक्षायामज्ञान तन्नामुच्यते ॥' (वा १-४-४४०) इति स्पष्टीकृत च स्वमतम्। 'अस्यानर्थहेतो प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते' (सू भा पा ४) – इति सुस्पष्टमध्यासप्रहाणार्थमेव वेदान्तप्रवृत्तिरित्युद्घोषितवता भाष्यकाराणा मत विनिवर्त्य स्वमतमेव मुपन्यस्तमतिस्पष्टोक्त्या–'मित्युत्पत्तावनुत्पत्तिर्विरोधाद् बाध्यते यत । तद्बाधे नाप्यपेक्षास्ति मिथ्याधीबाधन प्रति ॥ मिथ्याधियोऽपि बाधत्वमज्ञानैक समन्वयात् । मूलध्वस्तौ हत तच्चेन्मिथ्या धी किं करोति न ॥' (वा १-४-४३७, ४३८) इति । अतोऽत्र कतर पक्षो ज्यायानिति विचिन्त्यमस्ति । अत्र यथाप्रतिभान तत्त्व विविच्यते ॥

तत्रात्मानात्मनोरविवेक एव निमित्तमितरेतराध्यासनिमित्तमिति भाष्यकारैरप्युच्यते सव्यवहारमात्रालम्बनार्थत्व बुद्धेराश्रित्य । तथा ह्युच्यते 'इतरेतराविवेकेन मिथ्याज्ञाननिमित्तो व्यवहार' (सू भा पा १) इति। गीताभाष्ये च 'इतरेतरतद्धर्माध्यासलक्षण सयोग क्षेत्रक्षेत्रज्ञस्वरूपविवेका भावनिबन्धन' (गी भा १३-२६) इति। यथा हि लोके शुक्तिरजताव भासयोरविवेकनिबन्धन शुक्तौ रजताध्यास, एवमत्रापीति कृत्वा इदमुच्यते इतरेतराविवेकनिबन्धनोऽयमात्मानात्मनोरन्योन्याध्यास इति। न हि यथैव दृष्टान्ते शुक्तिद्रष्टुस्तद्दर्शनात् पूर्वमेव प्रमातृत्व लब्धास्पदम्, तथैवात्रा- प्यात्मानात्मनोर्दर्शनात् पूर्वमेवास्यात्मन प्रमातृत्व लब्धोदय सत् तयोरविवेक प्रयोजयति तन्निबन्धनश्चाध्यासस्तयोरिति वक्तु शक्यते । प्रमातृत्वस्यैव तु यथोक्ताध्यासकार्यत्व हीष्यत इति। तस्मान्नायमविवेकाध्यासयो कालकृत

क्रमोऽभिप्रेत, किं तर्हि, प्रतिपत्तिक्रम एवायम्—अध्यासप्रतिपत्तिरविवेकप्रतिपत्तिपुरःसरेति । यच्च चोद्यते, मिथ्याज्ञानस्य कार्यत्वादज्ञानकारणकत्वं नान्तरीयकमिति, तत्राप्येषैव गतिः । [illegible] सत्त्वात् । न ह्यध्यासोऽलब्धात्मक एवा[illegible]पेक्ष्य कालावस्थादिकं प्रत्युपस्थापयितुं प्रभवेदिति । अनोऽनात्मनि विषयेऽज्ञानस्याग्रमिथ्याज्ञानरूपत्वेन यत् प्रतिभानं तत् सर्वमध्यास एव न तत्र व्यावहारिकप्रातिभासिकाध्यासेष्विव निमि[illegible] । 'एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः' इति भाष्यात् । अङ्गीकृतं चैतदेव वार्तिककारैरपि प्रकारान्तरेण 'यदेव नित्यमज्ञानं मिथ्याज्ञानं तदेव तु' इति वदद्भिः । अतो नात्र प्रक्रियावैषम्यं शङ्कनीयम् । एतद्दृष्ट्या विविच्यमानं वार्तिककारीयमज्ञानमिथ्या[illegible]विमर्शनं तु दर्शनान्तराभिमतमिथ्याज्ञानदूषणमात्रपर्यवसायित्वेन नेयम् । तत्र हि प्रमात्राश्रयमेव मिथ्याज्ञानादिकमित्यस्मदभिप्रायः ॥

**अविद्याश्रयविषयविवेचनम् –**

११३ अविद्या कस्य ?–इति प्रश्नस्योत्तरं 'जीवानामिति ब्रूमः' (ब्र सि 10) इति ब्रह्मसिद्धौ । तन्मतविमर्शनं तु पूर्वं (ख ९४, ९५) गतम् । भर्तृप्रपञ्चास्तु ब्रह्मणः स्वतः उत्थिता अविद्या तदेकदेशं विकृत्य जीवे तिष्ठतीत्याहुः । सा त्वनात्मधर्म इति च । सुरेश्वराचार्यास्तु प्राहुः –

> तच्चाज्ञानं स्वात्ममात्रनिमित्तं न संभवतीति कस्यचित् कस्मिंश्चिद् विषये भवतीत्यभ्युपगन्तव्यम् । इह च पदार्थद्वयं निर्धारितम्, आत्मा अनात्मा च । तत्रानात्मनस्तावत्, नाज्ञानेनाभिसंबन्धः । तस्य हि स्वरूपमेवाज्ञानम् । न हि स्वतोऽज्ञानस्याज्ञानं घटते । संभवदपि अज्ञानस्वभावे अज्ञानं कमतिशयं जनयेत् ? न च तत्र ज्ञानप्राप्तिरस्ति । येन तत्प्रतिषेधात्मकमज्ञानं स्यात् । अनात्मनश्चाज्ञानप्रसूतत्वात् । न हि पूर्वसिद्धं सत्, ततो लब्धात्मलाभस्य सेत्स्यत आश्रयस्य आश्रयि संभवति । तदनपेक्षस्य च तस्य निःस्वभावत्वात् । एतेभ्य एव हेतुभ्यो नानात्मविषयम् अज्ञानं संभवतीति ग्राह्यम् । एवं तावन्नानात्मनोऽज्ञानित्वं नापि तद्विषयमज्ञानम् ।

पारिशेष्यादात्मन एवास्त्वज्ञान तस्य ‘ अज्ञोऽस्मि ’ – इत्यनुभवदर्शनात् । ‘ सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्’ (छा ७-१-३) इति श्रुते । न चात्मनोऽज्ञानस्वरूपता । तस्य चैतन्यमात्रस्वाभाव्यात्, अतिशयश्च सभवति ज्ञानविपरिलोप । ज्ञानप्राप्तेश्च सभव । तस्य ज्ञानकारित्वात् । न चाज्ञानकार्यत्वम् । कूटस्थात्मस्वाभाव्यात् । अज्ञानानपेक्षस्य चात्मन स्वत एव स्वरूपसिद्धेर्युक्तमात्मन एवाज्ञत्वम् । किंविषय पुनस्तदात्मनोऽज्ञानम् ? आत्मविषयमिति ब्रूम । नन्वात्मनोऽपि ज्ञानस्वरूपत्वात्, अनन्यत्वाच्च ज्ञानप्रकृतित्वादिभ्यश्च हेतुभ्यो नैवाज्ञान घटते । घटत एव । कथम् ? अज्ञानमात्रनिमित्तत्वात् तद्विभागस्य सर्पात्मतेव रज्ज्वा । तस्मात् तदपनुत्तौ द्वैतानर्थाभाव ’ इति ॥ नै ३ (सबन्धोक्ति)

परमार्थतस्तु नैवाविद्या कस्यचिदिति वार्तिककारमतम् –

> नाविद्यास्येत्यविद्यायामेवासित्वा प्रकल्प्यते ।
> ब्रह्मदृष्ट्या त्वविद्येय न कथञ्चन युज्यते ॥ स वा १७६

अत्र त्वात्माश्रयविषयकाविद्याव्यतिरिक्ता काचिदनात्माश्रिता अविद्या नास्त्येवेत्युक्तम् । एतावता व्यावहारिक्यपि शुक्त्यादिविषया अविद्या नास्तीति सुरेश्वराणा मतमिति निर्धारयितु न शक्यते । अतीतानन्तरखण्डोक्तप्रकारेण अनुपदमेव विचार्यमाणप्रकारेण च तेषा रज्जुसर्पाद्युदाहरणेन मिथ्याज्ञानातिरिक्ताज्ञानसाधनप्रक्रियाया असागत्यप्रसङ्गात् । परमार्थतस्त्वात्माश्रिता तद्विषया एकैवाविद्या, न तु वस्तुत एवाविद्याद्वयमस्तीत्येतावत्तु तदभिमतम् । एतच्च स्फुटयिष्यते समनन्तरोत्तरखण्डे । तेषामविद्याद्वयवाद निराकरण तु पूर्वमुक्त (ख ६९) –

> नैसर्ग्यागन्तुकी चेति ह्यविद्या द्विविधा स्मृता ।
> आगन्तुकी स्याद्विषये नैसर्गिक्यात्मनीष्यते ॥
> तत्रागन्तु यदज्ञान तत्सकृज्ज्ञानजन्मना ।
> अपैति नासि शबरो राजासीत्युक्तितो यथा ॥
> नैसर्गिकी तु या विद्या सा सकृज्ज्ञानजन्मना ।
> ध्वस्तापि पुनरेवैति तज्जरागादिदर्शनात् ॥
> वा ४-४-८८१, ८८२, ८८३

इति वदता प्रसख्यानवादिना निराकरणप्रस्तावेन । अतो न व्याघात ॥

एव भाष्यकारप्रस्थानेऽपि—अ दागम्पामविद्यामुपेत्य—अविद्याश्रयो यथाव्यवहारप्रसिद्ध एवात्मा ग्राह्य, न तत्र सूक्ष्मेक्षिका कार्या । विद्याविद्याव्यवहारस्याप्यविद्याविषयत्वात् । यथोक्त सूत्रभाष्ये –

'कस्य पुनरयमप्रबोध इति चेत् यस्त्व पृच्छसि तस्य त इति वदाम । नन्वहमीश्वर एवोक्त श्रुत्या, यद्येव प्रतिबुद्धोऽसि नास्ति कस्यचिदप्रबोध'
सू भा ४-१-३, पा ४६५

इति । गीताभाष्येऽपि –

'अत्राह—सा अविद्या कस्येति ? यस्य दृश्यते तस्यैव'
गी भा १३-२, पा १९५

इत्यादि । एवम् उपदेशसाहस्र्याम् अविद्यामात्मविषयामेव प्राहुर्व्यवहार दृष्ट्या –

'त्व परमात्मान सन्तम् असंसारिण संसार्यहमस्मीति विपरीत प्रतिपद्यसे, अकर्तार सन्त कर्ता इति, अभोक्तार सन्त भोक्ता इति, विद्यमान च अविद्यमान इति । इयम् अविद्या' (उप ग पा ५६) ॥

इति । अत्रापि ज्ञानाभावमिथ्याध्यासयोस्तस्यैक्यमाश्रित्य भाष्यवार्तिक-सामरस्य बोध्यम् ॥

## प्रमाणव्यापारनिरूपणम् –

११४ विषयाणामज्ञातत्व न प्रमाणेभ्य सिध्यति, यत प्रमाणव्याप्ते प्रागेव तत् सिद्धम् । तस्य प्रमाणसिद्धत्वे हि वस्तुनोऽज्ञात रूप नित्यमेवानुवर्ततेत्यनिष्ट प्राप्नोति । एव विषयाणा संशयितत्व-विपर्यस्तत्व च न मानेभ्य । अज्ञाते हि सर्वत्र मानव्यापार इति (वा पा ४७९) । अज्ञातानुभवसिद्धाना घटादीनामज्ञातता निवर्तयन्त एव प्रत्यक्षादय प्रामाण्य भजन्ते यस्मात्, तत परमात्मानमनुभवस्वरूप-मप्रमीयमाणानि न कदापि प्रमाणान्यनात्मान प्रमिण्वते (स वा १००४) । यथैव लोके घटादय प्रमाणैकसिद्धा प्रमा विना स्वाज्ञातत्व न मुञ्चन्ति, एवमेव आत्मापि स्वत सिद्धवस्तुत्वात् विनैव प्रमामज्ञातत्व मुञ्चतीति

युक्तम् (स वा १००४)[1]। वस्तुतस्तु, अनात्मनोऽज्ञाततैव न संभवति। तथा हि, व्यवहारे घटादिपदार्था स्वविषयप्रमाजन्मन प्रागज्ञाता सन्तत्रे अभ्युपगम्यन्ते सर्वैरपि तीर्थकृद्भि (वा ४–२–१५८)। न च सत्त्वे विशेषोऽस्तीत्यत एक एव सच्छब्दवाच्य पदार्थ, स एव चाज्ञात इति सिध्यति। तस्मात्, यस्यैव प्रमाणे प्रमातरि च स्वयप्रकाशात्मन आभासोऽनुभूयते स एव सन्नज्ञात (नै ३–७ ८)। किञ्च, प्रमाण व्यापारत प्राक् सिद्धामेव शुक्तिकाद्याम् अवबोधयद् हि प्रमाण नाम, न त्वविद्यमानम्। न च रजतादिष्वपि प्राक् प्रमाणव्यापाराच्छुक्तिकादि वदज्ञातम्, आत्मवन्नित्यज्ञात वा विद्यते, येन तद्विषयकाज्ञानान्तरनिवारणाय प्रमाण व्याप्रियेत (वा ४–३-१६६, १६७)। यथैव ह्यज्ञाता शुक्तिका रजतात्मनाध्यवसीयते, एवमेव चाज्ञात आत्मा अनात्मत्वेनाध्यवसीयते अज्ञै। तत्र दृष्टान्ते तावद् रजतज्ञान न रजते प्रमाणम्, रजतस्य तज्ज्ञानात् पृथगसिद्धे। नापि शुक्तौ प्रमाण तत्, तद्गताज्ञानानपबाधकत्वात् (वा पा ४–४–९०४, १८६८)। एव दार्ष्टान्तिकेऽपि सर्वाण्यप्यना मविषयाणि ज्ञानानि तत्राप्रमाणानि। अनात्मनि ज्ञातत्वाज्ञातत्वयोरयोगात्, शुक्ति रजतादाविव। नाप्यात्मनि, तद्विषयकाज्ञानानपबाधकत्वात्। व्यवहारदृष्ट्या तु स्वस्वविषयकप्रमा जनयन्ति। प्रमाणफलस्य प्रमाया एव अनुभवरूपात्म-स्वरूपत्वात्, वेदान्तप्रमाणविषयमात्मानमेव तानि सर्वाणि समर्पयन्ति। तस्य चागमापायवर्जितस्य स्वत सिद्धत्वान्न प्रमाणान्तरापेक्षा (तै वा २–५२६, पा १५४)। तस्मिंस्तु 'न जानामि' इति प्रसिद्ध्यैवाज्ञातत्व

1 अस्य वार्तिकश्लोकस्य व्याख्या टीकाकारेणान्यथैव कृता – 'प्रत्यगात्म वस्तुमात्रमर्थादेव प्रमा विना नाज्ञातता त्यक्तुमलम्। मानफलप्रकाशस्यैवाज्ञान-विरोधित्वात्, स्वरूपप्रकाशस्यातथात्वाद्' इति। यद्यप्यत्र सिद्धान्ते नैतादृशी विप्रतिपत्ति, तथापि प्रकृतश्लोके प्रमाणसिद्धघटादय स्वाज्ञाततात्यागे स्वप्रकाशक प्रमाणफलमपेक्षन्ते, आत्मा तु वाक्यमात्रादज्ञातता त्यजति, न तु स्वप्रकाशकप्रमापेक्षया, वस्तुत एव प्रमानतिरिक्तत्वात् तस्य – इत्यभिप्रेतमित्यस्मन्मति ॥

श्रुतिप्रमाणेनाज्ञातत्वमोक्षश्चेति । अत एव श्रुतिजन्यज्ञानेन प्रमातृप्रमाणादि-व्यवहारकारणाज्ञाननाशे सति सकलप्रमाणाना प्रमाणत्व समाप्यते । पुरुषार्थसिद्धिश्च भवतीति (स वा १६२, १००६) । अत्र वार्तिकसमत-प्रमाणविवेचनप्रकारप्रकाशका कतिचिच्छ्लोका समुदाह्रियन्ते –

(१) अज्ञातत्व न मानेभ्यो ज्ञातत्व तत्कृत यत ।
तैरप्यज्ञातता चेत् स्यात् कातिशीतिर्मितेर्भवेत् ॥
वा १-४-२९५, पा ४८८

(२) अज्ञात वस्य मान्यासे पूर्वमेव प्रसिद्धित ।
ततश्च मानत सिद्धिर्नाज्ञातत्वस्य कुत्रचित् ॥ स वा ६८६

(३) मानव्याप्तिक्षम चेत् स्यादज्ञातत्व घटादिवत् ।
वास्तव स्यात्तदा रूपमज्ञात च सदा भवेत् ॥ स वा ६८७

(४) अज्ञात न यथा मानान्मिथ्याधीसशयौ तथा ।
न्याय पुरोदित सर्वो यस्मादस्ति तयोरपि ॥ वा १-४-२५७

(५) घटादय प्रमासिद्धा मुञ्चन्त्यज्ञातता न तु ।
स्वत सिद्धोऽपि वस्तुत्वान्मुञ्चत्यात्मा प्रमा विना ॥ स वा १००४

(६) यमप्रमीयमाणानि नानात्मान प्रमिण्वते ।
वस्तुवृत्तानुरोधेन कथ तत्राप्रमा वच ॥ स वा ५५१, पा १६२

(७) अज्ञात एव सर्वोऽथ प्रागयतो बुद्धिजन्मन ।
एकेनैव सता सश्च सन्नज्ञातो भवेत्तत ॥
प्रमित्साया य आभाति स्वय मातृप्रमाणयो ।
स्वमहिम्ना च य सिद्ध सोऽज्ञातार्थोऽवसीयताम् ॥ नै ३-७, ८

(८) मानव्यापारत पूर्वं सिद्धामेवावबोधयत् ।
शुक्तिका मानता याति नासिद्ध रजतादिकम् ॥
शुक्तौ रजतविज्ञानाच्छुक्तिवन्नामित यत ।
रजत विद्यते किञ्चिद्विज्ञात चाऽऽत्मवस्तुवत् ॥
वा ४-३-१६६, १६७

(९) अज्ञाताया यथा शुक्तौ रजताद्यर्थनिश्चिति ।
अनात्मनिश्चितिस्तद्वदज्ञातेऽनुभवात्मनि ॥
ज्ञानात् पृथगससिद्धे रजतादेरमेयता ।
शुक्तेरिव त्वविज्ञातज्ञातत्वस्य ततोऽन्यत ॥

यतो न लभते मेय शुक्तौ रजतधीरत ।
न रूप्यधी प्रमाण स्यात् प्रमेयासभवादिह ॥
यथा न रजते मान शुक्तावपि तथैव सा ।
तत्प्रत्रोधनाबाधात्तस्याश्चाशुक्तिकात्मन (त ?) ॥
यथैव सर्वमानानि प्रत्यज्ञानातिरेकत ।
अनात्ममेयभान्त्येव विज्ञेयानीति निश्चिति ॥
प्रत्यक्सविन्न विज्ञाना तथैवेहानुभूयते ।
अपि प्राड्ज्ञानसव्याप्तैर्यावद् व्युत्पाद्यते न ना ॥
वा ४-४-९०१ प्रभृति ९०६ पर्यन्तम्, पा १८६८, १८६९

(१०) प्रमेवात्मात्मिका यत्र त्वनन्यानुभवात्मिका ।
नात्र मानान्तरापेक्षा सैवानस्तमितोदिता ॥ तै वा २-५२६

(११) नैतदेव यतोऽशेषमानानामपि मानता ।
आ परात्मावबोधात् स्यात्तत्र सर्वसमाप्तित ॥ स वा १६२
कृत्स्नमात्राद्युपादानत्नोबाधस्तु बोधत ।
तत्त्वमस्यादिवाक्योत्थात् पूर्णकात्स्न्यस्वलक्षणात् ॥ स वा १००६
तेनागमस्य तत्र स्यादज्ञातत्वविघातिन ।
प्रमाणत्व प्रमातृश्च स एव विदुषा मत ॥ स वा १००७

## ख्यातिबाधविचारः –

११५ मण्डनाचार्यस्तावत्, अख्यातिवाद निराकुर्वन् स्वमत मेवमाह –

‘नेद रजतम्’ इति प्रसक्तप्रतिषेधरूपा प्रतीति, नाग्रहणेऽवकल्पते । प्रसङ्गाभावात् । न खल्वग्रहण कस्यचित् प्रसञ्जकम् । अभावो हि स । विपरीता तु ख्याति सनिहितस्य रजततामभूता रजतस्य वा सनिहितताम् आदर्शयन्ती प्रसञ्जयति । ‘न हि नेद रजतम्’ इति रजतमात्र चक्षु सयुक्तवस्तुमात्र वा निरस्यमानमवस्याम, किं तु चक्षु सयुक्तस्य तु रजत ताम्, रजतस्य वा चक्षु सयुक्तताम् । न चैतयो, अग्रहण प्रापकम् । अग्रहणत्वादेव । तस्मादवश्य प्रतिषेध्यप्राप्तये विपरीतख्यातिरुपासनीया’ ॥ ब्र सि 143

इति । शुक्तिरेव तु रजतज्ञानस्यालम्बनमिति च स्पष्टमुक्त मण्डनेन –

‘तत्र शुक्ति स्वरूपेण नालम्बिता रजतज्ञानेन, तन्निबन्धनव्यवहारा

भावात्, रजतरूपेण तु, तन्निबन्धनस्य उपादानव्यवहारस्य तत्र भावात्' इति ॥ ब्र सि 147

वार्तिके पुनरभावलक्षणाज्ञानानभ्युपगमेऽपि, अज्ञातशुक्तिकैव रजतात्मना निश्चीयते इति विपरीतख्यातिरेव प्रकारान्तरेणानुमोदितेति स्पष्टं समनन्तरपूर्वखण्डोदाहृतश्लोकेन 'अज्ञाताया यथा शुक्तौ' (वा ४ ४-९०१, पा १८६८) इत्यनेन ॥

प्रातिभासिकं रजतं स्वरूपेण विद्यते वा न वेत्यत्र मण्डनेन न किञ्चित् स्पष्टमुक्तं दृश्यते । वार्तिके तु –

इदं रजतमित्येवं रूपं वस्तु न कुत्रचित् ।
न शुक्तौ रजतज्ञानं नेदंता रजतेऽस्ति न ॥
तदन्यत्र द्वयाभावात् साक्ष्यादावपि नेष्यते ।
न चेहार्थविबोधोऽस्ति मिथ्याज्ञानत्वकारणात् ॥

इति (वा १–४–२७५, २७६, पा ४८४) मिथ्याज्ञानविषयभूतं प्रातीतिकं रजतं नाम वस्तु नैव कुत्रचिदस्तीति स्पष्टमुपपादितम् । न च प्रमाणान्मिथ्याबुद्ध्यादिसंसिद्धिरस्तीत्यतः कूटस्थानुभवसिद्धमेवेदं मिथ्यावस्तु, मिथ्याज्ञानमज्ञानं प्रमात्रादि जगच्चेति च –

तस्माद्रजतसंस्कारसंस्कृतात् स्वान्ततः स्मृतिः ।
प्रथतेऽविकृतात्मैकनित्यदृष्टेः परात्मनः ॥
ज्ञानज्ञात्रतिरेकेण तमस्यपि न विद्यते ।
मेयं वस्तु ततोऽज्ञानं प्रत्यक्षं सप्रमातृकम् ॥
न हि संविदनारूढं प्रमात्रादि प्रसिध्यति ।
संविन्मात्रैकयाथात्म्यात् प्रमात्रादेरनात्मनः ॥

वा १–४–२७९ प्रभृति २८२ पर्यन्तम्, पा ४८५

एवं च शुक्तिरजतादिदृष्टान्तोपन्यासस्य फलमिदं यत् सर्वजगत्ख्यातेर्भ्रान्तित्वमात्राध्यवसानम्, अज्ञातात्मनि मिथ्यैव विश्वख्यातिप्रसिद्धेः । अज्ञानस्यापि तथैव स्वतःसिद्धात्मानुभवमात्रगोचरत्वादविचारदशायामिति । तथा चेमे वार्तिकश्लोकाः –

तस्मात् प्रमा प्रमाभासाप्रमाणानामशेषत ।
स्वार्थानन्यप्रमाणात् स्यात् प्रसिद्धिस्तमसस्तथा ॥
आन्तर मेयमाश्रित्य स्वत सिद्धमनन्यमम् ।
भावाभावादिमद्भिश्च सर्वमेतत् प्रसि यति ॥

[ आन्तर मेयम् अज्ञातात्मलक्षणम् । अनन्यमम् अन्यप्रमाणानपेक्षमेव स्वत सिद्धम् ॥ ]

मेयार्थानभिसबन्धान्न यथावस्तुधीरियम् ।
ज्ञातत्वात्तदभावोऽपि प्रात्यक्ष्यान्नेष्यते स्मृति ॥
बा १-४-२७२ प्रभृति २७४ पर्यन्तम् ।

[ नय यथावस्तुबुद्धि , नापि ज्ञानाभाव , नापि स्मृति । ' स्मृतिरूप परत्र पूर्वदृष्टावभास ' इति [illegible] श्लोक ॥ ]

## श्रुतिवाक्यप्रामाण्यम् –

११६ तदेवम् आत्मन एवैकस्याज्ञातत्वसिद्धेस्तस्यैव प्रमेयत्व निर्विवाद सिध्यति । अतो वेदान्तदर्शने इव दर्शनान्तरेषु न प्रमेयसिद्धि । आत्मानुभवस्य तु प्रमेयत्व सर्वप्रमाणसिद्धम् । यतो बाह्यार्थविषयेषु प्रत्यक्षादिषु या अवगति फलत्वेनेष्यते, सैवेह वेदान्तोक्तिप्रमाणस्य प्रमेयत्वेन स्वीक्रियते । तस्मादेव श्रुतिवाक्यस्य केवलवेदवाक्यत्वेन प्रामाण्यमिह न स्वीक्रियते, कि त्वनुभवात्मनि वाक्यप्रमेये सशयविपर्ययादीना मसभवादेव । अविद्यातत्कार्ययोरविचारितसिद्धत्वादेव च वाक्यजन्यज्ञानमात्रेण तन्निवृत्तिरित्युपपद्यते । न चैव शङ्कनीयम्, ज्ञानरूपत्वादेवात्मन स्वयमज्ञाननिवर्तकत्वमुपपद्यते, किमन्याकाङ्क्षया ? – इति । यत सर्वत्र प्रमाणफलारूढमेव प्रमाण मेयाज्ञातत्वनिवर्तकम्, आत्मा तु स्वतो नाज्ञानविरोधी यतो नित्यावगतिरूप सन्नप्यज्ञानेन सहैव वर्तते नित्यदा । अत श्रुतिप्रमाणफलत्वेनानुभूयमान एवात्मा तमोहन्ता । न चान्वयव्यतिरेकाभ्यामेवात्मस्वरूप निश्चीयते, किमत्र वाक्येन कर्तव्यमिति शङ्क्यम् । अज्ञानापेक्षयैव हि कार्यकारणात्मना प्रथनमात्मन , न तु कार्ये कारणे वा तत्तत्त्वेक्षण भवति । अत कार्यकारणयोरन्वयव्यतिरेकमात्रेण नात्मतत्त्वाव-

बोध । किञ्च, ब्रह्मैवात्मा, आत्मैव च ब्रह्म–इति तयोरैक्य खलु वाक्यस्य विषय । न च तत्प्रमाणान्तरावसेयम् । न चैव शङ्का कर्तव्या–ब्रह्मात्मार्थयोर्लौकिकत्वे प्रमाणान्तरगोचरत्वात्, अलौकिकार्थत्वे तु सबन्धाग्रहणादेव 'आत्मा ब्रह्म' इति वाक्याप्रवृत्तिप्रसङ्गात्, उभयथापि न वाक्यस्य विषय समस्तीति । आत्मशब्दस्य स्वरूपार्थकत्वेन प्रसिद्धे, ब्रह्मशब्दस्य च महद्वाचकत्वेन प्रसिद्धेश्च न[illegible] ऐकत्वलक्षणार्थबोधकत्वोपपत्तेर्वाक्यस्य । देवतास्व[illegible] हि वाक्यादवगतिरिति ॥

तत्र 'तत्त्वमसि', 'अह ब्रह्मास्मि' – इत्यादिवाक्येषु पदयो सामानाधिकरण्यम्, तत पदार्थयोर्विशेष्यविशेषणभावावगम, ततश्च त्वपदार्थगतदुःखित्वस्य तत्पदार्थगतपारोक्ष्यस्य च निवृत्ति, ततश्च त्वपदार्थगतज्ञातृत्वाहतालक्षितात्मन, तत्पदार्थलक्षितब्रह्मणश्चैक्यावगमे भेदससर्गान्याभावशून्यावाक्यार्थानुभव । अत्र बोधस्यालौकिकत्वात्, सतश्चावगत्यात्मत्वाच्च नान्यप्रमाणापेक्षा भवति । मानान्तरयोग्यविषये हि परतोऽवगमापेक्षा वा वाक्यस्यान्यापेक्षा सभवतीति ॥

अत्रैते वार्तिककारश्लोका भवन्ति –

(१) **प्रमात्राद्यतिरेकेण ह्यसविदितरूपकम् ।**
**मेय सिद्धमिहैवैतन्न वेदादन्यत क्वचित् ॥ वा १-४-३३९**

(२) **परागर्थप्रमेयेषु या फलत्वेन समता ।**
**सवित् सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणत ॥ स वा १५९**

(३) **न च वेदोक्तितो वेद श्रद्धेयार्थ इहेष्यते ।**
**किं त्वमानत्वहेतूना वेदवाक्येष्वसभवात् ॥ वा २-४-३२५**

(४) **अविद्या वाऽथ तत्कार्यं नाभेदान्नातिरेकत ।**
**सिद्धायते यतोऽत स्यादविचारितसिद्धिकम् ॥**
**नीलोत्पलदलाभ ख द्विरेफोदरवत्तम ।**
**अविचारितसिद्धयेव तमस्तज्ज च वीक्ष्यताम् ॥ वा १-४ ३३२, ३३३**

[अविद्या तज्ज चानुभवसिद्ध तत्त्वा[illegible]यत्वाभ्यामनिर्वचनीयम्, अविचारितसिद्ध चेत्यभिप्राय ॥ ]

(५) अवबुद्धस्वभावोऽपि सहतेऽनवबुद्धताम् ।
वस्तुत्वान्न तमो हन्ति तथापि प्रमितिं विना ॥
प्रमाणफलकारूढ स्वतमो हन्ति नान्यथा ।
वस्तु मेयाभिसबद्ध मान तद्वत्तमोपनुत् ॥ वा ४-३-१८१, १८२

[अनुभवरूप आत्मा न स्वतोऽज्ञानविरोधी, नापि केवल प्रमाण प्रमेयानभिसबद्ध फलापर्यवसन्न चाज्ञाननिवर्तने समर्थम् इत्यभिप्राय ॥ ]

(६) अपेक्षा ज्ञानमात्रैकहेतूत्थानत्वकारणात् ।
न कार्ये कारणे वातो वस्तुतत्त्व समीक्ष्यते ॥
अन्वयव्यतिरेकाभ्या नातो वाक्यार्थबोधनम् ।
वस्तुतत्त्वावसायोऽतो वाक्यादेव प्रमाणत ॥ वा ४-३-४०० ४०१

[कार्यकारणयोरवस्तुत्वे सति आत्मनोऽद्वयत्वात्, अन्वयव्यतिरेकाभ्या नात्मज्ञानम् इत्यर्थ ॥ ]

(७) आत्मनो ब्रह्मता साक्षाद् ब्रह्मणोऽप्यात्मता स्वत ।
तत्त्वमस्यादिवाक्यस्य विषयोऽयमिहोदित ॥ वा ४-३-१११५
नात्मन्येवात्मशब्दस्य प्रयोगात् स्यादलौकिक ।
ब्रह्मार्थोऽपि महत्त्वेन प्रसिद्धो व्यवहारत ॥
एव पदात् परिज्ञाते पदार्थे लोकमानत ।
वाक्यार्थोऽतीन्द्रियो वेदे वाक्यात् केन निवार्यते ॥
अपूर्वदेवतास्वर्गपदार्थेष्वपि लोकत ।
सिद्धेष्वतीन्द्रियोऽप्यर्थो वाक्यादेवावगम्यते ॥ स वा ८६१-८६३

(९) सामानाधिकरण्यादेर्घटेतरखयोरिव ।
व्यावृत्ते स्यादवाक्यार्थ साक्षान्नस्तत्त्वमर्थयो ॥ नै ३-९

[ घटाकाशो महाकाश – इति वाक्ये सामानाधिकरण्येन, विशेष्यविशेषण भावेन विरुद्धार्थव्यावृत्त्या, लक्ष्यलक्षणभावेन च आकाशमात्रम् वाक्यार्थो भवति । एव तत्त्वमसीत्यत्रापीति भाव । अवाक्यार्थ इति, ससर्गभेदादिरहित इत्यर्थ ॥]

निर्दु खित्व त्वमर्थस्य तदर्थेन विशेषणात् ।
प्रत्यक्ता च तदर्थस्य त्वपदेनास्य सनिधे ॥ नै ३-१०

[ विशेष्यविशेषणभावेन विरुद्धधर्मव्यावृत्तिसिद्धिरित्यर्थ ॥ ]

(१०) कूटस्थबोधप्रत्यक्त्वमनिमित्त सदात्मन ।
बोद्धृताहतयोर्हेतुस्ता या तेनोपलक्ष्यते ॥ नै ३-११

**निषेधवाक्यस्थपदाना व्यापारस्त्वित्थ वार्तिके वर्णितः** – प्रथम तावत् भाष्योक्तार्थव्याख्यानमिद यन्नामरूपकर्मादिक सर्वमपि निषेध्यत्वेन इतिशब्देनोपप्रदर्श्य नञा तस्य निषेध क्रियत इति। न चात्र निषिद्धस्यान्यत्र स्थिति स्यात्, घटे निषिद्धस्य पटस्येवेति शङ्क्यम् । लोकेऽपि रूपि-व्यतिरिक्तरूपस्य पृथक्स्थित्यदर्शनात्, परमार्थब्रह्मणि निषिद्धस्य तदज्ञान-जस्य कुत्रचिदपि स्थित्यसभवाच्च । निषेध्याना चान्योन्यव्यभिचारात्, प्रत्यगात्मनश्चाव्यभिचारात् तस्मिन्नध्यस्त सर्वमिति शब्देनोपदिश्य अनुभवरूपेण स्वत सिद्धे आत्मनि तन्निषेध क्रियते । आत्मावष्टम्भेन हि नञ् निषेध्य निषेधतीति सर्वनिषेधानन्तर स्वयमपि चिद्रूपत्वमेवैति । निषेध्य सर्वमप्यनिषेध्यात्मनिष्ठमेवेत्यतो निषेधो नाभावनिष्ठ, अभावस्यापि नि॰ यत्किञ्चिद्दिष्टत्वादेव। एव च नेति नेतीति वीप्सेय यद्यत् प्राप्त तत्सर्व निषेधति, ब्रह्मात्मान तु सर्वसाक्षिण परिशिनष्टि (वा २–३–१८३ प्रभृति २०७ पर्यन्तम्) इति ॥

अथान्येनापि प्रकारेण नेतिवाक्यार्थो वर्ण्यते । नात्र निषेधो निषेधार्थ, यतो प्रागेव 'अथात आदेशो नेति नेति' इति वाक्यारम्भात् मूर्तादिव्यतिरिक्तत्व ब्रह्मण सिद्धम्। द्वे वाव ब्रह्मणो रूपे इति षष्ठ्यैव भेद लाभात्, अन्योन्यव्यभिचारेणानात्मनो निषेधस्य सिद्धत्वाच्च । प्रत्यक्षादि-सिद्धस्य तस्याशक्यनिषेधनत्वात्, कथञ्चिन्निषेधसभवेऽपि निषेधमात्र स्याफलत्वात् वाक्यस्य ब्रह्मादेशकत्वासिद्धेश्च । अत स्वयसिद्धमेवात्मान नञा लक्षणया अनूद्य तस्य इतिशब्देन ब्रह्मत्वमुच्यते – इति ॥ वा २–३–२१४ प्रभृति २३४

अत्र कतिचिच्छ्लोका उदाह्रियन्ते वार्तिकव्याख्यानान्तरप्रकाशका –

(१) व्यतिरेकस्य सिद्धत्वादादेशोक्ते पुरैव हि ।
साक्षाद्ब्रह्मत्वसिद्ध्यर्थमादेशोऽयमथोच्यते ॥ २१४

न निषेधो निषेध्यार्थो लक्षणार्थपरत्वत ।
ब्रह्मणो मान्तरासिद्धे शून्यतैव प्रसज्यते ॥ २१५
प्रमात्रादेरभावोऽतो य सिद्ध स्वात्मबोधत ।
नञ्वृत्तिस्त सदा बुद्ध लक्षयत्यपृथक्प्रमम् ॥ २२९
उक्ता प्रमेयससिद्धि स्वमहिम्नैव नञ्श्रुते ।
तस्य ब्रह्मत्वबोधाय नेति ब्रह्मेतिनोच्यते ॥ २३३

अत्रेत्थ प्रतिवक्तु शक्यत इति भाति – कथ ब्रह्मणो मूर्तामूर्तादि-सर्वनिषेधे सति ब्रह्मण शून्यता प्रसज्यत इति ? ब्रह्मणो मानान्तरासिद्धे-रिति चेत् । न । तस्य स्वयसिद्धत्वात् । अज्ञाननिरासार्थं श्रुतिरपेक्ष्यत इति चेत् । तदर्थमेव हि 'नेति' इत्यध्यस्तनिषेधश्रुति । व्यतिरेकस्य सिद्धत्वात् तदर्थं निषेधोऽयुक्त इति चेत् । न । विकल्पितसर्वप्रतिषेधेनैव ब्रह्मण प्रतिपिपादयिषितत्वात् सर्पादिविकल्पप्रतिषेधेनैव रज्जुस्वरूप प्रतिपादनवत् । तस्मात् प्रतिषेधविज्ञानसमकालमेव ब्रह्मस्वरूपप्रतिपत्तिरिति न तत्प्रतिपत्त्यर्थं पुनर्यत्नान्तर कर्तव्यमिति प्रतिभाति । अतो मिथ्यारोप-प्रतिषेधव्यतिरेकेणाप्यज्ञानप्रतिषेध कर्तव्यतया अवशिष्यत इत्याग्रहेणै तदुच्यत इति प्रतीम । अथवा 'साक्षिणो नञर्थस्य ब्रह्मत्वज्ञापनाय नेतीति वाक्य प्रमाणमुच्यते (आ वा २-३-२३३)–इति टीकाकारोक्त विधया अस्य सर्वस्य व्याख्यानस्योपपत्तिर्भवेदित्यल सूक्ष्मेक्षिकया । सर्वथापि त्वध्यारोपापवादप्रक्रियानुगुणमेवेद वाक्यप्रामाण्यपरिशीलनमित्यनवद्यम् ॥

## प्रत्यक्षादिविरोधपरिहारः –

११७ द्वैतग्राहिमानान्तरविरोधान्न शास्त्र प्रमाणमित्याशङ्क्य मण्डनवदेव वार्तिककारा अपि भेदनिरास कुर्वन्तीत्यावेदित प्राक् (ख १०५) । तदेतच्छङ्कोत्थापनम् अभ्युपगमवादेन केवलम् इति प्रतीमो वयम् । यस्मात् प्रमाणसप्लववाद स्पष्टोक्तिभि पराकुर्वाणा (स वा १०७६–१०८१, नै ३–८६), ऐकात्म्यविषये प्रमाणाना परस्पर विरुद्धतामपि भाष्योक्तिविवरणेनैव निरस्यन्त (वा २–१–५८८ प्रभृति

५९४, नै ३-९६), कथ मानान्तरविरोधशङ्काया अवकाश दद्युरिति। श्रुतेरप्यज्ञाननिरासमात्रेणात्मनि प्रामाण्य न तु साक्षात्, यत प्रमातृ-प्रमाणादय कालावस्थादयश्च आत्मानुभवमात्रात् सिध्यन्तो नात्मनि काञ्चिदतिशीति कर्तुमलमिति (स वा ९९९) वार्तिकमतम् ॥

## कार्यकारणप्रक्रिया –

११८ वार्तिकेऽपि भाष्ये इव कार्यकारणप्रक्रिया कार्यकारण निरासार्थमेव प्रस्तुता। तत्राविद्या क्वचिज्जगदुपादानत्वेनाङ्गीकृता इव ग्रन्थाभिप्रायविमर्शनासमर्थानामापातत प्रतिभायात्। वस्तुतस्तु कार्य कारणभाव एव वास्तविको न समत इति तत्तद्ग्रन्थप्रकरणपरिशीलनात्, कण्ठरवेणैवोक्त कार्यकारणनिरासाच्चावगम्यते। तद्यथा –

(१) **द्वैतस्य च शुक्तिकारजतादिवत् सर्वस्यापि स्वत सिद्धाऽद्वितीयात्मानवबोधमात्रोपादानत्वादव्यावृत्ति। अत सर्वानर्थहेतुरात्मानवबोध एव (नै सि ग्रन्थावतरणिकायाम्) ॥**

[अत्राविद्याया द्वैतोपादानकारणत्वमित्यापाततो भाति। वस्तुतस्तु, 'न जानामीत्यविद्या स्यात्' (तै वा) इत्यादिप्रतिज्ञावलोकनेन अनवबोधस्य अभावात्मकत्वात् कथमपि नोपादानकारणत्व सभवतीति निश्चीयते ॥]

(२) **अनात्मनश्चाज्ञानप्रसूतत्वात् ॥ नै सि अवतरणिका**

[अत्रापि अज्ञानस्यानात्मोपादानकारणत्वमुक्तमिति भ्रान्ति स्यात्। वस्तुतस्तु, 'न च तत्र ज्ञानप्राप्तिरस्ति येन तत्प्रतिषेधात्मकमज्ञान स्यात्', इति समनन्तरपूर्ववाक्य एव ज्ञानप्रतिषेधात्मकत्व सुस्पष्टमुक्तमस्ति ॥]

(३) **अज्ञान हि नाम ज्ञानाभाव, तस्य च, अवस्तुस्वाभाव्यात् कुत ससारकारणत्वम्? न ह्यसत सज्जन्मेष्यते ॥ नै सि स ३-७**

[अत्र तु स्पष्टमेवाज्ञानस्य ससारकारणत्वमाक्षिप्तम्]

**अज्ञात एव सर्वोऽर्थ प्राग्यतो बुद्धिजन्मन।**
**एकेनैव सता सश्च सन्नज्ञातो भवेत्तत ॥ नै ३-७**

[अभावरूपमज्ञान कथ कारण भवेत् – इत्याक्षेपपरिहारत्वेनेद पठितम्।

अतोऽज्ञातसद्ब्रह्मैव कारणमिति नोक्तदोष इति परिहारहृदयम् । 'ज्ञानाभाव विलक्षणभावरूपाज्ञानेनात्र' इति व्याख्यानं तु ग्रन्थकाराशयविरुद्धमित्युपेक्ष्यम् ॥]

(४) अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ।
अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥ वा १-४-३७१

[ द्वैतस्य इन्द्रजालसदृक्षत्वं मिथ्याभासत्वमेवेति कृत्वा अज्ञानस्य यथोक्तरीत्या तत्कारणत्वम् । अज्ञानोपाश्रयेण ब्रह्मैव कारणं द्वैतस्येत्यभिप्रायः । मिथ्याज्ञानस्याज्ञानकार्यत्वं प्रागुक्तं विस्पष्टं चात्राप्यनुसन्धेयम् । अत्र 'द्वैतस्येन्द्रजालवदविचारितरमणीयस्य अभावेतरकारणत्वेन, उपादानापेक्षस्य अनुरूपमुपादानमज्ञानमिति तदुपादाय ब्रह्म तत्कारणम्' इत्यादि टीकाकृद्व्याख्यानं मूलाशयप्रतिलोममिति स्पष्टम् ॥ ]

(५) एवंभूतात्मसिद्ध्यर्थं कारणादि प्रसाध्यते ।
उपायः सोऽवताराय तथा तज्ज्ञैश्च सूत्रितम् ॥
कारणादिनिषेधेन न चाद्वैतमभीप्सितम् ।
ऐकात्म्यबोधमात्रेण निषेधस्याप्यपह्नवात् ॥
सत्तत्त्वकमिदं सर्वमिति सम्साध्य यत्नतः ।
तस्यापि संविन्मात्रेण पूर्णतैवोच्यते सतः ॥
वा १-२-२७ प्रभृति २९ पर्यन्तम् ।

[कार्यकारणतदभावविलक्षणम् अजाद्वितीयात्मतत्त्वं साधयितुमेव कारणादिसाधनम्, न तु कार्यकारणभावस्य परमार्थत्वमभिप्रेत्य । कारणादिद्वयाभावत्वमेवाद्वैतमिति न विवक्ष्यते । अभावस्याप्यपह्नवेनैव तद्विलक्षणस्वतः सिद्धार्थबोधनात्-इत्यभिप्रायः । कारणोपाश्रयेण सर्वस्यापि सत्कारणकत्वं प्रथमतो बोधयित्वा ततः सत्त्वस्याप्यद्वितीये निर्विशेषे प्रविलयः क्रियते । अतः कार्यकारणवादे न तात्पर्यम्-इत्याशयः ॥ ]

(६) अविद्याकर्मसंस्कारास्तेजोऽप्क्ष्मासूत्रसंश्रयाः ।
खे लीनास्त्वस्तितामात्रा अव्यक्ताख्याः सहात्मना ॥ वा १-४-२०५
प्रथते वैश्वरूपेण यतोऽविद्यैव सर्वथा ।
अविद्यामात्रयाथात्म्यादतस्तद्भेदमुच्यते ॥ वा १-४-२०७

[अत्राव्याकृतस्वरूपं विशदय्य, अविद्यैव व्याकृताव्याकृतरूपेण प्रथते इत्युक्तम् । अतोऽव्याकृतस्य क्वचिदविद्याशब्दवाच्यत्वं जगदुपादानत्वं चोक्तमविद्याया एव रूपान्तरमनात्मा – 'अविद्या साप्युक्ता' (तै २-१७८) इत्युक्तदिशा तस्या अप्यविद्यात्वोपचारः – इत्यवधेयम् ॥ ]

(७) वस्तुवृत्तमपेक्ष्यैतन्न स्वतः परतस्तमः ।
तत्त्वं वा तत्तमोऽपेक्ष्य ह्यव्याकृतगिरोच्यते ॥
चिदाभासं तमो ज्ञेयं नाज्ञासिषमितीक्षणात् ।
जगज्जनिस्थितिलया एवंभूते परात्मनि ॥
तमः प्रधानं क्षेत्राणां चित्प्रधानश्चिदात्मनाम् ।
परः कारणतामेति भावनाज्ञानकर्मभिः ॥
वा १-४-२४० प्रभृति २४२ पर्यन्तम् ।

(८) मौढ्यं जाड्यमविद्या स्यान्नित्यबुद्धात्मवस्तुनः ।
अनात्मनि च तद् दृष्टं तेन मृत्युरिदं जगत् ॥ वा ४-३-४५७

[ 'मृत्यो रूपाणि' इति श्रुत्युक्तो मृत्युरविद्यैव, 'मृत्युर्वै तमः' इति च श्रुतेः - इत्युक्त्वा तच्छेषेणेदमुक्तम् । मौढ्यं जाड्यं चाविद्यास्वरूपम्, तदुभयम् अनात्मन्यपि च दृश्यत इति सोऽपि मृत्युः - इत्यर्थः । अनात्मन्यविद्याशब्दप्रवृत्तिनिमित्तमिहोक्तं भवति ॥ ]

न च जाड्यातिरेकेण ह्यविद्या काचिदुच्यते ।
अविद्यां गमयित्वेति श्रुतितोऽप्यवसीयताम् ॥ वा १-४-२५६

[ अत्र विद्याविद्ययोश्चेतनत्वाचेतनत्वरूपेण विरोधं विशदयितुम् अविद्याया जाड्यमेव स्वरूपमित्युक्तम् । 'शरीरं निहत्याविद्यां गमयित्वा' (बृ ४-४-३) देहान्तरं गच्छतीति वदन्त्याः श्रुतेरचेतनत्वमेवाविद्यात्वमभिप्रेतमिति गम्यत इत्यभिप्रायः । अत्राप्यविद्यानात्मनोरेकत्वं विवक्षितमिति स्फुटम् ॥ ]

(९) मृत्युर्वै तम इत्येवमाप एवेदमित्यपि ।
अविद्या प्रथते मौली व्यक्ताव्यक्तात्मनानिशम् ॥ वा १ २ १३६

[ 'मृत्युर्वै तमो ज्योतिरमृतम्' (बृ १-३-२८) इत्यत्र व्यक्तभूत स्वाभाविकज्ञानकर्मरूपेण प्रथमाना अविद्या मृत्युशब्देन व्यपदिष्टा, 'आप एवेदमग्र आसुः' (५-५-१) इत्यत्राप्यविद्यैवाव्यक्तरूपेण प्रथमाना 'अप्' शब्देन व्यपदिष्टा - इति श्लोकार्थः । अत्र 'मूलाविद्यैव मृत्युशब्दव्याख्यानेन तमःशब्देनोच्यते' इति टीकाकारोक्तिरनादेया । अविद्यैव 'व्यक्ताव्यक्तरूपेण प्रथते' इत्यव्यक्तस्य मूलाविद्यापराभिधानस्य अविद्याकृतत्वोक्तेः, प्रस्थानान्तराभिमतमूलाविद्यावादस्य वार्तिके कुत्राप्यदर्शनाच्च । 'प्रथते मौली' इति मौलिरिव श्रवणमात्रेण कण्ठरवेणोक्तामव्यक्तात्मना प्रथाम् 'न जानामीत्यविद्या स्यात्' इत्यादिवचनैः स्पष्टीकृतामविद्यां च त्यजद्भिर्भ्रान्तैरेव स्वाभिलषितप्रक्रियान्तर-

मत्रानीयत इति स्फुटम् । आस्तामिद प्रासङ्गिक तावत् । इद त्विह बोध्यम् - यत्र क्वचिदविद्याया उपादानकारणत्व वार्तिके विवक्ष्यते, तत्र जडात्मका व्यक्तरूपेण प्रथन न्यमन्तव्य तदुच्यते, न तु स्वेन मौढ्यरूपेण । कार्यकारण भावस्याविद्याकृततत्वप्रकाशनैकपरत्वाद्वार्तिकप्रस्थानस्य । व्यवहारदृष्टयैव नु यथा प्रसिद्धस्य कार्यकारणभावस्याभ्युपगमाच्चेति ॥ ]

(१०) नामरूपादिना येयमविद्या प्रथतेऽसती ।
माया तस्या पर सौक्ष्म्य मृत्युनैवेति भण्यते ॥ १-२-१३५

[ इह नामरूपकर्मात्मना प्रथमाना अविद्या तस्या परम सूक्ष्मरूप मायापरसञ्ज्ञम् मृत्युशब्देनोच्यते । 'मृत्युनैवेदमात्रतमासीत् - इति वाक्ये इत्युक्तम् । अत्राप्यविद्या नामरूपकर्मात्मकानात्मनो बीजावस्थैव मायाशब्देन भण्यते । तथा च 'अविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनाये ससारप्रपञ्चबीजभूते सर्वज्ञस्येश्वरस्य माया' - इत्यादिभाष्येणास्यैकवाक्यतैव । 'ये केचिदविद्यामाययोर्भेदमाहुस्तन्निरासार्थं मायेत्युक्तम्' इति टीकोक्तिस्तु वाक्यस्वारस्यानवधानकृतेति ध्येयम् ॥ ]

(११) अनिश्चिता यथा रज्जुरिति न्यायोपबृहितम् ।
स्फुटार्थं गौडपादीय वचोऽर्थेऽत्रैव गीयते ॥
तदिद नामरूपाभ्यामनामकमरूपकम् ।
एव व्याक्रियताज्ञानहेतुमात्रव्यपाश्रयात् ॥ वा १-४-३८९, ३९०

[अव्याकृतव्याक्रियाप्रकरणे गौडपादोक्त्युदाहरणपूर्वक सृष्ट्युपपादनात् जगद्ब्रह्मणो कार्यकारणभाव सर्वथा रज्जुसर्पादिन्यायेनैवावसेय इत्युक्त भवति । एवमेव ह्युत्तरत्र - 'रज्जुसर्पो यथा रज्ज्वा सात्मक प्राग्विवेकत । अवस्तु सन्नपि ह्येष इति पूज्यैरपीरितम् ॥' (वा १-४-४४३) इति भगवत्पादीयोपदेशसाहस्रीवचनोदाहरण सगच्छते ॥ ]

(१२) आत्मन्यध्यासरूपोऽय ससार प्रतिपादित ।
अध्यासश्च विना हेतु न लोक उपपद्यते ॥
तस्माद्धेतूपदेशाय य कारणमितीर्यते ।
यस्मिन्नविद्ययेत्येव ननु कारणमीरितम् ॥
प्रधानवादमाशङ्क्य यस्मात् भूयोऽपि भण्यते ।
अज्ञात आत्मा जगत कारण न गुणत्रयम् ॥

वा १-४-४७८ प्रभृति ४८०

[ ‘ यदथ सर्वशास्त्रारम्भ , यस्मिन्नविद्यया स्वाभाविक्या कर्तृक्रिया फलाध्यारोपणा कृता, य कारण सर्वस्य जगत , यदात्मके नामरूपे ’ (बृ भा पा ६५५) इत्यादिवाक्यस्य व्याख्यानमिदम् । कर्त्रादि[illegible]स्य ससारस्याध्यासरूपत्वोक्ति , अध्यस्यत इत्यध्यास इति कर्मसाधनत्वमध्यासशब्द स्याश्रित्य । ‘ अध्यासस्य [illegible] ’ इत्युक्तिस्तु ‘ विकल्पस्यास्पदमपेक्षितम्’ इत्यभिप्रायकम् । ‘अविद्यया’ इति भाष्योपात्तस्य स्वप्रक्रियाभिमताज्ञानपरत्व मुररीकृत्य ‘विना हेतुम्’ इत्याक्षेपोत्थापनम् । अज्ञानमेव सर्वकारणम् – इति हि स्वप्रक्रियेति न स्वतन्त्रमज्ञान कारणम् , अपि तु अज्ञातात्मैव कारणम्–इत्यस्मा कमभ्युपगम , अतो नोक्ताक्षेपस्यावसरोऽस्तीति समाधानम् । भाष्यसमत प्रक्रियया तु ‘स्वाभाविक्या अविद्यया मिथ्याज्ञानरूपया ससार प्रत्युपस्थापित ’ इति क्रियाकारकफलात्मकससारस्य मृषात्वोपपत्ति , ‘ य कारणम् ’ इति तु सर्वस्यापि जगतो रज्जुसर्पादिवद्विकल्पमात्रत्वात्, तदास्पदत्वमेव कारणत्व ब्रह्मण इति ज्ञापयितुम् – इति विवेक । उभयोरपि प्रक्रिययोरेकवाक्यता तु प्राग् (ख ११२) विमृष्टप्रकारेण ॥ ]

(१३) **भिन्न चेत् कारणात् कार्यं कार्यकारणता तयो ।**
**प्रत्यक्प्रसिद्धयो केय हिमवद्विन्ध्ययोरिव ॥**
**अथाभिन्न तदैकत्वात् कार्यकारणता कुत ।**
**नापि निष्क्रियरूप सत् कारणत्व समश्नुते ।**
**तथा चाक्रियमाण सत् कथ कार्यमिहोच्यते ।**
**क्रियाशून्य च यद्वस्तु तच्चाकारकमिष्यते ॥**
**त्त्येनैव समाप्तत्वात् कालकर्मादिकारणम् ।**
**स्वात्मोत्पत्तावशक्त तद् व्यक्त सामर्थ्यभाग् यत ॥**

**वा २–१–३९९ प्रभृति ४०२**

[अत्र कार्यकारणभाव एव न युक्तिसह इति प्रत्याख्यात । एतद्वितत्योत्तर श्लोकैरपि, अन्ते उपसहृतम् –‘जगदुत्पत्तिसहारास्तद्वदात्मनि कल्पिता । वस्तुवृत्त समालोक्य कुत सृष्ट्यादिसभव ॥ ’ (४११) इति । तथा च मायिकमेव जगत्कारणत्वमित्यभियुक्तसप्रदाय एवात्रानुसृत ॥ ]

## सामान्यविशेषभावप्रक्रिया –

११९ यथैव कार्यकारणभावप्रक्रिया न ब्रह्मण कारणत्वमव धारयितुम्, कि तु तस्मिन् कारणत्वमध्यारोप्यात्मनस्तत्त्वमधिगमय्य तदनु

कार्यकारणभावनिरासायैव, एवमेव सामान्यविशेषभावप्रक्रियाप्यात्मनि सामान्यत्वमध्यारोप्य तदस्तित्वमधिगमय्य, तदनु सामान्यविशेषभावाप वादायैवेति भाष्यकाराचार्यैर्न वार्तिकप्रस्थानमिहापि । सामान्यविशेष भावाध्यारोपस्तु प्रकारान्तरेणैव क्रियते वार्तिके –

यथा दुन्दुभिशब्दसामान्याद् विविच्य न तच्छब्दविशेषा ग्रहीतु शक्यन्ते, एवमात्मातिरेकेण आत्मीयार्थो न शक्येक्षण (वा २ ४ २६७, २६८)। 'दुन्दुभिशब्दा एते' इति स्वसामान्येन, 'दुन्दुभ्याघातविशेषोत्था एते' इत्यवान्तरसामान्याद् वा, तत्तद्विशेषा गृहीता स्यु, स्वस्वसामान्यान्वितत्वात् (वा २७५–२८०), यथा च निर्विकल्पज्ञानेन सामान्य रूपेण पूर्वमुपलब्धो घट, तत ऊर्ध्वम् 'अस्ति', 'सन् घट' – इत्याद्युत्तरोत्तरविकल्पविशिष्टोऽनुभूयते (वा २८१), यथा च महासामान्यावान्तर-सामान्यविशेषधीपूर्वकमेव तत्तदुत्तरो विशेषो विज्ञायते, एवम् अज्ञात चिदन्वितमेव सर्व-सामान्य तद्विशेषो वा-आत्मज्ञानेनान्वितमेव विज्ञायते । प्रत्यगात्मा तु स्वसिद्धौ नान्यापेक्ष । किञ्च प्रमातृत्वकञ्चुक बिभ्राण एवात्मा अनात्मानमीक्षते, स्वात्मान तु निरपेक्षचैतन्यस्वरूपेणैवानुभवति । तदेव सर्वत्राप्येकस्मिन् महासामान्ये, अशेषविशेषाणा प्रविलय प्रदर्शयितुम् (वा २८७) शङ्खवीणोदाहरणादानम्–इति ॥

वस्तुतस्तु सामान्यविशेषभावो नाम न कश्चिदस्तीति स्मर्तव्यम् । तथा हि, यथा सामान्यस्य विशेषेष्वन्वयो नियमेन दृश्यते, न तेषा तस्मिन्नन्वयो गृह्यते । सामान्यस्य सर्वथा विशेषासपृक्तरूपेण तस्य पृथग्ग्रहण न सभवति । विशेषव्यतिरेकेणापि हि सामान्यस्य केवलस्य सिद्धौ स्वीक्रियमाणाया तस्यापि गोत्वादे खण्डादिवद् विशेषत्वमेव स्यादिति न सामान्यस्य सिद्धि, सामान्याभावे च विशेषासिद्धिरपीति । तदेव सामान्य-विशेषयोरसिद्धौ सामान्यव्याप्तो विशेष –इत्यङ्गीकारोऽपि मुधैव । व्याप्य-व्यापकभावस्य द्विनिष्ठत्वात, सामान्यविशेषयोर्भेदस्याप्यसिद्धत्वात् – इत्यपवादप्रकार ॥

तत्रैते श्लोका अनुसधेया –

(१) महासामान्यदृष्टान्तो दौन्दुभो रव उच्यते ।
सामान्येतररूपस्य दुन्दुभ्याघात इष्यते ॥
बाह्यानिति तथा चोक्तिर्विशेषाणा तु केवलम् ।
इत्युक्ताथप्रसिद्ध्यर्थमित्युदाहरणत्रयम् ॥ वा २–४–२८८, २८९

(२) अन्वयव्यतिरेकाभ्यामभाववपुषाऽथवा ।
सद्धीगम्याद् हिरुग्वस्तु न मानेनावसीयते ।
षष्ठ्यर्थसंभवोऽत स्याद् द्वितीयासभवात् सत ।
यथा सति तथा विद्यात् प्रतीच्यनन्यमानके ॥
वा [1] २९०–२९१, पा १०८१

[ सत्सामान्याद् व्यतिरिक्त वस्तु सदन्वयेन सद्व्यतिरेकेण अभावरूपेण वा न सिध्यतीति महासामान्यदृष्टान्तत्रयेण सिद्धम् । अत सतोऽन्येन न केनचिदपि सबन्ध – इति सिद्धम् । एव स्वत सिद्धात्मन्यपीति तदद्वयत्व सिध्यतीत्यथ ॥ ]

(३) उपलब्धोऽस्ति सन् कुम्भो लम्बोष्ठो देशकालवान् ।
पूर्वपूर्वातिरेकेण नोत्तरोऽर्थोऽनुभूयते ॥
वा २–४–२८१, पा १०७९

[ निर्विकल्पानुभवव्याप्त सर्वमित्यत्र दृष्टान्त ]

एव चिदन्वयात् सर्वस्तदध्यस्त समीक्ष्यते ।
सामान्य वा विशेषो वा चिदसबोधहेतुत ॥ वा २८२, पा १०८०

(४) प्रत्यग्रूपस्य ससिद्धौ प्रतीचोऽन्यन्न कारणम् ।
अनात्मवत् तदप्यात्मविशेषणतया भवेत् ॥
वा २८३, पा १०८०

[प्रत्यगात्मा स्वमात्रमानक अनात्मा तु आत्मप्रमाणेनैव सिध्यति ॥ ]

(५) कर्तृत्वकञ्चुको यद्वदात्मानात्मानमीक्षते ।
कूटस्थदृष्टिमात्रत्वान्न तथात्मानमीक्षते ॥
सहतो गम्यतेऽनात्मा प्रत्यक्षेण यथा सदा ।
गम्यतेऽसहतस्तद्वदात्मा प्रत्यग्धियात्मना ॥
वा २–४–२८४, २८५, पा १०८०

---

1 अत्र सर्वत्र चतुर्थब्राह्मणागतानामेव सख्या परामृष्टा ॥

[ प्रमाण व्यापारयित्वैव कर्त्रात्मा अनात्मानं जानाति, केवलात्मा तु अनिश्चितसाधन एव स्वात्मानमनुभवति । किञ्च, प्रमेयभूतोऽनात्मा प्रमातृ प्रमाणाभ्यां सहित एव ज्ञायते, आत्मा तु न केनचिदन्येन सहित । प्रत्यक्प्रवणबुद्धया चात्मरूपयैव गम्यते ॥ ]

(६) विशेषैरन्वयो नापि सामान्यान्वयवत् क्वचित् ।
सामान्यस्याविशेषत्वान्नात सामान्यधीग्रह ॥
विशेषैरन्वयो नो चेदिभाखुव्यक्तिवन्मिथ ।
खण्डवत् स्याद् विशेषादौ यत् सामान्यमितीरितम् ॥
वा २-४-२६९, २७०, पा १०७७, १०७८

[ विशेषादौ – सामान्यविशेषे, केवलविशेषेषु वा ॥ ]

## पञ्चकोशविवेकप्रक्रिया –

१२० पञ्चकोशप्रक्रियापि श्रौती कोशाध्यारोपेण ब्रह्मात्मस्वरूप प्रतिपाद्य कोशापवादार्थमेवेति वार्तिकमतम् । इत्थ सा प्रक्रिया सङ्क्षेपत । अनाद्यविद्यावासनया कोशानेव स्वमनेनिरूपयान्, तानेवोपायत्वेनादाय प्रत्यगात्मनि बुद्धिरवतार्यते ( तै वा २ २३२, २३३) । एक एव हि प्रत्यगात्मा अध्यात्मम् अधिदैव च कोशपञ्चकावच्छिन्नो द्वेधा प्रविभक्त इवाविद्यया लक्ष्यते । (तै वा २–२३४, २३५) । तत्र कार्यरूपान् अन्नमयादीन् स्वस्वकारणेष्वन्नादिषु प्रविलाप्य, तानपि क्रमेणोत्तरस्मिन्नुत्तरस्मिन् पूर्वं पूर्वं प्रविलाप्य, परमकारणात्मना स्थितो वेदान्तवाक्यजन्यज्ञानेन कारणात्मत्वमप्यपबाध्य ब्रह्मस्वरूपेणावशिष्यते ( तै वा २–२३६, २३७) । केवलम् अध्यात्मकोशानामेव प्रविलापने हि स्वदेहमात्रपरिच्छिन्न आत्मा ज्ञात स्यात् साङ्ख्यराद्धान्ते इव (तै वा २–२६८), तच्चानिष्टमिति । पूर्वस्माद् पूर्वस्माद् व्यतिरेकेण निर्देशात्, उत्तरस्योत्तरस्य 'अन्योऽन्तर आत्मा' इति 'तेनैष पूर्ण ' इति च – प्रतिकोशमुत्तरोत्तरपूर्णत्वेन निर्देशात् उत्तरस्योत्तरस्य स्वात्मनापि पूर्वपूर्वकोशान्वयोक्ते, अन्नमयस्य प्राणमयादिभिश्चतुर्भि, प्राणमयस्य मनोमयादिभिस्त्रिभि – इत्येवम् अन्वितत्वावगतेश्च, अन्वय-

व्यतिरेकाभ्या सर्वस्यापि कार्यस्य परमकारणे प्रविलयोऽभिप्रेत इति निश्चीयते (तै वा २-२६९)। तदेव ब्रह्मण उपेयभूतस्यानन्दवल्ल्या निर्धारितत्वादेव भृगुवल्ल्यामपि कोशान्वयव्यतिरेकद्वारेणब्रह्मप्रतिपत्तिप्रकारो विवक्ष्यत इति वल्ल्योरानुरूप्यमपि सिध्यति । तत्र 'आनन्दो ब्रह्मेति व्यजानात्' इति त्वज्ञानकार्यभूतपञ्चकोशापह्नवेन शुद्धानन्दस्वरूप ब्रह्मैव प्रतिपाद्यते इति विशेष (२-३३२ प्रभृति ३३५ पर्यन्तम्)। एव च 'असन्नेव स भवति' (तै २-६) इति श्लोकस्यायमेवार्थोऽवसीयते, यत् आत्मस्वरूपेण सदपि ब्रह्म कोशात्मना असद्रूपेण वेद चेत् असन्नेव भवति, अथ कोशव्यतिरिक्तेन सद्ब्रह्मरूपेण वेद, त सन्त विदुर्ब्रह्मविद । तस्मात् अज्ञानकल्पितान् कोशान् सर्वानपि निरस्य निर्विकार परमात्मान मेवात्मत्वेनाश्रयेदिति (तै २-३५२ प्रभृति ३५६) इति ॥

अत्रैते वार्तिकश्लोका प्राधान्येनानुसधेया –

(१) अनादाविह ससारे वासनारञ्जिता मति ।
प्रतीच्युपायत कर्तुं शक्या तस्मात् स उच्यते ॥ तै वा २-२३३

(२) द्वैतास्पृक् प्रत्यगात्मैक प्रतीचीव परागपि ।
युष्मदस्मद्विभागाभ्या भिद्यतेऽविद्यया मृषा ॥
अस्मद्विभागे पञ्चान्ये यथैवान्नमयादय ।
तथा तत्प्रत्यगात्मानो युष्मदन्नादय स्मृता ॥
तै वा २-२३४, २३५

(३) आध्यात्मिकान् विलाप्याथ यथा स्व प्रत्यगात्मसु ।
अन्नादीन् पर्युपासीत ह्युत्तरोत्तररूपगान् ॥
जग्ध्वा कार्यात्मतामेव कारणात्मतया स्थित ।
आत्मनाऽऽलिङ्गते ब्रह्म वाक्याज्जग्ध्वाथ तामपि ॥
तै वा २-२३६, २३७

(४) अविद्यातदर्होऽपि रज्जु सर्पात्मतामिव ।
कोशपञ्चकता यातस्तमनुक्रोशतीव हि ॥ तै वा २-२५०

(५) कार्याणा कारणात्मत्वमेव स्यादुत्तरेष्वपि ।
ब्रह्मानन्त भवेदेव साङ्खयराद्धान्तम(अ ?)न्यथा ॥
पूर्वकार्यातिरेकेण स्वात्मना चान्वयोक्तित ।
अन्वयव्यतिरेकाभ्या यथोक्तार्थ समर्थित ॥
कोशैश्चतुर्भि सव्याप्तो यथैवान्नमय पुरा ।
जानीयादुत्तरानेव त्रिष्वेकार्थसमन्वयात् ॥
तै वा २-२६८, २६९, २७१, पा १०१

(६) आनन्दवल्ल्या ब्रह्मोक्त तदुपायविधित्सया ।
अधीहि भगवो ब्रह्मेत्यवोचद् वरुण भृगु ॥
व्याख्यातत्वादुपेयस्य ह्युपायोऽत्रावशिष्यते ।
उपाया कोशा पञ्चापि यस्मात्तैस्त प्रपद्यते ॥
अन्वयव्यतिरेकाभ्या कोशैरात्मसमीक्षणम् ।
क्रियते हि यतस्तेषामुपायत्व प्रतीयते ॥
तै वा २-३३३ प्रभृति ३३५, पा ११५

[अन्वयव्यतिरेकचिन्तन तप स्यादिति स्वमत - भाष्यव्याख्यानानन्तर भृगुवल्ल्यामप्युच्यते ३-१९, तेनैतद्वाक्यतात्पर्यावगन्तव्या ॥ ]

(७) सदप्यात्मस्वरूपेण ब्रह्मासदिति वेद चेत् ।
सोऽसन्नेवेह भवति कोशात्मत्वाभिमानभाक् ॥ तै वा २-३५३
यस्मादेवमतो हित्वा कोशानज्ञानकल्पितान् ।
निर्विकारमनाद्यन्त परमात्मानमाश्रयेत् ॥
तै वा २-३५६, पा ११९

## द्रष्टृदृश्यविवेकः –

१२१ द्रष्टृत्वाध्यारोपापापवादाभ्यामपि परमार्थात्मतत्त्व ज्ञाप्यते । तद्यथा – आत्मचैतन्यमेव तावद् दृष्टिर्द्रष्टा चेत्युपचर्यते तत्र तत्र वेदान्ते । एकैव सती हीय दृष्टिरविद्यया बहुधा आभाति । प्रमातृव्यापारजन्य लौकिकदृष्ट्यपेक्षया सेय पारमार्थिकी दृष्टिरिति व्यपदिश्यते । तत्र लौकिकी दृष्टिस्तावत् चैतन्यरूपपरमार्थदृष्टिव्याप्तैव जन्मादिषड्भावविकारान् भजते । 'यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर ' (बृ ३-४-२) इति श्रुतिवाक्येऽपि लौकिक एव द्रष्टा वर्णित 'साक्षात्' इति शङ्कावारणाय

द्रष्टृदर्शनदृश्यसभेदजन्यप्रात्यक्ष्यशङ्कानिवृत्त्यर्थं च 'अपरोक्षात्' इति विशेषणमपि दत्तम् (वा ३-४-१५ प्रभृति १८ पर्यन्तम्)। तथा हि द्रष्ट्रादिव्यतिरिक्त परमार्थदृष्टिमात्रत्वम् आत्मनो लभ्यत इति। 'न दृष्टे-र्द्रष्टार पश्ये' इत्यादिवाक्यशेषेण तु द्रष्टादीना सहताना साक्षित्वमात्मन इति वस्तुस्वाभाव्यादेवाप्रमेयत्वात्, लौकिकदृष्ट्यविषयत्व सिध्यतीत्युच्यते। यत्प्रसादाद् हि 'पश्यामि', 'न पश्यामि' – इत्यादिव्यवहार प्रवर्तते, त शुद्धचैतन्याभिन्न द्रष्टार तद्दृष्ट्यैव द्रष्टु शक्नुयात्, न तु लौकिकदृष्ट्या विषयीकर्तुम् इति। द्रष्ट्रादीना जाड्यात्, सहतत्वेन परार्थत्वाच्च, न प्रत्यग्दृष्टिदर्शनसामर्थ्यं समस्ति। मिथोदर्शनासमर्थाना स्वसिद्ध्यर्थमेव तु साक्षिदृष्टिमपेक्षमाणाना कैव शङ्का सर्वद्रष्टृदर्शनसामर्थ्यस्येति ॥

अत्रानुसधेया श्लोका इमे –

(१) **दृष्टिरेव तु सा द्रष्टा न तु कारकलक्षण।**
**द्रष्टुर्विशेषणत्वेन दृष्टेरिति परिग्रहात्॥ वा ४-३-१४३५, पा १६३२**

[द्रष्टुर्दृष्टे – इति विशेषणसामर्थ्यात् स्वरूपभूतैव दृष्टिरभिप्रेतेति गम्यते। अतो न दृष्टिकर्तृत्वमात्मन इत्यर्थ ॥]

(२) **दृष्टिरेकैव सर्वत्र सर्वात्मविलक्षणा।**
**आभाति बहुधैवेय तदविद्योत्थहेतुभि ॥ वा ३-८-६० पा १२९०**

(३) **क्रियाकारकरूपेयमक्रियाकारकात्मना।**
**तावन्मात्रैकयाथात्म्यात् तया व्याप्तैव जायते ॥**
**कार्त्स्न्येन यत्र वृत्ति स्याद् व्याप्यव्यापकवस्तुनो।**
**व्याप्तिस्तत्रैव मुख्या स्याद् रज्जुसर्पादिवस्तुवत् ॥**
**देशकालादिसभेदादसाधारणकत्वयो।**
**व्याप्तिर्न घटते साक्षाद् हिमवद्विन्ध्ययोरिव ॥**
**वा ३-४-९६ प्रभृति ९८ पर्यन्तम्, पा १२२४**

[कारकनिरूप्यक्रियारूपा दृष्टि, अक्रियाकारकरूपपरमार्थदृष्ट्यन्वयत्वाद् तद्व्याप्तैव जायते, सर्प इव रज्जुव्याप्त। एषैव व्याप्तिर्मुख्या। 'घटादिरालोक व्याप्त' इत्यादिस्थले तु गौण्येवेत्यर्थ ॥]

(४) प्रमात्रादिव्यपेक्षेय लौकिकी दृष्टिरात्मन ।
तत्प्रत्यगात्मदृष्टिस्तु विज्ञेया पारमार्थिकी ॥
परमार्थात्मदृष्टेय लौकिकी दृष्टिरात्मन ।
षड्भावविक्रियामेति व्याप्तैवाकाशकुम्भवत् ॥ वा ३-४-९९, १००

[आकाशकुम्भवत् – आकाशव्याप्तकुम्भवत । कुम्भोऽपि ह्याकाशकार्यत्वात् तदनन्य एवेति भाव ॥]

(५) यदि वा द्रष्टरि प्राप्ते साक्षादिति विशेषणात् ।
तत्प्रसङ्गनिवृत्त्यर्थमपरोक्षादितीर्यते ॥
द्रष्टृदर्शनदृश्यार्थसभेदविषयस्य हि ।
निषेधायापरोक्षाद्गीरभिन्नार्थग्रहाय तु ॥
द्रष्टृदर्शनदृश्यार्थसभेदस्य निषेधत ।
दृष्टिमात्र स्वत सिद्ध विशेषणफल भवेत् ॥
वा ३-४-१५, १७, १८, पा १२१०

(६) द्रष्टृदर्शनदृश्याना सहताना परस्परम् ।
साक्षित्वमात्मनो नित्य वस्तुस्वाभाव्यमुच्यते ॥ वा ३-४-८२
वेद्मीति यद् बलादात्थ न वेद्मीत्यपि यद्बलात् ।
तद्दृष्टैवेह त दृष्ट्वा ब्रूह्यवद्य यदीक्षसे ॥ वा ३-४-८०, पा १२२०
सर्वधीविक्रियासाक्षिण्येव सिद्धे स्वतो दृशौ ।
कार्यं येऽनुभव प्राहुर्व्याच्य तै कार्यसाधनम् ॥ वा १ ४ ३२०

[सर्वसाक्षिणि सिद्धे सत्येव प्रमाणव्यवहारावतारात्, स्वत सिद्धे सिद्ध्यर्थमन्यानपेक्षणात्, दृग्रूपे दृश्यमात्रलब्धव्यापारकृत्याभावात्, अनुभवरूपे प्रदीपे दीपान्तर-प्रकाशेनाधेयातिशयाभाववत् अनुभवान्तरेणाधेयातिशयाभावात् । एवभूतेऽपि तत्रानुभव कार्यं ये प्राहु, ते कथ केन साधनेन कस्म फलाय वा कार्योऽनुभव इति वक्तव्यम् – इत्यभिप्राय ॥]

तदेतदध्यारोपदृष्ट्या यदेवमुपवर्णितमधस्तात् । अथापवाद । द्रष्ट्रादिप्रवृत्ते प्राक्, उपजनापायवर्जिता, अकारकात्मनैव तिष्ठत्यात्मनो दृष्टि । एतदेव चात्मनो वास्तव रूपम् । अविद्यासबन्धात्तु साक्षित्व-मस्या, अविद्यासबन्धोऽपि चाविद्यामात्रहेतुक । कूटस्थदृष्टेर्न साक्षित्व समस्ति यथा जडस्य । तथा हि । साक्ष्यार्थसबन्धाभावाच्चितेर्न

साक्षित्वम्, अचेतनस्य तु तत्सबन्धे सत्यपि न तत्समस्ति । तस्मात् परमात्मचैतन्यस्य स्वाज्ञानस्थाभासद्वारैव साक्षित्व भवतीति सर्वमनवद्यम् ॥

(१) प्रमात्रादिप्रवृत्ते प्राक् सदानस्तमितोदिता ।
अकारकात्मना तस्थौ प्रत्यग्दृष्टिरसङ्गत ॥
अकार्यकारणात्मैतद्भास्तव रूपमात्मन ।
सकृद्विभातमैकात्म्य चितमस्कमभेदकम् ॥
एतत्तमोऽभिसबन्धात् साक्षित्व प्रतिपद्यते ।
तमोमात्रैव हेतुश्च मोहसगतिरात्मन ॥
वा ३-४-८३ प्रभृति ८५ पर्यन्तम्, पा १२२१

कूटस्थदृष्टे साक्षित्व जडस्येव न युज्यते ।
साक्ष्यार्थानभिसबन्धात् तस्मिन् सत्यपि नाचिते ॥
तस्मात् परस्य साक्षित्व स्वमोहाभासवर्त्मना ।
कार्यकारणसबन्धे चिदाभासस्य सहते ॥ वा ३-४-८९, ९०

[ कार्यम् – बुद्ध्यादि, कारण च – अज्ञातचैतन्यम् । ]

(२) अज्ञानमात्रोपाधित्वादविद्यामुषितात्मभि ।
कौटस्थ्याच्चिद्वयोऽप्यात्मा साक्षीत्यध्यस्यते जडै ॥
वा १-४-३७२, पा ५०५

[ साक्षित्वमध्यस्यते, अज्ञानमात्रोपाधिहेतो ॥ ]

(३) पराक्प्रवणया दृष्ट्या धीस्थो ज्ञोऽज्ञानमात्मनि ।
व्योमकार्ष्ण्यादिवत् तज्ज सभावयति न स्वत ॥
वा १-४-२९८, पा ४८९

[न जानामीत्यनुभवबलान्नैवाज्ञानसभावना । अनुभवोऽयसौ परागदृष्ट्यैव स्वत प्रत्यग्दृष्ट्या तु वीक्ष्यमाणे नैवास्त्यज्ञानम् । व्योम्नि कार्ष्ण्यमनुभूतमनुभवकालेऽपि वस्तुतो नैवास्ति यद्वत ॥ ]

## अवस्थात्रयप्रक्रिया –

१२२ अवस्थात्रयोपन्यासोऽपि नावस्थासद्भावविवक्षया, कि तु, अवस्थात्रयाध्यारोपेण तत्परीक्षापूर्वकम् आत्मस्वरूपम् अधिगमय्य पर्यन्ते नित्यनिरवस्थमात्मानमनुभवारूढमापादयितुम् इति वार्तिककारमतम् ॥

तत्राध्यारोपावस्थाया स्व पिण्डात्मान वैश्वानरे उपसहृत्य तत्तादात्म्य मापन्न, तमपि हिरण्यगर्भे, तदनु तमपि प्राज्ञे कारणात्मनि प्रविलाप्यान्ते अकार्यकारणस्वरूपे नेतिनेत्यात्मना अवतिष्ठेत -- इत्येष परमार्थतुरीयाधि गमप्रकार सक्षेपत ॥

एतत्प्रपञ्चस्तु ज्योतिर्ब्राह्मणे वार्तिके । अय हि विज्ञानमयात्मा ज्योति स्वभाव एव सन्, अविद्यया बुद्धिजागरणे जागर्ति, तत्स्वापे च स्वप्न पश्यति (वा ४–३–४४८) । तत्र प्रमातृप्रमाणादिलक्षणो यो वासनामयो मिथ्यावभासे, तयैव चासौ स्वस्वरूपभूतज्योतिर्विषयभूतया प्रस्वपितीत्युच्यत इत्यतस्तत्राप्यय स्वयज्योतिरेव । सुषुप्तौ तु केवलाज्ञान मात्रोपाधि कारणात्मा सन् जाग्रत्स्वप्नाख्यकार्यकृद् भवति (९७९)[1]। एव च जागरिते कार्यकरणै कर्मकृत् सुखी दु खी च भवति, स्वप्ने बुद्ध्युपाधि सन् कामप्रयुक्त स्वप्नद्रष्टा भवति, सुषुप्तौ पुनरज्ञानमात्रोपाधि सन् बुद्ध्यादिकारण भवतीति विवेक । (वा १५२८) । तत्र महा मत्स्यदृष्टान्तश्रुतिर्भाष्योक्तप्रकारेण कार्यकरणलक्षणमृत्युरूपाद् विलक्षण आत्मा तत्प्रयोजककामकर्मविलक्षणश्चेति प्रतिपादयति । अतोऽस्य ससारित्वमविद्याकृतमेवेति सिध्यति (वा ११४८–११५१) । सुषुप्तौ यदज्ञातात्मरूप कारण तन्नामरूपरहित ब्रह्मैव । 'इमानि सर्वा प्रजा अहरहर्गच्छन्त्य एत ब्रह्मलोक न विन्दन्ति' (छा ८–३–२), 'एव ह वै तत्सर्व पर आत्मनि सप्रतिष्ठते (प्र ४–७) इति च श्रुते । (वा २–१–४५१, ४५२) । श्येनदृष्टान्तश्रुतिश्चात्मनो नित्यशुद्धबुद्धमुक्त-स्वभाव प्रकटयितु प्रवृत्ता(वा ११५८)। तत्र 'सहत्य पक्षौ' इत्यनेनाविद्याया-मवस्थानम्, 'सलँयाय' इति च चिदाभासस्यापि विशुद्धरूपेऽवस्थान

1 अत्र दत्ता सङ्ख्या प्रायशस्तृतीयब्राह्मणगतानेव श्लोकान् परामृशन्ति चतुर्थाध्यायस्येति बोध्यम् । अध्यायान्तरगतश्लोकाना तु तत्तदध्यायब्राह्मणसङ्ख्योल्लेख पूर्वकमेव निर्देश कृत ॥

निदर्श्यते (वा ११७२, ११७३) तदेवम् अवस्थाद्वये योऽविद्या कार्योपाधित्वादविद्यावानासीत्, स इदानीम् अविद्याया विविक्तो भवति (वा ११७४, ११७५)। एतदेवास्य स्वतो रूपम्, अविद्याकामकर्म-रहितम्, जाग्रत्स्वप्नयोस्तु परोपाधिकृतमविद्यानिमित्तम् (वा १२०५-१२०६)। उक्तरीत्या यद्यपि जाग्रत्स्वप्नक्षये कामा क्षीयन्ते, तथापि सुषुप्तौ सस्कारशेष तिष्ठन्तीति सुप्तोत्थितस्य पुनरप्याविर्भवन्ति, न च यावदात्मज्ञान सर्वे प्रमुच्यन्ते (वा ४-४-३७८) इत्यन्यदेतत्। काम-कर्मकलुषित आत्मा स्वप्ने कामहेतुकधीवासनानिर्मितदृश्यान्यवभासयन् ईषत्प्रसन्नो भवति, असङ्गत्वात्। सुषुप्ते तु केवल कारणात्मना अवतिष्ठमान सम्यक् प्रसीदतीति सुषुप्त सप्रसाद (वा ४-३-९७६ प्रभृति ९७८)। अत्र यदज्ञानम् – 'अयमहम्' इति वा 'तानीमानि भूतानि' इति वा अन्तर्बहिश्च ज्ञानाभाव – तदेतत् प्राज्ञेन परमात्मना एकीभावात् हेतो, न तु जाग्रत्स्वप्नयोरिवोपाधिनिमित्तम् इति स्त्रीसपरिष्वक्तपुरुषदृष्टान्तेन निदर्शित श्रुत्या (बृ ४-३-१३०९, १३१०)॥

कथमिद ज्ञायते एकीभावादेवेदमज्ञानम्, न त्वचैतन्यस्वाभाव्यादिति? दृश्यते नन्वचेतनेष्वप्यज्ञानम् (वा १३८४)–इति शङ्का परिहारस्तु 'यद्वै तन्न पश्यति' इत्यादिश्रुत्या। कामकर्माविद्यादि न चैतन्यवदात्मन स्वभाव। असङ्गत्वश्रुते, अनन्वागतत्वश्रुतेश्च। अनाद्यविद्यासबन्धस्तु तत्कार्यैर्मिथ्याज्ञानकामादिभिरादिमान् इतीष्यते (वा ४-३-१४०८, १४०९)। एवमज्ञानमिथ्याज्ञानादिमत कथ क्व नु स्यादुपदेशादिसबन्ध इति शङ्कायाम् अविद्याकामकर्मरहितसुषुप्तावस्थोप-न्यास क्रियते (वा १४१०)। चक्षुरादिकरणाना स्वप्ननिद्रायामेव तावद् तद्वासनावत्यामप्ययो भवतीति गम्यते 'असुप्त सुप्तानभिचाकशीति' इति श्रुते, कुत एव तदस्तित्वाशङ्का यत्र तद्वासनापि नास्ति (वा १४१६)? अतो दृष्टिक्रियाकारकफलासभवात् सुषुप्ते न पश्यति। पश्यन्नेव तु

भवति स्वभावतश्चैतन्यरूपत्वात् (वा १४१८)। तत्र प्रमात्राद्यभावस्तु चित्स्वरूपेणानुभूतम् इत्येतदुत्थितस्य 'नाज्ञासम्' इत्यनुसन्धानबलादेव सिध्यति (वा १४२०)। चैतन्यस्यैर्विलोपः हि प्रमात्रादिरिव न स्यात्, अननुभूतत्वात् (वा १४३८)। 'पश्यन् वै तन्न पश्यति' 'न हि द्रष्टुर्दृष्टे विपरिलोपो विद्यते' इति शतृतृन्प्रत्ययग्रहणं तु न प्रमातृत्व ज्ञापयितुम्। तत्र तदसम्भवात्। अत 'आकाशमवकाशदातृ' इतिवद् द्रष्टुरात्मनः स्वरूपमेवाहप्रत्यय इति सन्तोष्टव्यम् (वा १४४२)। न चात्मनोऽकारकत्वे कथं दृष्टिक्रिया स्यात्? – इति शङ्क्यम्। लोकेऽपि क्रियानिष्पत्तेः पूर्वं कारकस्य कुर्वद्रूपत्वादृष्टेः, क्रियाया कार्यत्वेऽकारकत्वे च कारकासिद्धेः (वा १४४८), दृष्टिक्रियातत्फलयो पौर्वापर्यासिद्धौ साध्य साधनभावानिश्चितेश्च (वा १४४९), अविद्याकृत एव द्रष्टृदर्शनतत्फल विभाग (वा १४५०) – इति सिद्धम्। अनात्मज्ञानसम्भवे एव अविद्यापेक्षा, न तु यत्रात्मैव केवल ज्ञायते तत्राविद्यातत्कृतकारकापेक्षेत्यपि (वा १४५१–१४५२) बोध्यम्। तदेव यदज्ञानं नामरूपादिभेदेन स्वात्मन प्रविभक्तमासीत् स्वप्नजागरितयो, तन्नैवेहास्ति सुषुप्ते, यस्मिन् सति जागरिते इवात्रापि द्वितीयं पश्येत्। सर्वं ह्यत्र कूटस्थात्मरूपता प्राप्तम्। अतो नास्त्यज्ञानं तत्कार्यं तदभावो वात्रेति साक्षिविषयीभूतस्य विभक्त-स्यान्यस्याभावादेव न किञ्चिज्जानाति (१५१८–१५२३), न तु चैतन्य परित्यागादिति निरवद्यम् ॥

सुषुप्तविचारात् परिनिष्पन्नमर्थमुपसंहरति श्रुति 'सलिल एको द्रष्टाऽद्वैतो भवति' (बृ ४–३–३२) इत्याद्या। अस्या व्याख्या – सलिल शुद्ध। कार्यकारणहाने, नित्यबुद्धस्वरूपस्याविद्यादिसम्प्लवा-सम्भवात्। एक स्वगतभेदरहित, सजातीयरहितो वा, अद्वैत इत्यर्थः। अद्रष्टा। अकारकस्वाभाव्यात्, द्रष्टव्याभावाच्च। अद्वैत, अविद्या तत्कार्यातिलङ्घनात् (वा १७९८-१८०६)। एष ब्रह्मलोक। नित्यापरोक्ष,

अव्यावृत्ताननुगतो ब्रह्माख्यो लोक । ब्रह्मात्मा इत्यर्थ । सामानाधिकरण्य विशेषणविशेष्यभावल-लक्षणलक्षणभावैरेवमवगमात् (वा १८१९–१८२१)। एषाऽस्य परमा गति, जीवस्य गत्यन्तरपरिसमाप्तिकरी निष्ठा (वा १८२८)। एषास्य परमा सम्पत्, निरतिशया विभूति । एषोऽस्य परमो लोक । अक्षयिष्णुत्वात्। एषोऽस्य परम आनन्द । सर्वानन्दातिशायित्वात्, एतन्मात्रोपजीवित्वाच्चान्येषां भूतानाम् (वा १८२८, १८३२, १८३६, १८४०) इति ॥

इत्थ वार्तिककृता श्रुत्युपन्यासपरीक्षणेन आत्मन सत्त्वम्, सर्वानात्म-व्यतिरिक्तत्वम्, शुद्धत्वम्, स्वयज्योतिष्ट्वम्, नित्यत्वम्, निरतिशयानन्द-स्वाभाव्यम्, ऐकात्म्यम्, चैतन्यदृष्टिमात्रत्वम्, अद्वयत्व च प्रतिष्ठापित भवति ॥

अत्र प्राधान्येनानुसधेया श्लोकास्त्विमे –

(१) वैश्वानरात् तदात्मान प्राज्ञस्य हृदि तैजसम् ।
हिरण्यगर्भं त चापि प्राणात्मन्युपसहरेत् ॥
प्राणशब्देन चाप्यत्र कारणात्माभिधीयते ।
बीज कार्यस्य सर्वस्य प्राज्ञश्चेति निरुच्यते ॥
कार्याणा कारण मुक्त्वा नान्यत्रास्त्यप्ययो यत ।
तस्मात् कारणसप्राप्त्या यायान्नेतीत्यकारणम् ॥
वा ४–२–८२ प्रभृति ८४ पर्यन्तम् ।

(२) बुद्धिजागरणे यद्वज्जागर्मीत्यभिमन्यते ।
बुद्धिस्वापेऽपि तत्साक्ष्यात् स्वप्नो भूत्वेति मोहधी ॥
वा ४–३–४४८

(३) केवलाज्ञानमात्राधिरिह प्रत्यङ् व्यवस्थित ।
कारणात्मा यतस्तस्माज्जाग्रत्स्वप्नाख्यकार्यकृत् ॥ वा ४–३–९७९

(४) तमोऽन्त कारण बुद्धेर्दृष्टान्त करणावधि ।
सुखी दु खी च देहान्त प्रत्यगज्ञानहेतुत ॥ वा ४–३–१५२८

(५) तद्यथा श्येन इत्युक्त्या तद्दृष्टान्तप्रदर्शनात् ।
शुद्धबुद्धादिकं रूपमात्मनः सम्प्रदर्श्यते ॥ वा ४-३-११५८

(६) अविद्यायामवस्थानं तदुद्भूतस्य वस्तुनः ।
संहत्यपक्षोपमया श्रुत्येह प्रतिपाद्यते ॥
सल्लयायेति यच्छुद्धं रूपं स्यात् प्रत्यगात्मनः ।
प्रत्यक्चिदाभ आगत्य ध्रियते प्रत्यगात्मने ॥
वा ४-३-११७२, ११७३

(७) बुद्ध्यादिकार्यसंहारे प्रत्यक्चैतन्यरूपिणः ।
चिद्बिम्बस्यापि संहारो जलार्कप्रविलापवत् ॥
अविद्यावान् पुरा योऽभूदविद्याकार्यगश्चितिः ।
अविद्यया विभागोऽस्य चिद्बिम्बस्योपजायते ॥
वा ४-३-११७४, ११७५

[चिदाभासस्य स्वतः प्रत्यक्चैतन्यरूपत्वेऽपि, अविद्ययैवास्य विभक्तत्वमवस्थान्तरे। इह तु जलार्कस्य स्वबिम्बभूतार्क इव चिन्मात्रत्वेनावस्थानमिति विशेषः ॥]

(८) एतदस्य स्वतो रूपं यदत्रोपप्रदर्शितम् ।
अविद्याकामकर्मादिविविक्तं यत् सुषुप्तगम् ॥
इतोऽन्यथा तु यद्रूपं जाग्रत्स्वप्नस्वलक्षणम् ।
तदस्य परतो ज्ञेयमात्माज्ञानैकहेतुकम् ॥
वा ४-३-१२०५, १२०६

(९) जाग्रत्स्वप्नक्षये कामाः प्रमुच्यन्तेऽखिला नृणाम् ।
संस्कारमात्रशेषास्ते सुषुप्ते यान्ति संक्षयम् ॥
यतस्तदवरोधार्थं तस्मात् सर्वविशेषणम् ॥
कामहेतौ हि विध्वस्ते न कश्चिदवशिष्यते ।
संस्कारो वाऽथवाप्यन्यः सर्वस्याज्ञानमूलतः ॥
वा ४-४-३७८

[ एतेन व्यवहारदृष्ट्यैव अविद्यादेः संस्काराशेषत्वमिष्टमित्युक्तं भवति ॥ ]

(१०) स्वभावो नात्मनः कामकर्माविद्यादिबोधवत् ।
असङ्गानन्वयोक्तिभ्यां कामादेश्च मृषात्वतः ॥
चैतन्यमात्मनस्तत्त्वं कूटस्थं न तु कामवत् ।
अनाद्यविद्यायोगोऽस्य तत्कार्यैरादिमान् मतः ॥

अज्ञानमिथ्याविज्ञानसस्थस्यास्यात्मन क नु ।
उपदेशादिसबन्ध इत्येतदिह भण्यते ॥
वा ४-३-१४०८ प्रभृति १४१० पर्यन्तम् ।

(११) न पश्यतीति वचन कारकादेरसभवात् ।
वास्तव वृत्तमापेक्ष्य पश्यन् वै तदितीर्यते ॥
वा ४-३-१४१७

(१२) प्रमात्राद्यनमिव्याप्त वस्तु पूर्वं समीक्ष्य हि ।
नाद्राक्षमिति सधत्ते दृष्टवत् स्वचिदात्मना ॥ वा ४-३-१४२०

(१३) न सुषुप्तिप्रसिद्धि स्याद् दृष्टेर्लोपो भवेद्यदि ।
जन्मनाशादिहीनेयमतो दृष्टि परात्मन ॥ वा ४-३-१४३८

(१४) यथावकाशदात्रिति भण्यते निष्क्रिय वियत् ।
शतृतृजन्तवचसा तथात्मा भण्यते ध्रुव ॥ वा ४-३-१४४२

(१५) प्राक् क्रियाया विनिष्पत्ते कुर्वद्रूप न लभ्यते ।
यतोऽतोऽकुर्वदेवेह स्यात् सर्वत्रैव कारकम् ॥ वा १४४४
क्रियायाश्चाप्यकार्यत्वे कारक न प्रसिध्यति ।
कार्यत्वे चानवस्था स्यात् कुर्वच्चापि सुदुर्लभम् ॥ वा १४४८
क्रियातत्फलयोश्चापि पौर्वापर्याप्रसिद्धित ।
कि साध्य साधन चेह निश्चयो नोपलभ्यते ॥ वा १४४९
अविद्यामात्रहेतौ तु सर्वमेतत् समञ्जसम् ।
तत्कार्यत्वाच्च सर्वस्य न किञ्चिदसमञ्जसम् ॥ वा १४५०

[ व्यवहारे कुर्वत्कारकाङ्गीकारेऽपि दोषाप्रसक्ते प्रौढिवादमात्रमेतदिति भाति । अत एव नात्र सूक्ष्मेक्षिक्या विचार्यमिति च । एतत् प्रसङ्गेन (गी भा १८-६६, पा २९५) उपसहारे – 'अकुर्वत कारकत्वप्रसङ्गात्' इत्यादि-भाष्यमवलोकनाय परीक्षकै ॥ ]

(१६) यत्रात्मनोऽस्य सबन्धोऽनात्मनेह विवक्ष्यते ।
अविद्याहेतुकर्त्रादिसगतिस्तत्र मोहजा ॥
यत्र त्वात्मेति धीरस्य जायतेऽनात्मधीरिव ।
यथावस्त्वेव धीस्तत्र नात्राविद्याद्यपेक्षते ॥
वा ४-३-१४५१, १४५२

(१७) विभक्तं यत्तमोऽत्रीयं नाविभक्तं मनागपि ।
तमोऽन्वितत्वाद्धि द्वयन्ते न प्राप्तेऽनन्वयात् तमः ॥
कूटस्थदृष्टावेकस्मिन्नविभक्ते सहस्रधा ।
नामरूपादिभेदेन विभक्तं यत्तमो दृशे ॥
तत्तु द्वितीयं नेहास्ति ततोऽन्यस्य कारणम् ।
द्रष्ट्रादिरूपसंभेदाद्यद्दृश्येऽज्ञागरे यथा ॥
अविद्यादरभावोत्त्या कूटस्थात्मैव भण्यते ।
कारणात्मा यतोऽभावः कार्याख्यस्येह वस्तुनः

वा ४-३-१५१७ प्रभृति १५२० पर्यन्तम् ।

**अथापवादप्रकारः** प्रदर्श्यते । यद्यपीदम् आत्माविद्या वस्तुतो मृषैव सती केवलं 'न जानामि' इत्यनुभवबलादेव सिद्धा व्यवहारे लक्ष्यते' (वा १२९३) । पराग्दृष्ट्यैव ह्यन्तःकरणस्थित आत्मा स्वात्मन्यज्ञानं व्योमकार्ष्ण्यादिवत् संभावयति, प्रत्यग्दृष्ट्या तु परम् अज्ञानं संशयज्ञानं मिथ्याज्ञानं वा स्थानत्रयेऽपि न वीक्ष्यत एव (वा १-४-२९८, २९९) । 'न किञ्चिदवेदिषम्' इति सुप्तोत्थितस्मृतिबलात्, तत्रावस्थायामज्ञानानुभवः स्वीकर्तव्यो भवतीति तु न शङ्कनीयम् । न हि सुषुप्ते 'न जानामि' इत्यनुभवोऽस्ति । न च 'नाज्ञासिषम्' इति स्मृतिरिति युक्तम् । न हि यथा देवदत्त 'इदं तदानीं तत्राहमज्ञासिषम्' इति कालदेशादिव्यवधानेन यथा पूर्वानुभूतं स्मरति, तथा अयमात्मा स्वस्मिन् पूर्वमनुभूतं परामृशतीति वक्तुं शक्यते । देशकालादेरपि साक्षित्वादात्मनो देशकालादिव्यवहितत्वानुपपत्तेः । अज्ञानं च न स्वार्थम्, किं त्वात्मार्थं तत्र भातीत्यतो रज्जुसर्पादिवद् विकल्पमात्रमित्येव युक्तम् । तस्मात्, यथैव रज्जुसर्पो रज्ज्वामेव कल्पितः, रज्ज्वात्मकश्च । एवमिद-मज्ञानमपि चैतन्ये कल्पितं चैतन्यमात्रं सन् तत्र भासते, अत एव च कूटस्थात्मविज्ञानात् सकार्यमज्ञानं बाध्यत इति बोध्यम् (वा १-४-३०० प्रभृति ३०६ पर्यन्तम्) । यत्तु नैष्कर्म्यसिद्धौ 'सर्वानर्थबीजस्यात्मानव-

बोधस्य सुषुप्ते सम्भवात्' (नै ३-५८) इत्यादिना अज्ञानसाधनम् – तद् यथाप्रसिद्धस्याज्ञानस्य यावद्वाक्यज्ञानेन बाध, तावदनुभवबलात् सर्वत्रानुवृत्तिरित्यभिप्रायकमित्यनवद्यम्। न चैवमात्मनोऽपि सुषुप्तेऽननुभवात्, तत्र तदभावप्रसङ्ग । येनैवानुभवेन व्यामोऽय 'नावेदिषम्' इति विकल्प, स एवानुभवस्वरूप आत्मा – इत्यभ्युपगमात् (वा ३-४-१०३)। वस्तुस्वाभाव्येन ह्ययमात्मा अकारकत्वसर्वान्तरत्वकार्त्स्न्यस्वान्ययाथात्म्येभ्यो हेतुभ्य, न केवल सुषुप्ते एव, किं तु जाग्रत्स्वप्नयोरपि सर्वथा अज्ञान रहित, पश्यन्नपि न पश्यतीति युक्तम्। तस्माद् यथैवाय सुषुप्ते न पश्यति, तथैवेतरयोरवस्थयोरपि न पश्यति यथैव चास्य चिद्दृष्टेरविपरिलोपो जाग्रत्स्वप्नयो, तथैव सुषुप्तेऽप्यविपरिलोप (वा ४ ३ १४९३, १४९४, १४९५, १५०७, १५०८) इति सिद्धम् ॥

युक्तित एव तावदवस्थाना मिथ्यात्वमवसीयते । जाग्रत् स्थान मिथ्या जाग्रद्रूपत्वात्, आद्यन्तवत्त्वाच्च स्वप्नजाग्रद्वत् । अज्ञानकार्यं चेद जडरूपानुगमात्, सापेक्षत्वाच्च मृगतृष्णिकोदकादिवत् (वा १०७२, १०७३)। किञ्च, जाग्रत्स्वप्नौ नात्मन, अविद्याकामसमन्वितस्य बुद्ध्यवच्छिन्नात्मन एव दर्शनात् । न तु तत्साक्षिण, साक्षित्वादेव साक्ष्यधर्म सबन्धानुपपत्ते (वा ९०५)। अपि चानात्मना सर्वेषामपि अन्योन्यव्यभिचारित्वादेव मिथ्यात्व रज्जुकल्पितसर्पदण्डादीनामिव (वा १-४-१४९६, १४९७), सुषुप्तादौ स्वरूपव्यभिचाराच्च (वा २-३-२२२)। आत्मचैतन्य तु सर्वथा अव्यभिचारि (२-४-१२६), 'जानामि', 'न जानामि' इत्युभयोरपि साक्षित्वात् (वा २-४-१२९)। तदेव नासङ्गस्य जाग्रत्, स्वप्न, सुषुप्तिर्वा परमार्थत । अविद्याव्यवहार मात्रत्वात्, रज्जुसर्पादिव्यवहारवत् (वा २-१-२६४, २६५, २६६)। सर्वथाप्यात्मा नित्यनिरवस्थाद्वयचिन्मात्र इति सिद्धम्। सर्वोऽप्ययमवस्थात्रयसचार प्रदर्शित आत्मन परमार्थशुद्धत्वोपपादनार्थमेव । तस्य ब्रह्मत्व

ज्ञान तु वेदान्तवाक्यादेव भवति नागमथापरीक्षणरूपतर्कमात्रात् (वा ४-३-१११२ प्रभृति १११५) इति वार्तिकप्रस्थान ज्ञेयम् ॥

अनुसधेयास्त्विमे श्लोका प्राधान्यत –

(१) जाग्रत्स्वप्नसुषुप्तेषु त्वात्माविद्या मृषा सती ।
व्यवहारपथ प्राप्ता स्वत सिद्धात्मसाक्षिका ॥ वा ४-३-११९३
पराक्प्रवणया दृष्ट्या धीस्थो ज्ञोऽज्ञानमात्मनि ।
व्योमकाष्ण्र्यादिवत्तज्ज्ञ सभावयति न स्वत ॥
नैवाज्ञान मृषाज्ञान सशयज्ञानमीक्ष्यते ।
प्रत्यक्प्रवणया दृष्ट्या जाग्रत्स्वप्नसुषुप्तिषु ॥
वा १-४-२९८, २९९

(२) न सुषुप्तगविज्ञान नाज्ञासिषमिति स्मृति ।
कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक् ॥
[ न ह्यात्मस्थमज्ञान पूर्वकालेऽनुभूतमिति युज्यते ॥ ]
न भूतकालस्पृक्प्रत्यङ्न चागामिस्पृगीक्ष्यते ।
स्वार्थदेश परार्थोऽर्थो विकल्पस्तेन स स्मृत ॥
वा १-४-३००, ३०१

यत्तत्त्वक स्याद् यद्वस्तु न तत्तद्तिवर्तते ।
नाज्ञातरज्जुज सर्पो रज्जुमुल्लङ्घ्य वर्तते ॥ वा १-४-३०२
चैतन्यमात्ररूप सत् प्रथतेऽज्ञानमात्मनि ।
प्रत्यक्कूटस्थनिष्ठत्वात् तद्बाध्य कारणेतरत् ॥ वा १-४-३०६

(३) न चेदनुभवव्याप्ति सुषुप्तस्याभ्युपेयते ।
नावेदिष सुषुप्तेऽहमिति धी किंबलाद् भवेत् ॥ वा ३-४-१०२

(४) चितेरकारकत्वाच्च सर्वान्तरतमत्वत ।
कात्स्न्र्यात् तदन्ययाथात्म्यात् पश्यन्नपि न पश्यति ॥
न पश्यति यथा प्राज्ञ उक्तहेत्वविशेषत ।
तथैवैतद् ग्रहीतव्य स्वप्नजाग्रदवस्थयो ॥
चितेर्यथाविनाशश्च स्वप्नजाग्रदवस्थयो ।
तथैव संप्रसादेऽस्मिन्नुक्तहेतुसमन्वयात् ॥
वा ४-३-१४९३, १४९४, १४९५

अलुप्तदृष्टिरात्माय यथोक्त(क्त ?) स्वप्नबोधयो ।
प्राज्ञेऽपि च तथैवाय यद्वै तदिति वाक्यत ॥
अतिकारकहेतुश्च यथात्माय सुषुप्तग ।
कूटस्थदृष्टिमात्रत्वात् तथा स्वप्नप्रबोधयो ॥
वा ४-३-११०७, ११०८, पा १७१३

(५) असज्जाग्रदवस्थेय जाग्रद्रूपत्वकारणात् ।
स्वप्ने जाग्रदवस्थावत् तथा चाद्यन्तवत्त्वत ॥
अज्ञानोत्थमिद जात्रजडरूपसमन्वयात् ।
तथापेक्षात्मकत्वाच्च मृगतृष्णोदकादिवत् ॥
वा ४-३-१०७२, १०७३, पा १५७०

(६) कर्मकृद् धिषणान्तो य कामाविद्यासमन्वित ।
स्वापबोधाविमौ तस्य न तु तत्साक्षिणो दृशे ॥
वा ४-३-९०५, पा १५४२

(७) सर्पात्मना गृहीताया न दण्डादीक्ष्यते स्रजि ।
प्रतीच्येकतनुग्राह्ये तदन्यन्न तथेक्ष्यते ॥
अन्योन्यव्यभिचारित्वमज्ञानेऽपि ह्यनात्मनाम् ।
किमु विध्वस्तनि शेषधनाज्ञानेऽन्तरात्मनि ॥
वा १-४-१४९६, १४९७, पा ७२९, ७३०

अन्योन्यव्यभिचारोऽस्य वीक्ष्यतेऽनात्मवस्तुन ।
स्वरूपव्यभिचारोऽपि सुषुप्तादौ स्वसाक्षिग ॥
वा २-३-२२२, पा १०२९

(८) मात्रादिव्यभिचारेऽपि सविदव्यभिचारिणी ।
मिथ कृत्स्नेऽपि जगति तदन्यद् व्यभिचारि तु ॥
स्वसाक्षिकैव सर्वस्य न वेद्मीत्यपि या मति ।
किमु वेद्मीति बुद्धि स्याच्चिदतोऽव्यभिचारिणी ॥
वा २-४-१२६, १२९, पा १०५४

(९) नास्य स्वाप प्रबोधो वा कुत स्वप्नस्य सभव ।
प्रत्यक्स्वभाव एवास्य जाग्रत्स्वप्नसुषुप्तय ॥
सुप्त प्रबुद्ध इत्येव स्वप्न पश्यति चेति य ।
विकल्प एष भूतानामविद्यारात्रिशायिनाम् ॥
मायामात्रमिद सर्व जगत्स्थावरजङ्गमम् ।
सर्पादेरिव रज्ज्वादिस्तत्त्वमस्य पर पदम् ॥
वा २-१-२६४ प्रभृति २६६, पा ९३१

द्रष्टुरभावात्, द्रष्टृद्रष्टव्ययोर्भेदाभावे सति स्वस्मिन्नेव कर्मकर्तृत्वानुपपत्तेर्दृष्टिक्रियाविधानासभवाच्च। तस्मात् नेतीत्यनात्मरूपत्व प्रतिषिध्य 'इद सर्वं, यदयमात्मा' (बृ २-४-६) इति श्रुत्या ज्ञाप्यते। अतोऽत्राज्ञातज्ञापनरूपविधिरेष्टव्य – इति द्रष्टव्यविधिनिरासग्रन्थसार। अत्राक्षेपा प्रतिवाद्यभिमता इत्थ परिहृता –न चाभिधाश्रुते 'नद्यास्तीरे पञ्चफलानि सन्ति' इत्यादिलौकिकवाक्यवदप्रामाण्य शङ्क्यम्, आख्यातपदाभावेन पदसहतेरभावाद् वाक्यत्वानुपपत्तिर्वा। मानान्तराप्राप्तस्यैकात्म्यस्य बोधनादेव श्रुतिप्रामाण्योपपत्ते, सुप्तोत्थापकवाक्यवत् सबन्धाग्रहणेऽपि तदवक्लृप्ते। न चाख्यातपदाभाव, अस्त्यादिक्रियापदसद्भावात्। नदीतीरे फलानीति वाक्य तु मानान्तरयोग्यविषयम्, न वाक्यैकगम्यमिति विषमो दृष्टान्त –इति ॥

अत्रेमे श्लोका मुख्यतोऽनुसधेया –

(१) आत्मा प्रत्यक् प्रसिद्ध स्यात् तत्रैवात्मानुभूतित ।
इति प्रमेयनिर्देशो द्रष्टव्य इति तत्प्रमा ॥
आत्मबुद्धिरिय तावत् सर्वेषा जायते स्वत ।
अप्राप्ता सर्वमात्मेति सैवातो धीर्विधीयते ॥
द्रष्टृद्रष्टव्ययोर्भेदे सत्येव धीर्विधीयते ।
नियोज्यविषयाभेदे घटते न विधिर्यत ॥

वा २-४-९५ प्रभृति ९७ पर्यन्तम्, पा १०४९

['सर्वमात्मा' इत्यप्राप्तत्वात् सैव बुद्धिर्विधीयत इति युक्तम् यद्यपि, तथापि नियोज्यविषययोर्भेदाभावान्नात्र नियोग, किं त्वज्ञातज्ञापनमेवेदम् – इत्यभिप्राय ॥]

(२) सर्वमात्मेति या बुद्धि सा प्रमेयबलाद् भवेत् ।
प्रमातृतन्त्रा सा चेत् स्यात् प्राप्ता लोकाग्निबुद्धिवत् ॥
अतोऽपुरुषतन्त्रत्वान्नात्मज्ञाने विधिर्भवेत् ॥

वा २-४-१२०, १२१, पा १०५२

(३) विभिन्नद्रष्टृद्रष्टव्याप्तिर्घटादेरिव नात्मन ।
न चाभेदेऽस्ति सव्याप्तिरैकात्म्यादेव कारणात् ॥

[प्रमातृदृष्टिरूपया क्रियया व्याप्यत्व नास्त्यात्मन, घटादिवत्, न च स्वस्यैव स्वदृष्टिव्याप्यत्वम् ॥]

वस्तुतत्त्वविवक्षेह मन्तव्य इति शासनात् ।
योषिदग्न्यादिदृष्टौ हि नैव मन्तव्यता विधि ॥

[दर्शनमिह न ध्यानमुक्तमित्यत्र मन्तव्यत्वविधिर्लिङ्गमिति प्रासङ्गिकमिदम् ॥]

वेदशब्दानुरोध्यत्र तर्कोऽपि विनियुज्यते ।
वाच्यवाचकसबन्धनियमे तस्य हेतुता ॥

[ त्वपदवाच्य साक्ष्येवेति निर्णये मननस्योपयोग ॥ ]

वा २-४-२१४ २१५, २१६, पा १०६८

(४) अपरायत्तबोधोऽत्र निदिध्यासनमुच्यते ।
पूर्वयोरवधित्वेन तदुपन्यास इष्यते ॥ वा २-४-२१७
प्रतिपत्ति पुरा शाब्दी यावन्न मनुते श्रुतम् ।
श्रुत्वा मत्वाथ त साक्षादात्मान प्रतिपद्यते ॥ वा २-४-२२०
ध्यानाशङ्कानिवृत्त्यर्थं विज्ञानेनेति भण्यते ।
निदिध्यासनशब्देन ध्यानमाशङ्क्यते यत ॥

वा २-४-२३३, पा १०७१

विज्ञानोत्पत्तिहेतुत्व ध्यानादे प्रागवादिषम् ।
स्वार्थमेव तु विज्ञान मुक्तिमात्रफल स्मृतम् ॥ वा २-४-२३४

(५) अनन्यायत्तविज्ञाने श्रवणादेरुपायत ।
जाते नापेक्षते किञ्चित् प्रतीचोऽनुभवात् परम् ॥

वा २-४ २२१

ऐकात्म्याज्ञानविध्वसव्यतिरेकेण नेष्यते ।
ऐकात्म्यविज्ञानफल प्राप्तमेव हि तत् स्वत ॥ वा २-४-२३५
प्रत्यक्त्वात्रैकयाथात्म्यात् कार्यकारणवस्तुन ।
तज्ज्ञानात् किं तमोऽध्वस्त किं वाऽज्ञान वदात्मन ॥

वा २-४-२३१

['अज्ञानम्' इति टीकानुसारतश्छेद । 'ज्ञानम्' इति च्छेदे तु तज्ज्ञानात् पर ज्ञानमुत्पाद्य नास्तीति विज्ञायते इत्यर्थ । तथा हि पूर्वस्मिन वार्तिके 'नास्ति ज्ञानमनुत्पन्न नाप्यध्वस्त तथा तम ' इत्युक्तेनैकवाक्यता स्यादिति ॥ ]

## श्रवणादिविषये भाष्यवार्तिकप्रस्थानतुलना –

१२५ अत्र भाष्यवार्तिकप्रस्थानयो श्रवणादीना विधेयत्व प्रति कश्चिद् विसंवादाभास. प्रतीयते । तद्यथा-भाष्ये तावत् किमर्थानि

तर्हि 'आत्मा वा अरे द्रष्टव्य श्रोतव्य ' इत्यादीनि विधिच्छायानि वचनानि ? " इत्याशङ्कावाक्ये (सू भा १-१-४, पा १९) छाया शब्दोपादानात्, श्रवणादीना विधित्वमसमनमिति प्रतीयते । अन्यत्र तु "प्रत्ययावृत्ति कर्तव्या । कुत ? असकृदुपदेशात् । 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य ' इत्येवजातीयको हि असकृदुपदेश प्रत्ययावृत्ति सूचयति " (सू भा ४-१-१, पा ४६०) – इत्युक्ते श्रवणादीना विधेयत्वमप्यङ्गीकृतमिति भाति । न हि शास्त्राविहित किञ्चित् कर्तव्यताम् इयादिति । वार्तिके तु श्रवणादीना विधिच्छायात्वोक्तिर्नास्ति, प्रत्युत 'पुमान् शक्नोति तत् कर्तुं तस्मादेतद् विधीयते ' (वा २-४-१२२)- इति कण्ठरवेण तेषा विधेयत्वमुद्घोष्यते । किञ्च भाष्ये आवृत्त्यधिकरणे 'निदिध्यासितव्य ' इत्यपि कर्तव्यतया अभ्युपगम्यते । "अपि च, 'उपासनम्', 'निदिध्यासम च' इति, अन्तर्णीतावृत्तिगुणैकक्रिया अभिधीयते" इति क्रियात्वेनैव परामृश्यमानत्वात् । उत्तरत्र चोदाहरिष्यमाणे निदर्शने 'गुरुमुपास्ते', 'ध्यायति प्रोषितनाथा पतिम्' – इत्युल्लेखदर्शनात्, निदिध्यासनमप्युपासनाविशेष एवाभिमत स्यादित्यपि शङ्कितुम् अवकाशोऽस्ति । वार्तिके पुन स्पष्टमेव 'अपरायत्तबोध' एव (वा २-४-२१७) निदि यासनशब्दवाच्य – इत्युक्त्वा वाक्यशेषे विज्ञानशब्दप्रयोगाद् ध्यानार्थता निदिध्यासनशब्दस्य नाशङ्कनीया (वा २-४-२३३) इति निदिध्यासनस्य कार्यत्व निराक्रियते । तदत्र प्रस्थानयोरनयोरेकवाक्यता अस्ति वा, उत विरोध एव ? यद्यपि विरोध एव, तदा कतर पक्षो ज्यायान् ?–इति विमृश्यमेतत् ॥

अत्रेत्थ न प्रतिभाति । भाष्ये तावत् प्रतिपत्तिविधिविशेषतयैव ब्रह्म शास्त्रप्रमाणकम्–इत्यातस्थुषा वृत्तिकाराणा निराकरणाय वस्तुतन्त्रमपि ज्ञानमस्ति ध्यानविलक्षणम् – इति प्रतिपादनप्रसङ्गेन लिखितमिद विधिच्छायात्ववाक्यम् । इत्थ हि तत्र वाक्यविन्यासक्रम –

" या तु प्रसिद्धेऽग्नौ अग्निबुद्धिः न सा चोदनातन्त्रा, नापि पुरुषतन्त्रा, किं तर्हि प्रत्यक्षविषयवस्तुतन्त्रैव – इति ज्ञानमेवैतत्, न क्रिया। एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम्। तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम्। तद्विषये लिङादयः श्रूयमाणा अपि, अनियोज्यविषयत्वात् कुण्ठीभवन्ति, उपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत्। अहेयानुपादेयवस्तुविषयत्वात्' (सू भा १-१-४, पा १८ १९)

इति। एवं च कार्यविधिप्रयुक्तस्यैव ब्रह्मणोऽत्र प्रतिपाद्यमानत्वम् – इति यदुच्यते पूर्वपक्षिणा, तदसत्, वस्तुतन्त्रज्ञानस्यापि सद्भावात् – इत्यत्रैव भाष्यस्य तात्पर्यमवसीयते। एतच्छेषेणैव 'किमर्थानि तर्हि' इति शङ्कासमुत्थापनमिति तदपि ज्ञानस्याविधेयत्वे तात्पर्यवदिति गम्यते। परिहारवचनं च "तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविककार्यकरणसंघातप्रवृत्तिगोचरात् विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्य' इत्यादीनि" इति न श्रवणादीनां विधेयत्वेऽविधेयत्वे वा किञ्चिद् ब्रूते, श्रवणादिविधानस्याप्रकृतत्वात्, किं तु 'द्रष्टव्यः श्रोतव्यः' इत्यादिस्थलेष्वप्यस्तीषद् विधिकार्यम् इति तावता प्रवृत्तिबोधकास्तव्यादिप्रत्यया अर्थवन्तो भविष्यन्ति, अतो न तद्बलात् ज्ञानमपि विधेयमित्याग्रहः करणीयः – इति प्रकृतार्थोपबृंहणेनैवोपक्षीणम्। अनेनैकार्थ्यमस्ति वाक्यान्तरमपि भाष्ये –

" द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठिताः, तत्त्वाभिमुखीकरणप्रधानाः, न तत्त्वावबोधविधिप्रधाना भवन्ति। लोकेऽपि 'इदं पश्य', 'इदमाकर्णय' इति चैवंजातीयकेषु निर्देशेषु 'प्रणिधानमात्रं कुरु'-इत्युच्यते, न 'साक्षाद् ज्ञानमेव कुरु' इति। ज्ञेयाभिमुखस्यापि ज्ञानं कदाचिज्जायते कदाचिन्न जायते। तस्मात् तं प्रति ज्ञानविषय एव दर्शयितव्यो ज्ञापयितुकामेन। तस्मिन् दर्शिते स्वयमेव यथाविषयं यथाप्रमाणं च ज्ञानम् उत्पद्यते" (सू भा ३-२-२१, पा ३६२)

इति। इत्थं च श्रवणादिवाक्येषु न श्रावणादिविज्ञानं विधीयते, किं तर्हि, आत्मनि प्रणिधानम्–इत्यर्थे भाष्यवाक्यमिदं पर्यवसन्नम्। ईदृशे

प्रणिधानमेवावर्तनीयमित्युच्यते आवृत्त्यधिकरणभाष्ये – इत्यविरोध । वार्तिकेऽपि यत् पुरुषतन्त्र तदेव विधीयत इत्युच्यते । तत्रापि च श्रवणादिकेन सकृत् कृतेन नैव ज्ञानमुत्पद्यत इति नाग्रह । 'श्रवणादिक्रिया तावत कर्तव्येह प्रयत्नत । यावद् यथोक्त विज्ञानमाविर्भवति भास्वरम् ॥' (वा २-४-२१८) इत्युक्तत्वात् । तदेव **श्रवणमननयोर्विधेयत्वे** तावन्नास्ति प्रस्थानयोर्विसवाद इति स्थितम् ॥

अथ 'प्रतिपत्ति पुरा शाब्दी यावन्न मनुते श्रुतम्' (वा २ १ २२०) इति वार्तिकात् केवलश्रवणान्न कस्यचिदपि साक्षाद्विज्ञान जायत इत्युक्तमिव भाति। सूत्रभाष्ये तु 'भवेदावृत्त्यानर्थक्य त प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्वम् अनुभवितु न शक्नुयात्' (सू भा ४-१-२, पा ४६१) इत्युक्तम् । तत्र कथमविरोध इति ? तत्रापि विसवादाभास आपातत एव। यत्कारण नैष्कर्म्यसिद्धौ लिखितम् – 'तत्र कृत्स्नानात्मनिवृत्तौ सत्या य प्रत्यगात्मनि अवाक्यार्थता प्रतिपद्यते, स क्षपिताशेषान्तरायहेतुरिति न त प्रति वक्तव्य किञ्चिदप्यवशिष्यते। योऽपि वाक्यश्रवणमात्रादेव प्रतिपद्यते, तस्यापि अतीन्द्रियशक्तिमत्त्वात्, न किञ्चिदप्यपेक्षितव्यमस्ति' (नै ३ ६४) इत्यादि । अतो ये वाक्यश्रवणमात्रेण ब्रह्मात्मत्व वाक्यार्थं प्रतिपत्तु न शक्नुवन्ति, तान् प्रत्येव 'प्रतिपत्ति पुरा शाब्दी'–इत्यादिवार्तिकोक्तिरिति नास्ति **श्रवणमात्राज्ज्ञानोत्पत्तावपि** प्रस्थानयोर्विरोध ॥

अथ **निदिध्यासनविषये** विरोधाभास परीक्षणीय । अत्रोच्यते। तत्र निदिध्यासनमिति 'अन्तर्णीतावृत्तिगुणैव क्रिया अभिधीयते (सू भा ४-१-१, पा ४६०) इति स्पष्टोक्ते, 'मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात्' (सू भा १-१-४, पा २३) इत्यवगतिरूपविज्ञानाद् व्यतिरेकेणैव तदर्थमनुष्ठेयत्वेन निदिध्यासनस्य निर्देशाच्च भाष्ये तावन्निदिध्यासन नाम विधीयमानसाधनविशेष एवेत्यवगम्यते। 'यानि तावत्

सम्यग्दर्शनार्थान्युपासनानि, तान्यवघातादिवत् कार्यपर्यवसानानीनि ज्ञात मेवैषाम् आवृत्तिपरिमाणम्' (सू भा ४-१-१२) इत्युपासनाशब्द ग्रहणादवसीयते यन्निदिध्यासनमप्युपासनाविशेषत्वेनाभिमत सूत्रभाष्य-काराणामिति । पर तु "'पुरुषो वाव गौतमाग्नि', 'योषा वाव गौतमाग्नि' (छा ५-८-१) इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति। केवलचोदनाजन्यत्वात् क्रियैव सा पुरुषतन्त्रा च" (सू भा १-१-४, पा १८) इत्यत्रोपवर्णिताद् ध्यानात् किञ्चिद्भिन्नमिद निदिध्यासनम्, केवलचोदनजन्यत्वाभावात् । "एव ह्यसौ दृष्टो भवति श्रवणमनननिदिध्यासनैर्निर्वर्तितै । यदा एकत्वमेतान्युपगतानि, तदा सम्यग्दर्शन ब्रह्मैकत्व विषय प्रसीदति" (बृ भा २-४-५, पा ७६०) । 'सर्वथापि तु यथा आगमेनावधारितम्, तर्कतस्तथैव मन्तव्यम्, यथा तर्कतो मतम्, तस्य तर्कागमाभ्या निश्चितस्य तथैव निदिध्यासन क्रियते' (बृ भा २-५, स पा ७७०) – इति च श्रवणमनननिदिध्यासनाना दृष्टार्थत्वात्, तदेकतागमनस्येष्टत्वाच्च योषाग्न्यादिवाक्यचोदितात्, अदृष्टार्थभावना-सचयाद् विलक्षणमेवेद साधनमुपासनाशब्दितमपि सदित्यवगम्यते । न ह्यग्नौ योषिद्बुद्धिर्यथावस्तुविषया भवति, कि तु चोदनावशादेव सा क्रियते लोकान्तरफला च, इह पुनर्यथैव निदिध्यास्यते, तथैव दृश्यतेऽत्रैव जन्मनीति केवल प्रणिधानमात्रमेतत् – इति वैषम्यम् । तस्मात्, यथैव दर्शनज्ञानादि-शब्दा परापरविद्याधिकारपठितत्वनिमित्तात् मानसक्रियाविशेष यथावस्तुज्ञान वा यथायोगमभिदधते, एवमेव 'उपासीत', 'निदिध्यासितव्य'–इत्यादि-शब्दा अपि भावनामात्र सम्यग्दर्शनार्थप्रणिधान वेति भिन्नार्थगोचरा एवेति गम्यते । इत्येव भाष्यप्रस्थाने निदिध्यासनार्थनिर्णय ॥

**वार्तिके** यद्यपि 'अपरायत्तबोधोऽत्र निदिध्यासनमुच्यते' (वा २-४-२१७) इति स्पष्टोक्तेर्निदिध्यासनशब्देन न भावनालक्षणा क्रिया शक्यग्रहणा, तथापि ध्यानस्य सम्यग्दर्शनार्थत्वं न प्रत्याख्यायते ।

'विज्ञानोत्पत्तिहेतुत्व ध्यानादे प्रागवादिषम् । स्वार्थमेव तु विज्ञान मुक्तिमात्रफल स्मृतम् ॥' (वा २-४-२३४) इति वाक्यशेषेण तदभ्यनुजानात् । तदेव निदिध्यासनशब्दस्यार्थभेदस्वीकारेऽपि प्रस्थानयोर्ध्यानक्रियाया ज्ञानसाधनत्वे विप्रतिपत्त्यभावात् नास्ति विसवाद । यत्तु 'विज्ञानेन' इति वाक्यशेषे श्रवणादत्र वाक्ये निदिध्यासनशब्देन ध्यान नाशङ्कनीयमित्याग्रह (वा पा १०७१), तत्र निदिध्यासनशब्दस्य श्रवणमननाभ्या सह समभिव्याहारात् तस्यापि क्रियावाचित्वौचित्यात्, विज्ञानशब्दस्य च 'तदन्वेष्टव्य तद्वाव विजिज्ञासितव्यम्' (छा ८-१-१), 'सोऽन्वेष्टव्य स विजिज्ञासितव्य ' (छा ८-७-१)-इति च साक्षात्करणार्थप्रवृत्तिवाचकत्वेनान्यत्र प्रयोगदर्शनात्, इहापि दर्शनार्थध्यानवाचकत्वस्वीकारे बाधकाभावात्, तादृशध्यानस्य वार्तिककारैरपि दर्शनोत्पत्तिहेतुत्वेन स्वीकारात्, फलरूपानुभव 'द्रष्टव्य ' इत्यनेनैवानूद्य तदर्थं साधनत्रयविधानेऽनुपपत्त्यभावाच्च भाष्यकारीयमेव निदिध्यासनशब्दव्याख्यान युक्ततरम्, अन्यथा 'द्रष्टव्य ' 'निदिध्यासितव्य ' इति पौनरुक्त्यापत्तेरित्युत्पश्याम । सर्वथापि त्वत्रापि प्रस्थानयोर्ज्ञानसाधनविषये नास्ति प्रक्रियाविगानमिति सर्वमनवद्यम् ॥

## शमदमादिविधानम् –

१२६ **'एष नित्यो महिमा ब्राह्मणस्य'** (बृ ४-४-२३) इत्यत्र नेतिनेतीति निर्विशेषस्वरूप नित्यो महिमा विदुष । तादृशमहिम्न स्वरूप विदितवत 'न लिप्यते कर्मणा पापकेन ' इति धर्माधर्मलेपाभाव फलमाह मन्त्र । तमेन भाष्यानुसारेण व्याख्याय **'पदवित्'** इत्यस्य पदार्थवित् इत्यर्थान्तरमपि कथित वार्तिके (वा ४-४-११९०) पदार्थज्ञाने विधिरपि भवेदिति, फल तु वाक्यार्थबोधत इति कृत्वा । **'तस्मादेवविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मान पश्यति सर्वमात्मानं पश्यति'** इति वाक्यशेषार्थस्तु एव योजित – यस्मादेव

फल ज्ञानम्, तत एववित् शमादिसाधनो भूत्वा महिम्न पदविद् भवेत्' (वा ४-४-११९२, ११९३) इति। अत्र साधनचतुष्टयसपन्न, शान्त्यादिसाधनो भूत्वा अन्वयव्यतिरेकत, अनात्मभ्यो विविच्यात्मान पश्येत्, अत पर वाक्यादेव सर्वमात्मेति पश्यतीत्युच्यते (वा ४-४-१२०१, १२०२)। अत्र भाष्ये मुद्रितपुस्तकेषु 'शान्तो बाह्येन्द्रिय व्यापारत उपशान्त, तथा दान्तोऽन्त करणतृष्णातो निवृत्त' इति दृश्यते। तदिद लेखकप्रमादेन व्यत्यस्तक्रमेण लिखित स्यादित्युन्नीयते। अन्यत्र 'शान्तिरन्त करणस्योपशम', 'दमश्च बाह्यकरणानामुपशम' (गी भा १६-१) इत्येव व्याख्यानदर्शनात्। अत एवात्र वार्तिके 'दान्तो भूत्वा तत शान्तस्ततश्चोपरतो भवेत्। अर्थक्रमो बलीयान् स्याद्यन पाठक्रमादिह॥' (वा ४ ४ १२०३, १२०४) इत्युक्तम्। शमादय प्राप्ता एवेति कथमेषा विधि? प्रतिषिद्ध काम्य चापल नित्यम् - इति हि कर्माणि चतुर्विधानि (वा १२०८)। तत्राद्यत्रयम् मुमुक्षोर्न सभवतीति स्पष्टमेव। नित्यस्य तु करणादपि अकरणादिवानर्थप्राप्तिरित्यवगतवत कुत सभव (वा १२१३)? एव नित्यानि कर्माणि कुर्वतश्चित्तशुद्ध्या तान्यपि त्यजेदेवेति स्वत प्राप्ता शमादय। 'यमान् सेवेत सतत न नित्य नियमान् बुध' (मनु ४-२०४) इति स्मरणादप्येवम्। अत कथ शमादिविधिरिति चेत् - प्राप्तानामेव तु तत्त्वज्ञानसाधनत्वमनेन विधीयते। अथवा निवृत्तिमात्र प्राप्त, न तु निवृत्ते कर्तव्यतेति सात्र विधीयते (वा १२२०)। न च शमदमोक्त्यैवालम्, तयैव सर्वकर्मत्याजनात्, किमुपरत्या?-इति शङ्क्यम्। नित्यकर्मविधे रौत्सर्गिकनिषेधापेक्षया प्रबलत्वात्, तत्त्यागार्थमुपरतिश्रुति प्रवर्तते (वा १२२३-१२२५)। नित्यकर्मवद् विक्षेपकरत्वात् किमिति श्रवणादिकमपि न तित्याजयिषितमिति नाशङ्का भवति। प्रधानोपकारकत्वादेव तेषा त्यागानुपपत्ते (वा १२३८)। द्वन्द्वासहिष्णुत्व तितिक्षा। यत्र पुरुषस्य न स्वातन्त्र्य मनोरथादिषु तादृशकर्मणा त्यागार्थ 'समाहितो भूत्वा' इति (वा १२४६)।

'श्रद्धावित्तो भूत्वा' इति सर्वकर्मत्यागो विधीयते (वा १२६९)। तदेव यथोक्तसाधनैरन्वयव्यतिरेकाभ्याम् आत्मन्येवात्मान पश्येत्। तत सर्व मात्मान पश्यति (वा १२७८) वाक्यजन्यज्ञानेनेति वाक्यार्थ ॥

अत्रानुसधेया श्लोकास्त्विमे –

(१) दान्तो भूत्वा तत शान्तस्ततश्चोपरतो भवेत्।
अर्थक्रमो बलीयान् स्याद् यत पाठक्रमादिह ॥ वा ४-४-१२०३

(२) सत्यमेव शमादीना प्राप्तत्वान्नेष्यते विधि।
प्राप्तानामेव तेषा तु साधनत्व विधीयते।
प्रत्यग्याथात्म्यविज्ञानजन्मने श्रुतिवाक्यत ॥ वा ४-४-१२१८

निवृत्तिमात्र प्राप्त वा भवेदुक्तेन वर्त्मना।
कर्तव्यता निवृत्तेस्तु न प्राप्तेति विधीयते ॥ वा ४-४-१२२०

(३) औत्सर्गिकत्यागविधि नित्यकर्मविधिर्बलात्।
तस्य जीवनमात्रैकहेतुत्वाद् बाधते ध्रुवम् ॥
नित्यकर्मविधेर्यस्माच्छमादिविधिना हति।
न सप्राप्तेत्यतो यत्नात् प्रारब्धोपरतश्रुति ॥
वा ४-४-१२२५, १२२६

(४) यदि व्याक्षेपकारित्वान्नित्य कर्म निषिध्यते।
बहु भिक्षाटनाद्यस्ति तत् कस्मान्न निषिध्यते ॥
वेदान्तश्रवणाद्यस्ति बहुव्याक्षेपकारि च।
तन्नित्यकर्मवत् कस्माच्छ्रुत्येह न निषिध्यते ॥
नैष दोष प्रधानार्थसमाप्तेरेव कारणात्।
भिक्षाटनाद्यनुष्ठान तादर्थ्यान्न निषिध्यते ॥
वा ४-४-१२३५ प्रभृति १२३७ पर्यन्तम्।

(५) अस्वातन्त्र्य तु येषु स्यात् कर्तुं कर्मसु सर्वदा।
समाहितोक्त्याऽथेदानीं तन्निरोधो विधीयते ॥ वा ४-४-१२४६

[ दृष्टिश्रुत्यादिषु मनोरथादिषु च अनिवार्यम् इन्द्रियव्यापार निरुध्य इन्द्रियाणि च मनसि, मनश्चात्मन्येव कुर्यादिति समाधान विधीयते ॥ ]

(६) मैव दृष्टार्थविषये यत् कर्माभ्यावशेषितम् ।
तत्साधनेष्वममताविधानार्थं वचो यत ॥ वा ४-४ १२६८

[ श्रद्धावित्तो भूत्वेति वच भिक्षापात्रादिष्वपि ममतात्यागविधानार्थम् ॥ ]

श्रद्धैव वित्तमस्येति नान्यदस्य यतस्तत ।
श्रद्धावित्तोऽयमित्युक्त सन्यासी सर्वकर्मणाम् ॥ वा ४-४-१२६९

(७) अन्वयव्यतिरेकाभ्या यथोक्तै साधनैर्यत ।
आत्मन्येव तमात्मान लिङ्ग यानात्मराशिन ।
पश्येदित्यभिसबन्ध पश्यतीत्यथवा भवेत् ॥ वा ४ ४ १२७२

[ पश्येदिति माध्यन्दिनपाठमनुसृत्य ॥ ]

## कर्मोपासनयोर्विनियोगः –

१२७ साधनाना परम्परया ज्ञानोत्पत्तिप्रकार, साधनानुष्ठान विधिश्च वार्तिके एव वर्णित –

अविद्याया न चोच्छित्तौ ज्ञानादन्यदपेक्ष्यते ।
ज्ञानोत्पत्तौ न चैवान्यच्छमादिभ्यो ह्यपेक्ष्यते ॥
शमाद्युत्पत्तये नान्यद् बुद्धिशुद्धेरपेक्ष्यते ।
बुद्धिशुद्धौ च नित्यादिकर्मभ्यो नान्यदिष्यते ॥
आत्मज्ञानैकहेतुत्वाद् वाङ्मन कायकर्मणाम् ।
आत्मज्ञानेन तद्बाधात् कर्मापेक्षा कुतो भवेत् ॥
वा १-३-९८ प्रभृति १०० पर्यन्तम् ।

नैष्कर्म्यसिद्धावप्युक्तम् –

नित्यकर्मानुष्ठानाद्धर्मोत्पत्ति, धर्मोत्पत्ते पापहानि, ततश्चित्तशुद्धि, तत ससारयाथात्म्यावबोध, ततो वैराग्यम् । ततो मुमुक्षुत्वम्, ततस्तदुपायपर्येषणम्, तत सर्वकर्मतत्साधनसन्यास, ततो योगाभ्यास, ततश्चित्तस्य प्रत्यक्प्रवणता, ततस्तत्त्वमस्यादिवाक्यार्थपरिज्ञानम्, ततोऽविद्योच्छेद, ततश्च स्वात्मन्येवावस्थान 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ ४-४-६), 'विमुक्तश्च विमुच्यते' (वा २-२-१) इति ॥ नै सि १ ५२

उपासनाना यद्यपि तत्तत्फलावसायित्व व्यक्तमेव कर्मणामिव, तथापि यथा नित्यकर्मणामनुष्ठान ज्ञानोत्पत्तिहेतुत्वेन, अथवा सर्वेषामपि

कर्मणा विविदिषार्थत्वेन विधानम्, एवं विद्याप्रकरणे श्रुतानामुपासनानां ज्ञानयोग्यत्वाय विधानम् 'इतो विमुच्यमानः क्व गमिष्यसि' (बृ ४ २ १) इति श्रुते, अर्चिरादिमार्गोपदेशाच्च क्रममुक्त्यर्थत्वमवसीयते ॥

(१) उपासनं च यत्किञ्चिद् विद्याप्रकरणे श्रुतम् ।
तदप्यैकात्म्यविज्ञानयोग्यत्वायैव कल्प्यते ॥
विमुच्यमान इत्युक्तेरर्चिराद्युक्तितस्तथा ।
स्वार्थमात्रावसायित्वं नोपास्तीनां प्रतीयते ॥
स वा ३२९, ३३०

[उपास्तीनाम् इति । विद्याप्रकरणे उपदिष्टानाम्, अर्चिराद्युपदेशमहिम्ना च न तु सर्वासाम् । न स्वार्थमात्रावसायित्वम् – न केवलमुपास्तिपरत्वम् किं तु ज्ञानोपायतामपीत्यर्थः । 'स्वार्थो मोक्षः । तन्मात्रे पारपर्यं विना न तासां पर्यवसितत्वम्' इति टीका तु नादर्तव्या । मानाभावात् ॥]

पूर्वभूमेर्मुच्यमान उत्तरां क्व गमिष्यसि ।
देवतोपासनाद्येतज्ज्ञानोत्पत्त्यै विवक्षितम् ॥
उपासनानि सर्वाणि परविद्याधिकारतः ।
क्रममुक्तिफलानीति क्व गमिष्यसि गीरतः ॥
वा ४-२-१२, १४, पा १३६१

[सर्वाणीति क्रममुक्तिफलानीति । एतच्च सद्योमुक्तिपरविज्ञानेऽनधिकारिणाम् अवान्तरतात्पर्येणेत्यवधेयम् । यतः गार्ग्याजातशत्रुसंवादे, जनकयाज्ञवल्क्यसंवादे च तत्र तत्रैव 'नैतावता विदितं भवतीति । स होवाच गार्ग्य उप त्वा यानीति' (बृ २ १ १४) । 'अथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति' (बृ ४ २-१) इति च परब्रह्मोपदेशदर्शनात् ॥]

## अविद्यानाशव्यतिरेकेण मोक्षान्तरं नास्त्येव –

१२८ बृहदारण्यके श्रूयते '**अणुः पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव । तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः**' (बृ ४–४–८)–इति । अत्र ज्ञेयाद् ब्रह्मणो नास्त्यन्यो ज्ञाता यतः, अतो 'मां स्पृष्टः' इत्युच्यते (वा ४-४-५४९), 'अनुवित्तः' इति शास्त्राचार्योपदेशादनु विदित इत्यर्थः (वा ४ ४-५५०)।

अनेन मार्गेणाज्ञानमपह्नुत्य प्राप्तमेव ब्रह्मापि यन्तीत्येतद् 'अपियन्ति ब्रह्मविद स्वर्गं लोकमित ऊर्ध्वम्' इत्यनेनोच्यते (वा ४-४-५५२)। अत्र ब्रह्मप्राप्तिरेव देहपातऽव्यपेक्षा इति कारणात् 'इत ऊर्ध्वम्' इति नोच्यते सर्वकारणाज्ञाननाशे ज्ञानमेव ह्यपेक्ष्यते नान्यदिति (वा ४-४-५५३)। तथा च 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यनेनास्य एकार्थता भवति (वा ५६०) इति ऊर्ध्वश्रुतिर्व्याख्याता वार्तिके ॥

अत्रानुसधेया श्लोका –

(१) मा मुक्त्वाऽसभवो यस्माद् ब्रह्मार्थस्यात उच्यते ।
मा स्पृष्टो मामनुप्राप्त एष पन्था यथोदित ॥
शास्त्राचार्योक्तित पश्चादनुवित्तो मयैव च ।
ज्ञेयाज्ज्ञाता परो नास्ति प्रत्यग्ज्ञाने यतस्तत ॥
वा ४-४-५४९, ५७१

(२) स्वर्गोऽयमेव प्रागुक्त स्वर्गकामवचस्यपि ।
कर्मसिस्तदसिद्धेर्हि वेदान्तज्ञानसिद्धित ॥

[प्राक् स्वर्गकामवचस्यप्ययमेव विवक्षित । पर सोपाधिकस्तु तत्र कर्मप्राप्य ॥]

परमानन्द एवात स्वर्गशब्देन भण्यते ।
मोक्षप्रकरणाच्चित्य क्रियोत्थोऽतो न गृह्यते ॥
वा ४-४-५५५, ५५६

(३) देहपातव्यपेक्षा स्याद्यत्र कारणसगति ।
सर्वकारणविध्वस्तौ नान्यद्बोधादपेक्ष्यते ॥ ५५८

[कारणसगति – अज्ञातब्रह्मणो रूपान्तरे प्राणादौ लय , सर्वकारण-विध्वस्तौ – अज्ञाननाशे सति ॥ ]

मुक्तौ तमोऽतिरेकेण नान्तरायोऽन्य इष्यते ।
यतोऽतोऽज्ञानविध्वस्तौ मुक्त सन्ना विमुच्यते ॥

['मुक्त सन' इति काठकपरामर्श ॥]

ब्रह्मैव सन्निति तथा प्रागपीद श्रुतीरितम् ।
देहपातव्यपेक्षातो न स्यादूर्ध्वश्रुतेरिह ॥
वा ४-४-५५९ ५६०

द्वैत समस्तमविद्याकल्पितम् –

१२९ अस्मिन् प्रस्थाने अविद्याकार्यमेव सर्वं द्वैतमित्यतोऽविद्यानाशात् पर न किमपि कृत्यमवशिष्यते ॥

आत्मानात्मविभाग, ज्ञाताज्ञातविभाग, सत्यासत्यविभाग, ज्ञातृत्वाज्ञातृत्वविशेषश्च – इति सर्वमिदम् अविद्ययैव । आध्यात्मिका पञ्चकोशास्तत्कारणभूता पञ्चकोशाश्च प्रविभक्ता अविद्ययैव । व्यक्ताव्यक्त–कार्यकारण–समष्टिव्यष्टि–क्रियाकारकफलविभागा अप्यविद्याविजृम्भिता एव । साक्षी ईश्वर, सृष्टिस्थितिप्रलया, अवस्थात्रयम्, कि बहुना, आत्माऽविद्यासबन्धोऽपि – इत्येतत् सर्वम् अविद्याकृतमेवेत्यत प्रत्यग्दृष्ट्या वीक्ष्यमाणे अविद्यानिवृत्तौ समस्त ससारो सद्यो विनिवर्तते । न चाज्ञानप्रतीतितन्नाशाभ्या आत्मवस्तुनि कश्चिद्विशेषो भवति, रज्जुसर्पविकल्पतन्नाशाभ्या रज्ज्वामिव । तदेव भाष्यकारप्रस्थाने इवेहाप्यध्यारोपापवादप्रक्रियैव समादृता सर्वत – इति स्थितम् ॥

(१) मातृत्वकञ्चुको यद्वदात्माऽनात्मानमीक्षते ।
दृष्टिमात्रैकरूपत्वात्त तथात्मानमीक्षते ॥ वा १-४-७३४

(२) ज्ञाताज्ञातविभागेऽस्मिञ्ज्ञानाज्ञानात्मता तथा ।
ज्ञात्रज्ञातृत्वमप्येव स्वत सिद्धेर्न साक्षिण ॥
तै २-९-६६६, पा १८७

(३) द्वैतास्पृक् प्रत्यगात्मैक प्रतीचीव परागपि ।
युष्मदस्मद्विभागाभ्या भिद्यतेऽविद्यया मृषा ॥
अस्मद्विभागे पञ्चास्य यथैवान्नमयादय ।
तथा तत्प्रत्यगात्मानो युष्मदन्नादय स्मृता ॥
तै वा २-१-२३४, २३५, पा ९३

(४) मृत्युर्वै तम इत्येवमाप एवेदमित्यपि ।
अविद्या प्रथते मौली व्यक्ताव्यक्तात्मनाऽनिशम् ॥

एतेभ्योऽमौ समुत्थाय स्वाभासानात्मजन्मना ।
याति क्षेत्रज्ञतामीश कूटस्थोऽपि ह्यविद्यया ॥
वा १-२-१३६, १३७, पा ३२९ ३३०

(५) अकारणमकार्यं सत् कार्यकारणतामगात् ।
मोहादेव तत शास्त्र तदुच्छित्तौ प्रवर्तते ॥ वा १-२-१३
कार्यकारणरूपाभ्यामतद्वृत्तत्रिका तत ।
आत्माविद्यैव सर्वत्र प्रथते स्वा मसाक्षिका ॥ वा १-४-३०९

(६) समस्तव्यस्ततैवेह प्रत्यगज्ञानभूमिका ।
न त्वपास्तसमस्तान्ध्ये नेति नेति परात्मनि ॥ वा १-३-२६९

(७) अकारण सदज्ञानात् कारणत्व यथैत्यजम् ।
सर्वकारकतामेव क्रियातत्फलतामपि ॥ वा १-२-१२८

(८) अपास्ताविद्यातज्जत्वादस्थूलाद्युक्तिगोचर ।
स्वाभासाविद्योपाधि सन् साक्ष्यन्तर्यमिता व्रजेत् ॥
वा १-४ १५१

(९) जगदुत्पत्तिसहारास्तद्वदात्मनि कल्पिता ।
वस्तुवृत्ता समालोक्य कुत सृष्ट्यादिसभव ॥ वा २-१-४११

(१०) सुप्त प्रबुद्ध इत्येव स्वप्न पश्यति चेति य ।
विकल्प एष भूतानामविद्यानिद्राशायिनाम् ॥ वा २-१-२६५

(११) पराक्प्रवणया दृष्ट्या धीस्थो ज्ञोऽज्ञानमात्मनि ।
व्योमकाष्ण्यादिवत् तज्ज सभावयति न स्वत ॥ वा १-४-२९८

[अवम्त उदाहृता श्लोकास्तत्तत्प्रकरणे गता अपीह पुनरानीता अध्यारोपापवादप्रक्रियैव वार्तिककाराणा सम्मतेति निदर्शनायेति ज्ञेयम् ॥ ]

## वार्तिकसमताद्वैतम् –

१३० ब्रह्मात्माद्वैतमेव वार्तिकाभिमतम्, तच्च सर्वविधद्वैतेन्द्रजालकारणभूताविद्यानिरसनेन वेदान्तवाक्यैकगम्यम् – इति विज्ञात वार्तिकग्रन्थपरीक्षणेन । अत एव सुरेश्वराचार्या स्वाभिमताद्वैतप्रक्रियाविरोधिनी सर्वा अद्वैतप्रक्रिया श्रुतियुक्त्यनुभवावष्टम्भात् खण्डयन्ति स्मेति

निर्दिशित तत्र तत्र प्राचीनप्रस्थानभेदपरीक्षावसरे । आचार्यमण्डन प्रस्थानतोऽस्य वार्तिकप्रस्थानस्य वैलक्षण्यमपि तत्र तत्र स्फुटीकृतमेवास्मिन् काण्डे । अत एव मण्डनसमता शब्दाद्वैतसत्ताद्वैतभावाद्वैतप्रक्रिया वार्तिक प्रस्थाने प्रत्याख्याता दृश्यन्ते । तत्र कतिपयश्लोकानुदाहृत्य काण्डमिम मुपसहराम –

(१) तदिद नामरूपाभ्यामनामकमरूपकम् ।
एव व्याक्रियताज्ञानहेतुमात्रव्यपाश्रयात् ॥
अभिधानाकृतिर्नाम शब्देनेहाभिधीयते ।
अभिधेयाकृतिस्तद्वद्रूपमित्युपदिश्यते ॥
एव द्वाभ्या प्रकाराभ्यामीशो व्याकृतजन्मनाम् ।
व्यवहाराय पर्याप्तो न त्वव्यक्तात्मना यत ॥
वा १-४-३९० प्रभृति ३९२ पर्यन्तम् । पा ५१०

[मण्डनसमत शब्दाद्वैत ब्र सि 17-19 पृष्ठेषु द्रष्टव्यम् ॥ ]

(२) तस्मादैश्वरविज्ञान यजुर्बुद्ध्याद्युपाश्रयम् ।
एव च सति नित्यत्व वेदाना घटतेऽञ्जसा ।
वाचकत्वमशब्दस्य सिद्ध न स्फोटरूपत ॥
तै वा २-२९७, २९८, पा १०७

[मण्डनस्य स्फोटविषयेऽभिप्राया 'स्फोटसिद्धि'ग्रन्थतोऽधिगन्तव्य ]

(३) अव्यावृत्ताननुगत नि सामान्यविशेषत ।
ब्रह्मेति मुख्यवृत्त्येह वस्तु श्रुत्याऽभिधीयते ॥ वा ४-३-१८१५

[एव वार्तिके ५६५, ५८२, ६४९, ६८६, ७२०, ९४८, ९९४, १०८२, १०३७, १२१४ – इत्यादिषु पृष्ठेषु ब्रह्म वर्णित दृश्यते पदे पदे । ब्रह्मसिद्धिकारेण तु ब्रह्म सत्तासामान्यमित्युपगतम् , पा 37 ]

(४) अनन्यानुभवेनैव भावाभावात्मभूमिषु ।
प्रत्यक्कूटस्थ आत्मान पश्यन्नास्ते फलात्मना ॥
अतो मात्रादिसभेदो यत्र यत्र निवर्तते ।
तत्र तत्रैकल प्रत्यक्त्वमहिम्नैव सिध्यति ॥

प्रमात्रादेरभावोऽतो य सिद्ध स्वात्मबोधत ।
तन्वृत्तिस्त सदाबुद्ध लक्षयत्यपृथक्प्रमम् ॥
वा २-३-२२७ प्रभृति २२९ पर्यन्तम् , पा १०३०

[नजूवृत्तिरभाव न बोधयतीत्युक्त्या भावाद्वैत निराकृतम् । मण्डनेन तु तत स्वीकृतम् । द्रष्टव्यम् त्र नि पा 4 ]

इति श्रीमत्परमहसपरिव्राजकाचार्यवर्यश्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिचयावाप्त वेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्यसच्चिदानन्देन्द्रसरस्वत्यार्येन भिक्षुणा प्रणीतायां वेदान्तप्रक्रियाप्रत्यभिज्ञायां

**वार्तिकप्रस्थानपरीक्षा नाम सप्तम काण्ड**

# ८. पञ्चपादिकाप्रस्थानपरीक्षा

## पञ्चपादिकाप्रस्थानविमर्शनावश्यकता –

१३१ अथ पञ्चपादिकाप्रस्थानं यथासामर्थ्यं परीक्ष्यते । इयं च सूत्रभाष्यटीका शङ्करभगवत्पादसाक्षाच्छिष्यभूतानां पद्मपादाचार्याणां कृतिरिति प्रथास्तीति प्रागेव (पा ७) विज्ञापितम् । ग्रन्थसमाप्तिसूचकपुष्पिकायां परं पद्मपादाचार्यनामोल्लेखो न दृश्यते, न च **विवरणाख्यायां** तद्व्याख्यायां ग्रन्थकृन्नामोल्लेखोऽस्तीति च (पा ९ १०)। यद्यपि पञ्चपादिकेति नामानुगुणं शारीरकस्थानां पञ्चानां पादानां टीका कृतेत्यनुमातुं शक्यते । तथापि चतुःसूत्रीपर्यन्तमेव ग्रन्थः समुपलभ्यते संप्रतीति शोकस्थानमिदं वेदान्तविचारधारेतिहासजिज्ञासूनाम् । ग्रन्थस्तु पूर्णतया विनिर्मितोऽपि कारणान्तरादग्निदग्धोऽभूदिति कथा, अस्यापूर्णत्वमुपपादयितुं केनचिदुद्भावित इव भाति[1] । अस्तु तावदिदं यथा तथा, अद्यानुपलभ्यमानप्राक्तनसूत्रवृत्तिस्थवाक्यान्युद्धृत्य अत्र (प ४२, ४८) समुदाहरणात्, अस्य निबन्धस्याद्वैतग्रन्थेषु प्राचीनतमत्वम् ख्याप्यते । पञ्चपादिकातः प्राचीनतरस्य शाङ्करभाष्यव्याख्यानस्येदानीम् अनुपलब्धेश्च अल्पाकारोऽप्ययं ग्रन्थो भाष्यव्याख्यातृषु भाष्याभिप्रायविषये मतभेदो बहोः कालादारभ्य प्रावर्ततेत्यत्र प्रबलतरं प्रमाणं भवति – इत्येतस्मादपि कारणादिदं प्रस्थानं सूक्ष्मेक्षिकामर्हति ॥

## अविद्यास्वरूपं पञ्चपादिकायाम् –

१३२ अविद्यास्वरूपं पञ्चपादिकायाम् अनितरसाधारणप्रक्रिययैव प्रदर्शितम् । तद्यथा – **अन्योन्यस्मिन् अन्योन्यात्मकताम्,**

---

1 ग्रन्थः पूर्णतयैव निर्मिमीषित इत्यत्र ग्रन्थशरीरे एव गमकमस्ति । तद्यथा ‑‑‑ा चैतदेव तथा ‘ एक आत्मनः शरीरे भावात् ’ इत्यधिकरणारम्भे दर्शयिष्याम ” (प पा ३३) इतिवाक्यं तदधिकरणपर्यन्तं ग्रन्थस्य विरचयिषितत्वे प्रमाणम् ॥

**अन्योन्यधर्मांश्चाध्यस्य, इतरेतराविवेकेन, अत्यन्तविविक्तयोर्धर्म-धर्मिणोः, मिथ्याज्ञाननिमित्तः, सत्यानृते मिथुनीकृत्य 'अहमिदम्' 'ममेदम्' इति नैसर्गिकोऽयं लोकव्यवहारः'** इति भाष्यम् । तत्र 'इतरेतराविवेकेन विषयविषयिणोरात्मानात्मनोरध्यासं कृत' इत्यन्वयो भाष्यकाराणामिष्ट इति ग्रन्थाक्षरग्रन्थस्वारस्यात् कल्पनीयं भवति । उक्तं च गीताभाष्ये 'इतरेतरतद्धर्माध्यासलक्षणः संयोगः, क्षेत्रक्षेत्रज्ञस्वरूपविवेका-भावनिबन्धनः' इति । विवृतं चेदं भाष्यकारीयप्रस्थानं प्राक् (३१) । श्रीगौडपादीयपरिभाषामनुसृत्य मण्डनोऽपि अग्रहणम्, विपर्ययग्रहणं चाविद्यात्वेनोररीचकार (ब्र सि पा 9) । एतदपि मण्डनप्रस्थानपरीक्षावसरे निवेदितम् (पा १८५) । एवं सुरेश्वराचार्या अपि न जानामीत्यनुभवप्राप्तमज्ञानमेवाविद्याशब्दवाच्यत्वेन स्वीचक्रुः । मिथ्याज्ञानं तत्प्रत्युपस्थापितमनात्मानमप्यविद्येत्येव व्यवजह्रुरिति तत्प्रस्थानविमर्शनावसरे (पा २२१) प्रादर्शि । भर्तृप्रपञ्चा अप्यग्रहणमविद्यात्वेन वर्णयाबभूवुः (पा १६१) । पञ्चपादिकायामेव परम् 'इतरेतराविवेकेन' इत्येतद्व्या-कृत्यैव, 'मिथ्याज्ञाननिमित्तो व्यवहारः' इति भाष्यवाक्यभागोऽन्यथैव व्याख्यातः । तद्यथा –

(१) 'अध्यस्य', 'मिथुनीकृत्य' इति च क्त्वाप्रत्ययो न पूर्वकालत्वम् अन्यत्वं च लोकव्यवहारादङ्गीकृत्य प्रयुक्तः, 'भुक्त्वा व्रजति' इतिवत् क्रियान्तरानुपादानात् । अध्यस्य नैसर्गिकोऽयं लोकव्यवहार इति स्वरूपमात्रपर्यवसानात् । उपसंहारे च 'एवमयमनादिरनन्तो नैसर्गिकोऽध्यासः' इति तावन्मात्रोपसंहारात् अतः 'चैतन्यं पुरुषस्य स्वरूपम्' इतिवद् व्यपदेशमात्रं द्रष्टव्यम् ॥ प ४[1]

(२) ननूपन्यासकाले 'नैसर्गिकोऽयं लोकव्यवहारः' इति लोकव्यवहारो नैसर्गिक उक्तः । कथमिहाध्यासो निगम्यते अनादिरिति च

[1] पञ्चपादिकाप्रस्थानपरीक्षायां सर्वत्र प इत्येतावन्मात्रसंकेताक्षरात् परं दत्ता सङ्ख्या ई जे लाजरस् कम्पनीमुद्रितपुस्तकपत्रपार्श्वं परामृशतीति ध्येयम् ॥

**अधिकावाप ? अत्रोच्यते। तत्रापि प्रत्यगात्मन्यहङ्कारध्यास एव नैसर्गिको लोकव्यवहारोऽभिप्रेत । स च प्रत्यगात्मा अनादिसिद्ध , तस्मिन् नैसर्गिकस्यानादित्वम् अर्थसिद्धम् । अत प्रक्रमानुरूपमेव निगमनम् । न चाधिकावाप ॥ प पा ३६**

[अनेन अध्यास , मिथुनीकरणम्, व्यवहार – इति पर्याया इत्युक्त भवति। तदेतदुत्तरत्राध्यासविचारावसरे विमृश्याम ॥ ]

(३) **मिथ्याज्ञाननिमित्त इति। मिथ्या च तदज्ञान च मिथ्याज्ञानम्। 'मिथ्या' इत्यनिर्वचनीयता उच्यते, अज्ञानम् इति च जडात्मिका अविद्या शक्ति, ज्ञानपर्युदासेनोच्यते । तन्निमित्त, तदुपादान इत्यर्थ ॥ (प पा ४)**

[अत्राध्यासस्य अविद्याशक्त्युपादानकत्व प्रतिज्ञानम् । 'अविद्याशक्ति ' इति नाविद्याया शक्ति – इत्यस्मिन्नर्थे, किंतु अविद्यैव शक्ति ' इति कृत्वा– इत्यनुपदमेव स्फुटीभविष्यति । अध्यासस्य चोपादानापेक्षता, अविद्यायाश्च जडशक्तिरूपत्वम् मिथ्याशब्दस्य च अनिर्वचनीयपदार्थवाचकत्व चेत्येतत् सर्व भाष्ये न कुत्रापि प्रतिपादित दृश्यते । मिथ्याज्ञानशब्दश्च सम्यग्ज्ञान प्रतिद्वन्द्विमिथ्याप्रत्ययवचन एवेति च तत्र तत्र (सू भा पा ७२, ११४, १९८ २०९ ) प्रदर्शितम् । यद्यपि भाष्ये नामरूपबीजस्य परमेश्वर स्यात्मभूतस्यव कल्पितस्य तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वम् उक्तमेव, तथापि ' नात्यन्तमसती नापि सती, तस्मादनिवचनीया ' (ब्र सि 9) इति ब्रह्मसिद्धि कारोक्तविधयैव केवलानिर्वचनीयशब्दव्यपदेश्यत्व नामरूपबीजलक्षणाविद्याया प्रस्थानत्रयभाष्येषु क्वचन नोपलभ्यते ॥ ]

(४) **येय श्रुतिस्मृतीतिहासपुराणेषु नामरूपम्, अव्याकृतम् अविद्या माया, प्रकृति, अग्रहणम् अव्यक्तम्, तम, कारणम्, लय, शक्ति, महासुप्ति निद्रा, अक्षरम्, आकाशम् – इति च तत्र तत्र बहुधा गीयते चैतन्यस्य स्वत एवावस्थितलक्षणब्रह्मस्वरूपतावभास प्रतिबध्य जीवत्वापादिका, विद्याकर्मपूर्वप्रज्ञासंस्कारचित्रभित्ति, सुषुप्ते प्रकाशाच्छा दनविक्षेपसंस्कारमात्ररूपस्थिति, अनादिरविद्या ॥ (प पा २०)**

[अत्र 'अविद्या' 'शक्ति ' – इति च व्यस्ते पदे अविद्यावाचकत्वे न प्रयुक्ते । ' अविद्याशक्तिरभ्युपगन्तव्या ' इति समस्तपदवाच्यत्वेनैव तु प्राक् प्रस्तुता अविद्या । अविद्या च अव्याकृतादिशब्दशब्दिता जगत्प्रागवस्था–इति स्पष्टमुद्घोषितम् । ब्रह्मणो ब्रह्मभावावभासप्रतिबन्धिका सैवेति चोक्तम् । तदेतद्

भगवत्पादीयभाष्योपोद्घाते परिभाषिताम् अविद्याम् अध्यासरूपां कार्यत्वेन स्वीकृत्य तदुपादानभूतेयम् इत्यभिनिवेशेन । तत्र मिथ्याज्ञानलक्षणमध्यास ज्ञानबाध्यत्वेन प्रसिद्धम् अविद्याशब्देनाव्यपदिश्य, ज्ञेयपक्षकुक्षिनिवेश्यस्याव्याकृतस्य तच्छब्दवाच्यत्वेन स्वीकारे हेतुर्न विज्ञायते ॥ ]

## अविद्या किं प्रमाणिका ? –

१३३ भगवत्पादीयप्रस्थाने वार्तिकप्रस्थाने च अविद्या अनुभव सिद्धेति स्वीक्रियत इति स्पष्टम् । 'कर्तृत्वभोक्तृत्वप्रवर्तक सर्वलोकप्रत्यक्ष' इति भाष्यात् । 'कल्प्याऽविद्यैव मत्पक्षे सा चानुभवसश्रया' (स वा १८२) इत्यादिस्थलेषु तथा विस्पष्टमुक्तत्वात् । पञ्चपादिकायां तु सा एव प्रमाणै प्रसाधिता –

(१) **अवश्यमेषा अविद्याशक्तिर्बाह्याध्यात्मिकेषु वस्तुषु तत्स्वरूप सत्तामात्रानुबन्धिनी अभ्युपगन्तव्या । अन्यथा मिथ्यार्थावभासानुपपत्ते ॥ (प पा ४)**

[ अत्र दृष्टार्थापत्ति प्रमाणत्वेनोपन्यस्ता ॥ ]

(२) **विद्यत एवात्रापि अग्रहणाविद्यात्मको दोष प्रकाशस्याच्छादक । कथ गम्यते ? श्रुते, तदर्थापत्तेश्च । श्रुतिस्तावत् 'अनृतेन हि प्रत्यूढा' (छा ८-३-२), 'अनीशया शोचति मुह्यमान' (मु ३-१-२) इत्येव माद्या । तदर्थापत्तिरपि । विद्यैव सर्वत्र श्रुतिषु ब्रह्मविषया मोक्षाय निवेद्यते, तेनार्थादिदमवगम्यते जीवस्य ब्रह्मस्वरूपतानवगमोऽविद्यात्मको बन्धो निसर्गत एवास्तीति ॥ (प पा १४)**

[अत्र श्रुति, श्रुत्यर्थापत्तिश्च अविद्याप्रमाणत्वेनोदाहृता । अत्र प्रमाणाना प्रमेयाज्ञाननिवर्तकत्वम् इति स्थितेऽपि न्याये, प्रमाणप्रवृत्ते प्रागेव सिद्धस्य अज्ञानस्य साधकत्वेन श्रुत्यादिप्रमाण किमित्युदाह्रियत इति न विज्ञायते । अर्थापत्तिश्च समुदाहृता कथमेतस्या एवाविद्याशक्ते प्रसाधिका न तु प्रस्थानान्तरसमताविद्याया इत्यत्र साधकतर्कोऽपि नोपन्यस्तोऽत्र ॥ ]

## अविद्याकार्यम् –

१३४ अविद्याशक्तेर्नामरूपात्मकत्वात्, सर्वस्यापि जगतस्तत्कार्यत्वमित्यर्थात् सिध्यति । विशेषतस्तु, अध्यासविचारे प्रवृत्तैर्ग्रन्थकारैरहङ्कारा ध्यासकारणत्वेनैव निर्दिष्टा अविद्या । तद्यथा –

(१) सा च (अविद्या) न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति। प्रमाणवैकल्यादेव तद्ग्रहणसिद्धेः। रजतप्रतिभासात् प्राक्, ऊर्ध्वं च सत्यामपि तस्याः स्वरूपग्रहणदर्शनात्। अतस्तत्र रूपान्तरावभासहेतुरेव केवलम्। प्रत्यगात्मनि तु चितिस्वभावत्वात् स्वयंप्रकाशमाने ब्रह्मस्वरूपानवभासस्य अनन्यनिमित्तत्वात्, तद्गतनिसर्गसिद्धाविद्याशक्तिप्रतिबन्धादेव तस्य अनवभासः। अतः सा प्रत्यक्चिति ब्रह्मस्वरूपावभासं प्रतिबध्नाति, अहङ्काराद्यतद्रूपप्रतिभासनिमित्तं च भवति। सुषुप्त्यादौ चाहङ्कारादिविक्षेपसंस्कारमात्रशेषं स्थित्वा पुनरुद्भवतीत्यतो नैसर्गिकोऽप्ययमहङ्कारममकारात्मको मनुष्याद्यभिमानो लोकव्यवहारो मिथ्याज्ञाननिमित्त उच्यते। न पुनरागन्तुकत्वेन ॥ पं पा ४-५

[अत्र चैतन्याश्रिता अविद्या तत्स्वरूपावभासप्रतिबन्धिका, अनात्मभाननिमित्तं चेत्युक्तत्वात्, अचेतनप्रतिभासोऽप्यतद्रूपावभास एवेत्युक्तं भवति। अथ चाविद्याकार्ये तस्मिन्नप्यचेतनवस्तुन्याश्रिता सेति कथमुच्यत इति न विज्ञायते। अत्र टीकाव्याख्याकाराणामाशयस्तूपरिष्टात् विमर्ष्टव्य इत्यास्तां तावत्। प्रत्यक्चित्यहङ्कारममकाराद्यतद्रूपावभासहेतुरपि सैवाविद्येत्युक्तिः, 'अहं ममेति नैसर्गिकोऽयं लोकव्यवहारः' इति नैसर्गिकत्वप्रतिपादकं भाष्यं विरुणद्धीव भाति। टीकाकारमते तु नैसर्गिक एव सन्नध्यासः सुषुप्त्यादौ संस्कारमात्रावशेषं स्थित्वा पुनरपि जागरे व्यक्तात्मनोद्भवतीत्येतावता तस्य नैमित्तिकत्वमुच्यत इति विशेषः। एतद्विमर्शस्तु भविष्यत्यध्यासविचारे ॥]

(२) ननु न जीवो ब्रह्मणोऽन्य इत्युक्तम्। बाढम्। अत एवार्थात्, जीवे ब्रह्मस्वरूपप्रकाशाच्छादिकाऽविद्या कल्प्यते। अन्यथा परमार्थतस्तत्स्वरूपत्वे तदवबोधोऽपि यदि नित्यसिद्धः स्यात्, तदा तादात्म्योपदेशो व्यर्थः स्यात्। अतोऽनादिसिद्धाविद्यावच्छिन्नानन्तजीवनिर्भासास्पदम् एकरसं ब्रह्म – इति श्रुतिस्मृतिन्यायकोविदैरभ्युपगन्तव्यम् ॥ पं पा १४-१५

[अत्र ब्रह्माश्रितेयम् अविद्या तस्मिन् अनन्तजीवनिर्भासे हेतुरित्युक्तम्। तस्मिंस्तत्सत्त्वे प्रमाणं तु तादात्म्योपदेशान्यथानुपपत्तिरिति च। जीवाश्रिता अविद्येति ब्रह्मसिद्धिकाराद्विलक्षणमिदं प्रस्थानमिति स्फुटम् ॥]

## अविद्योपादानवादः किं पञ्चपादिकाकारोपज्ञः ?

१३५ अविद्याशक्तिः समस्तभेदजातस्योपादानम् इति वादं स्वीकुर्वाणेषु ग्रन्थेषु सम्प्रत्युपलभ्यमानेषु पञ्चपादिकैव प्राचीनतमा। तथापि

नैवात्र वाद पञ्चपादिकाकारोपज्ञ –इत्यत्रैतद्ग्रन्थाद् बहिरपि प्रमाणमस्ति । यस्माद् **ब्रह्मसिद्धौ** लिखितमुपलभ्यते "**तथा चोक्तम् अविद्योपादानभेदवादिभिः 'अनादिरप्रयोजना चाविद्या' इति**" (ब्र सि 10) इति । न चेदृश वाक्य पञ्चपादिकायाम् उपलभामहे । अत उन्नीयते नून तत पूर्वमप्यासीदेवाविद्योपादानवादो लब्धप्रसर इति, भगवत्पादसमता नागेभ्यवगान्प्रक्रियातो विलक्षणाम् अविद्याशक्त्युपादानप्रक्रियामवलम्ब मानाना मतमिद पर्याप्तप्रोत्साहकाभावेन स्याद् गच्छता कालेन शाङ्करभाष्य व्याख्यानव्याजेन तत्रैव ... महानद्याम् इति च । अथवा भाष्यवार्तिकयोस्तु नैकेषा प्रस्थानान्तराणा परामृष्टाना मध्ये क्वचिदपि नाविद्योपादानप्रक्रिया कटाक्षितेत्यतो वार्तिकप्रणयनादर्वाक्काले कैश्चिदुप स्थापिता प्रक्रियेयम् इति शक्योहनम् । ग्रन्थपुरातत्त्वशोधका एव तु प्रमाणमत्रेति नाधिकमत्र विषये लेखिनी व्यापारयितुमिच्छाम ॥

**पञ्चपादिकाप्रस्थाने अध्यासलक्षणम् –**

१३६ 'आह कोऽयम ध्यासो नामेति ?' इति प्रश्नस्योत्तरत्वेन लक्षणवाक्यमिद लिखित भाष्ये '**उच्यते – स्मृतिरूपः परत्र पूर्वदृष्टावभासः**' इति । तत्र पञ्चपादिकाव्याख्यानमित्थम् –

> (१) तत्र 'परत्र' इत्युक्तेऽर्थात् परस्य अवभासमानता सिद्धा । तस्य विशेषण स्मृतिरूपत्वम् । स्मर्यत इति स्मृति । असज्ञायामपि अकर्तरि कारके घञादीना प्रयोगदर्शनात् । स्मर्यमाणरूपमिव रूपमस्य । न पुन स्मर्यत एव । स्पष्ट पुरोऽवस्थितत्वावभासनात् । 'पूर्वदृष्टावभास' इत्युप पत्ति स्मृतिरूपत्वे । न हि पूर्वम् अदृष्टरजतस्य शुक्तिसप्रयोगे रजतमवभासते । यतोऽर्थात् तद्विषयस्य अवभासस्यापि इदमेव लक्षणमुक्त भवति । कथम् ? तदुच्यते । स्मृते रूपमिव रूपमस्य, न पुन स्मृतिरेव । पूर्व प्रमाणविषयविशेषस्य तथा अनवभासकत्वात् । कथ पुन स्मृतिरूपत्वम् ? पूर्वप्रमाणद्वारसमुत्थत्वात् । न हि अमप्रयुक्तावभासिन पूर्वप्रवृत्ततद्विषय प्रमाणद्वारसमुत्थत्वमन्तरेण समुद्भव सभवति ॥ प पा ६–७

अत्र भाष्याक्षराणि तावत् 'अन्योन्यस्मिन् अन्योन्यात्मकताम्, **अन्योन्यधर्मांश्च अध्यस्य सत्यानृते मिथुनीकृत्य नैसर्गिकोऽयं लोकव्यवहारः**' इति अध्यासस्य सत्यानृतमिथुनीकरणात्मकत्वाभिधायीनि स्वरसानि भान्ति। 'सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति' इति वाक्यशेषश्चैतदेव द्रढयति। उपसंहारे च 'अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम' इति स्पष्टतरं लक्षणवाक्यमिदं शब्दान्तरेण ज्ञानाध्यासपरत्वेनैव व्याख्यातमिति सर्वविदितमिदम्। तदेतत् सर्वमनादृत्य – 'अकर्तरि च कारके संज्ञायाम्' (पा ३–३–१९) इति वैयाकरणस्मरणस्य संज्ञाविषयत्वेऽपि घञादीनामसंज्ञायामपि प्रयोगो दृश्यत इति प्रयोगमात्रशरणत्वेन – स्मृतिशब्दस्य कर्मसाधनत्वमेव प्राधान्येन स्वीकृतमत्र, न तु संभवदपि भावसाधनत्वम्। तदिदं व्युत्क्रमेण प्रस्थानम् अध्यासोपादानत्वेन स्वाभिमतमिथ्याज्ञानपदार्थस्य प्राधान्येनाविद्यात्वं परिरक्षितुमिति वयमुत्पश्याम। यदि हि सूत्रभाष्ययोरिव ज्ञानप्रहेयाध्यासस्यैव ज्ञानलक्षणस्याविद्यात्वं मुख्यत्वेन लक्षीकृतमभविष्यत्, न तर्हि 'अर्थात् तद्विषयस्य अवभासस्यापि इदमेव लक्षणमुक्तं भवति' इति तस्य भाक्तत्वमवक्ष्यत। शब्दादेव हि ज्ञानलक्षणोऽध्यासो लक्षितो भाष्ये 'अतस्मिंस्तद्बुद्धिरित्यवोचाम' इति, नार्थतो गम्य इति स्पष्टम्। 'पूर्वदृष्टावभास' इत्युपपत्तिदर्शनपरोऽपि भाष्यभागः स्वव्याख्यानुगुण्येनैव विवृत एभिष्टीकाकारैः 'न हि पूर्वमदृष्टरजतस्य शुक्तिसंप्रयोगे रजतमवभासते' इति, 'न हि असंप्रयुक्तावभासिनः पूर्वप्रवृत्ततद्विषयप्रमाणद्वारसमुत्थमन्तरेण समुद्भवः संभवति' इति च। न हि भाष्यकारैः स्मृतौ पूर्वदृष्टावभासः कथं जायत इति विनिश्चेतुं स्मृतिसतत्त्वं परिशीलयितुं वा विशेषणमिदमुपात्तम्, किं त्वध्यासस्य स्मृतिरूपत्वमुपपादयितुम्। न चाध्यासः कथमुत्पद्यत इत्येतदिह भाष्ये विचार्यत्वेन प्रकृतम्, येन 'नियोगतः पूर्वदृष्टेन तद्विषयेण भाव्यम्, अन्यथा तदनुपपत्तेः' इति व्याख्यायेत।

स्मृतेरिवास्याप्यसन्निहितगतत्वादस्य विषयो नास्ति पुरतोऽवस्थित -इतीयत्यंशे हि दृष्टान्तदार्ष्टान्तिकयो सारूप्य विवक्षितम् । न चैव नियन्तु शक्यते यदसप्रयुक्तावभासिन पूर्वप्रवृत्ततद्विषयप्रमाणद्वारकत्व संस्कारेण स्मृति समुद्भवासभव इति । अयथार्थस्मृतिभि स्वप्नोन्मादाद्यवस्थासु जायमानत्वेन सभाव्यमानाभिरित्थमेव भाव्यमिति केनचिन्नियन्तुमशक्यत्वात् । न च प्रमाणप्रमेयविभागाध्यास पूर्वप्रवृत्ततद्विषयप्रमाणद्वारसमुत्थ इति केनचिद्वेदान्तिना समनुज्ञायते । तद्विषयकप्रमाणान्तरस्यैवासभवात् । सभवे वा अनवस्थादोषग्रासदौस्थ्यध्रौव्यात् । अतोऽत्र न पूर्वदृष्टत्व विषयस्याव धार्यते, कि तु पूर्वदृष्टस्येव अवभास – पूर्वदृष्टसदृश वस्तु रजतादि तत्पत एव पुरोऽवस्थितमिति भ्रान्त्या विकल्पनम् अध्यास इत्येतावदुच्यते । अत एव हि पूर्वदृष्टत्वविशेषणमुपसहारे न निवेशितम्, अतस्मिस्तद्बुद्धिरित्येव तु स्वलक्षणान्तराय सगृहीत – इत्यवधेयम् ॥

**अध्यासे मतान्तरोपन्यासः –**

१३७ भाष्ये लक्षणानन्तरम् अध्यासविषये वादिविप्रतिपत्तयोऽपि प्रदर्शिता – 'त केचिदन्यत्रान्यधर्माध्यास इति वदन्ति, केचित्तु यत्र यदध्यास, तद्विवेकाग्रहनिबन्धनो भ्रम इति, अन्ये तु यत्र यदध्यास, तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते ' इति । अत्र मतान्तरेषु दूषण नोक्तम्, 'अध्यास कथ जायते ?' इत्यत्र प्रश्नप्रतिवचनयो फल्गु प्रयोजनत्वात् । अप्रकृतत्वाच्च । न ह्यध्यासोत्पत्तिप्रकार प्रतिपाद्यतया प्रकृत । चिदचितोरध्यासो निसर्गत एवास्ति लोकव्यवहारे – इत्येतत्तु प्रतिपाद्यतया प्रकृतम् । तत्र किलक्षणस्याध्यासस्य सद्भाव प्रसाध्यते ? – इत्यत इदमुत्थित लक्षणवाक्यम् 'स्मृतिरूप परत्र पूर्वदृष्टावभास ' इति । अत एव 'सर्वथापि तु अन्यस्यान्यधर्मावभासता न व्यभिचरति ' इति मतान्तरोपन्यासप्रयोजनमुपसहरति । अध्यासनिमित्तभेद प्रति विप्रतिपन्नेष्वपि वादिषु अन्यस्मिन्नन्यबुद्धिलक्षणत्वमध्यासस्य सर्वसप्रतिपन्नम्–इत्यर्थ ॥

व्याख्यानप्राम्थानिकास्तु यथोपन्यस्तानि मतानि केषामिति विशिष्य निर्धारणे तत्तन्मतमनूद्य तत्र दोषप्रदर्शने च स्वस्वाभिप्रायानुसारेण प्रवृत्ता । तत्र पञ्चपादिकाकारैस्तावत् 'अन्यत्र शुक्तिकादौ अन्यधर्मस्य अर्थान्तरस्य रजतादे, ज्ञानाकारस्य बहिष्ठस्यैव वा अध्यास इति वदन्ति' इति प्रथमकल्पे मतद्वयम् अन्तर्भावितम् । 'यत्र यस्याध्यास, तयोर्विवेकस्य अग्रहणात् तन्निबन्धनोऽयम् एकत्वभ्रम इति वदन्ति' इति द्वितीय कल्पो व्याकृत । 'यत्र शुक्तिकादौ यस्य रजतादेरध्यास, तस्यैव शुक्तिशकलादे, विपरीतधर्मत्वम्य रजतादिरूपत्वस्य कल्पनाम्, अविद्यमानस्यैवावभासमानताम् आचक्षते—इति तृतीय कल्पो विवृत' (प पा ११)। तत्र, द्वितीयकल्प अन्यविषयकान्यज्ञानस्य विवेकाग्रहणनिबन्धनत्व — दर्शनस्मरणयोर्निरन्तरोत्पन्नयो करणदोषादेव विवेकानवधारणात्, दूरस्थयोरिव वनस्पत्यो, अनुत्पन्ने एवैकत्वावभासे उत्पन्नभ्रम — इत्येष सप्रपञ्चम् अनूद्य निराकृत एभिष्टीकाकारै (प पा ७–८)। तत परम्, शुक्ते रजतात्मनावभास परमार्थ, शुक्तेरेव दोषवशात् परिणाम, दुष्टकरणजन्यप्रतीतेरेव रजतोत्पाद —इति कल्पत्रय निरस्तम् (प पा ८–९)। तत ऊर्ध्वं स्वपक्ष उपक्षिप्त, तद्विशदीकरणप्रसङ्गेन निरधिष्ठानाध्यासवाद, देशान्तरवर्तिपदार्थोऽधिष्ठाने भासत इत्यन्यथाख्यातिपक्षश्च प्रतिक्षिप्त (प पा १२) ॥

अत्रापि ज्ञानाध्यास एव परवादिसमतत्वेनानूदितो भाष्ये–इति स्पष्टम् । 'विवेकाग्रहनिबन्धनो भ्रम', 'विपरीतधर्मत्वकल्पना'—इति च लक्षणवाक्ययोर्ज्ञानाध्यास एव स्वरसत्वात् । अथ च अर्थाध्यास एव विशिष्याद्दतोऽत्र टीकाया भाष्याभिमतत्वेन मुख्यत, अतस्मिंस्तद्बुद्धिरिति प्रकृताध्यासलक्षणस्य सर्वसमतत्व वदद्भाष्य, मिथ्याज्ञानस्यैव सम्यग्ज्ञानेन साक्षाद्बाध्यत्व च पश्यद्भिरपीति चित्रमेतत् ॥

**अध्यासस्वरूपविशदनार्थं भाष्योपात्तमुदाहरणद्वयम् —**

१३८ अध्यासलक्षण सर्ववादिसंप्रतिपन्नमिति प्रदर्श्य लोकसिद्ध

मयासद्वयमुदाहृतं भाष्ये स्पष्टप्रत्ययविशदनार्थम् – "तथा च लोके अनुभवः–'शुक्तिका हि रजतवदवभासते', 'एकश्चन्द्रः सद्वितीयवदिति।'" इति च। तत्र शुक्तिरजतदृष्टान्त एव व्याख्यातष्टीकायाम् –

(१) लौकिकसिद्धमेवेदम् अध्यासस्य स्वरूपं लक्षितम्, किमत्र युक्त्या? – इति कथयति 'शुक्तिका हि रजतवदवभासत इति'। ननु न शुक्तिका प्रतिभासते रजतमेव प्रतिभासते। तेन 'शुक्तिका' इति 'रजतवत्' इति चोभयं नोपपद्यते। उच्यते – शुक्तिकाग्रहणम् उपरितनसम्यग्ज्ञानसिद्धं परमार्थतः शुक्तिकात्वमपेक्ष्य, वतिग्रहणं तु सम्प्रयुक्तस्यारजतस्वरूपस्य मिथ्यारजतसम्भेद इवावभासनम् अङ्गीकृत्य। मिथ्यात्वमपि रजतस्य आगन्तुकदोषनिमित्तत्वात् अनन्तरबाधदर्शनाच्च कथ्यते, न पुनः परमार्थाभिमताद् रजतादन्यत्वमाश्रित्य। तत्र असम्प्रयुक्तत्वाद् रजतस्य नेदन्तावभासस्तद्गतः, किं तु सम्प्रयुक्तगत एव। अपरोक्षावभासस्तु संस्कारजन्मनोऽपि रजतोल्लेखस्य दोषबलात् इन्द्रियजज्ञानान्तर्भावाच्च इति द्रष्टव्यम्॥ प पा १३-१४

का तर्हि गतिः शुक्तिसम्प्रयोगे रजतावभासस्य? उच्यते। नेन्द्रियजज्ञानात् संस्कारजं स्मरणं पृथगेव स्मरणाभिमानशून्यं समुत्पन्नम्, किं तु एकमेव संस्कारसहितादिन्द्रियात्। कथमेतत्? उच्यते। कारणदोषः कार्यविशेषे तस्य शक्तिं निरुन्धन्नेव संस्कारविशेषमप्युद्बोधयति। कार्यगम्यत्वात् कारणदोषशक्तेः। अतः संस्कारदुष्टकारणसंवलिता एका सामग्री। सा च एकमेव ज्ञानम् एकफलं जनयति। तस्य च दोषोत्थापितसंस्कारविशेषसहितसामग्रीसमुत्पन्नज्ञानस्य उचितमेव शुक्तिगतमिथ्यारजतम् आलम्बनमवभासते। तेन मिथ्यालम्बनं ज्ञानं मिथ्याज्ञानम्, न स्वतो ज्ञानस्य मिथ्यात्वमस्ति। बाधाभावात्॥ प पा ९

रजतस्य मिथ्यात्वं मिथ्याज्ञानालम्बनत्वं चेत्थमुपपादितमत्र –

(२) एवं च सति नानुभवविरोधः। प्रतिभासमानस्य रजतस्यैवावलम्बनत्वात्। अतो मायामयं रजतम्। अथ पुनः पारमार्थिकं स्यात् सर्वैरेव गृह्येत। मायामात्रत्वे तु मन्त्राद्युपहतचक्षुष इव दोषोपहतज्ञानकारणा एव पश्यन्तीति युक्तम्। किञ्च 'नेदं रजतम्' इति बाधोऽपि मायामयत्वमेव सूचयति। कथम्? तेन हि तस्य निरुपाख्यतापादनपूर्वकं

मिथ्यात्व ज्ञाप्यते । नेद रजत मिथ्यैवाभासिष्टेति , न च तत् केनचिद्रूपेण रूपवत्त्वे अवकल्पते । मप्रयुक्तशुक्तिवत् , निरस्यमानविषयज्ञानवच्च ॥ प पा १०

अत्र दोषसंस्कारेन्द्रियसंप्रयोगजन्यज्ञानत्व ज्ञानाध्यासस्य लक्षणम् । तस्य च शुक्तिगतमिथ्यारजतालम्बनत्वान्मिथ्यात्व न स्यात , अबाध्यत्वात् — इत्युक्तम् । अर्थाध्यासस्य तु दोषनिमित्तत्वात्, दुष्टकरणैरेव तथा दृश्यत्वात्, बाधकज्ञानेन च तथैव ज्ञाप्यत्वाच्च मिथ्यात्वम् इति च । मनोऽर्थान्नायामत्र यमेव, अविद्याशक्तिकार्यत्वमेव, मिथ्यारजतस्येत्युक्त भवति टीकाकारै ॥

स्वप्नशोकादौ यथोक्तलक्षण न दृश्यत इत्यव्यापकत्वमाशङ्क्येत्थ परिहृत टीकायाम् —

(३) ‘ उक्तमेतत् पूर्वप्रमाणविषयावभासित्वमात्र स्मृते स्वरूप मिति । तदिह निद्रादिदोषोपप्लुत मन , अदृष्टादिसमुद्बोधितसस्कारविशेष- सहकार्यनुरूप मिथ्यार्थविषय ज्ञानम् उत्पादयति । तस्य च तदवच्छिन्ना परोक्षचैतन्यस्था अविद्याशक्ति आलम्बनतया विवर्तते ’ ॥ प पा १० इति ॥

[तत्रापि मनोरूप ‘करणम्’, निद्रादि ‘दोष’, अदृष्टाद्युद्बोधित ‘सस्कार’ श्च— इति कारणत्रितयमस्त्येवेति नाव्याप्तिरित्यभिप्राय । चैतन्यस्था अविद्या मिथ्यार्थ रूपेण परिणमते, मनसो विषयीभवतीति च ॥ ]

तदीदृश ज्ञानाध्यासार्थाध्यासवर्णन न कुत्रापि प्रस्थानत्रयभाष्ये पश्याम । कतिभिश्चित तद्वाक्यै परिशीलितैर्भाष्यकारमत बुद्धिमारोप्येतेति तान्यत्रोदाहरिष्याम —

(1) ‘ शुक्तिका रजतमिति प्रत्येति ’ इत्यत्र शुक्तिवचन एव शुक्तिकाशब्द , रजतशब्दस्तु रजतप्रतीतिलक्षणार्थ , प्रत्येत्येव हि केवल न तु तत्र रजतमस्ति ॥ सू भा ४-१-५, पा ४६७

(2) तस्यात्मव्यतिरेकेणाभाव पश्यति । यथा शुक्तिकाया रजताभाव पश्यति । तदुच्यते ब्रह्मैवार्पणमिति यथा ‘ यद्रजत तच्छुक्तिकैव ’ इति ॥ गी भा ४-२४, पा ७३

[ अत्र रजतस्याभाव एव शुक्तौ, तत्तत्व तु शुक्तिरेवेति चोक्तम् ॥ ]

(3) स पश्यन्नपि न पश्यति यथा तैमिरिकोऽनेक चन्द्रम्, यथा वा अभ्रेषु धावत्सु चन्द्रं धावन्तम् ॥ गी भा १८-१६ पा २६३

(4) न हि तिमिरोपहतनयनेनानेक इव चन्द्रमा दृश्यमानोऽनेक एव भवति ॥ सू भा २-१-२७, पा २१३

[अत्र तैमिरिकेन दृष्ट इवावभासमानोऽपि तत्कालेऽपि न विद्यते न जातुचिदप्यनेक इति चोक्तम् ॥]

(5) तैमिरिकदृष्टस्य हि द्वितीयचन्द्रस्य नात्मलाभो नाशो वा अस्ति ॥ तै भा २-८, पा ३१०

एकश्चन्द्र सद्वितीयवत् । सू भा पा २

[तैमिरिकेण दृष्टवद् विकल्पितस्य द्वितीयचन्द्रस्य तेन रूपेण सत्त्वमेवात्र निषिध्यते । यो हि द्वितीयचन्द्रवद् विकल्प्यते, तस्य परमार्थचन्द्र एव तत्त्वम् इति चोक्तम् ॥]

(6) यथा गृह्यमाणाया अपि शुक्तिकाया विपर्ययेण रजताभासाया अग्रहण विपरीतज्ञानव्यवधानमात्रम्, तथा ग्रहण ज्ञानमात्रमेव । विपरीत ज्ञानव्यवधानापोहार्थत्वाज्ज्ञानस्य ॥ बृ भा १-४-७, पा ६६६

[अत्र शुक्तिकैव रजतवदाभासत इति, रजताभासग्रहणकालेऽपि शुक्तिकैव गृह्यत इति, विपरीतज्ञानमात्रमपोह्य ज्ञानेन न तु मिथ्यारजतम् इति चोक्तम् ॥]

(7) यथा रज्जुरेव सर्पबुद्ध्या सर्प इत्यभिधीयते रज्जुविवेक दर्शिना तु सर्पाभिधानबुद्धी निवर्तेते ॥ छा ६-२-३, पा ५१०

[सर्पाभिधानबुद्धिव्यतिरेकेण सर्पो नाम रज्जौ नास्त्येवेत्युक्त भवति ॥]

(8) न हि मनोविकल्पनाया रज्जुसर्पादिलक्षणाया रज्ज्वा प्रलय उत्पत्तिर्वा । न च मनसि रज्ज्जुसर्पस्य उत्पत्ति प्रलयो वा । न चोभयतो वा ॥ गौ का भा २-३२, पा २०४

[सर्वथापि नास्ति रज्जुसर्पोत्पत्त्यादिकम्, मनोविकल्पनामात्र तु तत् सर्वम् ॥]

उपर्युदाहृतवाक्यै शुक्तिरज्ज्वादिरेव रजतसर्पादिविकल्पास्पद तथा तथा भ्रान्त्या अवभासत इति भाष्यमतमित्यवगम्यते ॥

## जीवभेदेऽविद्यादोषो निमित्तम् –

१३९ 'शुक्तिकोदाहरणेन सम्प्रयुक्तस्यानात्मा रजतम् इति दर्शितम्, निरञ्जनस्य चैतन्यस्य अस्मदर्थेऽनिदमंशस्यानात्मा तदवभास्यत्वेन युष्मदर्थलक्षणापन्नोऽहङ्कारोऽध्यस्त इति प्रदर्शनार्थम् । द्विचन्द्रोदाहरणेन जीवेश्वरयोर्जीवाना च अनात्मरूपो भेदावभास इति दर्शितम्' (प पा १४) इति टीका । तत्र कारणत्रितयजन्योऽध्यास इत्यङ्गीकारात् जीवे कथ मग्रहणविपर्यासौ भवेताम् ? – इति शङ्का समुत्पद्यते । सा च इत्थ टीकायाम् उद्भाविता –

(१) ननु बहिरर्थे कारणदोष , अर्थगत सादृश्यादि , इन्द्रियगतश्च तिमिरादिरुपलभ्यते । तन्निमित्तश्च अर्थस्य साशत्वादशान्तराग्रहेऽपि अशान्तरप्रतिबन्धो युज्येत । न त्विह कारणान्तरायत्ता सिद्धि , येन तद्दोषादनवभासोऽपि स्यात् । निरशस्य चैतन्यस्य स्वयज्योतिषस्तदयोगात् ॥ प १४

कारणदोष , अर्थगतदोष , इन्द्रियदोषश्चेति दोषत्रितयापेक्षोऽध्यास इति पञ्चपादिकाया पूर्वं केनापि नोपन्यस्तम् । **वार्तिककारैस्तु –**

ननु सामान्यविज्ञानविशेषाज्ञानसश्रयात् ।
जातरूप्यस्मृतेर्लोके मिथ्याज्ञान प्रसिध्यति ॥
यत्राध्यासो यदध्यस्त भेदसिद्धौ तयोर्मृषा ।
ज्ञान जगति ससिद्ध सा चैकात्म्येऽतिदुर्लभा ॥
वा १-४-४१५, ४१६

इति चाक्षिप्य

न न परिहृतेनार्थश्चोद्येनानेन कश्चन ।
प्रत्यङ्मोहैकहेतुत्वात् सर्वानर्थमृषामतेः ॥ वा ४१८

इति समाहितम् ॥

पञ्चपादिकायामपि जीवस्य ब्रह्मानतिरिक्तत्व हेतूकृत्य पूर्वपक्षिणा अध्यास आक्षिप्त । तद् यथा –

(२) ननु ब्रह्मस्वरूपमनवभासमानमस्त्येव । न । तदनवभासना जीवेऽनवभासविपर्यासौ भवत । न हि शुक्तेरग्रहणात् स्थाणौ अग्रहण विपर्यासो वा । ननु न ब्रह्मणोऽन्यो जीव, 'अनेन जीवेनात्मना' इति श्रुते । अतस्तदग्रहणमात्मन एव तत् । एव तर्हि सुतरामविद्याया अनात्मभव । तस्य विद्यात्मकत्वात् । 'तस्य भासा सर्वमिद विभाति' इति नचैतन्येनैव सर्वस्य भासमानत्वात् ॥ प १४

अत्र परिहार इत्युच्यते –

(३) उच्यते । विद्यत एवात्रापि अग्रहणाविद्यात्मको दोष प्रकाशस्याच्छादक । कथ गम्यते ? श्रुते, तदर्थापत्तेश्च । श्रुतिस्तावत् 'अनृतेन हि प्रत्यूढा' (छा ८-३-२), 'अनीशया शोचति मुह्यमान' (मु ३-१-२) इत्येवमाद्या । तदर्थापत्तिरपि । विद्येव सर्वत्र श्रुतिषु ब्रह्मविषया मोक्षाय निवेद्यते । तेन, अर्थादिदमवगम्यते जीवस्य ब्रह्मस्वरूपतानवगमोऽविद्यात्मको बन्धो निसर्गत एवास्तीति । ननु न जीवो ब्रह्मणोऽन्य इत्युक्तम् । बाढम् । अत एवार्थात्, जीवे ब्रह्मस्वरूपप्रकाशाच्छादिका अविद्या कल्प्यते । अन्यथा परमार्थतस्तत्स्वरूपत्वे तदवबोधोऽपि यदि नित्यसिद्ध स्यात् तदा तत्तादात्म्योपदेशो व्यर्थ स्यात् । अतोऽनादिसिद्धाविद्यावच्छिन्नानन्तजीवनिर्भासास्पदम् एकरस ब्रह्म इति श्रुतिस्मृतिन्यायकोविदैरभ्युपगन्तव्यम् । तथा च स्मृति 'प्रकृतिं पुरुष चैव विद्ध्यनादी उभावपि ।' इति क्षेत्रज्ञत्वनिमित्ताम् अनादिसिद्धाम् अविद्या प्रकृतिशब्देनाह । 'माया तु प्रकृति विद्यात्' इति श्रुते । अतो मायावच्छिन्नरूपत्वात्, अनन्यदपि ब्रह्मरूपम् आत्मनो न वेत्ति । तथा चोक्तम् –

अनादिमायया सुप्तो यदा जीव प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैत बुध्यते तदा ॥ (गौ का १-१६) इति ।

अत्र 'शोचति मुह्यमान' (मु) इति श्रुतिस्तावद् यथाप्रसिद्ध जीवेश्वरभेदमनूद्य परमात्मदर्शनात् तस्य शोकनाश वक्तु प्रवृत्ता, 'जुष्ट यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक' (मु ३-१-२) इति वाक्यशेषात् । 'अनृतेन हि प्रत्यूढा' (छा ८-३-२) इत्यपि यथाप्रसिद्धाना जीवानामहरह सुषुप्तकाले ब्रह्मणा सपद्यमानानामपि न तत्प्राप्तिज्ञान भवति । मिथ्याज्ञाननिमित्तकामकर्मवशगत्वात्तेषामिति ग्रन्थ-

सदर्भतोऽवगम्यते । अतो यद्यपि जीवमात्रस्य व्यवहारदशायामविद्याकामकर्मपरवशत्वमनूद्यत एवैतज्जातीयकश्रुतिवचनै, तथापि कथ तैरध्यासप्रयोजक 'अग्रहणाविद्यात्मको दोष प्रकाशस्याच्छादक समुपनीयत इति तु न निश्चीयते । जीवस्य ब्रह्मस्वरूपतानवगमोऽविद्यात्मको बन्धो निसर्गत एवास्तीति मोक्षाय ब्रह्मविद्यामुपदिशन्तीभि श्रुतिभिर्विज्ञाप्यत इति यत् सत्यम्, तथापि तु तादृशाविद्याबन्धो यथाभाष्योक्तो नैसर्गिकाध्यास एव कुतो न स्यादिति टीकाया न स्पष्टीकृतम् । तथा हि न्यायोपबृंहित भाष्यम् –

(1) एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूप कर्तृत्वभोक्तृत्वप्रवर्तक सर्वलोकप्रत्यक्ष । अस्यानर्थहेतो प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते ' इति ॥

सू भा, अध्यासभाष्योपसहार ॥

एव टीकाव्याख्यातद्विचन्द्रोदाहरणनयेनैव जीवेश्वरयो, जीवाना च भेदो नैसर्गिकाध्यासलक्षणाविद्ययैव वस्तुस्वरूपाविवेकनिबन्धिन्या प्रत्युपस्थापयितुमलमिति कस्मान्नास्थेयमित्यपि टीकातो न स्पष्टम् । अत्रापि हि भाष्यवाक्यमुदाहर्तु शक्यते –

(2) सर्वज्ञस्येश्वरस्य आत्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये ससारप्रपञ्चबीजभूते सर्वज्ञस्येश्वरस्य माया, शक्ति, प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते। ताभ्यामन्य सर्वज्ञ ईश्वर 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म' (छा ८-१४-१) इति श्रुते ॥ सू भा २-१-१४, पा २०१

[ अत्राविद्याकल्पिते नामरूपे माया प्रकृति इत्युक्तत्वात् मायाशब्दिता प्रकृति, तत्कल्पकाध्यासरूपाविद्यातोऽन्येत्युक्त भवति ॥ ]

एतेन 'प्रकृति पुरुष चैव' (गी) इति स्मृति, 'माया तु प्रकृति विद्यात्' इति श्रुतिश्च व्याख्याता । प्रकृतिशब्दवाच्याया मायाया अविद्याकल्पितनामरूपबीजत्वेनैव स्वीकृतत्वाद् भाष्ये, मायाशब्दस्य टीका

समतानादिसिद्धाविद्याशक्तिवाचकत्व ... । अविद्याकल्पितत्वे नाविद्याशब्दव्यपदेश्यत्वस्वीकारे तु, कल्पकादिवैवाच्छादिका विक्षेपिका च न तु नामरूपलक्षणा गौणी – ... । 'न चानादि मायया सुप्त' (गौ का) इत्यभियुक्तोक्तिस्तत्र प्रमाण भवितुमर्हति । कारिकासु ... तिरिक्ता ... ीकृतत्वात् । भाष्ये च प्रकृतकारिकाया 'उभयलक्षणेन तत्त्वाप्रतिबोधरूपेण बीजात्मना, अन्यथाग्रहणलक्षणेन च, अनादिकालप्रवृत्तेन ...णेन स्वप्नान् स्थानद्वयेऽपि पश्यन् सुप्त' इत्यन्यथैव व्याख्यातत्वाच्च ॥

(3) एवम् अविद्याकृतनामरूपोपाध्यनुरोधी ईश्वरो भवति । व्योमेव घटकरकाद्युपाध्यनुरोधि । स च स्वात्मभूतानेव घटाकाशस्थानीयान् अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसघातानुरोधिनो जीवाख्यान् विज्ञानात्मन प्रति ईष्टे व्यवहारविषये ॥ सू भा २-१-१४, पा २०१

[नामरूपमायोपाधिरीश्वर, कार्यकरणसघातोपाधयो जीवा – इत्युक्ते, अविद्याकल्पितोपाधिभेदाद् भेद इत्युक्त भवति ॥ ]

## अध्यासव्यवहारयोरैक्यम् –

१४० 'अध्यस्य', 'मिथुनीकृत्य'–इति च क्त्वाप्रत्ययौ न पूर्वकालिकत्वम् अन्यत्व च लोकव्यवहारादङ्गीकृत्य प्रयुक्तौ भाष्ये–इति टीकाकारमन प्रागेवोदाहृतम् (ख १३२) । अध्यस्य नैसर्गिकोऽय लोकव्यवहार – इति स्वरूपमात्रे पर्यवसानमिदम्, उपसहारे च 'एवमयमनादिरनन्तो नैसर्गिकोऽध्यास' – इति तावन्मात्रोपसहारादेवमवसीयते–इति मन्यन्त एते ग्रन्थकारा । अत एव ते 'लोकव्यवहार' इति भाष्यस्थ पदम् एव विगृह्य व्याचख्यु –

(१) लोक इति 'मनुष्योऽहम्' इत्यभिमन्यमान प्राणिनिकाय उच्यते । व्यवहरण व्यवहार, लोक इति व्यवहारो लोकव्यवहार । मनुष्योऽहमित्यभिमान इत्यर्थ ॥ प ४

'सत्यानृते मिथुनीकृत्य' इति भाष्य चैव व्याचक्षते स्म –

(२) सत्यम् अनिदचैतन्यम् । अनुत युष्मदर्थं । स्वरूपतोऽप्य ध्यस्तस्वरूपत्वात् ॥ प ४

अत्र कृत्स्नभाष्यपरिशीलनतोऽय भगवत्पादाभिप्राय इति न प्रतिभाति – 'इतरेतराविवेकेन धर्मधर्मिणोरत्यन्तविविक्तयोर्मिथ्याज्ञान निमित्त सत्यानृते मिथुनीकृत्य अहमिद ममेदमिति नैसर्गिकोऽय लोक व्यवहार' इतीद भाष्यम् आत्मानात्मनोर्धर्मिणो, तद्धर्मयोश्च चिन्मात्र त्वाचेतनत्वयो तम प्रकाशवद् विरुद्धस्वभावत्वाद् वस्तुन एव नित्यदा विविक्तत्वमाह । अथ च लोको निसर्गत एवाविचारस्वभावेन तौ न विविनक्ति, तदविवेकाच्च तयोर्धर्मधर्मिणोरन्योन्यात्मकताम् अन्योन्यधर्मता चाध्यस्य सत्यानृते मिथुनीकृत्य 'अहमिद ममेदमिति' व्यवहरतीति च । तत्र सत्यत्वप्रयोजक तु अव्यभिचरद्रूपत्वम्, अनृतत्वप्रयोजक च व्यभिचरद्रूपत्वम् – इति भाष्यान्तरादवगम्यते –

**(१) यद्रूपेण यन्निश्चित तद्रूप न व्यभिचरति तत् सत्यम्, यद्रूपेण यन्निश्चित तद्रूप व्यभिचरति (तत्) अनृतमित्युच्यते। अतो विकारोऽनृतम् ॥ तै भा २-१, पा २८३**

**(२) यद्विषया बुद्धिर्न व्यभिचरति तत् सत्, यद्विषया व्यभिचरति तदसत् – इति सदसद्विभागे बुद्धितन्त्रे स्थिते, सर्वत्र द्वे बुद्धी सर्वैरुप लभ्येते सामानाधिकरण्येन नीलोत्पलवत् 'सन् पट', 'सन् हस्ती' इत्येव सर्वत्र। तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति । तथा च दर्शितम्। न तु सद्बुद्धि ॥ गी भा २-१६, पा १४**

[अत्राव्यभिचरद्बुद्धिविषयत्व सत्यत्वम्, व्यभिचरद्बुद्धिविषयत्वमनृतत्व मित्युक्तम्। बुद्धिश्चात्र निश्चितनद्रूपविषया सार्वजनीना विवक्षिता ॥]

एव चात्मन सत्यत्वम् अव्यभिचरद्बुद्धिगम्यत्वात्, अनात्मनश्च अनृतत्व व्यभिचरद्बुद्धिगोचरत्वात् – इत्यनयोर्विरुद्धस्वभावत्वादत्यन्त विविक्तता, यथैव तयोर्विविक्तता विषयित्वविषयत्वलक्षणविरुद्धस्वभाव-

प्रयुक्ता – इत्युक्तं भवति भाष्ये। टीकायां तु 'अनृतं युष्मदर्थं। स्वरूपतोऽप्यध्यस्तत्वात्' इति केनाकारेणोक्तमिति न विज्ञायते ॥

अपि च स्वरूपतोऽप्यध्यस्तत्वम् अनृतत्वप्रयोजकत्वेनोच्यमानम् परस्पराश्रयदोषमप्यावहतीति भाति। स्वरूपतोऽध्यासनिश्चये सत्यनृतत्व निश्चय, अनृतत्वनिश्चये सत्येव तु सत्यानृतमिथुनीकरणात्मकाध्यासनिश्चय इति। न चात्मनोऽप्यनात्मवत् स्वरूपतोऽध्यस्तत्वे सिद्धान्तिनः किञ्चिच्छिद्यते। यत्सत्यम् यस्तस्य तद्रूपेणासत्यत्वम् अवश्यभावीति, तथापि न तावता यथावस्थितेन स्वेनापि रूपेणानृतत्वं तस्य नियोगतः प्राप्नोति। न हि लोके शुक्तिरजतयोः परस्परसन्निहितयोः शुक्तिकाकारं यस्तस्यापि रजतस्य स्वेन शुक्तिनिरपेक्षरजतरूपेणाप्यनृतत्वं तावता प्राप्नोतीति। एवमहङ्कारकारान्तस्थस्य समारोपितरूपेणानृतत्वेऽपि स्वेनान्यनिरपेक्षेण कूटस्थचिद्रूपेण सत्यत्वं निराबाधं भवतीत्यनवद्यम्। अत एव ह्युपसंहारभाष्ये निःशङ्कमुच्यते –

(३) 'एवम् अहंप्रत्ययिनम् अशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेण अन्तःकरणादिष्वध्यस्यति' इति ॥ अध्यासभाष्यम् पा. ८

अत्रात्मनि सर्वसाक्षिणि अहंप्रत्ययित्वमध्यस्यते, अहंप्रत्ययिनि च सर्वसाक्षित्वमध्यस्यते, न चैतावता अहंप्रत्ययिनस्तथ्यत एव सर्वसाक्षित्वं सत्यत्वं वा सर्वसाक्षिण आत्मनोऽहंप्रत्ययित्वम् अनृतत्वं वा प्रादुःष्यात्। उक्तं हि भाष्ये एव –

(४) तत्रैवं सति यत्र यदध्यासः, तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न सम्बध्यते ॥ सू. भा. पा. २

इति। यच्चोच्यते लोकव्यवहारो नाम मनुष्यात्मताभिमान एवाध्यासानन्यलक्षणः। 'नैसर्गिकोऽध्यास' इति तावन्मात्रोपसंहारात् – इति। तत्राप्येव

प्रतिभाति न – उपक्रमे, मध्ये, उपसहारे च सममेवा ध्यासस्य व्यवहार प्रयोजकत्वमुच्यते भाष्ये । तद् यथा –

(१) 'अध्यस्य अहमिद ममेदमिति नैसर्गिकोऽय लोकव्यवहार ॥'

इत्युपक्रमे प्रतिज्ञा ॥

(२) अविद्याख्यम् आत्मानात्मनोरितरेतराध्यास पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ता सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि ॥

इति मध्ये परामर्श ॥

(३) 'नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूप कर्तृत्वभोक्तृत्वप्रवर्तक सर्वलोकप्रत्यक्ष' –

इत्युपसहारे यद्यपि व्यवहारशब्दो नोपात्त, तथापि कर्तृत्वभोक्तृत्व व्यवहारप्रवर्तकत्वमध्यासस्योक्तमेवेति न दोष ॥

मिथ्याबुद्धिरूपाया अग्गानिन्नाविद्याया सर्वव्यवहारप्रयोजकत्व ब्रुवन्ति विद्यन्ते पर शत भाष्यवचनानि । तत्र कतिचिदेवेहोदाहरिष्याम –

(१) पश्वादीना च प्रसिद्धोऽविवेकपुर सर प्रत्यक्षादिव्यवहार ॥ सू भा पा ३

[अविवेकनिबन्धनाध्यासपुर सरो व्यवहार इत्यथ ॥]

(२) तत्राविद्यावस्थाया ब्रह्मण उपास्योपासकादिलक्षण सर्वो व्यवहार ॥ सू भा १-१-१२, पा ३५

(३) तथा च श्रुति 'यत्र वा अन्यदिव स्यात् तत्रान्योऽन्यत् पश्येत्' इत्यादिना स्वप्नदृष्टहस्त्यादिव्यवहारवदविद्याविषय एव कर्तृत्वादि व्यवहार दर्शयति 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन क पश्येत्' (बृ ४-५-१५) इत्यादिना च विवेकिन कर्तृत्वादिव्यवहाराभाव दर्शयति ॥ सू भा १-२-१२, पा ७४

(४) अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽय शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिक । ततश्च ज्ञातृज्ञेयादिभेदश्रुतय ,

प्रत्यक्षादीनि च प्रमाणानि संसारानुभवः विधिप्रतिषेधशास्त्रं च – इति सर्वमेतदुपपद्यते । तथा च श्रुतिः 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यविद्याविषये सर्वं व्यवहारं दर्शयति । 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इति विद्याविषये सर्वं व्यवहारं वारयति ॥

सू. भा. १-२-२०, पा. ८१

(५) अविद्यात्मकत्वेनैव जीवस्य सर्वः संव्यवहारः सन्ततो वर्तते ॥

सू. भा. १-४-३ पा. १४९

(६) अतश्चेदं शास्त्रीयं ब्रह्मात्मत्वम् अवगम्यमानं स्वाभाविकस्य शारीरात्मत्वस्य बाधकं संपद्यते, रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनाम् । बाधिते च शारीरात्मत्वे तदाश्रयः समस्तः स्वाभाविको व्यवहारो बाधितो भवति ॥ सू. भा. २-१-१४, पा. १९७

[ स्वाभाविको व्यवहारः – नैसर्गिकः यासङ्गः । देहेन्द्रियादिष्वहममाभिमानात्मकत्वादध्यासस्य ॥ ]

(७) न चेयमवगतिरनर्थिका, भ्रान्तिर्वा – इति शक्यं वक्तुम् । अविद्यानिवृत्तिफलदर्शनात्, बाधकज्ञानान्तराभावाच्च । प्राक्चात्मैकत्वावगतेः अव्याहतः सर्वः सत्यानृतव्यवहारो लौकिको वैदिकश्चेत्यवोचाम ॥

सू. भा. २-१-१४, पा. २००

(८) तदेवम् अविद्यात्मकोपाधिपरिच्छेदापेक्षमेव ईश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं च । न परमार्थतो विद्ययापास्तसर्वोपाधिस्वरूपे आत्मनि ईशित्रीशितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते ॥

सू. भा. २-१-१४, पा. २०१

(९) अपि च यदा 'तत्त्वमसि' इत्येवंजातीयकेन अभेदनिर्देशेन अभेदः प्रतिबोधितो भवति, अपगतं भवति तदा जीवस्य संसारित्वम्, ब्रह्मणश्च स्रष्टृत्वम् । समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यग्ज्ञानेन बाधितत्वात् ॥ सू. भा. २-१-२२, पा. २०९

(१०) न चेयं परमार्थविषया सृष्टिश्रुतिः । अविद्याकल्पितनामरूपव्यवहारगोचरत्वात् ॥ सू. भा. २-१-३३, पा. २१७

(११) योऽयं लौकिको वैदिकश्च व्यवहारः, स उत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्य, अविद्याकार्यत्वात् अविद्यानिवृत्तौ निवर्तते । अविद्यायाश्च विद्याविरोधान्निवृत्तिः ॥ गी. भा. २-६९, पा. ३८

तदेवम्, आत्मानात्मनो सत्यानृतत्व अव्यभिचरद्व्यभिचरद्बुद्धि गोचरत्वात्, सत्यानृतमिथुनीकरण च तयोरितरेतरा ... ध्यासनाद्धर्म्यबुद्धि-लक्षणा नैसर्गिकी भ्रान्ति, अ यासलक्षणाविद्या। लोकव्यवहारस्तु जनाना नैसर्गिकाविद्याप्रयुक्त सर्ववि ... , तत्कृता कर्तृत्वभोक्तृत्व-बुद्धि, तत्प्रयुक्त सर्वविधशब्दप्रयोग, तदनुरूपप्रवृत्तिनिवृत्ती चेति भाष्याभिप्रायोऽवसीयते । टीकाया तु, अ यासमिथुनीकरणव्यवहारा पर्यायशब्दत्वेन स्वीकृता, लोकव्यवहारशब्दश्च बुद्धिव्यपदेशप्रवृत्तिरूप-सामान्यार्थवाचकत्वात् प्रन्याठ्य मनुष्योऽहमिति बुद्धिमात्रे सकोचित इति तत्र प्रस्थानवैलक्षण्यमिति स्फुटम् ॥

अहमध्यासः –

१४१ 'अहमिद ममेदम् इति नैसर्गिकोऽय लोकव्यवहार' इति भाष्यम् । तत्राहम यास प्रकृत्य टीकाया प्रकटितमभिप्राय परिशील यितु कतिचिद् वाक्यानि तत समुद्ध्रियन्ते –

(१) 'अहमिद', 'ममेदम्' – इत्यध्यासस्य स्वरूप दर्शयति । अहमिति तावत् प्रथमोऽध्यास । ननु 'अहम्' इति निरश चैतन्यमात्र प्रतिभासते नाशान्तरमध्यस्तम् अनध्यस्त वा । यथा अध्यस्ताशान्तर-भाव तथा दर्शयिष्याम ॥ प २

(२) यदैवाहङ्कर्ता अध्यासात्मक, तदैव तदुपकरणस्यापि तदात्म कत्वसिद्धि । न हि स्वप्नावाप्तराज्याभिषेकस्य, माहेन्द्रजालनिर्मितस्य वा राज्ञो राजोपकरण परमार्थसद् भवति । एवम् अहङ्कर्तृत्वप्रमुख क्रियाकारकफलात्मको लोकव्यवहार, अध्यस्तो नित्यशुद्धबुद्धमुक्तस्वभावे आत्मनि ॥ प ५

[ 'एवमहप्रत्ययिनम् अशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य' इति भाष्यानुरूपमेवेदमुक्तम् अहङ्कर्तृत्वमात्मन्यध्यस्तमिति सर्वसप्रतिपन्नमेवैतत् ॥ ]

(३) यद्यपि देहादिव्यतिरिक्तभोक्तृविषय एवायमहङ्कार । तथापि तथा अनध्यवसायात्, तद्धर्मान् – आत्मन्यध्यस्यति । दृश्यते च स्वरूपे

प्रत्ययविषयतया । न हि 'अयं देह ' 'अयम् आत्मा ' इति विविक्ताभ्यां प्रत्ययाभ्यां देहात्मानौ गृह्णाति य कश्चित् । अत एव हि मोमुह्यते लोक, आत्मानात्मविषये एवमात्मा ', ' नैवमात्मा ' इति ॥

उप ग्राद्य २-५४ पा ६०

एतेषा वाक्यानामर्थस्य समालोचनात् विचारविवेचनात् प्रेमपि भोक्तृविषय एव सन् अहप्रत्ययो देहादावपि भासते – इत्येतत् भाष्याननुगुणम् इति वक्तव्य भवति । देहादिसहतस्यैव ह्यविद्यागृहीतस्यात्मनो भोक्तृत्वमुक्त समन्वयाधिकरणभाष्ये 'आत्मेन्द्रियमनोयुक्त भोक्तेत्याहु मर्नाषिण ' इति श्रुतमुदाहरेति । देहादिव्यतिरिक्त मन सत्ता श्रद्धामात्रेण विश्वस्य तत्राहप्रत्ययविषयत्व निश्चितवतोऽपि लोकस्य देहादौ यथापूर्वं निरुपचरितमहप्रत्ययो भवतीत्येतावत्यशे तु न विसवाद ॥

अहङ्काराध्यासे स्वाभिमतलक्षणमन्यत्रश्चेत्य टीकाया दर्शित –

(१) तदेव स्वयज्योतिष एव सतो जीवस्य कार्यकरणसवातव्यतिरिक्तताया, तथानवभासदर्शनात्, 'मनुष्योऽहम्' इति चाध्यासोपलब्धे, ब्रह्मात्मैकत्वस्यापि तत्स्वरूपस्यानवभासन पूर्वकालकोटिरहितप्रकाशाच्छादि तमोनिमित्त श्रुतितदर्थापत्तिसमर्पित तन्निमित्ताहङ्काराध्यासश्च सभाव्यते । अनादित्वाच्च पूर्वदृष्टत्व स्मृतिरूपत्व च । पृथग्भोक्तृविषयानुभवफलाभावाद्, भोक्तृचैतन्यसवलितैकानुभवफलत्वाच्च परत्र परावभासस्यान्योन्यसभेदस्य विद्यमानत्वात्, अध्यासलक्षणव्याप्तिरिहाप्युपपद्यते ॥ प १६, १७

अत्राहङ्कारो न भवति परमार्थत आत्मनो धर्म, ज्ञेयस्थत्वात् मनुष्यत्वादिवत् – इति सभावनायुक्तिर्भाष्यानुगुणैव । तया चाहङ्कारस्याविद्याध्यारोपितत्वमवश्यमायाति ॥

(१) तथा देहधर्मान् स्थूलोऽहम्, कृशोऽहम्, गौरोऽहम् तिष्ठामि गच्छामि, लङ्घयामि चेति । तथेन्द्रियधर्मान् एवम् अहप्रत्ययिनम् अशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य ॥ अध्यासभाष्यम् ।

(२) (सुखदु खमोहेच्छादयो ज्ञातु ) न भवन्तीत्यस्त्यनुमानम् । अविद्याध्यारोपितत्वात्, जरादिवदिति, हेयत्वात्, उपादेयत्वाच्च इत्यादि ।

तत्रैव सति कर्तृत्वभोक्तृत्वलक्षण संसारो क्षेत्रस्थो ज्ञातर्यविद्यया अध्या रोपित इति न तेन ज्ञातु किञ्चित् दुष्यति ॥

गी भा १३-२ पा १९१

इत्याद्युदाहरणोपलम्भाद् भाष्ये । तत्र मैव तथापि तत्स्वरूपस्यानवभासन 'पूर्वकालकोटिरहितप्रकाशाच्छादितमोनिमित्तम् ... ' इति तु पूर्वमेव समालोचितम् (स १३३, पा २८०) इति न तत्र वक्तव्यमवशिष्यते ॥

## आत्मनोऽस्मत्प्रत्ययविषयत्वम् –

१४२ 'कथ पुन प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम्' सर्वो हि पुरोऽवस्थिते विषये विषयान्तरम् अध्यस्यति । युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्व ब्रवीषि । इत्याक्षिप्य 'उच्यते – न तावदयमेकान्तेनाविषयः । अस्मत्प्रत्ययविषयत्वात्' इति समाधान भाष्ये लिखितम् । तत्र टीकाया व्याख्यानम् –

(१) अस्मत्प्रत्ययत्वाभिमतोऽहङ्कार । स च इदमनिदरूपवस्तु-गर्भ ॥ प १७

(२) यद्यपि चैतन्यैकरसोऽनिदमात्मकत्वादविषय । तथापि अहङ्कारे व्यवहारयोग्यो भवतीति गौण्या वृत्त्या अस्मत्प्रत्ययविषयतोच्यते । प्रमेयस्य व्यवहारयोग्यत्वाव्यभिचारात् । ननु व्यवहारयोग्यत्वेऽध्यास , अध्यास-परिनिष्पन्नाहप्रत्ययबलाद् व्यवहारयोग्यत्वम् इति प्राप्तम् इतरेतराश्रयत्वम् । न । अनादित्वेन प्रत्युक्तत्वात् ॥ प २४

[... कार्यकारणभावस्य वक्ष्य माणत्वात संस्कारो विभ्रमहेतुर्विद्यत इत्यर्थ ॥ ]

(३) तदेवम् अहङ्कारग्रन्थिरस्मच्छब्दसशब्दित । प्रत्ययश्चासौ । आदर्श इव प्रतिबिम्बस्य अनिदच्छिन्मवलितत्वेन तस्याभिव्यक्तिहेतुत्वात् । अतस्तस्य विषयवद् भवतीति उपचारेण अनिदच्छिदात्मभातु 'अस्मत्प्रत्यया विषय' उच्यते ॥ प २९

अत्र 'कथमविषये विषयतद्धर्माध्यासः ?' इत्याक्षिप्ते भाष्योक्तं समाधानम् – 'नायमेकान्तेनाविषयः । अस्मत्प्रत्ययविषयत्वात्' इति । एवं चात्रात्मनि विषयत्वमेवाङ्गीकृत्य समाधानमुपपादितम् इति स्पष्टम् । टीकायां तु अस्मत्प्रत्यय इवास्मत्प्रत्यय इत्यहङ्कारे गौणं प्रत्ययत्वमुक्तम् अभिव्यक्तिहेतुत्वेन, एवं विषयत्वमपि गौणमेव, गुणसाम्यं च व्यवहारयोग्यत्वमित्युक्तम् । तथा च सर्वथापि आत्मनोऽस्मत्प्रत्ययविषयत्वं मुख्यं नास्त्येवेति कथमिदमाक्षेप्तुं समाधानायावकल्पेतेति न विद्मः ॥

किञ्च युष्मदस्मत्प्रत्ययगोचरयोर्विरुद्धस्वभाववत्त्वात् इतरेतरभावानुपपत्तेः, तयोरध्यासो न संभवतीति प्रथमतः आक्षिप्तः पूर्वपक्षिणा । तथापि नैसर्गिकोऽध्यासपुरःसरो लोकव्यवहारो दृश्यते – इत्येव तु सिद्धान्तिना सार्वत्रिकानुभवमालम्ब्य समाहितम्, 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायेन । न पुनरस्मत्प्रत्ययगोचरत्वं नास्त्येवेति पूर्वपक्षप्रत्याख्यानं कृतम् । अध्यासो नामातस्मिंस्तद्बुद्धिः । स च विषये विषयान्तराध्यारोपणरूप एव प्रसिद्धः । प्रत्यगात्मनस्तु विषयत्वं नास्ति । युष्मत्प्रत्ययगोचरत्वाभावात् । तत्कथमिहाध्यासः ? – इत्याक्षेप्ता पुनः प्रत्यवस्थितः । तत इदं समाधानमुक्तं 'नायमेकान्तेनाविषयः' इति । तत् कथमिह गौणप्रत्ययगौणविषयत्वाभ्यां प्रतिवादी समाधीयेत ? न हि शस्त्रास्त्रसंपन्नेनासमेतः शत्रुः चित्रार्पितशस्त्रास्त्रादियुक्तभटैर्विद्रावणीयः स्यादिति ॥

अस्मत्प्रत्यये गौणे व्यवहारयोग्यत्वमेव विषयत्वमित्यङ्गीकृत्यापि, अत्र टीकायां दोषान्तरं दुर्वारणं भाति । कथम् ? अहङ्कारे व्यवहारयोग्यत्वमनु तस्मिन् अध्यासः, अध्यासमनु च व्यवहारयोग्यत्वमित्यन्योन्याश्रयदोष आपादिते, बीजाङ्कुरवदनादित्वाददोष इति समाधानमयुक्तम् । बीजाङ्कुरवद् योग्यत्वाध्यासयोरपि कालाश्रयत्वप्रसङ्गात्, कालस्यानध्यस्तत्वापातादिति ॥

अतो नेदं सम्यग् भाष्यव्याख्यानम् । अस्मत्प्रत्ययविषयत्वमप्यस्ति, अध्यासोऽप्यस्ति । अतो न विरोधः, विषये विषयान्तराध्यासस्य प्रतिवादिनाप्यभ्युपगमात् । तादृशविषयत्वं त्वाध्यासिकम् । न चान्योन्याश्रयदोषः, कालाश्रयत्वं वा अध्यासस्य । अध्यासदृष्ट्या आत्मनोऽस्मत्प्रत्ययगोचरत्वविषयतद्धर्माध्यासास्पदत्वयोर्युगपदेव स्वाप्नधेनुतद्वत्सयोरिवोपलम्भात्, परमार्थदृष्ट्या अद्वितीयस्य सत एव सत्त्वाच्च–इति भाष्यवाक्यस्य सुव्याख्यानत्वादिति वयं पश्यामः ॥

**अहमुल्लेखः –**

१९३ अहमित्यनुभवः किंस्वरूपः ? – इत्येतद्विमर्शनप्रकरणे टीकायां द्वे पक्षान्तरे पूर्वपक्षतया उपक्षिप्ते –

(१) प्रमेयं कर्मत्वेनापरोक्षम् । प्रमातृप्रमिती पुनरपरोक्षे एव केवलम् न कर्मतया । प्रमितिरनुभवः स्वयंप्रकाशः प्रमाणफलम् । तद्बलेन इतरत् प्रकाशते । प्रमाणं तु प्रमातृव्यापारः, फललिङ्गो नित्यानुमेयः । तत्र 'अहमिदं जानामि' इति प्रमातुर्ज्ञानव्यापारः कर्मविषयो नात्मविषयः । आत्मा तु विषयानुभवादेव निमित्तात् अहमिति फले विषयं चानुसन्धीयते ॥ प. १७

**इति प्राभाकरपक्षः ॥**

(२) ननु नायं विषयानुभवनिमित्तोऽहमुल्लेखः, किं त्वयं एवात्ममात्रविषयः, 'अहम्' इति प्रत्ययः । तस्मिंश्च द्रव्यस्वरूपत्वेन आत्मनः प्रमेयत्वं ज्ञातृत्वेन प्रमातृत्वम् इति प्रमातृप्रमेयनिर्भासरूपत्वात् अहंप्रत्ययस्य ग्राह्यग्राहकरूपः आत्मा । तस्मादिदमनिदंरूपः, प्रमेयांशस्य इदंरूपत्वात् । अनिदंरूपत्वात् प्रमात्रंशस्य ॥ प. १७–१८

**इत्ययमपरः पक्षो भाट्टानाम् ॥**

[अयं प्राभाकरैरित्थं खण्डितः । नैतद्युक्तम् – अनंशत्वात्, अपरिणामित्वाच्चात्मनः । प्रमेयस्य चेदंरूपतया पराग्रूपत्वात्, अनात्मत्वात् । तस्मात्, नीलादिज्ञानफलम् अनुभवः, स्वयं प्रकाशमानो ग्राह्यमिदन्तया, ग्राहकं चानिदन्तया अवभासयति, ग्रहणं चानुमापयतीति ॥ ]

तदिद पक्षद्वय निरस्य स्वपक्ष इत्थमुपन्यस्तष्टीकायाम् –

(१) चित्स्वभाव एवात्मा तेन तेन प्रमेयभेदेनोपधीयमान, अनुभवाभिधानीयक लभते । अविवक्षितोपाधिरात्मादिशब्दैरभिधीयते । अवधीरितवनाभिधाननिमित्तैकदेशावस्थाना इव वृक्षा वृक्षादिशब्दै – इत्यभ्युपगन्तव्यम् ॥ प १९

(२) तदेव नाय नीलादिप्रत्ययात् अन्य एवात्मविषयोऽहप्रत्यय, नापि विषयानुभवादेवाहमुल्लेख । येयम् श्रुतिस्मृतीतिहासपुराणेषु बहुधा गीयते सुषुप्ते प्रकाशाच्छादनविक्षेपसस्कारमात्ररूपस्थितिरनादिरविद्या[1] तस्या परमेश्वराधिष्ठितत्वलब्धपरिणामविशेषो विज्ञानक्रियाशक्तिद्वयाश्रय कर्तृत्वभोक्तृत्वैकाधार कूटस्थचैतन्यसवलनसजातज्योति स्वयप्रकाशमानोऽपरोक्षोऽहङ्कार, यत्सभेदात् कूटस्थचैतन्योऽनिदमश आत्मधातुरपि मिथ्यैव भोक्तेति प्रसिद्धिमुपगत । स च परिणामविशेषोऽनिदश्चिदात्मनो बुद्ध्या निष्कृष्य वेदान्तवादिभि अन्त करणम्, मन बुद्धि, अहप्रत्ययी–इति च विज्ञानशक्तिविशेषमाश्रित्य व्यपदिश्यते परिस्पन्दशक्त्या च प्राण इति । तेनान्त करणोपरागनिमित्त मिथ्यैव, अहकर्तृत्वमात्मन स्फटिकमणेरिव उपधाननिमित्तो लोहितिमा ॥ प २०

अत्र टीकाया यदुच्यते पदे पदे अहकारस्य चित्स्वरूपसत्तामात्रानुबन्ध्यविद्यापरिणामत्वम् (प ५, १४, २०) न तद्भाष्ये कुत्रापि दृश्यत इत्युक्तमेव । प्रकृते अहमित्यनुभव कथ जायते ? कि ग्राह्यग्राहकरूप एवात्मा अहप्रत्ययविषय, अथवा विषयानुभवादेव अहमित्यनुभवीयते, उतान्य एवाहमुल्लेखस्य हेतु ?–इति विचार्यमाणे न केवलमविद्यापरिणामविशेषत्वप्रतिज्ञामात्रात् जिज्ञासापरिसमाप्तिर्भवेत् इति स्पष्टमेव । भाष्ये तु अहप्रत्ययो यद्यपि जायमान प्रत्ययविशेष एवेति स्पष्टमुक्तम् – न तु टीकायामिव अहङ्कार एव गौण्या वृत्त्या अस्मत्प्रत्ययशब्दित इति–तथापि किनिमित्त कथ वा अहप्रत्ययजन्म ? – इत्येतत् स्पष्टतया व्याख्यात नोपलभ्यते । अह कर्ता एव त्वविद्याकल्पितो जीव कर्ता भोक्ता च,

1 १३२ खण्डे एष वाक्यभाग पूर्णतया लिखित ॥]

तद्व्यतिरिक्त एव तु साक्षी यस्मिन्निद कर्तृत्व भोक्तृत्व चाध्यस्तमविद्ययेत्येता वत्तूक्त दृश्यते । तत्रेतानि ॱ ॱ ॱ ॱ ॱ ॱ ॱ

(१) वैनाशिकास्तु अहमिति प्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते आगमेन ह्यात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च तदनुसारिणो मीमासका तार्किकाश्च अहप्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवाणीति कल्पयन्तो वदन्ति 'प्रत्यक्षश्चानुमेयश्चात्मा' इति ॥ बृ भा पा ६०८

[ अत्राहप्रत्ययो जायमानस्वभाव इत्युक्तम् । ]

(२) देहादिसहतस्यैवाविद्यागृहीतस्य आत्मन सक्रियमाणत्वात् । तेनैव हि अहकर्त्रा, अहप्रत्ययविषयेण प्रत्ययिना सर्वा क्रिया निर्वर्त्यन्ते, तत्फल च स एवाश्नाति ॥ सू भा १-१-४, पा १७

[ अत्र कर्ता भोक्ता जावोऽहप्रत्ययविषय इत्युक्तम् ॥ ]

(३) न ह्यहप्रत्ययविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थ सम एक कूटस्थनित्य पुरुषो विधिकाण्डे तर्कसमये वा केनचिदधिगत सर्वस्यात्मा ॥ सू भा १-१-४, पा २०

[ अत्राप्यहप्रत्ययविषयत्व कर्त्रा मनोऽनुज्ञातम् तत्साक्षिणश्चाविषयत्वम् ॥ ]

(४) अहप्रत्ययबीज यदहप्रत्ययवत्स्थितम् ।
नाहप्रत्ययवद्दृष्ट कथ कर्म प्ररोहति ॥ उप ४-१ पा

[अत्रापि कर्मणो बीजमहप्रत्यय इत्युक्तम् । तच्च अहप्रत्ययवति कर्त्रात्मन्याश्रितम् । नाह कर्ता इति ज्ञानाग्निना बीज दग्ध चेत् कर्मप्ररोहो न भवेदेवेत्युक्तम् ॥ ]

वार्तिककारैस्तु नैष्कर्म्यसिद्धौ इमे श्लोका लिखिता –

(१) बाह्या वृत्तिमनुत्पाद्य व्यक्ति स्यान्नाहमो यथा ।
नर्तेऽन्त करण तद्वद् ध्वान्तस्य व्यक्तिरात्मनी ॥ नै ३-५८

[बाह्यविषया वृत्तिमनुत्पाद्य, अहमो विद्यमानस्यापि नाभिव्यक्तिर्यथा, तथा अश्रुतवेदान्तवाक्याना सुषुप्ते विद्यमानमप्यज्ञान नाभिव्यज्यते । तत्सुप्त ॱ स्यान्त करणस्यैव 'न जानामि' इत्यज्ञानाभिव्यक्तिसभवात् इति श्लोकार्थ ॥ ]

(२) दाह्यदाहकतैकत्र यथा स्याद्वह्निदारुणो ।
ज्ञेयज्ञातृकतैव स्यादहज्ञात्रो परस्परम् ॥ नै ३–५९

[अत्र अहप्रत्ययविषयात्मनि ग्राह्यग्राहकविभागो न विद्यते, तथा स्फुटतरव्यवहाराभावात्–इत्याशङ्क्य परिहारोऽभिहित । यथा वह्निर्दाहक, दारु च दाह्यम्–इति विभक्तयोरप्येकत्र काष्ठे अविभक्तत्वेन प्रतीति, एव ज्ञात्रात्माहङ्कारयोरुभयोरपि अहम् इति भोक्त्रात्मत्वस्याविभागेनैव प्रतीतिरध्यासात् । तयोर्विभागस्तु सुषुप्तादिपरीक्षणेन निश्चेय इत्यर्थ ॥ ]

(३) इदज्ञान भवेज्ज्ञातुर्ममज्ञान तथाहम ।
अज्ञानोपाधिनेद स्यात् विक्रियातोऽहमो मम ॥ नै ३–६०

[यद्यहङ्कारोऽपि विषयांश एवान्तर्भाव्य, तर्हि किमिति ममेति नावभासते ? – इत्याशङ्क्य परिहारोऽयम् । इदज्ञान ज्ञातु केवलाज्ञानोपाधिनैव, अज्ञातात्मैव हि ज्ञातृत्वमात्मन्यध्यस्य सत्रमन्यद् इदमिति विषयत्वेन गृह्णाति । ममेति ज्ञान तु न केवलमज्ञानोपहितात्मन, किं त्वज्ञानाहरूपोभयोपाधिविशिष्टस्यैव । अहवृत्तिलक्षणव्यापारेणैव हि 'मम' इति ज्ञान सभवतीत्यर्थ । स्पष्टीकृतमिद श्लोकसबन्धोक्तौ ॥ ]

(४) अनुपक्रियमाणत्वान्न ज्ञातु स्यादह मम ।
घटादिवदिद तु स्यान्मोहमात्रव्यपाश्रयात् ॥ नै ३–६१

[बाह्यघटादीनामिवोपकारित्वापकारित्वान्यतराभावात्, अहङ्कारे ज्ञातु 'मम' इति बुद्धिर्न भवति । अज्ञानमात्रोपहितत्वात्तु ज्ञातु, तत्र 'इदम्' इत्येव केवल ज्ञानम् इत्यर्थ ॥ ]

(५) विक्रियाज्ञानशून्यत्वान्नेद न च ममात्मन ।
उत्थितस्य सतो ज्ञान नाहमज्ञासिष यत ॥ नै ३–६२

[यत्राज्ञानाहविक्रिययो सद्भाव, तत्र इद ममेति ज्ञानम् इत्यन्वय प्रदर्शित । यत्र तु तदुभय नास्ति, तत्रोभयविधज्ञानमपि न जायत इति व्यतिरेकप्रदर्शनार्थोऽय श्लोक । सुषुप्तेऽज्ञान नास्ति, अहवृत्तिरपि नास्तीत्यत इदमिति वा, ममेति वा ज्ञान नैव जायते । अत एव हि उत्थितस्य 'न किञ्चिदवेदिषम्' इति परामर्श । अन्यथा विषयज्ञानस्य वा आत्मीयज्ञानस्य वा परामर्शो भवेदपीत्यभिप्राय ॥ ]

यथोदाहृतनैष्कर्म्यसिद्धिवाक्येभ्यो विज्ञायते, टीकाप्रस्थानतो भिन्नमेव वार्तिकप्रस्थानमिति । तत्र हि बाह्यविषयवृत्तिकृतैवाहप्रत्ययाभिव्यक्तिरित्यङ्गीकृता । अहङ्काराध्यासस्य तु भाष्ये इव तत्रापि जागरिते एवान्त -करणाविवेककृतत्व स्वीकृतम् । यतोऽन्त करणाभावमेव प्रतिजानते सुषुप्ते वार्तिककारा इति ॥

इद त्वत्र न प्रतिभाति – 'देहेन्द्रियादिष्वहममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्ते ' इति भाष्योक्तरीत्या नैकोऽप्यहङ्काराध्यासविरहितोऽस्ति व्यवहार । 'अहम्' इत्युल्लिख्याहप्रत्यय विषयत्व तु नात्मनि सर्वदा, न च विषयेषु सर्वदा 'मम' इत्युल्लिख्य ममप्रत्ययविषयत्व वा व्यवहारे । तत्र देहेन्द्रियादिष्वहममाभिमानस्ताव न्नैसर्गिक । उल्लिख्याहप्रत्ययविषयत्वापत्तिस्तु काचित्क । परमार्थदृष्ट्या कूटस्थाजाद्वयचिन्मात्रस्वभाव एव सन्नयमात्मा लौकिक्या त्वविद्यादृष्ट्या ज्ञातृज्ञानज्ञेयविभक्त इव, कर्तृकरणक्रियाफलविभक्त इव, भोक्तृभोग भोग्यविभक्त इव चाभातीत्यनादिरियमविद्या, नास्त्येव तत्र कारणगवेषणाहेतु । अविद्याया स्वभाव एव ह्येष, यदविद्यमान वस्तु प्रत्युपस्थाप्य तदपेक्षया आत्मान परिच्छिन्नमिवापाद्य स्वप्रत्युपस्थापितविषयविषये शुभाशुभदृष्टिमुद्भाव्य तस्मिन्नुपकारकापकारकत्वविकल्पनम्, आत्मनि च राग द्वेषोत्थापनम् तदनुगुणक्रियाया प्रवर्तन चेति । अविद्या तु स्वयमव्यक्तैव सर्वस्यास्य व्यवहारस्य निर्वोढ्री, अक्रमेऽपि व्यवहारे सक्रमत्वप्रदर्शिनी, आत्मनि ज्ञातृत्व विषयेषु तत्प्रयुक्तम् इदबुद्धिविषयत्व ज्ञेयत्व च जनयति, आत्मनि कर्तृत्व विषयेषु तत्तत्क्रियाप्राप्यत्वम्, आत्मनि भोक्तृत्व विषयेषु भोग्यत्वम्, आत्मन्यहबुद्धिम् प्राप्तभोग्येषु ममत्वबुद्धि चोत्पादयति । तथा च यत्र विषयप्रधानैव बुद्धिर्भवति, तत्र इषुकारन्यायेन विषयव्यापृतबुद्धित्वेनैव विनियोगात्, यत्र च कामक्रोधादिवेगातिशयेन समोहप्राप्ति, तत्रापि प्रसुप्तसर्वेतरवृत्तित्वात्, नात्मन्यह

बुद्धिर्दुर्ललक्ष्याविष्क्रियते । यत्र पुन स्वात्मानमेव प्रधानीकृत्य विमर्ष्टुं प्रवर्तते लोक, तत्र नियमेनाहप्रत्ययोन्मेषो भवति 'स्थूलोऽहम्', 'चक्षुष्मानहम्', 'सकल्पवानहम्', 'निश्चयवानहम्', 'सिद्धोऽहम्', 'सुख्यहम्'–इत्यादिरूपेण । तदेव देहेन्द्रियमनोबुद्ध्यहङ्कारेषु सामान्येन अहमतिलक्षणाध्यास एवाविद्या, विशेषेण देहादिष्वहबुद्ध्यादयस्तु क्वाचित्का । अस्मत्प्रत्ययगोचरत्व तु भाष्योक्तम् अनादिसाद्यहमति-साधारणमिति सर्वमनाकुलमिति ॥

अत्रैव प्रसङ्गात् साक्ष्यहमोरन्योन्याध्यासविषयकष्टीकाभिप्रायोऽपि विमृश्यते –

(६) यदि युष्मदर्थस्यैव प्रत्यगात्मन्यध्यास स्यात्, प्रत्यगात्मा न प्रकाशेत । न हि शुक्तौ रजताध्यासे शुक्ति प्रकाशते, प्रकाशते चेह चैतन्यमहङ्कारादौ । तथा यदि चैतन्यस्यैव अहङ्कारादावध्यासो भवेत्, तदा नाहङ्कारप्रमुख प्रपञ्च प्रकाशेत । तदुभय मा भूदित्यनुभवमेवानुसरन्नाह 'त च प्रत्यगात्मान सर्वसाक्षिण तद्विपर्ययेणान्त करणादिष्वध्यस्यति' इति ॥ प ३५, ३६

अत्र वय पश्यामो नेय समीचीना युक्तिरिति । यत्र यदध्यस्यते, तत्राध्यस्तमेव भासते, न तु सर्वथा तद्विकल्पास्पदम् इति नायमेकान्त । शुक्तिरजतस्थलेऽपि 'इद रजतम्' इति शुक्तेरिदमशस्याध्यस्तरजतेन सह सामानाधिकरण्येन प्रतिभासदर्शनात् । मुखप्रतिबिम्बस्य हि आदर्शानुवि-धायित्व मुखे अध्यस्यते बालै, अथ च मुख प्रतिबिम्बव्यतिरेकेण भासत एवेति । अपि च यत्राध्यस्यते तन्न प्रकाशते इति चेन्नियम, तर्हि उभयत्रा-प्यध्यासस्वीकारात् उभयोरप्यात्माहमोरप्रकाश एव किमिति न प्रसज्यते? –इति प्रष्टव्यो भवेत् सिद्धान्ती । अथानुभवानुसारीद कल्पनमित्यचोद्यो भवतीतरेतराध्यास इति, तर्हि केवलम् अनुभव एव प्रदर्श्यताम् । किमनुभवाननुसारिण्या युक्त्या? तस्मान्नायं विवक्षितोऽशोऽत्र । किं तर्हि, 'सत्यानृतमिथुनीकरणमध्यास', 'यत्र यदध्यास, तत्कृतेन दोषेण

गुणेन वा अणुमात्रेणापि स न सबध्यते' इति चोक्तम्। तदुभयमिह प्रदर्श्यते 'एवमहप्रत्ययिनमशे [illegible] प्रत्यगात्मन्यध्यस्य त च प्रत्यगात्मान सर्वसाक्षिण तद्विपर्ययेणान्त करणादिष्वध्यस्यति' इति। एव हि साक्षिणि अहम कर्तृत्व विकारित्व च, साक्षिण प्रत्यक्त्व चैतन्य च अहमादिषु चाध्यस्यमान मिथ्यैव, न तेनाध्यासेन साक्षिणि विकारदोषो वा, अहमादिषु चैतन्यगुणो वा वस्तुवृत्तेनैव भवतीति स्फुटित भवति। तथा ह्यन्यत्रोक्तम् –

(१) एकाधिकरणत्व घटादिविशेष्याभावे न युक्तमिति चेत्। न। 'इदमुदकम्' इति मरीच्यादौ अन्यतराभावेऽपि सामानाधिकरण्यदर्शनात्। गी भा २-१६, पा १५

[अत्र 'सन घट' इत्यत्र सद्बुद्धि सत्यभूतात्मविषया घटबुद्धिस्तु अनृतरूपघटविषया, यथा [illegible] इत्युक्तम्॥]

(२) यत्र यस्यावभासस्तु तयोरेवाविवेकत।
जानातीति क्रिया सर्वो लोको वक्ति स्वभावत॥
बुद्धे कर्तृत्वमध्यस्य जानातीति ज्ञ उच्यते।
तथा चैतन्यमध्यस्य ज्ञत्व बुद्धेरिहोच्यते॥

उप १८-६४, ६५, पा ३७५, ३७६

[ज्ञानकर्तृत्व साक्षिणि मिथ्या, चिदाभासत्वमप्यहमि दृश्यमान मिथ्या॥]

बौद्धैस्तु प्रत्ययैरेव क्रियमाणैश्च चिन्निभै।
मोहिता क्रियते ज्ञानमित्याहुस्तार्किका जना॥ उप १८-६८

[आत्मनि ज्ञानादिविकारा जायमाना इव मिथ्यैवाध्यस्यन्ते, अहमि च चिन्निभत्व मिथ्यैवाध्यस्यते॥]

इति च॥

## अध्यासदृष्टान्ताः पञ्चपादिकायाम् –

१४४ 'तेनान्त करणोपरागनिमित्त मिथ्यैव अहकर्तृत्वमात्मन स्फटिकमणेरिवोपधाननिमित्तो लोहितिमा' (प २०) इत्युक्त्वा एतत्प्रसङ्गेन

कथ ब्रह्मणि मिथ्याजीवत्वप्रतिभास ? – इत्येतद्दर्शयितुम् स्फटिक प्रतिबिम्ब–रज्जुसर्प–घटाकाशदृष्टान्ता समुदाहृता ।

(१) स्फटिके जपाकुसुमसान्निध्येन प्रतीयमानो लोहितिमा मिथ्या। न हि स्फटिकप्रतिस्फालिता नायनरश्मयो जपाकुसुमस्य लौहित्य ग्राहयन्ति कल्पयितु शक्यते । न च रूपमात्रे चाक्षुष प्रत्ययोऽस्ति। न च जपा कुसुमप्रभाव्याप्तत्वात् स्फटिकोऽपि लोहित इवाभातीति युक्तम्। अनुपपत्ते । कुसुमप्रभाया एवाभावाच्च । तदेव स्फटिकमणाविव, चिदात्मन्य प्यहङ्कारोपराग ॥ प ३१ लिखितस्य सार ।

(२) 'यत्पुनर्दर्पणजलादिषु मुखचन्द्रादिप्रतिबिम्बोदाहरणम्, तदहङ्कर्तु-रनिदमशो बिम्बादिव प्रतिबिम्ब न ब्रह्मणो वस्त्वन्तरम्, कि तु तदेव तत्पृथगवभासविपर्ययस्वरूपतामात्र तु मिथ्येति दर्शयितुम्। कथ पुनस्तदेव ? तदेकलक्षणतावगमात् ॥

अत्राह भवतु न वस्त्वन्तरम्। तदेव तदिति तु न क्षम्यते। शुक्तिका-रजतस्य मिथ्यारूपस्यापि सत्यरजतैकरूपावभासित्वदर्शनात् । मैवम्। तत्र हि बाधदर्शनान्मिथ्याभाव, नेह स बाधो दृश्यते । ननु तत्त्वमसि वाक्याद् बाधो दृश्यते । मैवम् । तत्र 'तत् त्वम्' इति बिम्बस्थानीय ब्रह्मस्वरूपता प्रतिबिम्बस्थानीयस्य जीवस्योपदिश्यते । अन्यथा न 'तत् त्वमसि' इति स्यात्, कि तु 'न त्वमसि' इति भवेत्, 'न रजतमस्ति' इतिवत् । किञ्च शास्त्रीयोऽपि व्यवहार प्रतिबिम्बस्य पारमार्थिकमेव बिम्बैकरूपत्व दर्शयति । न वय विच्छेदावभास पारमार्थिक ब्रूम, कि त्वैकत्वम्। विच्छेदस्तु मायाविजृम्भित । जीव पुन प्रतिबिम्ब-कल्प सर्वेषा न प्रत्यक्षश्चिद्रूप, नान्त करणजाड्येनास्कन्दित । स च अहकर्तृत्वमात्मनो रूप मन्यते न बिम्बकल्पब्रह्मैकरूपताम् । अतो युक्त-स्तद्रूपतावगमे मिथ्यात्वापगम ॥ प २१, २२, २३

(३) ननु तत्र विभ्राम्यतो विभ्रमहेतुर्दर्पणालक्तकादिपरमार्थवस्तु-सनिहितमस्ति। न तथेह किञ्चित् सर्वत्रैव चिद्विलक्षणे विभ्रमविलासाभि मानिन इति मा भूदाशङ्केति रज्जुसर्पमुदाहरन्ति ॥

ननु तत्रापि यदि नामेदानीमसनिहित सर्पस्तथापि पूर्वनिर्वृत्ततदनुभव-सस्कार समस्त्येव। बाढम्। इहापि, अहङ्कर्तृतातत्सस्कारयोर्बीजाङ्कुरयो-रिवानादे कार्यकारणभावस्य वक्ष्यमाणत्वात्, सस्कारो विभ्रमहेतुर्विद्यते ॥

(४) यद्यपि अनिर्वचनीयतयैव अरुणादिना स्फटिकादे सावयवत्वेन सभेदयोग्यस्यापि असभेदावभास सिद्ध, तथापि तदासङ्गेन स्फटिक प्रतिबिम्बमुत्प्रेक्ष्यते। रज्ज्वा पुन सर्पबुद्धिरेव, न तत्सम्भिन्नत्वम् असम्भिन्नत्व वा तस्या। तेन असङ्गता आत्मनो न स्पष्ट दर्शितेति तदर्थं घटाकाशोदाहरणम्। तत्र हि तत्तत्परामर्शाद् ऋते न भेदरूपकार्यसमाख्या स्वगता दृश्यन्ते॥ प २४

अत्र यद्यपि 'एतच्च सर्वमुदाहरणजात श्रुतितन्न्यायानुभव सिद्धस्य तदसभावनापरिहाराय, बुद्धिसाम्यार्थं च, न वस्तुन एव साक्षात् सिद्धये' इति टीकाकारैरुक्तम्, तथापि दृष्टान्तानामुपादान कीदृश साम्यमङ्गीकृत्य दृष्टान्तदार्ष्टान्तिकयोरित्यत्र भाष्यटीकयोर्वैकिञ्चिद्वैलक्षण्य मपि दृश्यते। अतष्टीकोक्तदृष्टान्तविमर्शनमत्र किञ्चिन् क्रियते –

**स्फटिकनिदर्शने** तावत् अनिवचनीया अरुणिमा – इत्येतद् भाष्ये कुत्रापि नोक्तम्।

(1) यथा शुद्धस्य स्फटिकस्य स्वाच्छ्य शौक्ल्य च स्वरूप प्राग् विवेक ग्रहणात् रक्तनीलाद्युपाधिभिरविविक्तमिव भवति। प्रमाणजनितविवेकग्रहणात् तु पराचीन स्फटिक स्वाच्छ्येन शौक्ल्येन च स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते प्रागपि तथैव सन्। तथा देहाद्युपाध्यविविक्तस्येव सतो जीवस्य श्रुतिकृत विवेकविज्ञान शरीरात् समुत्थान विवेकविज्ञानफल स्वरूपेणाभि निष्पत्ति, केवलात्मस्वरूपावगति। तथा विवेकाविवेकमात्रेणैव आत्मनोऽ शरीरत्व सशरीरत्व च॥ सू भा १-३-१९, पा ११३

[अत्र 'प्रागपि तथैव सन्' इत्युक्त्या अविवेकदशायामनिवचनीयारुणि माद्युत्पत्तिर्निषिद्धा भवति। 'विवेकाविवेकमात्रेणैव' इत्यवधारणेन, अशरीरत्वम् सशरीरत्व च विवेकाविवेकमात्रकृत न त्वनिर्वचनीयोत्पत्तितत्परिहारकृतमिति गम्यते। एवम् 'अविविक्तस्यैव सत' इतीवशब्दोऽप्यनिर्वचनीयोत्पत्तिवाद निरुणद्धि॥]

**प्रतिबिम्बदृष्टान्ते** – तत्त्वमसीति बाधो न बोध्यते, कि तु बिम्ब प्रतिबिम्बभूतयोर्जीवपरयोरैक्यमेवेत्याग्रहो नाचार्यसमत।

(2) **सिद्धादेवाहमित्यस्माद् युष्मद्धर्मो निषिध्यते ।**
**रज्ज्वामिवाहिधीर्युक्त्या तत्त्वमित्यादिशासनै ॥**

**उप १८-४, पा ३४८**

[अत्र रज्ज्वामहिधीनिषेधवत्, आत्मन्यपि स्वत सिद्धे युष्मदशबुद्धि र्निषिध्यते - इति बाधो दर्शित ॥ ]

(3) **आभास एव चैष जीव परस्यात्मनो जलसूर्यकादिवत् प्रति पत्तव्य । न स एव साक्षात् नापि वस्त्वन्तरम् ॥**

**सू भा २-३-५०, पा ३०२**

[अत्र 'न स एव साक्षात्' इति कण्ठरवेणैव 'तदेव तत्, बिम्बमेव प्रतिबिम्बम्' इत्यभ्युपगम प्रतिषिद्ध । अत्र यद्यपि चेतनांशे एकत्व समतमेव भाष्यकाराणाम्, तथापि जीवत्व कल्पितमित्यत्रैव तात्पर्यमिति न विरोध । कल्पितजीवस्यैव हि ब्रह्मैक्यनिषेध इति ॥ ]

(4) **परस्यादु खित्वे, अन्यस्य च दु खिनोऽभावे दु खोपशमनाय शास्त्रारम्भानर्थक्यमिति चेत् । न । अविद्याध्यारोपितदु खित्वभ्रमापोहार्थ त्वात्, आत्मनि प्रकृतसख्यापूरणभ्रमापोहवत् । कल्पितदु ख्यात्माभ्युप गमाच्च ।**

**प्रागुत्पत्तेरनुपलब्ध आत्मा पश्चात् कार्ये च सृष्टे व्याकृते बुद्धे अन्तरुपलभ्यमान, सूर्यादिप्रतिबिम्बवत् जलादौ, कार्यं सृष्ट्वा प्रविष्ट इव लक्ष्यमाणो निर्दिश्यते 'स एष इह प्रविष्ट' इति ॥**

**बृ भा १-४-७, पा ६५८ ।**

[अत्र दशमदृष्टान्तेन स्वात्मनोऽदशमत्वभ्रान्तिनिवर्तकत्व शास्त्रस्य, कल्पितदु ख्यात्मानमुद्दिश्य शास्त्रप्रवृत्ति -इति पक्षद्वयस्यापि अभ्युपगमो दृश्यते । एतस्मिन् कल्पे कल्पितजीवापबाधेन परमात्मत्वोपदेश इति पक्षोऽप्यङ्गीकृतो भवतीति स्पष्टम् ॥ ]

**रज्जुसर्पदृष्टान्तेऽपि** यदुच्यते अहङ्कर्तृतातत्सस्कारयोर्बीजाङ्कुरयोरिवानादे कार्यकारणभावात्, सस्कारो विभ्रमहेतुर्विद्यते' इति । तत्र यदि 'पूर्वदृष्ट स्मृतिरूप' इति भाष्यव्याख्याप्रकारेण कारणत्रितय जन्यत्व विवक्षितम्, तन्न भाष्ये कुत्रापि दृष्टमित्युक्तम् । अनिर्वचनीय

सर्पोक्तिश्च प्रत्युक्तैव (ख १३७) इति न वक्तव्यमवशिष्यते । अतोऽत्र वाक्यद्वयसमुदाहरणेनैव तुष्याम –

(५) न त्वहिबुद्धिकाले तदपगमकाले च वस्तुन कश्चिद्विशेष स्यात् ॥ सू भा १-४-६, पृ १५४

[अनिर्वचनीयोऽहि समुत्पन्नोऽहिबुद्धिकाले इति नोक्तमत्र ॥ ]

(6) रज्जुसर्पो यथा रज्ज्वा सात्मक प्राग्विवेकत ।
अवस्तुसन्नपि ह्येष कूटस्थेनात्मना तथा
आत्माभासाश्रयश्च उप सा ॥ १८-४-६४७, पा ३६७

[विवेकात् प्रागपि रज्जुसर्पो रज्ज्वात्मक एव यथा, तथा आत्माभासाश्रयोऽहङ्कारोऽपि आत्मनैवात्मवान इत्यर्थ । अत्रापि रज्जुव्यतिरिक्त प्रातिभासिक सर्पो नाङ्गीकृत ॥ ]

## अध्यासाविद्ययोरैक्यम् –

१४५ **'तमेतमेवलक्षणम् अध्यास पण्डिता अविद्येति मन्यन्ते । तद्विवेकेन च वस्तुस्वरूपावधारण विद्यामाहुः '** इति भाष्यम् । तत्र टीका –

(१) **अध्यस्तात्तद्रूपसर्पविलयन कुर्वत्, वस्तुस्वरूप रज्जुरेवेत्यव धारयद् विज्ञान 'विद्या' इति प्रसिद्धमेव लोके ब्रह्मविदो वदन्ति ॥ प ३०**

[यद्येव लोके प्रसिद्धमेव ज्ञान विद्या, तर्हि किमिति 'सर्प विलापयत्' इत्यर्थाध्यासविनाशकृत्त्वविशेष उपादीयते ? न हि रज्जुज्ञान सर्पज्ञाननिवर्तन व्यतिरेकेणापि सर्पविलयने व्याप्रियमाण दृष्टम् । अस्य प्रश्नस्य टीकायामुत्तर न दृष्टम् । अथ मतम् सर्पज्ञानबाधनमेव सर्पविलयनम् इति, तर्हि अर्थाध्यासो लक्षणवाक्यात् साक्षादेवोच्यते, ज्ञानाध्यासस्तु अर्थात् इत्युक्त हीयते । भाष्ये तु अविवेकेनाध्यास , विवेकेन वस्तुस्वरूपावधारण विद्या – इति ज्ञानविषयत्वेनैव विद्याविद्यावर्णनेनोपक्षीणमिति स्पष्टमेव ॥ ]

(२) **" यद्येवमध्यास इति प्रक्रम्य पुनस्तस्याविद्याभिधानव्याख्याने यत्नगौरवात् वरम् 'अविद्या' इत्येवोपक्रम कृत " इत्याक्षेपमुत्थाप्य टीकायाम् इत्थ समाधि कृत –**

**नैतत् सारम् । आदावेव अविद्येत्युच्यमाने आच्छादकत्वं नाम यत् तस्यास्तत्त्वम् तदेवाभिहितं स्यात्, नातद्रूपावभासितया अनर्थहेतुत्वम् । अतोऽतद्रूपावभासित्वम् अध्यासशब्देन प्रकृतोपयोगितया उपक्षिप्य पुनरस्य अविद्याशब्दतया विद्यामात्रापनोदनार्हत्वं दर्शनीयम् ॥ प ३०**

[यद्येवम् तर्हि किमिति 'मिथ्याज्ञाननिमित्त' इत्येतत् मिथ्यारूपाविद्याशक्त्युपादान -इति व्याख्यातम् ? न हि स्वयमेव स्वोपादानक इति वर्णितस्वरूपवैशद्याय कल्प्येत । तस्मान्नेदं सम्यगुत्प्रेक्षितमिति भाति । 'अथातो ब्रह्मजिज्ञासा' इति सूत्रे ब्रह्मज्ञानार्थं विचारः कर्तव्य इत्युपदिष्टम् ज्ञानस्य परमपुरुषार्थहेतुत्वं च निर्दिष्टम् । अतोऽर्थात्, ज्ञानबाध्याज्ञानमात्रं बन्धहेतुरित्युक्तं भवति । तच्चाज्ञानं किंस्वरूपम् ? किं तन्त्रान्तरसम्मतैवाविद्या, अहोस्विदन्यादृशी ?-इत्याकाङ्क्षायाम्, विषयविषयिणोरन्योन्याध्यासलक्षणा मिथ्याज्ञानमिथुनीकरणरूपा – इयमविद्येत्येव ज्ञापनार्थं भाष्ये आदौ अध्यासशब्देनोपात्तस्याज्ञानस्य पुनरिह श्रुतिस्मृतिसिद्धाविद्याशब्देनाभिधानमित्युत्पश्याम । न चैवमविद्याया आच्छादकत्वं नाभिहितं स्यात्, यतः – 'यथा गृह्यमाणाया अपि शुक्तिकाया विपर्ययेण रजताभासाया अग्रहणं विपरीतज्ञानव्यवधानमात्रम् तथा ग्रहणं ज्ञानमात्रमेव । विपरीतज्ञानव्यवधानापोहनार्थत्वाज्ज्ञानस्य । एवम् इहापि आत्मनोऽलाभोऽविद्यामात्रव्यवधानम् । तस्माद् विद्यया तदपोहनमात्रमेव लाभः, नान्यः कदाचिदप्युपपद्यते ॥' (बृ भा १-४-७, पा ६६६) इत्यात्मनोऽध्यासलक्षणाविद्यात्मव्यवहितत्वाख्यते । न ह्यात्मानात्मनोरन्योन्यात्मकतादर्शनव्यतिरिक्ता काचिदविद्या भाष्योररीकृता दृश्यते क्वापीति ॥]

**प्रमाणव्यवहारः –**

१४६ **'तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि । कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि, शास्त्राणि चेति ? उच्यते । देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः' इति च भाष्यम् । अत्र टीका –**

**(१) बाढम्, उक्तलक्षणा अविद्या प्रत्यग्दृश्यपि सम्भवेत् । नैतावता तत्सद्भाव सिध्यति । तेन निदर्शनीयः सः । प्रमातारमाश्रयन्ति प्रमाणानि ।**

तेन प्रमाता प्रमाणानामाश्रय , नाविद्यावान् । अनुपयोगादित्यभिप्राय । अथवा कथमविद्यावद्विषयाणि प्रत्यक्षादीनि शास्त्राणि च प्रमाणानीति सबन्ध । अविद्यावद्विषयत्वे सति आश्रयदोषानुगमात् अप्रमाणान्येव स्यु - इत्याक्षेप ॥ प ३१

अत्र मुद्रितपुस्तकेषु नैकेषु यद्यपि 'नैतावता तसभव सिध्यति' इत्येव पाठ समादृत, तथापि 'तत्सद्भाव' इति पाठ एवास्माभिर्वृत, प्रतिनाटीकानुसारेण । तत्र हि प्रतिज्ञा –

'आह-कोऽयमध्यासो नाम ? इत्याद्यारभ्य अध्याससिद्धिपर भाष्यम् । तत्रापि 'कथ पुनरविद्यावद्विषयाणि ?' इत्यत प्राक् अध्यासस्वरूप तत्सभावनाय तदादि तत्सद्भावनिर्णयार्थम्-इति विभाग' ॥ प ५६

इति । तदेव स्थिते यत्तावत् टीकाया भाष्यव्याख्यानम् –

(1) 'प्रमाता प्रमाणानामाश्रयो नाविद्यावान्, अनुपयोगात् – इत्यभिप्राय पा ३१

इति, नैतद् भाष्याभिप्रायानुगुणमिति भाति । कुत ? 'आत्मानात्मनोरितरेतराध्यास पण्डिता अविद्येति मन्यन्ते, तद्विवेकेन वस्तुस्वरूपनिर्धारण विद्येति च' इति खल्वुक्त पूर्वस्मिन् ग्रन्थे । तत्र अध्यासस्वरूपमुक्त तत्सभावना च, न तु 'अध्यस्य नैसर्गिकोऽय व्यवहार' इति प्रतिज्ञातस्य सिद्धि प्रदर्शिता । तस्मादत्रा यासलक्षणाविद्यासद्भाव एवाक्षेपपरिहाराभ्या निदर्शयितव्य । तथा चोक्त टीकायामपि 'नैतावता तत्सद्भाव सिध्यति तेन स निदर्शनीय' – इति । तत्र कथमिदमप्रकृतम् आक्षिप्यते परिह्रियते च 'प्रमातारमाश्रयन्ति प्रमाणानि नाविद्यावन्तम् अनुपयोगात्' इति ? न हि प्रमाणवृत्त तदाश्रयत्व वा इह प्रकृतम्, येन तदाक्षिप्य परिह्रियेतेति । एवम् –

(2) 'कथमविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च ?'

इत्याक्षेपोऽपि न प्रकृतविषयक । न हि प्रत्यक्षादीना शास्त्राणा च प्रामाण्यमिह सिषाधयिषितम्, कि तु तेषामविद्यापुर सरत्वमेवेति ॥

अत एवोपसंहारे यदुच्यते –

(3) तेन यद्यपि प्रमातृत्वशक्तिसन्मात्र ( सत्तामात्रम् ? ) प्रमाण प्रवृत्तौ निमित्तम् तदेव तु अविद्या यासविलसितम् – इत्यविद्यावद्विषयता प्रमाणानामुच्यते । तथा निरपेक्षाणा स्वसामर्थ्येन अर्थसिद्धि विदधता बाधानुपलब्धे प्रामाण्यम् अविद्यावद्विषयत्व च विधिमुखोपदर्शित न नेति शक्यमपह्नोतुम् । दोषस्त्वागन्तुक एव मिथ्यात्वे हेतु न नैसर्गिक । तथोपलब्धे । न च सर्वसाधारणे नैसर्गिके दोषबुद्धि । तथा हि क्षुत्पिपासोपजनिते सतापे शश्वदनुवर्तमाने जाठराग्निकृतविकारे अन्नपान निष्यन्दे वा न रोगबुद्धिर्जनस्य । मुहूर्तमात्रपरिवर्तिनि मन्दे ज्वरे प्रतिश्याये वा अल्पकफप्रसूतावपि रोगबुद्धि , अनैसर्गिकत्वात् । अनैसर्गिक च दोषमभिप्रेत्योक्तम् ' यस्य च दुष्ट करणम् , यत्र च मिथ्येति प्रत्यय , स एवासमीचीन प्रत्ययो नान्य ' (शा भा १-१-२) इति ॥ प ३२

इति, तत्र प्रमातृत्वमविद्याविलसितमिति भाष्येऽपि दर्शनात्, स्वीकार्यम । तथा प्रमाणाना व्यवहारे बाधानुपलम्भे सति स्वार्थसिद्धिविधान दुरपह्नवम्– इति च सम्यगेव । यत्पुन सदृष्टान्तमुच्यते 'नैसर्गिकदोषो न प्रमाण-मिथ्यात्वहेतु ' इति, तदनवसरप्राप्तम् इति भाति । न हि यथा दृष्टान्ते क्षुत्पिपासादिसतापानुवृत्तिस्तथा, अविद्यादोषानुवृत्तिर्व्यवहारे सर्वसाधारण्ये-नानुभूतचरी, येन तस्या दोषबुद्धिर्नोत्पद्यत इति परिहार अन्विष्येत । अव्यक्तैव ह्यविद्या जीवभाव प्रमातृप्रमेयादिव्यवहार च प्रयोजय-तीत्यवोचाम । न च प्रमाणप्रमेयव्यवहारो नाम प्रत्यक्षादिप्रमाणेषु तत्त्वेन निश्चय तार्किकाणामिव, येन तत्प्रामाण्यविघातकृद्दोषादिचिन्ता अर्थवती स्यात् । किं तु प्रमेयेषु स्वाभाविकप्रवृत्तिनिवृत्तिलक्षण एव । 'पश्वादिभि श्चाविशेषात्' इति भाष्यात् । तस्मादध्यासापराभिधानीवभागिन्येवाविद्या नैसर्गिकी प्रमाणव्यवहारस्यात्मलाभे तस्य सत्यत्वबुद्ध्युद्भावने च हेतुरिति न तत्र चोद्यपरिहारावुपपन्नौ इति पुष्कलम् । तथा हि भाष्यम् –

(१) ' सर्वव्यवहाराणामेव प्राग् ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्ते । स्वप्नव्यवहारस्येव प्राक् प्रबोधात् । यथा सुप्तस्य प्राकृतस्य जनस्य

स्वप्न उच्चावचान् भावान् पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक् प्रबोधात् न च प्रत्यक्षाभासाभिप्रायस्तत्काले भवति, तद्वत्' इति ॥
सू भा २-१-१४, पा १९८

इति । करणदोषादिगवेषणं तु व्यवहारे भवतु, अत्र पुनः परमार्थज्ञानेन बाध एवाल मिथ्यात्वनिश्चयाय । तथा हि भाष्योदाहृतं साम्प्रदायिकवचनं सार्थकं भवति –

(२) 'देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥
सू भा १-१-४, पा २४

इति ॥

## प्रमेयापरोक्ष्यम् –

१४७ वेदान्तदर्शने प्र गमेयन्यवहारस्य सर्वस्याप्य यास पुरःसरत्वात्, तदपवादेन नित्यशुद्धबुद्धमुक्तब्रह्म ... एव तात्पर्यं वेदान्तानामिति हेतोः सूत्रभाष्ययोर्न क्वचिदपि प्रमाणवृत्तपरिशीलनं कृतम् । प्रायशस्तत्तद्दर्शनविचारे प्रवृत्ते 'परमतमप्रतिषिद्धमनुमतं भवति' इति न्यायमनुसृत्य तत्समतरीत्यैव प्रमाणविचारः परिशील्यत इति प्रसिद्ध मेवैतत् । तत्र टीकायामेव तु प्रप्रथमं प्रमाणपरिशीलनप्रक्रिया काचि द्विशिष्टा समानीता । अत स्मेह वाचकाना विमर्शार्थं समुदाह्रियते –

तत्रैवंभूतस्य अहङ्कर्तुरिदमंशस्य ज्ञानसंशब्दितो व्यापारविशेषः सकर्मत्वात् कर्मकारकाभिमुखः स्वाश्रये किञ्चिदवस्थाविशेषम् आदधाति । स्वाश्रयविकारहेतुत्वात् क्रियायाः । स च प्राप्नोतिक्रियाहितकर्तृस्थविशेष-वत्कर्मसंबन्धः, 'ज्ञातुर्ज्ञेयसंबन्धः' इति गीयते । तेन विषयविशेष संबद्धमेव अन्तःकरणं चैतन्यस्यावच्छेदकम् । कर्मकारकमपि प्रधानक्रिया सिद्धौ स्वव्यापाराविष्टचैतन्यविवर्तत्वात् प्रधानक्रियाहितप्रमात्रवस्थाविशेषाव च्छिन्नापरोक्षैकरूपाम् अपरोक्षताम् अभिव्यनक्ति । ततश्च आत्मनोऽन्तःकरणावस्थाविशेषोपाधिजनितो विशेषो विषयानुभवसंशब्दितः, विषयस्था परोक्षैकरसः 'फलम्'-इति क्रियैकविषयता फलस्य युज्यते । एवं चाहङ्कर्ता

स्वाशचैत बलेन व्यापाराविष्टतया च 'प्रमाता इति, बुद्धिस्थमर्थं पुरुषश्चेतयत इत्युच्यते । तत्र च प्रमातु स्वयज्योतिषो विषयसबन्ध सजातविशेषाऽनुभव अपरोक्षतया सर्वान् प्रत्यविशिष्टोऽपि कारकाणा सभूय प्रधानक्रियाराधनत्वात, येन सह साधनम्, तन्निष्ठ एव नान्यत्र । कर्मकारकमपि येन सह साधनम् तस्यैवापरोक्षम्, गन्तृसबन्ध इव ग्रामस्य ॥ प २४

अत्र प्रमातृत्व चिदचिदशगर्भितमित्यत्र भाष्यसवादोऽस्ति । 'देहेन्द्रियादिष्वहममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्ते' इत्युक्ते । आत्मनोऽन्त करणस्थविशेषो विषयानुभवसशब्दित, विषयस्था परोक्षैकरस फलम्' इति यदि चैतन्याशमप्यन्तर्भाव्य, तर्हि तदप्यस्तु । अनन्तर्भाव्य तु तस्य फलत्वमसभवि । न ह्यन्त करणवृत्तिविशेषलाभार्थमेव कश्चित् प्रमाण व्यापारयति । अत एव हि भाष्यम् –

(1) 'अवगतिपर्यन्त ज्ञान सन्वाच्याया इच्छाया कर्म । फलविषयत्वादिच्छाया । ज्ञानेन हि प्रमाणेन अवगन्तुमिष्ट ब्रह्म । ब्रह्मावगतिर्हि पुरुषार्थ । नि शेषससारबीजाविद्याद्यनर्थनिबर्हणात्' ॥ सू भा १-१-१

इति ब्रह्मजिज्ञासाफलम् अवगतिमेवाह । अवगतिस्वरूप चैतन्यमेवेति तु स्फुटीकृतमन्यत्र –

(2) 'अवगति प्रमाणाना फलम्, कूटस्थनित्यात्मज्योति स्वरूपा इति च विप्रतिषिद्धम्' इत्युक्तवन्तम् आह – न विप्रतिषिद्धम् । कथ तर्हि, कूटस्थनित्यापि सती प्रत्यक्षादिप्रत्ययान्ते लक्ष्यते । तादर्थ्यात् । प्रत्यक्षादिप्रत्ययस्य अनित्यत्वे, अनित्येव भवति । तेन प्रमाणाना 'फलम्' इत्युपचर्यते ॥ उप गद्य पा १०१

इति । एव प्रमातु स्वरूपमपि नित्यचैतन्यरूपमेवेति परमसिद्धान्तमङ्गीकृत्यैव 'अहङ्कर्ता स्वाशचैतन्यबलेन व्यापारविशिष्टतया च प्रमाता' इति यद्युच्यते, तत्रोमिति वक्तव्यम् । अहङ्कारप्राधान्येनैवेति यदा, तदा भाष्यविरोध –

(1) 'न चैतस्मिन् सर्वस्मिन्नसति असङ्गस्यात्मन प्रमातृत्वमुपपद्यते ॥ सू भा पा ३

इत्यात्मन एव देहेन्द्रियाहम ग्रामाम्यन्त्य प्रमातृत्वोक्ते ॥

(2) 'ज्ञो नित्यचैतन्योऽयमात्मा अत एव, यस्मादेव नोत्पद्यते, परमेव ब्रह्माविकृतमुपाधिसपर्काज्जीवभावेनावतिष्ठते ॥ सू भा २-३-१८, पा २८०

इति चोक्ते । अन्यत्राप्येतत् स्फुटीकृतम् -

(3) 'यस्य प्रमित्सा स एव प्रमाता अभ्युपगम्यते'

इति सोपाधिकत्वमुक्त्वापि तदनन्तरम् -

'ननु एव सति, असति प्रमाश्रयत्वे कथ प्रमातु प्रमातृत्वम्? उच्यते । प्रमाया नित्यत्वे अनित्यत्वे च रूपविशेषाभावात् । यथा धात्वर्थस्य तिष्ठत्यादे फलस्य गत्यादिपूर्वकस्य अनित्यस्य अपूर्वस्य नित्यस्य वा रूपविशेषो नास्तीति तुल्यो व्यपदेशो दृष्ट । 'तिष्ठन्ति मनुष्या', 'तिष्ठन्ति पर्वता' इत्यादि, तथा नि यावगतिस्वरूपेऽपि प्रमातरि प्रमातृत्व व्यपदेशो न विरुध्यते । फलसामान्यात् ॥ उप गद्य पा ९४, ९५, ९६

इति नित्यचैतन्यरूपस्यैव प्रमातृत्वाभ्युपगमात् ॥

एवम्, अन्त करणावस्थाविशेषोपाधिजनितत्वेनोपचर्यमाणाया अवगतेर्व्यतिरेकेण 'विषयस्यापरोक्ष्य स्वीकारप्रक्रियाप मुपेत्यसदभिप्राय । न ह्यन्त करणवृत्त्युपलक्षितावगते पृथक् विषयस्या अपरोक्षता केनचिदनुभूयते, न च विषयसबन्ध विना प्रमातुरन्त करणे काचिदपरोक्षावगतिफलाभिव्यञ्जिका वृत्तिर्जातुचिज्जन्यत इति ॥

## वेदान्तशास्त्रप्रामाण्ये शङ्कापरिहारा:-

१४८ शास्त्रप्रामाण्यविषये इमानि टीकावाक्यानि उदाहरणमर्हन्ति —

(१) 'तत्त्वमसि इति वाक्यार्थावगमादर्वाक्, अविद्याकृत ससारम् अहमुल्लेखमाश्रित्य प्रवर्तमान शास्त्र नाविद्यावद्विषयत्व अतिवर्तते ॥ प ३४

(२) यद्यपि शब्दमात्रस्य प्रत्यक्षादिविषय एव प्रयोगो दृष्टः, व्युत्पत्ता तु कथं व्युत्पद्यत इति वाच्यम्। श्रोतृव्यवहारो हि मूलं बालानां व्युत्पत्तेः। स च श्रोतुर्ज्ञानान्तरानिमित्ततापरिशुद्धः शब्दसामर्थ्यावगमहेतुः। अतो न प्रतिपत्तुर्ज्ञानान्तरासिद्धार्थावबोधकत्वं सामर्थ्यावगमकालेऽवगतम्। तेनानवगम्यैव तद्विषयं ज्ञानं सामर्थ्यावगमः। यथावगमं च विज्ञानोत्पत्तिः। यदा पुनर्व्युत्पन्नः स स्वयं प्रयुयुक्षते परप्रतिपत्तये, तदा ज्ञानान्तरसन्निधापितं स्वसाक्षिकं विवक्षन् सामर्थ्यावगमकालेऽपि तयोः सत्तां प्रतिपद्यते केवलं न ज्ञानोत्पत्तौ तयोरुपयोगम्। तस्मात्, न शब्दस्य प्रमाणान्तरगृहीतार्थप्रकाशने सामर्थ्यं व्युत्पत्तिकाले अवगतम्, किं तु चक्षुरादिवत् अन्यनिरपेक्षो यथावगतसामर्थ्यं चशब्दो विज्ञानं जनयति। तस्मान्न प्रमेयस्य प्रत्यक्षादिविषयत्वं शब्दस्य विज्ञानजनने उपयुज्यते। अपि च अपौरुषेये शब्दे चक्षुषीव विज्ञानोत्पत्तौ अनपेक्षे कथम् अप्रामाण्यमाशङ्क्येत?

प ८४, ८५

(३) ननूक्तमाशङ्काकारणम् – स्पर्शनगोचरचित्रनिम्नोन्नतविषयस्य चाक्षुषस्य प्रत्ययस्य तत्संवादाभावादप्रमाणत्वम्। न तत्साधूक्तम्। अदुष्टकारणत्वादस्य, तस्य च तदभावात्। तथा हि – शब्दः तावदपौरुषेयत्वाददुष्टः। प्रमेयस्य पुनर्ज्ञानहेतुत्वे न प्रमाणमस्ति, शब्दस्यैव तदेकनिष्ठत्वेन तन्नियमात्। चित्रस्य तु चाक्षुषज्ञाने सामग्र्यन्तःपातिनः श्यामादिरेखासन्निवेशविशेषो दोषः। तदभावे तिमिराभाव इव सम्यग्दर्शनोत्पत्तेः। अतः प्रवर्तमानमपि प्रमाणं संवादकमेवेति नाप्रामाण्यमावहति। न च संवादलक्षणं प्रामाण्यम्, अपि तु बोधलक्षणमिति प्रमाणविदां स्थितिः। अतो यथैव विधिवाक्यानां स्वार्थमात्रे प्रामाण्यम्, एवं स्वरूपवाक्यानामपि। अनवगतार्थपरिच्छेदसामान्यात्॥ प ८५

(४) ननु विधिवाक्यानामेव प्रामाण्यं युक्तम्। क्रियार्थत्वादाम्नायस्य। न इतरेतराश्रयत्वात्। विधिवाक्यानामेव हि प्रामाण्ये सिद्धे क्रियार्थत्वमाम्नायस्य सिध्येत्, क्रियार्थत्वे च सिद्धे तेषामेव प्रामाण्यमिति। अतो यदवगमयत्याम्नायः तदर्थः सः। तस्मात् यथाकार्यमवगमयन् तदर्थः, एवम् ऐकात्म्यमप्यवगमयन् तदर्थो भवितुमर्हति॥ प ८५

(५) नन्वाम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् – इत्यक्रियार्थानां पदानामर्थशून्यत्वं शास्त्रतात्पर्यविदः आहुः। उच्यते – नैव

सूत्रकारभाष्यकारयोरभिप्रायो लौकिको वा न्याय भवद्भिरवगतो भवता। पश्यतु भवान्-'देवदत्त गामभ्याज शुक्लां दण्डेन' इति प्रवर्तकाभ्याजेति पदातिरेकिणा देवदत्तादिभूतार्थवादिनाम् अप्रवर्तकानामपि प्रवर्तकादेव वाक्याद् भूतवस्तुविषयमपि सामर्थ्यं प्रतीयते न वा? - इति। प्रतीयते चेत्, निष्प्रयोजनत्वमानर्थक्यं न निरालम्बनत्वम्। ब्रह्मात्मत्वावगति समन्वितानां तु परमपुरुषार्थफलानां कथं निष्प्रयोजनत्वम्? पृ ९५, ९६

(६) 'यद्यपि प्रवर्तकादेर वाक्यात्, भूतार्थविषयमपि सामर्थ्यं प्रतीयते तथापि नाप्रतिपन्नभूतार्थावगते सभव। क्रियार्थतयैव संसर्गाव गमात्'

इत्याशङ्क्य टीकायां प्रथमं समाधानमुक्तम् -

(1) 'वषट्कर्तुः प्रथमभक्षः', 'तस्मात् पूषा प्रपिष्टभागः' इत्येवमादौ क्रियाशून्यानां समन्वयो दृश्यते। यस्तु 'कर्तव्य' इति क्रिया सबन्ध, स समन्वयनिमित्तो न तन्निमित्तः समन्वयः। यच्च 'तद्भूतानां क्रियार्थेन समाम्नाय' इति सूत्रयामास जैमिनि, तदपि सिद्धेषु रूपादि ष्वर्थेषु वर्तमानानां सामानाधिकरण्याद्यर्थत्वेन समाम्नाय समुच्चारणम् इति। यतो दर्शितः समन्वयो विशेषणविशेष्यत्वेनापि। 'क्रियार्थेन' इति तु धर्मजिज्ञासोपक्रमात् प्रकृतोपयोगितया सूत्रितम्। तथा च भाष्यकारोऽपि 'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इति अर्थसद्भावमात्रे कथनीये 'कर्मावबोधनम्' इति प्रकृतोपयोगित्वेनैवोक्तवान्। पृ ९६

द्वितीयं तु समाधानमित्थम् -

(2) इह पुन 'तत्तु समन्वयात्' इति विशेषणविशेष्यात्मकमपि गौणमपि सामानाधिकरण्यं विहाय एकस्मिन् निरंशे चैतन्ये अधिकरणे 'तत्त्वमसि' इति समन्वयो मुख्य प्रदर्शित। तथा च भगवान् पाणिनि रव्यतिरिक्ते प्रातिपदिकार्थमात्रे प्रथमां स्मरति, नास्ति क्रियाकर्तृत्वैवाति रिक्तेऽर्थे। तेन च कात्यायनस्य अस्तिर्भवन्ति पर इति मतं नानुमन्यते। दृश्यते च 'फलिता अमी द्रुमा', 'राज्ञोऽयं पुरुष' इत्यस्तिक्रिया शून्य समन्वय। नात्रापि ये फलिता द्रुमा, ते सन्ति, 'यो राज्ञ पुरुष, सोऽस्ति' इति विवक्षितम्। अपि तु 'एते द्रुमा फलिता' 'अयं पुरुषो राज्ञ' इति सबन्धमात्रावसितं वाक्यम्, एवं सामान्यत सिद्धस्य जगत्कारणस्य सर्वज्ञत्वादिस्वभावत्वे, त्वपदार्थस्य च ब्रह्मात्मतया समन्वयो

वेदान्तवाक्यानां सिद्धं । न तत्रास्तिक्रियाया वस्तुस्वरूपान्तर्वर्तिन्या अप्यनुप्रवेशः, दूरत एव बाह्यायाः ॥ प ९६, ९७

[ " 'तत्तु समन्वयात्' इति चोदनालक्षणाद् धर्मात् तुशब्देन विशेष्य ब्रह्म समन्वयगम्यम् उक्तम् । समन्वयो हि पदार्थानां संसर्गो विनियोग , ततो ब्रह्म गम्यते, न चोदनात् -इत्यर्थः "(ब्र सि 155) - इति मण्डनवाक्येनेदं तुलयितव्यम् । एवम् अस्तिक्रियाविचारे (ब्र सि 99), जगत्कारणस्य सामान्यतोऽवगतस्य विशेषपर्यवसायित्वे च (ब्र सि 157) मण्डनग्रन्थेन तुलयितव्यमिदं वाक्यम् ॥ ]

अत्र

'अस्तिपदसहितानां परमात्मेश्वरादिप्रतिपादकवाक्यपदानां विशेषण-विशेष्यभावेन संहतिः, केन वार्यते ?' ( बृ भा १-३-१, पा ६२७ )

'अस्त्यस्मीत्यभ्युपेतत्वान्नैवमप्युपपद्यते' (वा १-३-८०)

इति भाष्यवार्तिकयोरस्तिक्रियासहितान्वयमङ्गीकृतं परित्यज्यैव किमिति ब्रह्मसिद्धिकारोक्तप्रकारेण 'फलिता अमी द्रुमाः' इत्याद्युदाहरणेनैव परितुष्टा ग्रन्थकारा इति न विज्ञायते । एवं —

भेदसंसर्गहीनत्वात् पदवाक्यार्थतात्मनः ।
दुःसंभाव्योऽत आत्मायमात्मनैवानुभूयते ॥ वा १-४-१४०८, पा ७१३

इत्यादिवार्तिकोक्तिमनादृत्यैव 'सामान्यतः सिद्धजगत्कारणत्वस्य सर्वज्ञत्वादि-स्वभावत्वे' समन्वयं वाक्यार्थत्वमेव मण्डनरीत्या स्वीकुर्वताः क आशय इत्यपि न विज्ञायते ॥

यथोद्धृतेषु टीकाग्रन्थभागेषु सर्वत्र विधिकाण्डस्थवाक्यसामान्येनैव शब्दधर्मपरिशीलनेन श्रुतेरपौरुषेयत्वोपस्थापनेन वा वेदान्तप्रामाण्यं प्रति ष्ठापितम्, न त्वनुभवारूढत्वं वाक्यजन्यज्ञानफलस्य क्वचिदादर्शितम् । यथा भाष्ये—

'कर्मफले हि स्वर्गादावनुभवानारूढे स्यादाशङ्का 'भवेद् वा न वा' इति । अनुभवारूढं तु ज्ञानफलम् । 'यत्साक्षादपरोक्षाद् ब्रह्म' (बृ ३-४-१) इति श्रुतेः, 'तत्त्वमसि' (छा ६-८-७) इति च सिद्धवदुपदेशात् ॥

सू भा ३-३-३२, पा ४०७

इत्यादिस्थलेषु । एतदपि कस्य हेतोरिति न विद्मः ॥

आत्मसाक्षात्कारः—

१४९ वेदान्तवाक्यैनैव ब्रह्मज्ञान साक्षाद् भवति वा न वा ? — इत्यत्र टीकाया नि सन्दिग्धतया कण्ठरवेण स्वाभिप्रायो न प्रकटितो ग्रन्थकारिरिति भाति । तत्रेमानि टीकावाक्यानि समालोचनीयानि —

(१) यद्यपि वाक्यार्थज्ञान शास्त्रानुग्रहात् प्रागेवोदेति, तथापि स्वोत्पत्तिसमकालसमुत्थेन सामान्यतोदृष्टनिबन्धनेन अर्थान्तरनिवेशिना समकक्षाभिमतेन ज्ञानेन विरोधात्, उन्मज्जननिमज्जनमिवानुभवत्, अस्यामवस्थाया सशयज्ञानकोटिनिक्षिप्त सत्, मीमासया शब्दशक्त्यनुसरणे सति प्रतिपक्षज्ञानस्यानुत्पत्तौ निमज्जनाभावात्, निश्चल निर्णयज्ञानमिव जातमिति लक्षणया मीमासया निणय क्रियत इत्युच्यते । न पुन साक्षान्निर्णयज्ञानहेतुत्वात् ॥ प ६९

[ अत्र वेदान्तवाक्यैरेव ज्ञानस्य समुत्पत्तेऽपि कारणान्तरात् सशय कोटिनिक्षिप्तत्वे सति तन्निवारणेन निर्णयज्ञानमिव कुवत्, मीमासाशास्त्र सप्रयोजन भवतीत्युक्तम् ॥ ]

(२) प्रकृते पुनर्विषये विद्या उदितापि न प्रतिष्ठा लभते । असभवना विपरीतभावनाभिभूतविषयत्वात् । तथा च लोके यस्मिन् देशे काले च ' इद वस्तु स्वरूपत एव न सभवति ' इति दृढभावितम् यदि तत् कथञ्चिद् दैववशादुपलभ्येत, तदा स्वयमीक्षमाणोऽपि तावन्नाध्यवस्यति यावत् तत्सभव नानुसरति । तेन सम्यग्ज्ञानमपि स्वविषये अप्रतिष्ठितमनवासमिव भवति । तेन तत्स्वरूपप्रतिष्ठायै तर्कं सहायीकरोति ॥

(३) क्व तर्हि तर्कस्योपयोग ? विषयासभवाशङ्काया तथानुभव-फलानुत्पत्तौ तत्सभवप्रदर्शनमुखेन फलप्रतिबन्धविगमे । तथा च तत्त्वमसि वाक्ये त्वपदार्थो जीव तत्पदार्थब्रह्मस्वरूपताम् आत्मनोऽसभावयन्, विपरीत च रूप मन्वान, समुत्पन्नेऽपि ज्ञाने तावन्नाध्यवस्यति यावत् तर्केण विरोधमपनीय तद्रूपताम् आत्मनो न सभावयति । तत प्राग् विद्या उदितापि वाक्यादनवाप्तेव भवति । अवाप्तिप्रकारश्च वेदान्तेष्वेव निर्दिष्ट. साक्षादनुभवफलोद्देशेन ॥ प ३९

[ अत्रापि ज्ञानस्य समुत्पत्तावपि, असभावनादिनिवृत्त्यर्थं तर्क इत्युक्तम् ॥ ]

(४) अवगतिरिति साक्षादनुभव उच्यते । ज्ञान तु परोक्षे अनुभवानारूढेऽपि सभवति । सनिहितेऽपि असभावितविषये अनवसितरूपम् इत्युक्त पुरस्तात् ॥ प ६६

[अत्रानवसितरूप ज्ञान किं परोक्षम् उतापरोक्षम् ? सनिहितविषयत्वादपरोक्षमिति शक्य वक्तुम्, अनवसितरूपत्वात् परोक्षमेवेति च ॥ ]

'वेदान्तवाक्यमीमासा तदविरोधितर्कोपकरणा' (सू भा १-१-१, पा ६) इति भाष्यव्याख्यानप्रसङ्गेनेद लिखित टीकायाम् –

(५) तर्को युक्ति, उपकरणम्, इतिकर्तव्यता । सहकारिकारणमिति यावत् । अथवा तर्कोऽनुमान वेदान्तैरविरुद्धम् । तदर्थप्रतीतेरेव दृढत्वहेतुतया उपकरणमस्या इत्यर्थ ॥ प ७६

[अत्र तर्कशब्दस्यासभावनादिनिवर्तकयुक्तिपरत्वम्, वाक्यार्थप्रतीतिदार्ढ्यार्थानुमानपरत्व वा – इत्युक्तम् ॥ ]

'श्रुत्यादयोऽनुभवादयश्च यथासभवमिह प्रमाणम् । अनुभवावसानत्वात्, भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य' (सू भा १-१-२, पा ८) इति भाष्यव्याख्यानावसरे टीका –

(६) 'श्रुति पदान्तरनिरपेक्ष शब्द' । आदिशब्देन लिङ्गवाक्यादय शब्दप्रकारा गृह्यन्ते । न त एव ब्रह्मणि प्रमाणम्, किं तु, अनुभवादयोऽपि । तत्र हेतुमाह – 'अनुभवावसानत्वात् भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य' इति । सिद्धे वस्तुनि सभवत्यनुभव, तदवसाना आकाङ्क्षानिवृत्तिर्यत ॥ प ७९

(७) इह तु सिद्धस्य साक्षाद्रूपेण विपर्यासगृहीतस्य सम्यग्ज्ञानेन साक्षात्करणमन्तरेण न मिथ्याज्ञानोदयनिवृत्ति । द्विचन्द्रादिषु तथा दर्शनात् ॥ प ८०

[ अत्र साक्षाद्रूपस्य मिथ्याज्ञानस्य ब्रह्मवस्तुसाक्षात्काररूपानुभव विना अनिवृत्ति – इत्युक्तम् ॥ ]

(८) नन्वेव सति कथ युक्तिरब्रह्मविषया सती तद्विषयाणा वाक्यानामुपकरण भवति ? उच्यते – ब्रह्मपरेषु वाक्येषु मृदादिदृष्टान्तैर्युक्त्य

उपन्यस्यन्ते । ताश्च विधिप्रतिषेधवाक्ययो प्रवर्तकत्वनिवर्तकत्वाकाङ्क्षित स्तुतिनिन्दार्थवादवत् स्वरूपवाक्यस्य फलपर्यन्तापेक्षितसभावनार्थवादता प्रतिपद्यमाना, तत्र श्रुतिमाहात्म्ये वर्तन्त इत्युच्यते ॥ प ८१-

[अत्र युक्तीना सभावनामात्रसपादनेन साक्षात्करण हेतुत्वम् इत्युक्तम् । अतो वाक्येन न साक्षाज्ज्ञान जातमित्यपि व्याख्यातु शक्यते । मृदादिदृष्टान्ता 'कथ स आदेशो भवति ?' इति प्रश्ननिर्णयार्थमुपन्यस्ता कथमिव वाक्यार्थ सभावने विनियुज्यन्त इति टीकाया नोपपादितमिति भाति ॥ ]

## प्रतिपत्तिविधिनिराकरणम्–

१५० 'प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते' (सू भा १-१-४, पा १२) इति पूर्वपक्षनिरासिभाष्यव्याख्यानावसरे टीकायाम् –

(१) किमिद ज्ञान ब्रह्मकर्मक विधीयते ? न तावच्छब्दजन्यम् । स्वाध्यायपाठादेव तत्सिद्धे ॥

(२) अथशब्दजन्यस्यैव ज्ञानस्याभ्यासो विधीयत इति । न तस्य प्रयोजन पश्याम । ननु इष्टविषयस्य ज्ञानसन्तानस्य सुखसन्तानहेतुत्व दृश्यते । यद्येवम्, तद्वदेव विध्यानर्थक्यम् । अथ पुन साक्षात्करणाय ज्ञानसतानविधिरुच्यते, नैतद् युक्तम् । न हि दृष्टाधिकारो विधिरसभावित-दृष्टफलो भवति । न हि लैङ्गिकोऽर्थो लिङ्गजन्मनैव ज्ञानेन सहस्रशोऽप्यभ्यस्य मानेन साक्षात्क्रियते मा भूत् शाब्दज्ञानादेव अभ्यस्यमानात् साक्षाद्भाव । तज्जन्मनो ज्ञानान्तराद् भविष्यति । नेत्थभावे प्रमाणमस्ति ॥

(३) अस्तु तर्हि शब्दात् प्रतिपन्नस्य यथाप्रतिपत्ति ध्यान नाम मनो-व्यापारो विधीयत इति । किमर्थं तस्य विधानम् ? ध्येयसाक्षात्काराय । न तस्य सभव । न हि परोक्ष ध्यायमान साक्षाद्भावमापद्यमान दृष्टम् । ननु दृष्ट परोक्षमपि ध्यायमान साक्षाद्भावमापन्न कामाद्युपप्लवे । मैवम् । न तद् ध्यायमानम् । अपि तु, अविद्यात्मकम् । अन्यथा बाधो न भवेत् । ननु 'द्रष्टव्य' इति दर्शनमनूद्य 'निदिध्यासितव्य' इति ध्यान दर्शनफल विधीयते । उक्तमेतत्, न दृष्टाधिकारो विधिरसभावितदृष्टफलो भवतीति । न हि ध्यान ध्येयसाक्षाद्भावहेतु क्वचिद् दृष्टम् । अथापि भवतु नाम ध्यानाद् ध्येयसाक्षाद्भाव, ध्येयस्य तथात्वे कि प्रमाणम् ? शब्दस्तावत् साक्षात्करणो-

पायोपासनविधाने पर्यवसितो, न तत्सद्भावे । सत्यम् । तथापि तत्त्व सिध्यति वक्ष्यमाणेन देवताविग्रहवत्त्वन्यायेन । विषम उपन्यास । तत्र हि न तथात्वे साधक बाधक वा – इति प्रतीतिशरणैस्तथाऽभ्युपेयते । न तथेह सर्वस्यात्मत्वे । प्रत्यक्षादिविरोधात् । आरोपितरूपेणापि ध्यानोपपत्ते । पूर्वोक्तेष्वपि ज्ञानविधिपक्षेषु अनयैव दिशा वस्तुतथात्वसिद्धिर्निराकार्या ॥ प ८७, ८८

एवमेव

(४) 'शाब्दज्ञानादन्यदेव ज्ञानान्तरमलौकिक वेदान्तेषु कर्तव्यत्वेन विधीयते' इति पक्ष, ज्ञानकर्मणोऽवगतत्वे विधानमनर्थकम्, अनवगतत्वे न विधान शक्यम् इति, साधनमपि ज्ञानस्य न विहित तेन साकाङ्क्ष विधानम् इति च प्रत्युक्त । (५) देवताविग्रहन्यायेन 'मोक्षकामस्य ब्रह्मोपासन विधीयते' इति पक्षश्च कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्' इति भाष्यावष्टम्भेन प्रत्युक्त ॥ प ८८

एव 'सिद्धैव ननु ब्रह्मजिज्ञासा, 'अथातो धर्मजिज्ञासा' इति सकलवेदार्थविचारस्योदितत्वात् ब्रह्मज्ञानस्य च चोदनालक्षणत्वेन धर्मस्वरूपत्वात्' इत्याशङ्क्य –

(१) अत्र विध्यभावात् अविवक्षिता वेदान्ता इति धर्मजिज्ञासानन्तर स्नाने प्राप्ते अथ ब्रह्म जिज्ञासितव्यम्, न स्नातव्यम् । कर्माभिधायिनोऽपि कृत्यप्रत्ययान्नियोगसप्रत्ययात्, अविद्योच्छेदस्य प्रयोजनस्योपलभ्यमानत्वात्–इति वदताम् एकदेशिना पक्ष (प ४२), (२) 'ब्रह्मणि प्रत्यक्षादिप्रत्ययान्तराणामसभवात् परिनिष्पन्ने वस्तुनि प्रतिपत्तिहेतुतया सभावितसामर्थ्यानामपि, आम्नायस्य पुन कार्यविषयतया सुतरामसभव मन्वानस्य पूर्वपक्षनिरासार्थम् इहापि सर्वेष्वेवात्मज्ञानविधानेषु कार्यनिष्ठता वर्णयन्ति समाम् । तत्त्वावबोधश्च कार्यम्, अधिकारिनियोगविषयतया अवगमात्' इतिवदताम् एकदेशिना पक्ष (प ४३), (३) 'इह सर्वस्यात्मभावना विधीयते । अनात्मस्वभावविलयनेन हि वस्तुनोऽवगतिर्दृष्टा ।

विध्यभावेऽपि कल्प्यतां विधिः' इति वदतामेकदेशिनाम् (प ४४), (४) शाब्दज्ञानान्न तथा अनुभवः, तेन साक्षात्करणाय विधिरिति' वदतामपि पक्षः (प ४६), (५) किमत्र विधिना श्रुतेन? स्वयमेव साक्षात्कारकरणाय पुरुषार्थत्वादभिमुखः पुरुषः। सिद्धश्च ज्ञानाभ्यासः शास्त्रादौ साक्षात्करणे हेतुः' इति वदतामेकदेशिनां च पक्षः (प ४६)– इत्येते पूर्वपक्षा अनूद्य खण्डिताः। तथा (६) कार्यनिष्ठे वेदे वस्तु-तत्त्वसिद्धिर्मनोरथ एव। अहंप्रत्ययावसेय एवात्मा न तस्य शब्दावसेयवद् अतीन्द्रियं रूपान्तरमस्ति। शब्दस्य तत्र सामर्थ्याभावात्। एवं च सति 'अयमात्मा ब्रह्म', 'एष त आत्मा अन्तर्याम्यमृतः' इति ब्रह्मात्मान्तर्याम्यादि शब्दा अहंप्रत्ययावसेय एवात्मनि कथञ्चिद् वर्तन्ते। तेन 'स आत्मा तत्त्वमसि' इति विद्यमानैः, आरोपितैश्च गुणैरात्मोपासनं मोक्षफलं च विधीयते–इति वदतामपि पूर्वपक्षो (प ४७) निराकृतः॥

तदेवं ब्रह्मजिज्ञासारम्भसमर्थनार्थव्याजेन सर्वविधिसंपर्कराहित्यं ब्रह्मणि साधयन्तो ग्रन्थकारा वार्तिकब्रह्मसिद्ध्योरुक्तानाम् अनुक्तानामपि कतिपयानां वृत्तिकाराणां अथशब्दार्थनिर्णयप्रस्तावेन चानूद्य प्रतिचिक्षिपुः। तत्र तत्र ब्रह्मसिद्ध्याहतविचारसरणिश्च दृश्यते टीकायाम्। तदिमे ग्रन्थकाराः किं मण्डनसमकालीनाः, उत ततोऽपि प्राचीनतराः – इत्येष ग्रन्थपुरातत्त्वनिर्णयकोविदानामेव विषय इति न तत्र किमप्यस्माभिरुच्यते॥

## अनाद्यविद्यानिवृत्तिः कथम्? –

१५१ 'नन्वनर्थहेतुरध्यासोऽनादिः, स कथं प्रहीयते? तथा हि मनुष्यादिजातिविशेषमात्राध्यासस्ततो विविक्तेऽपि न्यायतोऽहंप्रत्यये, अनादित्वात् पूर्ववदविकलो वर्तते' इत्याशङ्क्य टीकायामुक्तः परिहारः॥

(१) नायं दोषः। 'तत् त्वमसि' इत्यादिवाक्याद् ब्रह्मरूपावगाहि ज्ञानान्तरोत्पत्तेरिष्टत्वात्। तद् हि ब्रह्मणोऽवच्छिन्नस्यैव चैतन्यस्य ब्रह्मरूपत्व प्रच्छादनेन जीवरूपत्वापादिकाम् अनादिसिद्धामविद्याम् अहङ्कारादिविक्षेप

हेतु निराकुर्वदेवोत्पद्यते । तत कारणनिवृत्तौ तत्कार्यम् अहमिति जीवे भोक्तृत्वरूपता सपरिकरा निवर्तत इति युज्यते । अहप्रत्यय पुन अनादिसिद्धो अनादिसिद्धेनैव कार्यकरणमात्रेण सहभावात्, अविरोधाच्च स्वरूपविवेकमात्रेण निवर्तते, नापि ज्ञानान्तर समुत्पन्नम् इति विशेष ' ॥ प ३७

'ननु ब्रह्मज्ञानादग्रहणापाये तन्निमित्तस्य अहङ्कारग्रन्थेस्तत्कालमेव अभाव प्रसज्येत' इत्याशङ्क्य टीकायाम् अय परिहार उक्त –

(२) न । सस्कारादप्यग्रहणानुवृत्ते सभवात्, भयानुवृत्तिवत् । तथा हि । सम्यग्ज्ञानान्निवृत्तमपि भय स्वसस्कारादनुवर्तते, कम्पादिनिमित्त च भवति । तथा अग्रहणमपि स्वसस्कारादनुवर्तते अहङ्कारग्रन्थेश्च निमित्त भवतीति न किञ्चिदनुपपन्नमस्ति ॥ प ४०

अत्र 'तत् त्वमसि'वाक्याज्ज्ञानान्तर जायते तेन चोत्पन्नमात्रेणाविद्यानिवृत्तिरित्युक्तम् । ज्ञानाभ्यासात्, उपासनाद्वा यथार्थसाक्षात्कारानुभवो न दृष्ट इति–

(अ) नाप्यभ्यासात् साक्षाद्भाव सिद्ध ॥ प ४६

(आ) न हि दृष्टाधिकारो विधिरसभावितदृष्टफलो भवति । न हि लैङ्गिकोऽर्थो लिङ्गजन्मनैव ज्ञानेन सहस्रशोऽप्यभ्यस्यमानेन साक्षात्क्रियते ॥ प ८७

(इ) न हि परोक्ष ध्यायमान साक्षाद्भावमापद्यमान दृष्टम् ॥ प ८७

(ई) न हि ध्यान ध्येयसाक्षाद्भावहेतु क्वचिद् दृष्टम् । अथापि भवतु नाम ध्यानाद् ध्येयसाक्षाद्भाव ध्येयस्य तथात्वे किं प्रमाणम् ? प ८८

–इत्यादिवाक्यैरसकृदुद्घोषितम् । अथ च 'स्वयमेव साक्षात्करणाय, पुरुषार्थत्वादभिमुख पुरुष, सिद्धश्च ज्ञानाभ्यास शास्त्रश्रवणादौ साक्षात्करणे हेतु ?' – इति मतनिराकरणावसरे

(उ) 'यद्येव किं विधिना ? स्वयमेव पुरुषार्थे निर्ज्ञाते हेतौ प्रवर्तते ॥ प ४६

– इति ज्ञानाभ्यासेन साक्षात्कार स्वाभिप्रायविरोधेनैव मण्डनानुसारेण समालम्बित । कथमेतदिति न विज्ञायते ॥

एवम् 'निश्चितेऽपि प्रमाणात् तत्त्वे सर्वत्र मिथ्यावभासा निवर्तन्ते हेतुविशेषादनुवर्तन्तेऽपि । यथा द्विचन्द्रदिग्विपर्यासादय आप्तवचन विनिश्चितदिक्चन्द्रतत्त्वानाम्' (ब्र सि 35) इति मण्डनमतमेवात्रापि प्रकारान्तरेणावलम्बितम् । 'प्रमितरज्जुभावाया अपि रज्ज्वा, प्रमाणाननुसधाने सर्पभ्रान्त्या भयदर्शनात्' (ब्र सि 35) इति, 'यथा रज्ज्वा सर्पसमारोप समुत्थभयजन्मनो वेपथुप्रभृतयस्तत्त्वदर्शनादपावृत्ते भये कस्यचित् तदैव निवर्तन्ते, कस्यचित् कियन्तञ्चित् कालमनुवर्तन्ते तत्सस्कारात्' (ब्र सि 131) इति च मण्डनविचारसरणिरप्यनुसृता ॥

इयास्तु विशेषोऽत्र दृश्यते –

(१) 'जातेऽपि प्रमाणात् तत्त्वदर्शने अनादिमिथ्यादर्शनाभ्यासपरिनिष्पन्नस्य द्रढीयस सस्कारस्याभिभवायोच्छेदाय वा तत्त्वदर्शनाभ्यास सन्यन्ते' – इति मण्डन ॥ (ब्र सि 35)

(२) न कर्मनिमित्तस्तावत् शरीरसबन्ध । इतरेतराश्रयदोषात्, क्रियादिरहितत्वाच्च चैतन्यस्य । अनादित्वेऽपि अन्धपरम्परावदप्रतिष्ठत्वात् । तन्निमित्तत्वे च पुत्रादिशरीरेष्विव गौणत्वप्रसङ्गात् । तथानुभवाभावात्, प्रसिद्धगौणत्वप्रकारासभवात् । पुत्रादिशरीरेणेव स्वशरीरेणापि प्रमातृत्वाभावप्रसङ्गात् ॥

पारिशेष्यात् अविद्यानिमित्त शरीरसबन्ध । तस्या च निवृत्ताया तत्सबन्धनिवृत्तौ कथ पूर्ववद् तन्निमित्त सुखदु खानुभव ? तथा च श्रुतिस्मृतिवादा ब्रह्मविद सर्वसंसारप्रवृत्त्यभाव दर्शयन्त उदाहृता भाष्ये । तस्मात्, न ब्रह्मात्माभिमानिन पूर्ववत् ससारित्वम् । तदभिमानविरोधात् । वैषयिकस्तु साक्षादनुभवाभिमान ससारविषय, आरब्धकर्मशेषनिमित्त । तिमिरनिमित्तद्विचन्द्रवत् । मनननिदिध्यासनयोर्न ब्रह्मावगत्युत्तरकालीनता किं तु श्रवणवदवगत्युपायतया पूर्वकालतैवेत्युक्तम् ॥ प ९८–९९

इति तु टीका ॥

अत्र सस्कारादप्यग्रहणानुवृत्ति सभवति, सा च अहङ्कारग्रन्थेर्निमित्त भवति – इत्यङ्गीकारे, तस्य ब्रह्माभिमानविरोधात् न यथापूर्व

ससारित्वमिति कथम् ? मनननिदिध्यासनयोर्ब्रह्मावगतिपूर्वकालीनत्वेऽङ्गी स्वीकारात् अन्त्यावस्थायां ... क्ति कथ भवति ?–इत्येतत् स्पष्टतया नोक्त टीकायाम् । सस्कारादेवासगनलक्षणो व्यवहारो भवति , स च सस्कार प्रारब्धकर्मक्षये स्वयमेव क्षीणो भवतीति ग्रन्थकाराशय स्यादिति यथोदाहृतवाक्यबलादुन्नीयते ॥

## कार्यकारणप्रक्रिया –

१५२ ब्रह्मणो जगत्कारणत्वमुद्दिश्य प्रवृत्तानीमानि टीका वाक्यानि –

(१) यदवष्टम्भो विश्वो विवर्तते प्रपञ्च , तदेव मूलकारण ब्रह्म ॥ प ७८

(२) ' न यथोक्तविशेषणस्य ' इत्यादिना भाष्येण युक्तिरपि ब्रह्म स्वरूपनिर्णयाय अनेनैव सूत्रेण तन्त्रेण, आवृत्त्या वा ' जन्माद्यस्य यत सभवति' इति सूत्रिता – इति दर्शयति ॥ प ७८

(३) अतो युक्त्यापि वस्त्वन्तरस्य कारणत्वसभावनानिराकरणेन पारिशेष्यात् पूर्वोक्तविशेषण ईश्वर एव कारणमिति सिद्धम् ॥ प ७९

(४) 'नन्विहापि तदेवोपन्यस्तम्' इति । यथा धूमविशेषस्य अगुरुसभवत्वम् , तथा प्रपञ्चसनिवेशविशेषस्य सर्वज्ञत्वादिगुणकारणत्वम् इति । ' न । वेदान्तवाक्यार्थग्रथनार्थत्वात् सूत्राणाम् ' इति । सत्यम् । तदेवोपन्यस्तम् उपकरणत्वेन । न तत्र तात्पर्यम् । तात्पर्यं तु वेदान्तवाक्यग्रथने ॥ प ७९

(५) पृथिव्यादीना जन्मादिदर्शनात् , तत्कारणे एकत्वनानात्वयो रन्यतरावगमे प्रमाणाभावात् , बुद्धिमत्कारणपूर्वतामात्रे प्रतिपन्ने ' यतो वा इमानि ' इति कारणस्यैकवचननिर्देशात् , तदर्थमात्रस्यैव विवक्षितत्वात् , अर्थात् सर्वज्ञ सर्वशक्ति जगत्कारणम् – इति कारणविशेषो वाक्यादवगम्यते । पुन ' तद्विजिज्ञासस्व ' इत्यनूद्य ' तद् ब्रह्म ' इति तत्र ब्रह्मशब्दप्रयोगात् , बृहत्यर्थान्वयेन, सर्वतोऽनवच्छिन्नस्वभाव जगत्कारण ब्रह्मपदस्यार्थ इति गम्यते । तस्य च निर्णये वाक्यमपि ' आनन्दाद्ध्येव खलु ' इति प्रसिद्धावद्योतकेन हिशब्देन सयुक्तम् आनन्दावद्योतकम् उपपद्यते ॥ प ८१

(६) तस्मात् ब्रह्मपरे वाक्ये जन्मादिधर्मजातस्य उपलक्षणत्वात्, ब्रह्मसस्पर्शाभावात्, सर्वज्ञ सवशक्तिसमन्वित परमानन्द ब्रह्म – इति जन्मादिसूत्रेण ब्रह्मस्वरूप लक्षितमिति सिद्धम् ॥ प ८१

अत्र 'अथातो ब्रह्मजिज्ञासा' इति जिज्ञासाया कर्तव्यत्वोपदेश मुखेन वेदान्तवाक्यमीमासाप्रारम्भ प्रतिज्ञात इति तावदविवादम् । किंलक्षण पुनस्तद्वेदान्तगम्य ब्रह्म ? – इत्यत इदमुत्थित सूत्रम् । तथैव च भाष्यकारीयसूत्रपातनिका दृश्यते । तत् कथमिह 'तन्त्रेण, आवृत्त्या वा युक्तिरप्यत्र सूत्रिता' इति कल्प्यताम् ? न चेह लक्षणद्वारेण ब्रह्मस्वरूपास्ति त्वसभावना विवक्षितेति वक्तु शक्यम् । न हि सूत्रे, तदनुगतश्रुत्या वा सभावनावक्ता शब्दोऽस्तीति । यदपि भाष्य 'न यथोक्तविशेषणस्य जगत' इत्यादि, तदपि प्रधानादितो जगदुत्पत्त्याद्यसभव ब्रुवदपि यथाटीका प्रदर्शिता युक्ति समर्पयितु नालम् । न हि तत्र वाक्यशेषे टीकायामिव 'कारणसामान्ये सिद्धे तद्विशेषावगमाय' (प ९८) वेदान्तवाक्यानि प्रवृत्तानीति समभिहितमुपलभ्यते । प्रत्युत 'सत्सु तु जगतो जन्मादि कारणवादिषु' इति सूत्रविषयवाक्यम् आगमविषयैव निर्दिष्टम्, तत्सहायत्वेनैव च तर्कापेक्षा कीर्तिता । स्पष्टमेव चानुमानप्रत्याख्यान भाष्ये 'तस्माज्जन्मादिसूत्र नानुमानोपन्यासार्थम्' (सू भा १–१–२, पा ८) इति । स्वोक्तिविरुद्ध चेद वचनम् 'मृदादिदृष्टान्तयुक्तय सभावनार्थ वादता प्रतिपद्यमाना श्रुतिसाहाय्ये वर्तन्त' इति, 'युक्तिमपि तदुप करणा तदर्थानुभवप्रयोजना सूचयति' इति हि पूर्व प्रतिज्ञातम् । 'श्रुत्यादयोऽनुभवादयश्च यथासभवमिह प्रमाणम्' इति च भाष्यम् । न चेह कथमनुभवाङ्गता तर्कस्य ? – इति, प्रमाणभूतोऽनुभव कीदृशोऽभिप्रेतोऽत्र फलभूतानुभवाद्विलक्षण ? – इति वा विमृष्टमस्ति । अतो टीकाभिप्रायोऽत्र विमृश्य निर्णेय पण्डितैरिति भाति ॥

इदमप्यत्र चिन्तितव्यम् । भाष्ये तावत्, जगत्सृष्टिर्मायिक्येवेति स्पष्टमुल्लिखितम् –

(१) न च वियदादिसर्गस्याप्यात्यन्तिक सत्यत्वमस्ति । प्रतिपादित हि 'तदनन्यत्वमारम्भणशब्दादिभ्य' (सू भा २-१-१४) इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम् । अतो वैशेषिकमिद स्वप्नस्य मायामात्रत्वमुदितम्' (सू भा ३-२-४, पा ३४७)

इति । टीकाया त्वत्रानुमानाद्युपन्यासेन कारणावधारणात्, कि मायामय जगत्, कि वा वस्तुवृत्तेनैव ब्रह्मण कार्य तत्? – इति न स्पष्ट भवति । यद्यपि 'नन्वेव सति बुद्धिपूर्वत्वात् सापेक्ष स्यात्' इति शास्त्रस्य ब्रह्मकारणकत्वे सापेक्षत्वमाशङ्क्य समाहितम् –

(२) न स्यात्, ब्रह्मवदनादित्वात्, कूटस्थनित्यत्वाच्च । कथ पुनस्ततो जन्म? तत्परतन्त्रत्वात्, रज्जुसर्पवत् । तथा च श्रुति नि श्वसितमेतदिति ॥ प ८२

इति, ततश्च जगतोऽपि ब्रह्मकारणकस्य मिथ्यात्वमुक्तमेव भवति, तथापि कया नीत्या तस्य मिथ्यात्वमुररीकृतमिति तु 'तदनन्यत्व'सूत्रटीकासमुपलम्भाभावान्न निश्चीयते । अथवा रज्जुसर्पदृष्टान्तोपादानात्, अत्राप्यनिर्वचनीय जगदुत्पद्यत इत्येव टीकाकाराभिप्राय स्यादित्युन्नीयते ॥

## अवस्थात्रयप्रक्रिया –

१५३ सूत्रतृतीयाध्यायपर्यन्तटीकाया इदानीम् अनुपलभ्यत्वात्, अवस्थात्रयप्रक्रिया टीकासमता कीदृशीति विनिश्चित्य वक्तु न पारयाम ॥

तत्र अध्यासलक्षण स्वप्नशोकादौ न व्याप्नोतीत्याशङ्क्य तत्रापि दोषसस्कारादिकमस्तीति यथा समाहित तत् प्रागेव (ख १३८) निवेदितम् । तत्र स्वप्ने समुत्पन्नमिथ्याज्ञानस्य मनोऽवच्छिन्नापरोक्षचैतन्यस्था अविद्याशक्तिरालम्बनतया विवर्तते–इत्युक्तम् । तदनु लिखितमित्थम् –

(१) नन्वेव सति, अन्तरेव स्वप्नार्थप्रतिभास स्यात् । को वा ब्रूते नान्तरिति? ननु विच्छिन्नदेशोऽनुभूयते स्वप्नेऽपि जागरण इव । न तदन्तरनुभवाश्रयत्वे स्वप्नार्थस्य, उपपद्यते । ननु देशोऽपि तादृश एव

कुतस्तत्सबन्धाद् विच्छेदोऽवभासते ? अयमपि तर्हि अपरो दोष । नैष दोष । जागरणेऽपि प्रमाणज्ञानात् अन्तरपरोक्षानुभवात्, न विषयस्था अपरोक्षता भिद्यते । एकरूपप्रकाशनात् । अतोऽन्तरपरोक्षानुभवावगुण्ठित एव जागरणेऽप्यर्थोऽनुभूयते । अन्यथा ज स्य प्रकाशानुपपत्ते । यथा तमसा अवगुण्ठितो घट प्रदीपप्रभावगुण्ठनमन्तरेण न प्रकाशीभवति, एवम् । य पुनर्विच्छेदावभास स जागरेऽपि मायाविजृम्भित । सर्वस्य प्रपञ्चजातस्य चैतन्यैकाश्रयत्वात् । तस्य च निरंशस्य प्रदेशभेदाभावात् ॥ प १०-११

(२) अविद्याशक्ति सुषुप्तादौ अहङ्कारादिविक्षेपसंस्कारमात्रशेष स्थित्वा पुनरुद्भवति ॥ प ५

(३) सुषुप्ते प्रकाशाच्छादनविक्षेपसंस्कारमात्ररूपस्थितिरनादिरविद्या ॥ प २०

(४) स पुनरेवभूतो जाग्रत्स्वप्नयोरहमुल्लेखरूपेण, सुषुप्ते तत्संस्कार रञ्जिताग्रहणाविद्याप्रतिबद्धप्रकाशत्वेन च गतागतमाचरन् ससारी जीव, विज्ञानघनो विज्ञानात्मा, प्राज्ञ शरीरी शारीर आत्मा, सप्रसाद, पुरुष, प्रत्यगात्मा, कर्ता भोक्ता, क्षेत्रज्ञ-इति च श्रुतिस्मृतिप्रवादेषु गीयते ॥ प २९

(५) 'यत्र यदध्यास, तत्कृतेन गुणेन दोषेण वा अणुमात्रेणापि स न सबध्यते'-इत्यवास्तवमनर्थं दर्शयति । वास्तवत्वे हि न ज्ञानमात्रात् तद्विगम इति प्रतिज्ञा हीयेत ॥ प ३०

(६) ननु ब्रह्मज्ञानादग्रहणापाये तन्निमित्तस्य अहङ्कारग्रन्थेस्तत्काल मेव अभाव प्रसज्येत । न । सस्कारादप्यग्रहणानुवृत्ते सभवात् ॥ प ४०

(७) यदा पुनस्तद्रूप विस्मृतसुवर्णवदवाप्तम्, तदा स एव प्रमातृत्वाभिमतो निरस्तससारदोष सपन्न ॥ प १००

तथा चोक्तम् —

अनादिमायया सुप्तो यदा जीव प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैत बुध्यते तदा ॥ (गौ का १-१६) प १५

(८) नन्वस्त्येव सुषुप्तेऽहमुल्लेख 'सुखमहमस्वाप्सम्' इति सुप्तोत्थितस्य स्वापसुखानुभवपरामर्शदर्शनात्, नात्मनोऽन्यस्य तत्रानुभव सभवति । सत्यमस्ति । न तत्स्वापे सुखानुभवसस्कारज स्मरणम्, किं तर्हि सुखावमर्शो दु खाभावनिमित्त ॥ प १९

अत्रावस्थात्रयेऽपि अविद्याशक्तिः, अहङ्कारसंस्कारसचिवा अव तिष्ठते – इत्युक्तम् । ज्ञानेन तदपायेऽपि संस्कारादनुवृत्तिरिति कथम्, अविद्याया अनात्मधर्मत्वं कथं केनानुभवेन विज्ञायते शास्त्रोपदिष्टस्यापि-इति तु न कथितम् । संस्कारात् सदा अनुवर्तमानाया अविद्याया अवास्तवत्वं केन प्रकारेण जिज्ञासूनाम् अनुभवमारोक्ष्यति ? – इत्येतत्तु न टीकायां क्वचिदप्युक्तम् उपलभ्यते ॥

(1) तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३-२-७

इति सूत्रे

(2) 'तस्मादात्मैव सुप्तिस्थानम् ॥' (सू भा ३-२-७)

इति तद्भाष्ये वा अविद्याशक्तिः किमिति न परामृष्टा ?–इति नात्रोक्तम् ॥

(3) येन ब्रह्मणा सुषुप्त्यादिषु जीव उपाध्युपशमात् सपद्यते, तस्येदानीं स्वरूपं श्रुतिवशेन निर्धार्यते ॥ सू भा ३-२-११

इत्यत्राविद्यावस्थाया जीवस्य ब्रह्मसपत्तिः कथम् ? '**तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माभयं रूपम्**'– इति श्रुतौ

(4) इदानीं योऽसौ सर्वात्मभावो मोक्षो विद्याफलं क्रियाकारक-फलशून्यम्, स प्रत्यक्षतो निर्दिश्यते यत्र अविद्याकामकर्माणि न सन्ति (बृ भा ४ ३ २१)

इति तद्भाष्ये चोक्तं सुषुप्तौ अविद्याकामकर्माभावः कथं सगच्छत इति वा टीकायां न समालोचितम् ॥

गौडपादकारिकामुदाहरद्भिरपि टीकाकृद्भिः किमित्यवस्थात्रयप्रक्रियाया न तत्तादृशं प्रामुख्यं प्रापितम् ? – इति तु न वयं शक्ता निश्चेतुम् ॥

## ज्ञानसाधनविचारः –

१५४ ज्ञानसाधनविचारे टीकायामिमानि वाक्यानि परिशील-नीयानि भवन्ति । कर्मणा तावत् कया प्रणाड्या ब्रह्मजिज्ञासोपयोगित्वमिति चिन्ता प्रस्तुत्य –

(अ) 'कर्मणाम् अधिकारपरम्परया शब्दतो वा संस्कारतया वा यथाविभाग तादर्थ्याधिगमात्, निःश्रेयसप्रयोजनत्वाच्च आनन्तर्य-वचनो (जिज्ञासासूत्रे) अथशब्द ।' इति मतम्,

(आ) 'अथेति पूर्वप्रकृता धर्मजिज्ञासामपेक्ष्य, अनन्तर ब्रह्म जिज्ञासा प्रारम्भार्थ ।' इति मत च प्रत्याख्यात टीकायाम् –

(१) यथा तावत् प्रासादमारुरुक्षो सोपानपरम्परा क्रमश प्राप्य माणा प्रासादारोहणहेतु, न तथेह ब्रह्मजिज्ञासा चिकीर्षो कर्माणि सहस्र संवत्सरपर्यन्तानि तत्क्रियाहेतुतया स्थितानि । प्रमाणाभावात् ॥ प ५९

(२) सर्वत्र कामस्य विषयदोषदर्शनमेव उच्छेदकारणम् नित्यवस्तु दर्शन च । तस्मात्, न कर्मणा कामनिबर्हणद्वारेण ब्रह्मजिज्ञासा योग्यतापादनम् ॥ प ६०

(३) भवतु तर्हि संस्कारद्वारेण कर्मणा पूर्ववृत्तत्वम् । वक्ष्यति च सूत्रकार –'अत एवाश्रमकर्मापेक्षा' (?) सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति च[1] । सत्यमेवम् यदि समानजन्मानुष्ठितमेव कर्म संस्कुर्वद् ब्रह्म-जिज्ञासायोग्यत्वहेतु स्यात् । न च नैयोगिके फले कालनियमोऽस्ति ॥ प ६१

[अत्र ब्रह्मसिद्धिगतविचारस्तुलयितव्योऽनेन]

(४) यावदस्य हिरण्यगर्भावासिपर्यन्तस्य भोगस्य उत्पादपरिच्छेदाभ्या विनाशित्वादनित्यत्व नावैति, विनश्यदपीद कूटस्थनित्यवस्तुपर्यन्तमेव विनश्यति । अन्यथा निरुपादानस्य पुनरुत्पत्त्यसंभव इति वर्तमानस्याप्य संभवात् अभावोऽभविष्यत् – इति निरूपणात् । नित्यानित्यवस्तुविवेको यावन्न जायते, तावद् विरक्तो न जायते । यावच्चाभिमुख विनाश दर्शनात् भुञ्जानस्यापि भोगान् स्रक्चन्दनवस्त्रालङ्कारभोगानिवाग्निप्रवेशार्थं भोगार्थव्यापारजनितदु खानुभवाच्च तन्निमित्ता निर्वृतिमप्यलभमानो भोगात् विरक्त, ततो मुमुक्षुत्व तत्साधनशमदमोपरमतितिक्षासमा-धानसंपन्नो भूत्वा यावन्नालम्बते, तावद् ब्रह्मजिज्ञासा क प्रतिपद्येत ?

1 "अत एवाश्रमकर्मापेक्षाम् 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति" इति मूलपाठ स्यादित्यनुमीयते ॥

2 'इत्यध्याहार' इत्यधिक त्यक्तमत्र ।

कथञ्चिद् वा दैववशात्, कुतूहलाद् वा बहुश्रुतत्वबुद्ध्या वा प्रवृत्तोऽपि न निर्विचिकित्सं ब्रह्म आत्मत्वेनावगन्तुं शक्नोति । यथोक्तसाधनसंपत्तिविरहात्, अनन्तर्मुखचेता बहिरेवाभिनिविशमानः । तस्माद्, वर्णितवस्तुकलापादानन्तर्यमभिप्रेत्य अथशब्दं प्रयुक्तवान् आचार्यः ॥ प ९३

[अत्र वार्तिकप्रस्थानेन (ख १०६) इदं शान्त्यादिसाधनवर्णनं तुलनीयम् ]

(५) एवं सति ब्रह्मात्मैकत्वविज्ञानस्यापि यथाभूतवस्तुविषयत्वात्, न चोदनाजन्यत्वम् । अतो न विधेरत्रावकाशः । अतः श्रूयमाणा अपि विधयः केवलप्रमाणवस्तुपरतन्त्रे ज्ञाने अकिञ्चित्करत्वात् कुण्ठीभवन्ति । अतोऽर्थवादतया आत्मज्ञानस्तावकत्वेन तदुन्मुखीकरणात्, सामर्थ्यसिद्धबहिर्मुखतानिरोधाच्च विधिकार्यलेशस्य विद्यमानत्वात्, विधय इव लक्ष्यन्ते ॥ प ९३

(६) तथा च श्रवणं नाम आत्मावगतये वेदान्तवाक्यविचारः, शारीरकश्रवणं च । मननं वस्तुनिष्ठवाक्यापेक्षिततदुन्दुभ्यादिदृष्टान्तजन्मस्थितिलयवाचारम्भणत्वादियुक्त्यर्थवादानुसंधानम् । वाक्यार्थाविरोध्यनुमानानुसंधानं च । निदिध्यासनं मननोपबृंहितवाक्यार्थविषये स्थिरीभावः । विधेयस्योपासनापर्यायस्य निष्फलत्वात् । दर्शनम् ततो वाक्यार्थे स्थैर्यात्, निरस्तसमस्तप्रपञ्चावभासविज्ञानघनैकतानुभवः ॥ (प ९३-९४)

(७) कः पुनरत्रार्थवादः ? इदमत्र प्रस्तुतम्–क्रियाकारकफलात्मकात् संसाराद् विरक्तायै मैत्रेय्यै मुमुक्षवे मोक्षसाधनम् आत्मज्ञानं प्रतिपिपादयिषन् 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इति पत्यादेरीप्सितत्वं प्रतिषिध्य आत्मन ईप्सिततमत्वमाह । ईप्सितश्चेत् द्रष्टव्यः श्रोतव्य इत्येषोऽर्थवादः । एतच्च सर्वं प्रथमसूत्रेणैव सूत्रितं विवृतं च भाष्ये । अपि च नैवायं विधौ कृत्यः, किं तर्हि, 'अर्हे कृत्यतृचश्च' (पा ३-३-१६९) इत्यर्हे कृत्यः । एतेन, 'आत्मेत्येवोपासीत', 'आत्मानमेव लोकमुपासीत' इत्येवमादीनि विधिच्छायादिवाक्यानि व्याख्यातानि वेदितव्यानि ॥ प ९४

[अत्र 'तमेव धीरो विज्ञाय – इति न प्रज्ञाकरणविधिः' – इत्यारभ्य (ब्र सि 154) 'आत्मस्वरूपपरमेकं वाक्यम्' इति यावत् (ब्र सि 155) ब्रह्मसिद्धिगतं वाक्यजातम् अनुसंधेयम् । विशिष्य च 'द्रष्टव्यः श्रोतव्यो निदिध्यासितव्यः' इति न पृथग्विधयः कृत्यप्रयोगेऽपि । कृत्यप्रत्ययस्य अर्थान्तरेऽपि स्मरणादर्हादौ स्तुत्यर्थाः यथोपांशुयाजवाक्यान्तर्गताः' (ब्र सि 155) इति भागश्च टीकासमानार्थकः ॥ ]

# ९ भास्करप्रस्थानपरीक्षा

**भास्करमतस्थान वेदान्तविचारेतिहासे –**

१५६ यद्यपि पञ्चपादिकापरीक्षणपरिपूर्णतायै तद्व्याख्यानरूप विवरणग्रन्थपरीक्षणमेवाभ्यर्हितम्, प्रस्थानान्तरान्तरीकरणेन विचारधारा विच्छेदो मा भूदिति, तथापि शङ्करभाष्यब्रह्मसिद्धिपञ्चपादिकाग्रन्थाभि प्रायाणा नैकेषा विमृश्य खण्डनपूर्वक भेदाभेदप्रस्थानोज्जीवनयत्नप्रदर्शनात्, भामतीविवरणयो पदे पदे कटाक्षीकृत्य निराकरणार्थमुपादीयमानत्वा च्चात्रैव परीक्षामर्हति भास्कराचार्याणा प्रस्थानमिति तदेव विमर्शनायादर णीय भवत्यग्रे भामत्याद्यपेक्षया। अपि चार्वाचीनवेदान्तिभाष्यान्तरेष्वपि नैकवार भास्करमत विचारणाय समुपात्तमुपलभ्यत इत्यतोऽपि परीक्ष णीयत्वमेतस्य। यद्यपि भास्कराभिधानीयका नैके प्रसिद्धा ग्रन्थनिबन्द्धारो देववाणीपरिचर्यया प्रख्याता, तथापि न सर्वे ते वेदान्तिन। माधवीयशङ्कर-विजये वर्णितस्तु शङ्कराचार्यभट्टभास्करसवाद कल्पनामात्रमित्युपेक्षणीय। तत्र समादृता भास्करखण्डनरीति पञ्चपादिकाव्याख्यानतया सुप्रसिद्धा विवरणव्याख्यामेव बहुशोऽनुकुर्वती लक्ष्यते, विवरणे च प्रकृतभास्करमतमेव पदे पदे खण्ड्यमान दृश्यत इत्यत शङ्करविजयगतकथाकल्पनाया विवरण-ग्रन्थ एवाधारभूत इत्यपि शक्यमुन्नेतुम्। मनुस्मृतिव्याख्यात्रा कुल्लूकभट्टेन 'भगवद्भास्करीयदर्शनम्' (कु मनु १–१५) इति सबहुमान परामृष्टत्वात् तदात्वे भास्करीया बहवो बभूवुरित्यपि समुन्नीयते। अत शाङ्कर व्याख्यानप्रस्थानान्तरपरीक्षा न्यायप्राप्तामप्यनादाय इदमेव प्रस्थानमादौ परीक्ष्यते॥

**भास्करसंप्रदायः –**

१५७ अद्य यावत् सूत्रभाष्यमेकमेव तूपलभ्यते भास्कर कृतित्वेन। पर तु –

(१) छान्दोग्ये च तत्र तत्रानयोर्मायाप्रविलयवादिनोर्निराकरण विस्तरेण कृतम् ॥ भा सू पा ८४

इति वाक्यादवगम्यते छान्दोग्योपनिषदपि तैर्व्याख्यातेति। अर्वाचीनवेदान्त ग्रन्थेषु–उपनिषद्व्याख्यानेषु भगवद्गीताव्याख्यानेषु च-भास्करीयाभिप्रायाणा भूयो भूय परामर्शोपलम्भादुन्नीयते यत् प्रस्थानत्रयव्याख्याने सममेव भास्कराचार्यैर्लेखनी व्यापारितेति। इदानीमुपलभ्यमान तु मुद्रितसूत्रभाष्यम् अशुद्धिभूयिष्ठमपि तदीयप्रक्रियास्वरूपनिर्धारणे पर्याप्तसामग्रीगर्भितमित्येतत्तु वेदान्तविचारेतिहासतत्त्वशोधकाना किञ्चित्तोषस्थानम् ॥

इमे च भास्कराचार्या भेदाभेदसिद्धान्तावलम्बिन स्वकीया प्रक्रिया सप्रदायशुद्धा मन्यन्ते, शङ्करभगवत्पादसमता तु ता तद्विरुद्धेति भूयो भूयो ज्ञापयन्ति –

(२) तदेतत् भेदाभेददर्शन सूत्रकाराभिमतम् अरोचयमाना केचित् मायावादिनो वदन्ति – ईश्वरस्यैव ससारित्व तदशभूतो जीवो नाम नास्ति। अविद्याकल्पितोपाधिकृतभेदाद् व्यवहार ससारीति(तीति) ॥

भा सू १-२-६, पा ३९

[अत्र ईश्वरस्यैव ससारित्वम् इति मूलानुवाद ॥]

(३) तदेव श्रुतिसूत्रकारौ जीवपरयोर्भेद दर्शयत । केचित्तु श्रुत्यर्थम् आचार्योक्ति च पृष्ठत कृत्वा मायामात्र स्वबुद्ध्या कल्पयित्वा अन्यदेव दर्शन रचयन्ति ॥ भा सू १-२-१२, पा ४१

(४) अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्या सप्रदायमत समाश्रित ॥ भा सू १-४-२५, पा ८५

अपि च सुप्रसिद्ध ह्येतद् यद् वाक्यान्वयाधिकरणे शङ्करभगवत्पादै, 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य' इत्यादिमतत्रयम् उपन्यस्य तृतीय मत स्वप्रक्रियाधारत्वेन स्वीकृतमिति। भास्कराचार्यमते तु आश्मरथ्यस्य मत भेदाभेदाङ्गीकर्तृत्वेनैव व्याख्यातम् –

(१) यद्यत्यन्तभिन्नो जीव परमात्मन, ततो वाक्योपक्रमो जीवेन, परमात्मना चोपसहार – इति वाक्यमसबद्ध स्यात्, प्रतिज्ञा च न

सिद्धयेत् । तस्मादभेदांशेनोपक्रम । कियानपि जीवपरयोर्भेदोऽस्तीत्य स्याभिप्राय ॥ भा सू १-४-१९ पा ८१

एव द्वितीयमपि मत शङ्करवदेव वर्णितम् –

(२) जीव परमात्मनोऽत्यन्तभिन्न, तस्य पुनर्ज्ञानध्यानसमाधिसप (प्रस?)न्नस्य शरीरेन्द्रियसघातादुत्क्रमिष्यत, मुक्त्यवस्थायामेव(मैक्यम् ?)। एव (इत्येव ?) तावज्जीवोपक्रमे(जीवेनोपक्रम ?) इत्यौडुलोमिराचार्यो मन्यते स्म। श्रुतिरपि नदीदृष्टान्तेनेदमर्थं ज्ञापयति ॥ भा सू पा ८१

काशकृत्स्नमत पुनरित्थ वर्णितम् –

(३) न प्रकृतिविकारभावो नाप्यत्यन्तभिन्नस्य जीवस्य मुक्त्यवस्थायाम् अभेदापत्ति, किं तर्हि उत्क्रमणात् प्रागपि जीवरूपेण परमात्मनोऽवस्थानात् अभेदेनोपक्रम – इति काशकृत्स्नो मन्यते स्म ॥ भा सू ८१

अत्र "ननु यदि पर एव साक्षादय जीव स्यात् तत उपदेशोऽनर्थको मैत्रेय्या 'स वा एष महानज आत्मा' इति । न हि सर्वज्ञस्य उपदेष्ट्रा प्रयोजनम् । ' इत्याशङ्क्य परिहार एवमुक्त –

(४) सम्यगाह भवान् अस्तिभेदोऽप्यनादिकालप्रवृत्ताविद्याकर्मोपाध्यवच्छेदात्, अशो हि परस्याह(य) जीवो नाम । यथाग्नेर्विस्फुलिङ्गा, यथाकाशस्य पार्थिवाद्यधिष्ठानोपाध्यवच्छिन्न छिद्रप्रदेशस्तदश शब्द ग्रहणशक्त्यपेक्षा(क्षया ?), यथा च वायो प्रतिशरीर पञ्चवृत्ति प्राण, तथाय भिन्नाभिन्नस्वभावो जीव ससारी न कदाचिन्मुक्तपूर्व । तस्य मुक्त्यर्थं विद्योपदेशोऽर्थवान् ॥ भा सू १-४-२१, पा ८१

[ अत्र सूत्रे भिन्नाभिन्नशब्दाभावेऽपि, आश्मरथ्यपक्षात् स्वपक्षस्य वैलक्षण्य द्योतनार्थं इत्थ व्याख्यातम् – इति स्पष्टम् ॥ ]

उपर्युदाहृतवाक्यबलात् अवगम्यते, यत् भास्कराचार्या इमे भेदाभेदवादिनोऽपि न भर्तृप्रपञ्चमत सर्वथा अनुमन्यन्ते, यत परमात्म विज्ञप्तिविकारत्व जीवस्योशन्ति भर्तृप्रपञ्चा (ख ७९), अत्र तु भिन्नाभिन्नत्व जीवपरयोरनादित्वेनाभ्युपेतम् । एव भर्तृप्रपञ्चाभिमता अन्येऽपि वादा इह नोररीकृता । अतो भाष्यवार्तिकयोर्निराकृत तदीयमताश प्रविहाय कियानपि

प्रक्रियाभेद एभि कल्पित स्यात् । अथवा भेदाभेदवादेऽपि अवान्तर-वादविकल्पा आसन्नेव बहो कालादारभ्य–इति सम्प्रदायान्तरमेवैषाम् इति कल्पनीय भवति । अत्र पुरातत्त्वनिर्णायकपरीक्षा आवश्यिकीत्युपरम्यते ॥

**भास्कराभिमतवृत्तिकारवाक्यकारौ –**

१५८ वेदान्तप्रक्रियासतत्त्वनिर्धारणार्थं प्राचीनकालादेव बहवो बहुधा प्रस्थिता इति प्रागेवावादिष्म (ख ६२; ६३) । यथैवान्यसप्रदायस्थास्तथैव भास्कराभिमतप्रक्रियापुरस्कर्तारोऽपि प्रागपि तद्भाष्यप्रणयनाद्, वाक्ययुक्त्यवष्टम्भा प्रस्थानत्रय व्याचख्युरिति भास्करभाष्यादेवावगम्यते । तथा चोदाहृत भास्करीय वचनम् 'अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्या सप्रदायमत समाश्रित ' इति । तत्र कौ नु स्याता तत्समत**वाक्यकार-वृत्तिकारौ** इति तु सप्रति दुरूहम् । न हि 'वाक्यकार ', 'वृत्तिकार' इति वा कस्यचनैकस्य सज्ञा सर्वसप्रतिपन्ना । शाङ्करभाष्येष्वेव प्राचीनाद्वैत सप्रदायभेदान् अनुसरन्तो बहवो वृत्तिकाराभिप्राया अनूद्य निराकृता , तथा बृहदारण्यकवार्तिकेऽपीति प्रादर्शि प्राक् (का ४) । एव पञ्चपादिकायामपि केषाञ्चित् वृत्तिकाराणा वाक्यान्युदाहृतानि निराकरणाय –

(1) अत्र केचिदभ्यधिकाशङ्का दर्शयन्तो ब्रह्मजिज्ञासा पृथगारभन्ते ॥ प ४२ (2) अपरे पुनरेवमारभन्ते ॥ प ४२ (3) तथा च वृत्त्यन्तरे वर्णितम् ॥ प ५८ (4) अन्यैरपि स्ववृत्तौ वर्णितम् ॥ प ५८ (5) यदन्यैर्वृत्तिकारैर्ब्रह्मशब्दस्य अर्थान्तरमाशङ्क्य निरस्यते ॥ प ६४ (6) वृत्त्यन्तरे तु शेषलक्षणा व्याख्याता ॥ प ६४

इत्यादिदर्शनात् । तस्मात् बहो कालादारभ्य वेदान्तप्रक्रियानिर्णयन प्रयतन बहुभिर्बहुभि प्रकारै कृतम् । अत एव वेदान्तप्रक्रियाप्रत्यभिज्ञान सप्रति दुष्कर भवतीत्येष प्रयत्न आस्माकीन । तिष्ठत्वेतत् । भास्कर समतवृत्तिकारवाक्यकारौ किं भर्तृप्रपञ्चप्रक्रियानुगन्तारौ, किं वा न ?–इति विशये, न किमपि निर्धारणकारण समस्ति, तयो साक्षाद्वाक्यानुदाहरणात् प्रकृते भाष्ये–इत्येतावत्तु निश्चित वक्तु शक्यते ॥

## भास्कराभिमतः सूत्रार्थविभागः –

१५९ भास्कराभिमतरीत्या सूत्रार्थविभाग इत्थम् –

(१) ब्रह्म च कारणात्मना, कार्यात्मना, जीवात्मना च त्रिधावस्थितम् । तत्राविशेषेण ब्रह्मजिज्ञासा प्रस्तूयते । ‘ब्रह्मैवेद सर्वम्’ इति ब्रह्मशब्दस्याविशेषात् । तत्र स्वरूप प्रमाण च प्रथमेनाध्यायेन प्रतिपाद्यते, द्वितीयेन स्मृतिविरोधपरिहार, परमतनिराकरण च तर्कपादे, श्रुतीना च परस्परविरोधपरिहार, तृतीयेन ससारगतिवर्णनम्, जीवस्यावस्थाभेद, ब्रह्मसतत्त्वम्, विद्याना भेदाभेदविचार, ज्ञानकर्मसमुच्चयश्च इति, चतुर्थेन ज्ञानावृत्ति, अर्चिरादिमार्गनिरूपण फलनिरूपण च क्रियत इति ॥

भा सू ८ [1]

[ब्रह्मणस्त्रिविधत्व प्रतिज्ञाय ‘जन्माद्यस्य यत’ इति सूत्रे किमिति कारणस्यैव ब्रह्मणो लक्षणमुक्तम् – इति प्रश्नो न निर्णीतोऽत्र भाष्ये ॥]

अत्र शाङ्करभाष्यवदेव ग्रन्थविभाग आदृत, तद्वदेव च तत्र तत्र परमतनिराकरणपूर्वकमेव स्वाभिप्रायेण सूत्राणि व्याख्यातानि । विशिष्य च शाङ्कर व्याख्यान बहुशोऽनूद्य दूषितम् । भगवत्पादीय मत तदात्वे सर्वत्र व्याप्तमासीदिति, तन्निराकरणेनैव स्वाभिमतो भेदाभेदसिद्धान्त स्थापनीय इति च भास्कराभिप्राय स्यादित्युन्नीयते । यत –

(२) सूत्राभिप्रायसवृत्त्या स्वाभिप्रायप्रकाशनात् ।
व्याख्यात यैरिद शास्त्र व्याख्येय तन्निवृत्तये ॥

इत्यादावेव प्रतिज्ञातमत्र ॥

## अविद्यागता चिन्ता –

१६० अविद्याध्यासयोरैक्य भगवत्पादसंमत नात्राङ्गीकृतम् । न च लोकव्यवहारस्य अविद्याकृतत्वमङ्गीकृतम् ॥

1 असत्यध्यायाद्युल्लेखे अस्मिन् काण्डे भा सू इति निर्दिष्टा भास्करसूत्रभाष्यपत्रपार्श्वसङ्ख्यैव ग्राह्या ॥

(१) जीवस्य वस्तुभूतस्य देहादिष्वनात्मसु विपरीतज्ञानम्, ब्रह्म स्वरूपाप्रतिपत्तिश्च, तदुभय ग्रहणाग्रहणम् अविद्या । सा तत्त्वमस्यादिवाक्य श्रवणजनितया विद्यया निवर्तते ॥ भा सू १-१-४, पा १९

परमादिसमता अविद्या भास्करभाष्ये एव निराकृता – का चेयमविद्या भवतोऽभिप्रेता ? किं भेददर्शनम्, उत तद्व्यतिरिक्ता ? (भा सू १९,- इति प्रश्नमुत्थाप्य लक्षण बहुधा विकल्प्य दूषितम् –

(1) यदि तावद भेददर्शनमविद्या अभ्युपेयेति । तत्रेद वक्तव्यम्, कथ भेददर्शनस्य अविद्यात्वम् ? किं विद्यातोऽन्यत्वादविद्या, अथ विद्याया अभाव इति । न तावदभाव । सवेदनत्वस्य प्रत्यक्षत्वात् । न च पर्युदास सभवति । न हि भेदज्ञान द्रव्य गुण क्रिया वा येन विद्या नोऽन्यत् स्यात् । विद्येति ज्ञानमुच्यते, भेदज्ञानमपि ज्ञानमेवेति । अथ तद्विपरीता अविद्या तत्रापि किं नित्या, अनित्या वा ? यद्यनादिरविद्या, तदानीमनिर्मोक्षप्रसङ्ग । तस्या उच्छेत्तुमशक्यत्वात्, ब्रह्मवत् । अथादिमती, कुत सा जायते । ? यदि चोत्पद्येत, कार्यत्वाद् वस्तुत्वप्रसङ्ग । तत्रावस्तु भूता अविद्या इति प्रतिज्ञा हीयते । न ह्यवस्तु शशविषाणम् उत्पद्यते । तस्मान्न भेददर्शनमविद्या ॥ भा सू पा १८, १९

(2) सत्त्वासत्त्वाभ्याम् अनिर्वचनीया इति चेत् । अनिष्टोत्तरमेतत् –

यस्या कार्यमिद कृत्स्न व्यवहाराय कल्पते ।
निर्वक्तु सा न शक्येति वचन वचनार्थकम् ॥

यदि वाऽनिर्वचनीया । कथमाचार्य शिष्येभ्य प्रतिपादयेत् ? अप्रतिपन्नया च तया कथ व्यवहार क्रियते ? किञ्च, आदिमती सा, अनादिरिति वक्तव्यम् । अनादित्वे नित्यत्वादुच्छेत्तुमशक्या इत्यनिर्मोक्षप्रसङ्ग । ब्रह्म चेन्निमित्त तदयुक्तमित्युक्त पुरस्तात् । अनात्मस्वरूप निमित्तमपि, एतत् निमित्त नित्यत्वान्नैमित्तिकानुपरमादनिर्मोक्ष एव । अथ सती, असती चाविद्या, तदा सद्भावाभावरूपत्वानुपपत्ते (त्ति ?) । न हि युगपदेकत्र विरुद्धज्ञानसभव ॥ भा सू ९७

[सत्यानृतयोर्विषयविषयिणो मिथुनीकरणलक्षणाध्यास एव अविद्या । अध्यासश्च नैसर्गिकव्यवहारदृष्टया प्रवाहयनादि, अपरमार्थत्वाद् तत्त्वस्वरूप निर्धारणरूपया विद्यया निवर्त्य – इति भगवत्पादीय प्रस्थानम् ॥]

(3) अथाव्याकृताकाशम् आद्याविद्या – इत्युच्यते उच्यताम् । न सज्ञाया विरोध । वस्तुत्वं तु प्राप्नोति । उत्पत्तिमत्वादङ्कुरादिवत् ॥ भा सू पा ९५

[अव्याकृत यद्यपि न स्वरूपतोऽविद्या । ... अविद्याशब्दभागपि भवत्येव । न चाविद्याकृतस्य वस्तुत्वम्, शुक्तिरजतादेरिव प्रतीतिमात्रशरीरत्वात – इति भगवत्पादीयप्रस्थानम् । अविद्यापि यदा अविवेकलक्षणान्त करणधर्मत्वेन निरूप्यते तदा नामरूपपक्षस्यैव, अविद्या-प्रत्युपस्थापितनामरूपबीजभूताव्याकृतवत् । आत्मनि कल्पितत्त्वादेव शुक्तिरजत-वत् तत्त्वान्यत्वाभ्यामनिर्वचनायैव । अविर्वचनीयापि प्रतीतरूपेणात्मत्वतदन्य त्वाभ्यामनिवचनायेति शक्योपदर्शनैवेति न किञ्चिच्चिनम् । द्रष्टव्य भगवत्पादीय तै भा २-८]

(4) न चाग्रहणम् अविद्या । ग्रहणाभावस्य अवस्तुत्वे बन्धहेतुत्वा भावात् । तथा हि- अवस्तु चेदग्रहणम्, न बध्नाति खपुष्पवत्, बन्धक चेदवस्तुत्व विरुद्धम्, मत्स्यबन्धवत् । अत एव निर्वचनीयत्वम् अविद्याया ॥ भा सू ९६

(5) योऽपि मन्यते नामरूपमविद्याशब्दवाच्यमिति, तदापि अनि र्वचनीयत्व नास्ति । निरुच्य वचन निर्वचनमुच्यते । गवादिशब्दाश्च स्पष्टा एव निरुच्यन्ते व्याकरणे, तद्वाच्याश्चगवादयो(ऽपि) निरुक्ता ॥ भा सू ९६

[व्याकृताव्याकृतयोर्नामरूपयो सममेव प्रतीतरूपेण तत्त्वान्यत्वाभ्यामनि र्वचनीयत्वम्, अवस्तुत्वम्, विद्याबाध्यत्वम्, वस्तुत आत्मस्वरूपानन्यत्वमिति नात्र किञ्चिद्दूषणमस्ति ॥]

अत्र सर्वत्र भगवत्पादसमता सत्यानृतमिथुनीकरणलक्षणाविद्या नालोचितेति स्पष्टम् । अविद्याश्रयः कः ? इति प्रश्नोऽपि दुरुत्तर परेषा पक्षे इति प्रपञ्चितमत्र –

(1) न च ब्रह्मणोऽविद्या । तस्य विशुद्धचिद्रूपत्वात्, निरतिशयानन्द रूपत्वात् । न च जीवस्य । ब्रह्मव्यतिरिक्तजीवानभ्युपगमात् । प्रतिबिम्ब रूपस्य च जीवस्य कल्पितस्य अवस्तुत्वात् । हन्त निराश्रया अविद्या अभाव-पदवी प्राप्ता ॥ भा सू १९

(2) कस्येयमविद्या ? न तावज्जीवस्य । वस्तुभूतस्य तस्यानभ्युप गमात् । नापीश्वरस्य । नित्यविज्ञानप्रकाशत्वात् , अज्ञान विरुध्यते । यदि च तस्य ससारित्वम् तदा ईश्वरत्व विर यते । सुखदु खमोहादिरहितत्व हि ईश्वरत्वमुच्यते, तद्योगित्व च ससारित्वम् । तदत्र ससारित्वासमारित्वयो रविद्याविद्यात्वयोर्बन्धमोक्षयोश्च एकस्मिन्नात्मानि समवायविरोधात् , शीतोष्णयोरिव अन्यतरपरित्यागो बलात् प्राप्नोति । ईश्वरश्चेत् , न समारी, ससारी चेत् , नेश्वर इति ॥ भा सू १-४-२१, पा ८२

[ अत्र समारित्वेश्वरत्वयोर्व्यावहारिकत्वम् - इति सू भा २-१-१४ इति शाङ्कराभिप्रायो न कटाक्षित । एव बन्धमोक्षादिव्यवहारोऽपि न पार मार्थिक इति (गौ का २-३२) मत च न वीक्षितम् ॥ ]

(3) यदप्युच्यते 'कस्याविद्या ?' इति पृष्टे 'तस्य ते यस्त्व पृच्छसी'ति, तदपि च दुष्टोत्तरम् । यद्यसौ ब्रूयात् ' अह जीव , परमात्मनोऽश ' इति तदा तूष्णीमासनमेव ते ॥ भा सू ४-१-१ पा २१९

[ अत्र भगवत्पादीयभाष्याभिप्राय सम्यग् न व्यज्ञायि । यत , ' कस्य पुनरयमप्रबोध ? ' इति प्रश्न , एकत्ववादे न सभवतीत्याशयेन कृत । यद्येकत्व ज्ञातम् , तर्हि न कस्यचनाविद्या , यदि न ज्ञातम् , तर्हि पृच्छकस्यैवाविद्या - इति प्रश्नसामर्थ्यादेवावगम्यत इत्युत्तरम् । अत , ' अह जीव ' इत्युत्तर-प्रदातुरपि नदेवोत्तरम्-तस्यैवाविद्येति ॥ ]

अविद्या किमेका, अनेका वा - इति विकल्प्य भास्करेणोक्तम् -

(1) यद्यनेका ततो अर्थत्व प्राप्नोति, तत्त्वातत्त्वाभ्याम् अनिर्वच-नीयेति हीयते । एकत्वे च युगपत् सर्वमुक्तिप्रसङ्ग ॥ भा सू पा २१९

[एकत्वमनेकत्वमिति विकल्पनम् अविद्यापेक्षयैव व्यवहारे सभवति, न त्वविद्याविषये - इति न पर्यालोचितमत्र ॥ ]

## अविद्यानिवृत्तिमधिकृत्यापि दोष एवमुक्तः -

(1) भेदविज्ञानमविद्या भवतोऽभिप्रेता । न तद्ध्रियमाणशरीरस्य कस्यचिद् भेदज्ञान विनिवर्तते चक्षुरादीना तन्निमित्तत्वात् । न च निमित्ते सति नैमित्तिक न भवति । कर्मणा तद्भोगार्थत्वात् । कथ भोगार्थत्वम् ? देहेन्द्रियविषयविभागज्ञानहेतुत्वात् । अपि च इतरेतरहेतुत्वम् । अविद्या-

' कामकर्मणा बीजाङ्कुरवत् । यत संस्कारचक्रम् अविरलम् अनुवर्तते, ततश्चाद्वैतज्ञान बाध्यतामेति । प्रतिपक्षबलीयस्त्वात् अपवर्गाभाव प्रसज्यते ॥ भा सू २०

[' देहेन्द्रियादिष्वहममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्ते ' इति भगवत्पादीय भाष्य न विमृष्टमत्र । सति हि शरीरेन्द्रियादीना सत्यत्वे तत्कृत प्रमातृत्व ससारभोगश्च । न तु साक्षिदृष्ट्या शरीरम् इन्द्रियाणि वा वस्तुमन्ति सन्ति । अत एव हि ' न ह्यात्मन शरीरात्माभिमानलक्षण मिथ्याज्ञान मुक्त्वा अन्यत सशरीरत्व शक्य कल्पयितुम् ' इति (सू भा १-१-४, पा ११) भाष्यम् । न चाद्वैतज्ञाने सजाते पुनरपि बाध्यबाधक भावावशेष सभवति । ' तत्केन क पश्येत् ' इति श्रुते – इत्यपि नावहित मनसा समालोचितम् ॥ ]

भर्तृप्रपञ्चप्रस्थाने 'सा अविद्या अहमेवेदं सर्वम् इत्यस्यार्थस्यासबोध (ख ८१) । ' अविद्या पुन स्वविज्ञानाश्रयैव, तदेव विज्ञान विकृत्य विपरीतग्रहाय प्रकल्पयति ' (मत्स्यदृष्टान्तवाक्यसबन्धे, पा १६८), ' क्षितेरूषरवत् अविद्या परस्मात् स्वतो जायते ' (ख ८५, पा १७४) – इत्याद्यविद्यावर्णन यद् दृश्यते, तद्गन्धोऽप्यत्र नोपलभ्यते । अत भाष्यवार्तिकाभ्या खण्डितत्वात् सा प्रक्रिया भास्करभाष्ये परित्यक्ता, अन्यैव वा एतदीयप्रक्रिया – इति कल्पनीयम् ॥

## प्रत्यक्षादिप्रामाण्यं शास्त्रप्रामाण्य च –

१६१ ' तमेतम् अविद्याख्यम् आत्मानात्मनोरितरेतराध्यास पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ता , सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि ' – इति प्रमाणप्रमेयव्यवहारस्य शास्त्रस्य च प्रवृत्तिरविद्याभूमावेवेति भगवत्पादै प्रतिज्ञातमत्र प्रस्थाने न परीक्षितम् । अत पूर्वमीमासासमतरीत्यैव प्रमाणव्यवहरणमिह स्वीक्रियत इति न चित्रम् ॥

एकत्वैकान्ताभ्युपगमे नानात्वाभावात् कथ प्रत्यक्षादिव्यवहार , कथ वा विधिप्रतिषेधशास्त्राणाम् अर्थवत्ता, कथ वा मोक्षशास्त्रेणासत्येन

ब्रह्मज्ञानमुत्पद्यते ? – इति शङ्कामुत्थाप्य भगवत्पादै परिहार उक्त – 'सर्वव्यवहाराणामेव प्राग् ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्ते, स्वप्न व्यवहारस्येव प्राक् प्रबोधात्' (सू भा २-१-१४, पा १९८) इति। तदनूद्य भास्करभाष्ये लिखितम् –

(१) अत्र ब्रूम । 'मृत्तिकेत्येव सत्यम्' इत्यस्यार्थो व्याख्यात । यदि च प्रपञ्चासत्यत्वम्, मृत्तिकाया अप्यसत्यत्वम्, प्रपञ्चत्वात्। कथ वा मिथ्यात्वमवगतम् ? न तावत् प्रत्यक्षानुमानाभ्याम् । (ताभ्या ?) हीद प्रपञ्चजात परिच्छिन्नम्। न च कारणदोषबा धकप्रत्ययौ स्त । पृथिव्यादि ज्ञानस्य आसंसार सर्वेषा प्राणिनामनुवृत्ते । अत पारमार्थिक एवाय भेद तन्निबन्धनश्च व्यवहार । तथैव यदि च मिथ्यात्व सिद्ध स्यात् ततो दिङ्मोहादिवत् बाधकप्रत्ययाभावात् अनुवर्तते, बाधकप्रत्यय चासाद्य निवर्तते-इति कल्पना युज्येत। ननु प्रमितिवादि(प्रमातृ ?)वदविद्या अत्रापि कारणदोष स्यात्, तद्गता प्रमातृणा भेदविज्ञानम् उत्पद्यमान मिथ्या स्यात् द्विचन्द्रज्ञानवत्। अत्रोच्यते, स हेतु परदूषणाय वक्तव्यो य स्वसिद्धान्त न बाधते। अय तु तवैव दोषमावहति । यथा अविद्यावत्प्रमातृणाम् उत्पन्न भेददर्शन मिथ्या तथा अद्वैतब्रह्मज्ञानमपि मिथ्यैव। किं प्रपञ्च ज्ञानस्य बाधकप्रत्ययोऽस्ति ? अविद्यावत्त्वमेव च तत्रापि कारण भवता व्यपदिष्टम् । तत्समान सवत्र मिथ्यात्वे ततश्च मूलोच्छेद प्रसज्यते। अनुमानान्तर च – ब्रह्मज्ञान मिथ्या, ज्ञानत्वात्, प्रपञ्चज्ञानवत्। यथा निद्रालक्षणस्य कारणदोषस्य अविशेषात् स्वप्नज्ञानस्य सर्वस्य मिथ्यात्वमापद्यते। यथा चारण्ये तैमिरिकगतस्य वसतो द्विचन्द्रज्ञानमविशिष्टम्। न च तेषा बाधकप्रत्ययोऽस्तीति। न चासत्यात् सत्यप्रतिपत्तौ दृष्टान्तोऽस्ति ॥

भा सू २-१-१४, पा ९४

अत्र पञ्चपादिकास्वीकृत दोषादित्रितयजन्यत्व मिथ्याज्ञान लक्षणम् उररीकृत्यैव दोष उद्घाटित, न तु भाष्यकाराभिमत सर्वस्य प्रमाणव्यवहारस्याविद्यापुरःसरत्व परिशीलितमिति स्पष्टम्। न हि भाष्यकारै प्रत्यक्षादिप्रमाणैर्मिथ्यात्व साध्यते, येन तत्र कारणदोषादिगवेषण स्यात् किं तर्हि, सर्वस्यैव व्यवहारस्याविद्यापुरःसरत्वम् अनुभवाधारेणैव स्वीकृतम्। न च 'ब्रह्मज्ञान मिथ्या' इत्याद्यनुमानस्यात्र लब्धप्रसरत्वम्।

प्रमाणस्यापि प्रपञ्चान्न पातित्वे सति श्रुतितो जाते ब्रह्मज्ञाने तत्राकाङ्क्षान्तरा-भावात् । यथोक्त भाष्यकृद्भि – 'अपि चान्त्यमिद प्रमाणम् आत्मैकत्वस्य प्रतिपादक नात पर किञ्चिदाकाङ्क्ष्यमस्ति' (सू भा २–१–१४) इति, 'न चेयमवगतिरनर्थिका, भ्रान्तिर्वा – इति शक्य वक्तुम् अविद्यानिवृत्ति-दर्शनात्, बाधकज्ञानान्तराभावाच्च । प्राक्चात्मैकत्वावगतेरव्याहत सर्व सत्यानृतव्यवहारो लौकिको वैदिकश्च' (सू भा पा १९९–२००) इति च ॥

(२) यत्तु प्रत्यक्षादीना स्वतो मिथ्यात्व नास्ति । परतस्तु मिथ्यात्व मिति, कि विशिष्योच्यते ? ननु सर्वत्र स्वप्नादावपि परत एव मिथ्यात्व गम्यते, न स्वत । न हि रज्जुज्ञाने तद्गतमिथ्यात्व गृह्यते । तत्र चागम स्याबाध(ध्य?)स्य प्रत्यक्षादीना सर्वदा मिथ्यात्वमेव स्यात्, न कदाचित्तथात्व मिति । प्रथमपादे प्रत्यक्षादिप्रामाण्यनिरूपण चोदनाप्रामाण्यसिद्ध्यर्थं यत् तदुदके विशीर्णं स्यात्, उपवर्षाचार्यस्य शास्त्रसप्रदायप्रवर्तकस्य ॥

भा सू २-२-२९, पा १२४

अत्र क पूर्वपक्षो निरसनीयत्वेनाभीष्ट इति न ज्ञायते । भगवत्पादीय-मते तु यावदागमेन प्रमातृत्व न निवर्त्यते, तावत्प्रत्यक्षादीना प्रामाण्य निराबाधमिति स्पष्टमेव । उदाहृत हि ब्रह्मविदा गाथाद्वय चतुर्थसूत्रान्ते भगवद्भाष्यकारैरत्र विषये –

अन्वेष्टव्यात्मविज्ञानात् प्राक् प्रमातृत्वमात्मन ।
अन्विष्ट स्यात् प्रमातैव पाप्मदोषादिवर्जित ॥
देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पित ।
लौकिक तद्वदेवेद प्रमाण त्वात्मनिश्चयात् ॥

सू भा १-१-४, पा २४

इति च । शास्त्रस्य अविद्यापुर सरत्व निराकुर्वता भास्करेण शास्त्रप्रामाण्य पूर्वमीमासानुसारेणैव रक्षणीयमिति स्पष्टमेव । तथा चोक्त तत्र तत्र भाष्ये–

(३) केवलम् आगमैकसमधिगम्यत्वात् तत्प्रसिद्धमेव लक्षण दर्शयितुम् आचार्य प्रववृते ॥ भा सू १-१-२, पा ८

(४) शास्त्रं योनिः प्रमाणं यस्य तदिदं शास्त्रयोनि ब्रह्म । तस्य भावः शास्त्रयोनित्वम् । शास्त्रप्रमाणकत्वात् इति यावत् ॥

भा सू १-१-३, पा ९

[अत्र प्रपञ्चप्रविलापनद्वारेण कार्यत्वात् आत्मनो नियोगविषयत्वम् - इति पक्षो निराकृतः । आत्मज्ञानविषयत्वं च नियोगस्य निराकृतम्, भगवत्पादा नुसृतरीत्यैव, ज्ञानस्यापुरुषतन्त्रत्वात् इति ॥ ]

(५) यदि च दुर्ग्रहबलेन सर्वत्र कार्यपरत्वं वर्ण्यते सर्वज्ञः सर्वशक्तीश्वरस्य तत्त्वं न सिध्यति । कुतः -

विध्यर्थवादमन्त्रात्मा त्रिधा वेदो व्यवस्थितः ।
स चेदिष्टः कार्यपरो न स्वरूपे प्रमाणता ॥
तस्मादवश्यं स्वरूपपरत्वमेवेष्टव्यमीश्वरमिच्छतेति ॥

भा सू १-१-४, पा १५

√(६) यथा च प्रकृतिर्विकृतिं नापेक्षते परिपूर्णत्वात्, विकृतिश्च पुनः प्रकृतिमपेक्षते, अपरिपूर्णत्वात्, एवं पूर्वो वेदभागः परं नापेक्षते, स पुनः पूर्वमपेक्षते । वेदान्तवाक्यैरेव ज्ञानसहकारितया नित्यकर्मोपदेशात् ॥

भा सू १-१-४, पा १६

(७) यत् पुनः केवलकर्मभिः क्रियमाणं कर्म पुरुषयोग्यतापादनद्वारेण उत्तमाधिकारविधिशेषत्वं प्रतिपद्यते (इति?) । तदुत्प्रेक्षामात्रेण कल्पितम् ॥ भा सू पा १६

[देवादिभ्योऽनृणीभावः पूर्ववृत्तः प्रज्ञाकषायपरिपाकश्च । एतदानन्तर्यमथशब्देनोच्यते प्रथमसूत्रे । 'आत्मा वा अरे द्रष्टव्यः' इत्याद्युत्तमाधिकारविधियोग्यः पुरुषः क्रियते कर्मभिरिति केषाञ्चित् पक्षः ॥ द्र भा सू पा ४ ]

(८) वेदोऽपि तस्मिन् ब्रह्मणि प्रतिष्ठितः सर्गादौ तदनुग्रहात् प्रजापतेर्मनसि प्रादुर्बभूव - इति न कश्चिद्दोषः । परमात्मनश्च नित्यत्वात् तदात्मत्वाच्च वेदस्य सुतरां नित्यत्वमुपपद्यते ॥ भा सू १-३-३०, पा ६५

[विद्यमानस्याभिव्यक्तीकरणमेव सृष्टिः - इत्यङ्गीकुर्वता सर्वस्यापि नित्यत्वमत एव न्यायात् किं न प्रसजतीत्येतदिह न चिन्तितम् ॥

(९) अत्र मीमांसकाश्चोदयन्ति । कथं युगादौ कस्यचित् पुरुषस्य सम्प्रदायमन्तरेण वेदग्रहणम्? एकस्य च प्रतिभाने वेदस्य कृतकत्वं प्रसज्यते ।

अत्र वदाम । वेदस्य तावत् प्रामाण्य प्रथमशदोक्तेन न्यायेन वाच्यवाचक सबन्धनित्यत्वात्, अस्मर्यमाणकर्तृकत्वात्, प्रयाजादिवदनपेक्षत्वात्, अनधिगतार्थगन्तृत्वात् (इति ?) आवयो समानम् । स्वसिद्धार्थस्वरूपे प्रामाण्य च पुरस्तात् प्रतिपादितम् । तेन यथा स्वर्गास्तित्व भवान् प्रतिपद्यते, तथा अहमपि सृष्टिस्थितिप्रलयकारण परमात्मान सर्वज्ञ सर्वशक्ति प्रतिपद्ये ॥

भा सू १-३-३०, पा ६५

[अत्र "कर्मफले हि स्वर्गादावनुभवानारूढ स्यादाशङ्का 'भवेद् वा न वा' -इति । अनुभवारूढ तु ज्ञानफलम् 'यत्साक्षादपरोक्षाद् ब्रह्म' (बृ ३-४-१) इति श्रुते । 'तत्त्वमसि' (छा ६-८-७) इति च सिद्धवदुपदेशात" - (सू ३-३-३२, पा ४०७) इति भगवत्पादीया युक्तिर्नानुसृता - इत्येतदवधेयम् ॥ ]

## शास्त्रतर्कयोः संबन्धः -

१६२ आगमस्य निरपेक्षप्रामाण्य परिरक्षितु भास्करभाष्ये तर्कस्य स्थानम् इत्थ वर्णितम् -

(१) तस्मादागमेन बन्धमोक्षव्यवस्था वक्तव्या, न तर्केण, अनवस्थितत्वात् ॥ भा सू १-१-४, पा १९

(२) परमेश्वरस्यापि सर्वशक्तित्वात् । उपासकानुग्रहाय रूपोपादानसभवात् । किं मायामय रूपम् ? नेति ब्रूम । पारमार्थिकमेवैतत् । यथाभूतार्थज्ञापक हि शास्त्रम् ॥ भा सू १-१-२०, पा २९

[शास्त्रस्य ज्ञापकत्वमनुभवजननपर्यन्तम्, नाविद्यमानकर्तृत्व शास्त्रस्य - इत्यस्मिन्नर्थे ज्ञापक शास्त्रम् इति न्यायो भगवत्पादैरादृत । अत्र तु यच्छास्त्रेण ज्ञाप्यते तद् यथाभूतम् - इति स न्याय परिवर्तित ॥ ]

(३) ननु कथम् एकस्मिन् देहे द्वौ द्रष्टारौ सभवत इति ? को विरोधो येनैवम् उच्यत इति ? श्रुतिर्हि नान्योऽतोऽस्ति द्रष्टा - इति प्रकृतादन्तर्यामिणोऽन्य वारयतीति । अत्रोच्यते । यथैवेयमेव भेद दर्शयति तथा पूर्वमुदाहृतम् । 'आत्मनि तिष्ठन्' इति भेद दर्शयति । किं न पश्यसि ? न ह्यस्या श्रुतेर्वचन सुभगावचनमिवानादरणीयम् प्रामाण्यतुल्यत्वात् ॥

भा सू १-२-२०, पा ४५

[अत्र स त आत्मा अन्तर्याम्यमृत इति ब्रह्मण सर्वान्तरत्वदर्शनपरापि श्रुतिर्भेददर्शनपरत्वेन व्याख्याता ॥ ]

(४) भवतु श्रुतिसंवादात् सम्यग्दर्शनोपायोपदेशाशस्य तथात्वम्, विप्रतिपन्नाशस्य तु मिथ्यात्वं पुरुषाणाम् अन्यथार्थदर्शित(?)त्वसंभवात् ॥
भा सू २-१-३ पा ८९

[सर्वैरपि वादिभिरेवमेव श्रुतिसंवादं प्रदर्श्य स्वाभिमताशे अनभिमताशस्य तर्केण निराकरणं न संभवति वा ? – इत्येतत्तु न विचारितमत्र ॥ ]

(५) यदुक्तं 'मन्तव्य' इति तर्कस्यानुप्रवेशं श्रुतिं श्रावयतीति नैवानया श्रुत्या शुष्कतर्कोऽभ्यनुज्ञायते किं तर्हि, आगमानुसारी यस्तर्कः, तदुपपत्त्यर्थं स एवानुज्ञायत इति ॥ भा सू २-१-६, पा ९०

[तर्कविशेषस्यागमानुसारित्वे वादिनो यत्र विप्रतिपन्ना, तत्र कथं निर्णय ? -इत्येतच्च चिन्तितमत्र ॥ ]

(६) तर्काणां कथ(मप्य ?)त्यन्तातीन्द्रिये विषये साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानासंभवात्, नानुमानेनाभिप्रेतार्थसिद्धिः कस्यचित्, अतः श्रुतिमूलमेव जगद्बीजावधारणम् इति स्थितम् ॥ भा सू २-१ ११, पा ९२

[ तदवधारणं सर्ववादिसंप्रतिपन्नं कथं भवेदिति तु नोक्तमत्र ॥ ]

(७) 'आदि'ग्रहणम् दृष्टान्तप्रतिदृष्टान्तानन्त्यात् आगमसिद्धस्यार्थस्य अनुमानेन दूषणम् ऋणं धनं वा न शक्यते कर्तुमिति ॥
भा सू २-१-२०, पा १०४

[आगमसिद्धस्यानुभवपर्यन्तता अस्ति वा न वा ? – इत्येतत्तु नोक्तम् ॥ ]

'न शक्यते वचनशतेनापि वस्तुतत्त्वम् अन्यथाकर्तुम्' इति (भा सू ४-४-२२, पा २४०) इति यद्यपीदृशोऽपि न्यायः कदाचिदुपन्यस्तः, तथापि प्रायेण सर्वत्र श्रुतिरागानं यथा स्यात्, तथैव विषयनिरूपणं कर्तव्यम् – इत्यर्थे एवायं न्यायः परिगृह्यत इति स्पष्टम् । अत एव हि भास्कराचार्या इमे यत्र यत्र स्वसिद्धान्तोपरि प्रक्षिप्यमाणानाक्षेपान् सर्वान् सामान्येन श्रुतिवचनोदाहरणब्रह्मास्त्रेणैव प्रतिक्षेप्तुमीहन्ते, तर्कं तु समाह्वयन्ते प्रतिपक्षदोषाविष्करणे – इति च । सैषा वादसरणिरर्वाचीनानामनेकेषां वेदान्तिनामनुकरणीयताम् अभजतेति शोचनीयमेतत् ॥

**भास्करमते कार्यकारणभावस्य प्रामुख्यम् –**

१६३ भास्करमते ब्रह्मपरिणाम एव जगदित्यतो कार्यकारण-प्रक्रियाया अग्रिम स्थान विद्यते । अत एव जिज्ञासासूत्रव्याख्यानावसरे एव लिखितम् –

> प्रसिद्ध तावद् ब्रह्म आगमप्रमाणगम्यत्वात्, 'सदेव सौम्येदमग्र आसादेकमेवाद्वितीयम्' इति जगत्कारणोपदेशात् । ब्रह्मशब्दव्युत्पत्तेश्च । बृहतेर्धातोर्ब्रह्म । यत पर बृहदधिक नास्ति, तन्मूलकारणमेव पारिशेष्यात् । कार्यप्रपञ्चे तु ब्रह्मशब्दो गौण । मुख्यपूर्वश्च गौणो भवति । यथा 'अग्निर्माणवक' इति । किमर्था तर्हि जिज्ञासा ? तद्विशेष प्रति विप्रतिपत्ति निराकरणार्था । केचित् त्रिगुण प्रधान जगत्कारणमाहु । अपरे परमाणु प्रतिजानते । अत प्रस्तूयते ब्रह्मजिज्ञासा । ब्रह्म च कारणात्मना, कार्यात्मना, जीवात्मना च त्रिधा अवस्थितम् । तत्राविशेषेण ब्रह्मजिज्ञासा प्रस्तूयते । 'ब्रह्मैवेद सर्वम्' इति ब्रह्मशब्दस्य अविशेषात् ॥
>
> भा सू १-१-१, पा ७-८

अत्र ब्रह्म सर्वस्यात्मत्वेन प्रसिद्ध शास्त्रे । तद्विशेष प्रति तु विप्रतिपत्तिरिति जिज्ञासा कर्तव्या – इति भगवत्पादीय प्रस्थानम् । तत्र कारणत्वाकारणत्वोदासीन ब्रह्म जिज्ञास्यम् इति शास्त्रार्थ सिध्यति । 'जन्माद्यस्य यत' इति तु न जगत्कारणनिर्देशार्थम्, कि तु ब्रह्मलक्षण समर्पणार्थं सूत्रम् इति च । अत्र पुन, जगत्कारणे वादिविप्रतिपत्ति दर्शनात्, ब्रह्मजिज्ञासा प्रस्तूयते इति न सगतोक्तिरिति भाति । तथा हि ब्रह्मैव कारणमिति प्रतिपादयितु शास्त्रप्रवृत्तिरिति भवेत्, न तु प्रसिद्धमेव ब्रह्म जिज्ञास्यमिति । अभ्युपगम्यापि कारणब्रह्मजिज्ञास्यता शास्त्रार्थ इति त्रिधावस्थितब्रह्मणोऽविशेषेण जिज्ञासा प्रस्तूयत इति न सगतम् । कारणत्वेन हि ब्रह्म जिज्ञास्य भवति विप्रतिपत्तिनिराकरणायेति ॥

**कार्यकारणप्रक्रिया –**

१६४ कार्यकारणयोरुभयोरपि सत्यत्वम्, तयोर्भेदाभेदश्च – इति मतमत्र ॥

(१) कार्यकारणयोरत्यन्त भेद, कारण मृत्पिण्ड, शरावादिकार्य भेदेनोपलभ्यते। कार्यस्य च उदकाहरणादिकार्यम्, न मृत्पिण्डस्य। अतो अनयोर्भेद । असच्च कार्यमुत्पद्यते इति वैशेषिका मन्यन्ते। तन्निराकरणा याह ॥ भा सू २-१-१४ अवतरणिका, पा ९३

[अत्र वैशेषिकनिराकरणमप्रस्तुतप्रक्रिया । स्वपक्षे स्मृतिन्यायविरोध परिहार एव हि पादार्थ इति प्रतिज्ञात इति ॥ ]

(२) 'तयोरनन्यत्वम् आरम्भणशब्दादिभ्य'। एकविज्ञानेन सर्व विज्ञान प्रतिज्ञाय तदुपपादयिषया दृष्टान्त उपादीयते – 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मय विज्ञात स्याद् वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम्' (छा ६-१-४) इति वार्थ (अस्यार्थ ?)। वागिन्द्रि-यस्य, उभयमारम्भण विकारो नामधेय च। विकारोऽभिधेयोपप(त्प?)त्ति। तदभिधेय नामधेयम्, उभयमालम्ब्य वाग्व्यवहार प्रवर्तते। 'घटेन उदक माहर' इति। मृन्मयम् इत्यस्येद व्याख्यानम्। यदि तर्हि व्यवहारहेतु कार्यम्, न तर्हि कार्यकारणयोरनन्यत्वम् इत्याशङ्क्याह – मृत्तिकेत्येव सत्यम् इति। कारणमेव कार्यात्मना घटवदवतिष्ठते। मृत्समन्वित हि कार्यमुपलभ्यते त्रिष्वपि कालेषु। कारणाधीन कार्यम्, नाश्वमहिषवद् देशत कालतो वा व्यतिरिक्तमुपलभ्यते। कारणस्य अवस्थामात्र कार्यं व्यतिरिक्ताव्यतिरिक्तम्, शुक्तिरजतवदागमापायधर्मित्वाच्च 'अनृतम्', 'अनित्यम्' – इति च व्यपदिश्यते ॥ भा सू २-१-१४, पा ९३

['शुक्तिरजतवदनृतम्' इति किमित्युक्तमिति न ज्ञायते ॥ ]

(३) 'अपागादग्नेरग्नित्वम्' (छा ६-४-१) इति च कारणात्मना निरीक्ष(क्ष्य?)माण कार्यं चातिरिक्त नोपलभ्यते, कारणात्मन्येव तिरोहित भवति – इत्यभिप्रायेणोक्तम् ॥ भा सू ९३

(४) आदिशब्देन 'ऐतदात्म्यमिद सर्वं तत्सत्य स आत्मा तत्त्वमसि' (छा ६-८-७) इत्येवञ्जातीयक वचन गृह्यते ॥ भा सू पा ९३

(५) तथा च श्रुत्यन्तरम् आत्मव्यतिरिक्तस्य प्रपञ्चस्य सत्यता दर्शयति – 'अथ नामधेय सत्यस्य सत्यमिति प्राणा वै सत्यम् तेषामेष सत्यम्' (बृ २-३-६) इति। यदि चानृतत्वमभिप्रेयात् 'प्राणा असत्यम्' इति ब्रूयात् ॥ भा सू पा ९३

अत्र कार्यं कारणाद् व्यतिरिक्ताव्यतिरिक्तम् इति कुतो लभ्यत इति न ज्ञायते । दृष्टान्ते यद्यपि मृदः सत्यत्वं प्रत्यक्षसिद्धमेवानूद्यते, तथापि 'मृत्तिकेत्येव सत्यम्' इति किमित्येवकारेणावधार्यते ? न हि कार्यस्यापि सत्यत्वे विवक्षिते तत् सगतं भवेत् । एवम्, त्रिवृत्करण प्रक्रियायामपि 'कारणात्मना निरीक्ष्यमाणम्' कार्यं व्यतिरिक्तं नोपलभ्यते स्वेन रूपेण सत्यमेव – इति चेद् विवक्षितम्, तर्हि किमिति प्रतिपर्यायम् 'अपागादग्नेरग्नित्वम्', 'अपागादादित्यस्यादित्यत्वम्' इत्यग्नित्वादीनामपगमो भूयो भूय उद्घुष्यते 'त्रीणि रूपाणीत्येव सत्यम्' इति च रूपत्रयस्यैव सत्यत्वमवधार्यते ? न हि दृष्टान्ते घटस्य दार्ष्टान्तिके अग्न्यादीनां वा सत्यत्वं केनचित् संशय्यते, विकारनामधेययोर्व्यवहारालम्बनत्वे सिद्धेऽपि ? किं च कारणम् उभयत्रापि 'वाचारम्भणं विकारो नामधेयम्' ? इति प्रतिपर्यायम् अभ्यस्यते, न हि बाह्यं घटादिकं वागिन्द्रियेणाभिप्रेयम् अभिधानं च वागिन्द्रियव्यवहारयोग्यमित्येतत् केनचिन्निषिद्धं संशयितं वा, येनैवमभ्यासेनावध्रियेत । तदेतत् कारणस्यैव सत्यत्वावधारणं कार्यस्य तु रूपधेयनामधेयस्वरूपेण वाचारम्भणत्वाभ्यासश्च न सम्यगुपपादितं कार्यसत्यत्ववादिमतेनेति भाति ॥

यदप्युच्यते 'कार्यं व्यतिरिक्ताव्यतिरिक्तं शुक्तिरजतवदागमापाय धर्मित्वात् अनृतमनित्यमिति च व्यपदिश्यते' इति, तत्र किम् आगमापायित्वादनित्यमित्येतावद् विवक्षितम्, आहोस्वित् शुक्तिरजतादिवत् प्रतीति मात्रशरीरकमसत्यमित्येव कृत्वा अनृतमिति व्यपदिश्यते-इत्येतन्निरूपणीयम् । दृष्टान्तवद्दार्ष्टान्तिकेऽपि सत्यप्रतिद्वन्द्विवाचकतयैव ह्यनृतशब्द उपचरितो लक्ष्यते 'स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते । सोऽनृताभिसंधोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति सदह्यतेऽथ हन्यते', अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसंध सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते' इति

चोक्त्वा (छा ६-१६-१, २) 'स यथा तत्र नादाह्येतैतदात्म्यमिदं सर्वं तत्सत्यम्' इति 'ब्रह्मैव सत्यम्' इति सत्याभिसंधो मुच्यते- इति दृष्टान्त दार्ष्टान्तिकयो सममेव सत्यशब्दोपादानदर्शनात् । तस्मादत्र कार्यस्य शुक्तिरजतवत् कारणेऽध्यारोपितत्वेन वाचारम्भणमात्रत्वात् - केवलं वाचैव घटघटिकाद्यात्मना आरभ्यत्वात् - कारणव्यतिरेकेणाभाव एव इति कृत्वा 'तदनन्यत्वम्' उच्यते इति वदता भगवत्पादसमताध्यारोपापवादप्रक्रिया मालम्बमानाना पक्ष एव सूत्रकारसमत इति भाति । अन्यथा हि 'तदन्या ननन्यत्वम्' इत्येवोच्येतेति ॥

यत्तूच्यते - 'अथ नामधेयम् सत्यस्य सत्यमिति प्राणा वै सत्य तेषामेष सत्यम्' (बृ २-३-६) इति श्रुत्यन्तर प्राणाना सत्यत्व ब्रूते इति, तदसत् । श्रुत्यन्तरेण तत्परेण सिद्धस्य [illegible] प्रतिषेधा नुपपत्ते । वाचारम्भणश्रुतिस्तावत् विकारस्य सर्वस्य नाममात्रत्व कारणस्यैव सत्यत्वमित्यसकृदुद्घोषयति । 'प्राणा वै सत्यम्' इति लोकसिद्धानुवाद, 'तेषामेष सत्यम्' इत्येव तु प्रतिपादनम् । प्राणाना सत्यत्व सत्यच्छब्द वाच्यतया व्यावहारिकसत्यतया च, तेषु विभाव्यमान सत्यत्व तु वस्तुतो नेतिनेत्यात्मन एव-इत्यत 'सत्यस्य सत्यम्'-इत्युच्यते आत्मा । 'येनायो दहति, तदग्नेरौष्ण्यम्' इतिवत् । अतो नैतत् प्रपञ्चानृतत्वबाधकमिति सिद्धम् ॥

## कार्यमिथ्यात्वनिरासः -

१६५ यथा नानात्व मिथ्येति पक्षो भास्करभाष्ये निरस्यते तथा दिङ्मात्र दर्शित प्रत्यक्षादिप्रामाण्यनिरूपणप्रसङ्गेन (ख १६१, पा ३४६) । आगमादपि मिथ्यात्वासिद्धिरित्येतदित्थमुपपादित भास्करेण-

(१) (अथ) आगमात् प्रपञ्चस्य मिथ्यात्वमुच्यते, तदयुक्तम् । श्रोत्र प्रभवस्य ज्ञानस्य मिथ्यात्वात्, वर्णात्मकस्य तत्त्वमस्यादिवाक्यस्याभाव । ततश्च केन मिथ्यात्व प्रतिपद्येत ? भा सू २-१-१४, पा ९५

(२) 'नेह नानास्ति' इत्यपि इहशब्दोपादनात्, कारणस्वरूपे नानात्व नास्तीति विवक्षित स्थितम्। स्थित्यवस्थाया तु कार्यमप्यस्तीत्यविरोध ॥ भा सू पा ९५

(३) 'स एष नेतिनेत्यात्मा' इति शरीराद्यनात्मपर्युदासेन आत्मस्वरूपमुपदिश्यते ॥ भा सू पा ९५

(४) 'यत्र स (हि?) द्वैतमिव' इति इवशब्दोऽनर्थक, यथा 'विततमिव' इति, अवधारणार्थो वा, 'यथाश्व इव' इति, सादृश्यार्थो वा, यथात्रैवाग्ने (यथा आर्द्रैधाग्ने ?) धूमविस्फुलिङ्गादिवत्। विविध विकार जात यस्याम् अवस्थाया भवति तदितर इतर पश्यति, 'यत्र त्वस्य सर्वम् आत्मैवाभूत् तदा केन बलेन क विषय पश्येत्' इति विषयज्ञान निषिध्यते कारणप्राप्तौ – इत्येव सर्वम् अविरुद्धम् ॥ भा सू पा ९५

अत्र सर्वत्रापि द्वैतक्षेत्रे सत्यानृतविभागोऽस्त्येवेति वेदान्तसिद्धान्त। वैयात्येन तु तदनुवादोऽन्यथा क्रियते। यदा तु श्रोत्रप्रभवस्य ज्ञानस्य वर्णात्मकतत्त्वमस्यादिवाक्यस्य च मिथ्यात्वम्, कि तदा श्रोत्रस्य मुखस्य च सत्यत्व भवति, येन वक्ता वाक्य ब्रूयात्, श्रोता च श्रुतिवाक्य तदर्थं वा गृह्णीयात्? कस्य वा तत्र सत्यत्व मिथ्यात्व वा साध्येत, बाध्येत वा? अत्रेदमभियुक्तवचनमनुसधेयम् –

विकल्पो विनिवर्तेत कल्पितो यदि केनचित्।
उपदेशादय वादो ज्ञाते द्वैत न विद्यते ॥ गौ का १-१८

अतो ब्रह्मैवेद सर्वमिति ज्ञानात् प्रागेव सत्यमिथ्याविभागकथनम्। यथाहुर्भाष्यकारा –

'प्राक् चात्मैकत्वावगतेरव्याहत सर्व सत्यानृतव्यवहारो लौकिको वैदिकश्चेत्यवोचाम' (सू भा २-१-१४, पा १९९)

इति। तत्र भास्करोदाहृतश्रुतिवचनानि परिशील्यन्ते तद्व्याख्यानस्यानाञ्जस्य प्रकटनार्थम् ॥

(१) '**नेह नानास्ति किञ्चन**' (का २-१-११) इति श्रुति ब्रह्मणि नानात्व किञ्चन नास्ति – इत्याह, न तु कारणे ब्रह्मणीति।

अप्रकृतत्वात् कार्यकारणप्रक्रियाया । 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते' इति सर्वप्रपञ्चधर्मवर्जितस्य ब्रह्मात्मनोऽवगमेनामृतो भवतीति खलु पूर्वस्यां वल्ल्यामुक्तम् । तदेवेह वल्ल्या प्रपञ्च्यते सप्रपञ्चत्वदर्शिना देवायमात्मा न प्रकाशते—इति ज्ञापयितुम् । प्रकृतमन्त्रेऽपि सप्रपञ्चत्वदर्शनं विनिन्द्यते 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' । न हि कारणब्रह्मणि नानात्वं प्राप्तम्, येन तद्दर्शनं विनिन्द्येत । तस्मात्, ब्रह्मण्य विद्याकृतं नानात्वमेव निषिध्यते वाक्येन—इति युक्तम् ॥

(२) '**स एष नेतिनेत्यात्मा**' इति वाक्यं बृहदारण्यके नैकवारम् उपन्यस्तम् । सर्वत्रापि 'अथात आदेशो नेति नेति' (बृ २–३–६)[1] इत्यत्रोक्त एवात्मा परामृष्टः 'नेतिनेत्यात्मा' इति । तत्र तृतीयाध्याये तावत् पूर्वस्मिन् ग्रन्थे पृथिव्याद्याकाशान्तेषु पूर्वस्य पूर्वस्योत्तरस्मिन्नुत्तरस्मिन् ओतत्वं देवतानां नियन्तव्यत्वं चोक्तम् । समनन्तरं पूर्ववाक्ये तु 'कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति, प्राण इति' इत्यादि प्राणापानादीनामुत्तरोत्तरस्मिन् प्रतिष्ठितत्वम् । नात्र शरीरादिकं परामृष्टम् । चतुर्थे तु द्वितीयब्राह्मणे (बृ ४–२–४) 'इन्धो ह वै नामैष' इत्यादिना वैश्वानरतैजसप्राज्ञाः पूर्वं परामृष्टाः । तदनु 'स एष नेति नेत्यात्मा' इत्युक्तत्वात्, आत्मनि वैश्वानरत्वादिकं निह्नुते इति गम्यते । पुनस्तत्रैव चतुर्थब्राह्मणे सकामस्य संसारगतिं आत्मकामस्य च सर्वैषणात्यागेन मोक्षं चानुक्रम्य 'स एष नेति नेत्यात्मा' (बृ ४–४–२२) इत्याह । उभयत्रापि शरीरादेरात्मविवेक इत्यत्र गमकं किमपि नोपलभ्यते । पुनरपि मैत्रेयीब्राह्मणे दुन्दुभ्यादिदृष्टान्तेन सामान्यविशेषभावम् अग्निसमुद्रदृष्टान्तैर्नामरूपप्रपञ्चस्यात्मन उत्पत्तिं तत्रैव च लयं दर्शयित्वा

1 अत्रोपनिषत्क्रमेणैवाध्यायसङ्ख्या दीयते, न तु प्रवर्ग्यब्राह्मणमपि परिगणनेऽन्तर्भाव्येति ध्येयम् ॥

द्वैताद्वैतदृष्टिभेदौ चोऽन्यस्याह 'स एष नेतिनेत्यात्मा' (बृ ४-५-१५) इत्याह । सर्वत्राप्यत्र यद् यद् दर्शितम् उपायत्वेन, तदेवात्मनि वस्तुतो नास्तीति निषिध्यत इति युक्तम् । निष्प्रपञ्चत्वमात्मनो विज्ञापयितु प्रवृत्तत्वात् । न तु कुत्रापि 'शरीराद्यात्मपर्युदासेन आत्मस्वरूपदर्शने' यत्न कृतो दृश्यते । स्वरूपेणाग्राह्यत्वादेवात्मन । तस्मात्, य प्रपञ्चो निह्नुतोऽत्र तस्य मिथ्यात्वमेव युक्तमवगन्तुमित्युत्पश्याम ॥

(३) अथ **'यत्र हि द्वैतमिव भवति तदितर इतर पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्'** (बृ ४-५-१५) इति वाक्ये यत्र हि 'द्वैतमिव' इत्यनर्थक, अवधारणार्थ, सादृश्यार्थो वा इवशब्द - इत्यत्र गमक किञ्चिदपि नोपलभ्यते । मैत्रेयीब्राह्मणे हि जगत्सृष्टिस्थिति-प्रलयकारणत्वम् आत्मन एवेति प्रदर्श्य, आत्मा प्रज्ञानघनोऽपि भूतमात्राकृत शरीरादिससर्गाद् विशेषविज्ञानवानिव विभाव्यमानोऽपि भूतेभ्यो व्युत्थाने सति न विशेषसज्ञावानिति 'न प्रेत्य सज्ञास्ति' इति श्रुत्या ज्ञापितम् । अतो यत्रैव द्वैतमिव भवति तत्रैव सैन्धवखिल्य इव परिच्छिन्नत्वमात्मन, तत्रैव च विशेषसज्ञा इतरस्य इतरेण दर्शनम्, न तु स्वाभाविके अद्वैते - इत्येव याज्ञवल्क्यो विवक्षतीति युक्तम् । 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति सावधारणश्रुते । एवेत्यवधारणं हि विद्यया निरस्तद्वैतावस्थामाह इवेति प्राग्दर्शितमिथ्यादर्शनव्यवच्छेदेनेत्यक्षराञ्जस्य भवेत् । न हि 'यत्र कारणत्व प्राप्त' इति श्रुतिरस्तीति ॥

अत्राह भास्कराचार्य -

(१) न च पुरुषापेक्षया मिथ्यात्व सत्यत्व वा प्रपञ्चस्य कल्पयितु शक्यम्, मुमुक्षून् प्रति मिथ्या, इतरान् प्रति सत्यम्-इति । न हि रूप-मन्धान् प्रति असत्यम्, इतरान् प्रति सत्यम् - इति शक्य वक्तुम् । न हि पुरुषस्व(रूपा,भावानुरोधिनो भावा, येन तदपेक्षया सत्यत्वम्, असत्यत्व वा भजेरन् । किञ्च,

प्रपञ्चास्तित्वमज्ञस्य तस्यैव ज्ञानिन पुन ।
स एव किल नास्तीति कथ सह्य वचो भवेत् ॥
न हि द्विचन्द्र प्रागासीत् पश्चान्नास्तीति युज्यते ।
द्विचन्द्रज्ञानतुल्यत्व प्रत्यक्षादेस्त्वपेक्ष्यते ।
न च तिमिरवत् प्रपञ्चमिथ्यात्वे कारणदोषो गृह्यते ॥

सू भा १-१-४, वा १७, १८

इति। अत्रेद वक्तव्यम्-क एवमाह तदेव वस्तु पुरुषमेक प्रत्यस्ति, पुरुषान्तर प्रति नास्तीति? ज्ञानाज्ञानापेक्षया सत्यत्वबुद्धि , मिथ्यात्वबुद्धिश्च सर्वैरभ्युपेयेते । न हि शुक्तिरजत पश्यन् तत्काले रजत 'मिथ्या' इति मन्यते । न च तदानी तत्र तस्य सत्यत्वबुद्धिरस्तीत्येतावता रजत सत्यमेव भवति सर्वेषामपि तत्प्रेक्षकाणाम् । न च शुक्तिज्ञानवतस्तत्र पूर्व विद्यमान सत् रजतमपगच्छति बाधकाले कुत्रचित्। एवमेव प्रत्यक्षादिज्ञानम्, प्रपञ्च - इत्यादि सर्वमपि मिथ्यैव सत् अविद्यावता सत्यमिव भासते, विद्यया तु तत्र सत्यत्वबुद्धिर्बाध्यते । यथा शरीरादिष्वात्मबुद्धिर्यथार्थेति लौकिकैर्निश्चिता सत्यपि विद्ययापगच्छतीति भवानप्यनुमन्यते । तदेवाहु साप्रदायविद -

देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पित ।
लौकिक तद्वदेवेद प्रमाण त्वात्मनिश्चयात् ॥

ब्रह्मविदा गाथा, सू भा १-१-४

प्रपञ्चो यदि विद्येत निवर्तेत न सशय ।
मायामात्रमिद द्वैतमद्वैत परमार्थत ॥

गौ का १-१७, वा १९०

इति च । न च नास्त्येव कस्यचिन्मिथ्यात्वज्ञानम् । सुषुप्तिसमाध्यादाव दर्शनेन विवेकिना प्रपञ्चस्य व्यभिचरत्स्वरूपस्य मिथ्यात्वनिश्चयात् । दर्शनानुवृत्तिस्तु चन्द्रसूर्यादीना प्रादेशमात्रज्ञानानुवृत्तिवदित्यनवद्यम् ॥

तदेव व्याख्यानकौशलप्रदिदर्शयिषुभिर्यद्यपि शक्यन्त एवाद्वैतश्रुतय , द्वैतनिषेधश्रुतयश्च, अन्यथान्यथा व्याख्यातुम् , तथापि प्रकरणादि

पर्यालोचनया अनुभवाङ्गयुक्त्यवष्टम्भेन च वीक्ष्यमाणे सर्वत्रात्र अध्यारोपाप वादप्रक्रियैव त्रय्यन्ताभीष्टेति सुस्फुट भवेत् निष्पक्षपातिपरीक्षकाणाम् इति सुस्थम् ॥

आत्मपरिणामवादः –

१६६ 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति सूत्रे एकज्ञानेन सर्वविज्ञानप्रतिजानात्, मृद्विज्ञानेन सकलमृन्मयविज्ञानवदिति दृष्टान्ताच्च ब्रह्म न केवलमधिष्ठातृकारण जगत, किं तु 'प्रकृति' उपादान-कारणमपीत्युक्तम्। 'बहु स्याम्' इति सकल्पपूर्वकसृष्टिकथनात्, ब्रह्मैव कारणमुपादाय सृष्टिप्रलययोराम्नानाच्चैतदेवम् – इत्युत्तरसूत्रयोरभिहितम्। तदनन्तरसूत्रे तु – 'आत्मकृते परिणामात्' (वे सू १-४-२५)[1] इत्युच्यते। तत्र भगवत्पादीय भाष्यम् 'पूर्वसिद्धोऽपि हि सन्, आत्मा विशेषेण विकारात्मना परिणमयामासात्मानम्। विकारात्मना च परिणामो मृदाद्यासु प्रकृतिषूपलब्ध' (सू भा पा १७७) इति। भास्करीयभाष्ये तु लिखितमस्ति –

(१) परमात्मा स्वयम् आत्मान कार्यत्वेन परिणमयामास- इत्यर्थ। शक्तिविक्षेप कृतवान्। अनन्ता हि तस्य शक्तयोऽचिन्त्याश्च तासा विक्षेप करोति सृष्टिस्थितिकाले यथा सूर्यो रश्मीनाम्, तद्वदेव सहरति ॥

भा सू पा ८७

इति। अत्र यद्यपि परिणामशब्द उभयत्र समान, तथापि प्रक्रिययोरनयोर्महद् वैलक्षण्यमस्ति। भगवत्पादाना हि यथा मृदादय स्वात्मरूपेणैव स्थिता घटादिरूपेण स्वात्मान दर्शयन्ते, न तु घटादिविकाराणा वाचारम्भणमात्राणा मृदाद्यात्मत्वव्यतिरेकेण सत्त्वान्तरमस्ति, एवम् आत्मापि प्रपञ्चरूपेणा भासते, प्रपञ्चस्यात्मव्यतिरेकेणाभाव एवेत्यभिप्राय। भास्कराचार्यमते तु

1 सख्यानिर्देशो भास्करानुसारेण, भगवत्पादानुसारेण तु २६तममिद सूत्रम् ॥

तथ्यत एव अचिन्त्या अनन्ता शक्तय सन्ति परमात्मन । तद्विक्षेपभूत कार्यमपि प्रपञ्चलक्षण सत्यमेव – इति विशेष ॥

(२) तथा च वाक्य ' परिणामस्तु स्याद दध्यादिवत् इति । विगीत विच्छिन्नमूल माहायानिकबौद्धगाथित मायावाद व्यावर्णयन्तो लोकान व्यामोहयन्ति ॥ भा सू पा ८५

[अत्र ऽर्थं प्रतीतरूपेण मायामयमित्येतन् अतिसमन विस्पष्टमेव प्रत्याख्यातम् ॥]

(३) कथ पुन परिणामो निरवयवस्याकाशकल्पस्येति चेत् ? अत्रोच्यते । परिणामस्वाभाव्यात् क्षीरवत् । सर्वज्ञत्वाच्च सर्वशक्तित्वाच्च स्वेच्छया परिणामयेदात्मानमिति शक्यते वक्तुम् ॥ भा सू पा ९६

परिणामस्वाभाव्यात् परिणाम , परिणामाच्च तत्स्वाभाव्यम् इत्यन्योन्याश्रय स्पष्ट । सर्वज्ञत्वात् सर्वशक्तित्वाच्च परिणाम इति वदता, अशक्यमपि कर्तुं प्रभवेत् सर्वशक्त इत्युक्त भवेत् । तत् किं स्वात्मान विनाशयितुमपि प्रभवेत् सर्वशक्त, आत्मनोऽभाव वा जानीयात् सर्वज्ञ –इति नालोचितमत्र ॥

(४) ननु सावयवत्वात् क्षीरस्य परिणामोपपत्ति । उच्यते । न सावयवत्व तत्र परिणतिहेतु । यदि स्यात् अम्बुनोऽपि दधिभावेन परिणाम स्यात् । अतोऽप्रयोजक सावयवत्वम् । परिणामस्वाभाव्यादेव हि पय परिणमते ॥ भा सू पा ९६

अहो तर्कशैली ! सावयवत्वाद् यदि परिणाम , तर्हि अम्बुनोऽपि दधिभावेन परिणाम स्यादिति कोऽयमपूर्वो नियम ? यस्यापि परिणाम स्वाभाव्यादेव दधिभाव , तस्याप्यम्बुन किं न स्याद् दधिभावेन परिणाम ? – इति प्रष्टव्योऽय तार्किक । तथास्वभाव्याभावादिति चेत् , एव स्वभाव वादेन कस्य वा वादिन किं न सिध्येत् । ' एवस्वाभाव्याद् वस्तुन एव भवति, एवस्वाभाव्याभावाच्च न तथा भवति ' इत्येतावदेवाल सर्वत्रेष्ट साधने, किं हेतुविशेषस्य साध्यव्याप्यत्वादर्शनप्रयासेनेति सर्वमपि सदसद्धेतु परीक्षण लवणाम्बुधावेव हि निधायेतेति ॥

(५) तदापीदं चिन्त्यम्-किमवयविनः परिणामे शक्तिः, आहोस्वित् अवयवानामिति। न हि तस्मिन् द्रवद्रव्ये अवयवी नाम व्यतिरिक्तोऽभ्युपगम्यते मायावादिना। ततः पारिशेष्यात् अवयवानां शक्तिः। ते च निरवयवाः। न ह्यवयवानाम् अवयवाः सन्ति, येन सावयवस्य परिणामो वर्ण्येत? ये चावयवानाम् अवयवाः कल्पिताः, ते किं परिणमन्ते नेति? यदि न परिणमेरन्, दधनि पयो दृश्येत। तस्मात् सर्वेषामवयवानां परिणामित्वम् एष्टव्यम्। किञ्च अवयवानाम् अवयवकल्पने तेषामप्यवयवकल्पने हि अनवस्था, क्षीरसमुद्रश्च कुण्डे स्यात्, अवयवानामानन्त्यात्। तस्मान्निरवयवस्यैव परिणामो दृश्यत इति ब्रह्मणोऽप्युपपद्यते। तथा च न्यग्रोधा(दी?)ना दृष्टान्तेन परिणामो वर्णितः श्रुत्या॥

भा सू २-१-१४, पा ९६

अत्रापि तर्ककौशलप्रदर्शनं क्रियते। यदि हि निरवयवा अवयवाः, तत्राप्यवयवकल्पने चानवस्थादिदोषः, तर्हि मास्तु अवयवानां परिणामवत्त्वम्, किं तत्र च्छिन्नं मायावादिनः? न हि स वास्तविकमेव कार्यकारणभावम् अभिमन्यते यथा भवान्। किञ्च, यदि सावयवस्य परिणामो नोपपद्यते, मा नामोपपद्यताम्, कथं तावता निरवयवस्यैव परिणामः सेत्स्यति? परिणामो दृश्यत इति चेत्, दृश्यताम्। तावता तथ्यत एव परिणाम इति कुतोऽङ्गीकर्तव्यम्? 'सतो हि मायया जन्म युज्यते न तु तत्त्वतः' (गौ का ३-२७) इति हि प्रतिवादिनो मतम्। अपि च ब्रह्मणो निरवयवस्यैव तत्त्वतः परिणामे अभ्युपगम्यमानेऽपि कथं नानवस्था? न ह्यजं जायत इत्युपपद्यते। ततश्च 'तत्त्वतो जायते यस्य जातं तस्य हि जायते' (गौ का ३-२७) इत्यभियुक्तप्रदर्शितन्यायेन तत्रापि हि ध्रुवमनवस्था समापतेदिति मन्तव्यम्। न्यग्रोधदृष्टान्तश्रुतिस्तु – अत्यन्तसूक्ष्माद् ब्रह्मणो नामरूपादिमत् कार्यं जगदुत्पन्नमित्येतावदाह, न तु तात्त्विकपरिणाम इतीत्यनुदाहरणम्॥

(६) अप्रच्युतस्वरूपस्य शक्तिविक्षेपलक्षणः।
परिणामो यथा तन्तुनाभस्य पटतन्तुवत्॥

पटवच्च । यथा अप्रच्युतस्वरूपाणां तन्तूनां पटात्मना अवस्थानम्, यथा आकाशादप्रच्युतस्वभावाद् वायुरुत्पद्यते इति । सोऽयं शक्तिविक्षेपोपसंहारत्वाद् सूरिभिराश्रितः । प्रमाणवत्त्वात् ॥ भा सू पा ९६

अत्र तन्तुनाभदृष्टान्तस्तावत् तवानिष्टं प्रसञ्जयति । तस्य हि कीटस्य क्षुद्रतरजन्तुभक्षणात्, लाला कठिनतामापद्यमाना तन्तुर्भवति । अतो नाप्रच्युतस्वभावः सः । जन्त्वन्तरनिगिरणेन ह्युपचयः, तदुच्चारणेन चापचयो लूताकीटस्येति ॥

पटतन्तवो यद्यपि प्रच्युतिरहिताः, तथापि त एवातानवितानवन्तः प्रत्यक्षमुपलभ्यमानाः स्वव्यतिरेकेण पटं नाम वस्त्वन्तरमविद्यमानमेव विद्यमानमिव दर्शयन्ति । अतः पटो नाम विकारो नाममात्रम्, तस्य तन्तव एव स्वरूपमिति निश्चीयते । आकाशोऽपि स्वात्मनाऽऽकाशरूपेण स्थित एव वाय्वात्मनापि भासते इत्यङ्गीकर्तव्यम् । न ह्याकाशाद् वायुरभिनवतया उत्पद्यमानः केनचिद् दृष्टः, अनाकाशव्याप्तो वा स्थितिं लभमानः । श्रुतिप्रमाणेन तु 'वायुः संभूतः' इति यद्यपि स्वीकार्यम्, तथाप्याकाशे आकाशात्मतां हित्वा वायुर्नास्तीति दर्शयितुमेव श्रुतिप्रवृत्तिरिति ज्ञायते । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै) इति, 'अनाकाशम्' (बृ ३-८-८) इति च ब्रह्मणोऽव्यतिरिक्तत्वमाकाशस्य दर्शयन्त्याः श्रुतेः प्रामाण्यात् । स्मृतिश्च 'मत्स्थानि सर्वभूतानि' (गी ९-४), 'न च मत्स्थानि भूतानि' (९-५) इत्युक्त्वा तद्दृष्टान्तत्वेन 'यथाऽऽकाशस्थितो नित्यं वायुः' (गी ९-६) इति वायोराकाशे स्थितिमस्थितिं चाहेति । तस्मात् अप्रच्युतस्वरूपस्य परिणतिर्मायिक्येवेति सुस्थम् ॥

(७) न च निरवयवस्य परिणामो नास्ति । यथा मनसः कामक्रोधलोभमोहादयः परस्परविलक्षणाः समुद्रोर्मय इवोद्भवन्ति, मनःस्वरूपं चाऽप्रच्युतम् । दर्शितं च 'एतत् सर्वं मन एव' (बृ १-५-३) इति । यथा नभसो वायुर्वायोरग्निः । असिद्धो दृष्टान्त इति चेत्, बधिरस्त्वम् ।

किं श्रावयन्ती श्रुति न शृणोषि ? शृणोमि । अप्रमाण सा अनुपपन्ना, अर्थवादत्वात् इति चेत् ऊर्णनाभि प्रजापतिप्रिय, पश्य । दृष्टत्वादत्रोपपन्नम् इति चेत् । अत्राप्यविशिष्ट शास्त्रदृष्टत्वम् । न च प्रामाण्ये कश्चिद् विशेष स्वे स्वे विषये ॥ भा सू पा ९८

मनसो निदर्शन तावद् विषमम्, 'अन्नमय हि सौम्य मन (छा ६-५-४) इति, 'एका कलाऽतिशिष्टाऽभूत् साऽन्नेनोपसमाहिता प्राज्वाली' (छा ६–७–६) इति चोपचयापचयज्ञापनात् सावयवत्व-सिद्धे । ऊर्णनाभिदृष्टान्तोऽपि व्याख्यातपूर्व । शास्त्र तु कि परिणामपर न वेत्येतदेवात्र विचारणीय वर्तते । अतो न किञ्चिदेतत् ॥

## मायावादनिरासः –

१६७ मायावादश्च इत्थ निराकृतोऽत्र –

(१) कथमिद मायामात्र प्रमाणमन्तरेण प्रतिज्ञातु शक्यम् ? 'त्रिवृत त्रिवृतमेकैक करवाणि' (छा ६-३-३) इति बुद्धिपूर्वं परदेवता-प्रवृत्ते । तदभिप्रायमज्ञात्वा को नामादृष्टनिर्भय 'सर्वं मिथ्या' इति कल्पयितुमर्हेत् ? यदि च दृष्टसाधर्म्येण अदृष्ट निर्णेतुमिष्येत, तदा च दृष्ट-मदृष्ट द्रष्टव्यम् ॥ भा सू पा ९९

उक्त श्रुतेरभिप्राय – 'अपागादग्नेरग्नित्व वाचारम्भण विकारो नाम-धेयम्' इति श्रुति व्याकुर्वद्भिरस्माभि प्रागेव (ख १६४, पा ३५३) दृष्टसाधर्म्यमपि श्रुत्यैव दर्शितम् 'मृत्तिकेत्येव सत्यम्' इति ॥

(२) कुतश्चायमवगमो भवत ? न हि सूत्रकार क्वचिन्मायाशब्द प्रायुङ्क्त । यत्तु स्वप्नज्ञानात् (इति?), मायामत्र तु 'कार्त्स्न्येनानभिव्यक्तस्व-रूपत्वात्', (वे सू ३-२-३) इति हि य(त?)त्रोक्तम्, 'वैधर्म्याच्च न स्वप्नादिवत्' (२-२-२९) इति वैधर्म्यमुक्तम् ॥ भा सू पा ९९

मायाशब्दस्याभावेऽपि 'तदनन्यत्वमारम्भणशब्दादिभ्य' (वे सू २–१–१४) इति सर्वस्यास्य विकारस्य वागारम्भणमात्रश्रुत्युदाहरणात्

नस्य मायात्वमुक्तमेव । यत्तु 'वैधर्म्याच्च' इति सूत्र तस्यार्थोऽवस्थात्रय प्रक्रियापरिशीलनावसरे प्रदर्शयिष्यत इत्यास्ता तावत् तत् ॥

(३) सूत्रकारस्य 'स्मृत्यनवकाशदोष' इत्यारभ्य साङ्ख्याद्युक्ता षि( वि?)तदूषणोद्धरणार्थं प्रत्यधिकरण प्रयासोऽनर्थक स्यात् मायामात्रत्वे । 'न वियदश्रुते' इति चारभ्य भूतानामुत्पत्त्यादिविचारोऽनर्थक स्यात् ॥
भा सू पा ९९ १००

अहो व्यामोह ! प्रधानादिकारणवादे, अद्वितीयात्मासिद्धि फलम्, ब्रह्मैककारणवादे तु 'ऐतदात्म्यमिद सर्वम्', 'इद सर्वं यदय मात्मा', 'नेह नानास्ति किञ्चन'–इत्येवमादिश्रुतिभ्य आत्मैकत्वसिद्धि फलम् – इति तदनन्यत्वसूत्रे 'आरम्भणशब्दादिभ्य' इत्यादिशब्देन सूचितमिति भगवत्पादीय परिहार कि न शृणोति, येनेत्थमाम्रान् पृष्टो कोविदारानाचष्टे भवान् ? 'न वियदश्रुते' इत्यारभ्य भूतानामुत्पत्ति विचारोऽपि – तेषा मायिक्येवोत्पत्ति, यतस्तानि त्रिष्वपि सृष्ट्यादिकालेषु ब्रह्मात्मता न जहति – इति श्रुत्यर्थदृढीकरणार्थमेवेति कि भवन्त न प्रतिभातीति न विद्म ॥

(४) 'ननु सूत्रकारो न स्थानतोऽपि परस्योभयलिङ्ग सर्वत्र हि' (वे सू ३-२-११) इति ब्रह्मव्यतिरिक्त सर्वं माया – इति वक्ष्यति । मैव वोच तस्याधिकरणस्यान्यविषयत्वात् । न प्रपञ्चाकार ब्रह्मोपास्य किं तर्हि निराकारमात्रमुपास्यमिति तात्पर्यम् ॥ भा सू पा १००

नात्रोपासन प्रकृतम्, न वाऽस्त्युपासनावाचक शब्द प्रकृतसूत्रे, एतदुत्तरसूत्रेषु वा । उपासनाविचारस्तु तार्तीयीकपादे । भवतापि हि 'इद तूपासन निर्णीते वस्तुतत्त्वे पश्चात् क्रियते' (भा सू पा १७४) इत्येवोच्यते । तस्माद्वस्तुतत्त्वनिर्णय एवात्र कर्तव्य । तच्च " 'अस्थूल मनण्वह्रस्वम्' इति प्रपञ्चाकारस्य समस्तस्य निवर्तितत्वात् । स्वतश्च कारण कूटस्थ नित्यम् (कूटस्थनित्यम्?) एकमेवाद्वितीयम्, पश्चात्तु कार्यं कादाचित्क प्रवर्तते । न पृथिव्यादिस्थानतोऽपि परस्योभयलिङ्गता ।

म्वतोऽभिन्नत्वात्, आगन्तुकत्वाच्च पृथिव्यादिस्थानकृतस्य रूपस्य। ब्रह्मात्मको हि नामरूपप्रपञ्च , न प्रपञ्चात्मक ब्रह्म" इत्यादि (भा सू पा १६४-१६५) यथा भवतापि वर्णितम्। तत्रैव सति यत् कूटस्थनित्यमेवाद्वितीयस्वभावम्, तस्य कारणत्वमेव कथ सस्यात्? कार्यकारणविभागरूपप्रपञ्चधर्मवर्जित हि ब्रह्म। 'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृ २-५-१९) इति श्रुते। न चेदृशे ब्रह्मणि सभवेत् कथञ्चिदपि उपास्योपासकभाव। 'अयमात्मा ब्रह्म' (बृ २-५-१९) इत्युपासित्रा मभूतमेव हि तद्विज्ञायत इति॥

(५) न चैव ग(म?)न्तव्यम् अतो मायामात्रमिद सर्व प्राप्तमिति। कारणे कार्यरूपम् अनेकविध नास्तीत्यवधार्यते न पुन प्रपञ्चस्याभाव प्रतिपाद्यते॥ भा सू पा १६५

अहो मायिकप्रपञ्चेऽभिनिवेश! साधूक्तमभियुक्तै - 'अभूताभिनिवेशोऽस्ति द्वय तत्र न विद्यते' (गौ का ४-७५) इति। श्रुतिस्तु प्रपञ्चत्वेनावभासमानमिद सर्वं ब्रह्मैव, नान्यत् - इति सावधारण सर्वान् न प्रतिबोधयति - 'ब्रह्मैवेदममृत पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृत ब्रह्मैवेद विश्वमिद वरिष्ठम्' (मु २-२-१२) इति सर्वमिदमिदानीमपि ब्रह्मैव नान्यत्, अतोऽब्रह्मप्रत्यय सर्वोऽविद्यामात्रो रज्ज्वामिव सर्पप्रत्यय, ब्रह्मैवेद परमार्थसत्यमिति। इत परमपि किं वाञ्छित प्रपञ्चस्य मायात्वोपपादने?

(६) यदप्युक्तम् 'माया तु प्रकृति विद्यादिति' तदयुक्तम्, 'अजामेकाम्' इति तेजोऽबन्नलक्षणा प्रकृति प्रकृता, सा मायाशब्देनाभिधीयते। प्रकरोति स्वविकारानिति प्रकृतिरुच्यते। गीतायामपि वस्तुभूता प्रकृतिर्भूतामपीति (प्रकृति प्रकृतिर्भूतानामिति ?) व्यपदेशात्। कश्चिन्मायाशब्द प्रकृतिवचनो(?)[1] मीयते परिच्छिद्यतेऽनया इति 'प्रज्ञा' उच्यते। यथा 'इन्द्रो मायाभि' इति॥ भा सू पा १००

---

1 इदमनन्वित वाक्यम् प्रज्ञावचनो मायाशब्द इति हि विवक्षितमत्र॥

'माया तु प्रकृति विद्यात्' इति श्रुति, प्रकृति मायेत्याह। तत्र प्रकृतेरपरमार्थत्वमेवाभिप्रेतम् इति गम्यते। 'मायिन तु महेश्वरम्' (श्वे ४-१०) इति वाक्यशेषात्। न हि तत्र मायिनमुद्दिश्य महेश्वरत्व विधीयत इति शक्य वक्तुम्। तथा च यथा माया मायिपरवशा, तथा प्रकृतिरपि महेश्वरपरवशा – इत्युच्यते। ततश्च प्रकृतेरीश्वरसत्तयैव सत्त्व रज्जुसत्तयेव सर्पस्येत्युक्त भवति। पूर्वस्मिन्नपि वाक्ये 'अस्मान्मायी सृजते विश्वमेतत्, तस्मिंश्चान्यो मायया सनिरुद्ध' (श्वे ४-९) इति जीवस्य मायाबद्धत्वम् ईश्वरस्य च स्वातन्त्र्यमाह। गीतायामपि 'दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेता तरन्ति ते' (गी ७-१४) इति मायायास्तर्तव्यत्वनिर्देशादपरमार्थतैव। यतश्च ज्ञान्येव वासुदेव सर्वमित्येकात्मत्व जानातीति वक्ष्यते, अतोऽपीह ज्ञानिना मायातरण न वस्तुभूतप्रकृतेरित्युपपद्यते। न हि ज्ञान वस्तु तत्त्वस्यापोढृ क्वचिद् दृष्टमिति। यदापि मायाशब्द प्रज्ञावचन, यथा 'इन्द्रो मायाभि' इत्यत्र, तदापि वाक्यैदपर्यमालक्ष्य आविद्यिकी प्रज्ञा ग्राह्या भवति। न हि यथार्थप्रज्ञा एकस्य बहुत्वमापादयेदिति ॥

तस्मात्, श्रुतिस्मृतिप्रामाण्याय जगत्प्रकृतिर्मायिक्येव, तस्या मायाया सतत्त्व तु ब्रह्मैवेत्यद्वैतसिद्धान्त इत्यनवद्यम् ॥

## सत्कार्यवादः –

१६८ भास्कराभिमत सत्कार्यवाद समुदाहरिष्यमाणवाक्येभ्योऽवसेय –

(१) इतश्च अनन्यम् (अनन्यत्वम्?)। 'सदेव सौम्येदमग्र आसीत्' इति इदशब्दवाच्यस्य कार्यस्य, अवरकालीनस्य कारणे सत्त्वात् अनन्यत्वम्। कथ गम्यते? सामानाधिकरण्यात्॥ भा सू १००

[ सामानाधिकरण्यात् कारणे सत्त्वं गम्यते कारणात्मना सत्त्व वा? ]

(२) इतश्च कारणे कार्यस्य सत्त्वम् । युक्ते । का पुनर्युक्ति ? मृत्पिण्डात् घटो जायते न दधि शशविषाण वा । यद्यसन् घटो जायेत असत्त्वाविशेषाच्च ततस्तयोरप्युत्पत्ति स्यात् । ननु च कारणशक्ति नियमात् व्यवस्था भविष्यति । नेति ब्रूम । स एवास्माभि पर्यनुयुज्यते 'कथ कारणशक्तिनियम ?' इति । असत्त्वाविशेषे मृत्पिण्डस्य या शक्ति, कथमेकत्र सा नियम्यत इति ? कार्यस्य कारणे सद्भावे(व ?) मुक्त्वा नियमहेतुरुच्यमानो य कश्चित् स सर्व पर्यनुयोग नातिवर्तते । तस्मात् सत् कार्यम् उत्पद्यते ॥ भा सू १०१

(३) सदेव कार्यम् । कुत ? कारणमेव हि ता ताम् अवस्था प्रतिपद्यमान कार्यमिति गीयते । अवस्थातद्वतोश्च नात्यन्तभेद । न हि शुक्लपटयोर्धर्मधर्मिणोरत्यन्तभेद, किं तु एकमेव वस्तु ॥ भा सू १०१

(४) कार्यकारणयोर्भेदाभेदौ अनुभूयेते । अभेदधर्मश्च भेद यथा महोदधेरभेद । स एव तरङ्गाद्यात्मना वर्तमानो भेद इत्युच्यते । न हि तरङ्गादय पाषाणादिषु दृश्यन्ते । तस्यैव ता शक्तय । शक्तिशक्तिमतोश्च अनन्यत्वम् अन्यत्व चोपलक्ष्यते । यथा अग्नेर्दहनप्रकाशनादिशक्तयो भेदा, यथा च वायो प्राणादिवृत्तिभेदेन भेद । तस्मात् सर्वमेकमनेकात्मकम्, नात्यन्तमभिन्नम् भिन्न वा ॥ भा सू पा १०१

(५) ततश्चाभिव्यक्तितिरोभावावस्थयोरन्योन्याभिभवात् अन्यतरावस्थानम्, मरकतप्रभावेजे(भये ?)वेतरेषाम् । श्रौतश्च दृष्टान्तोऽनुसधातव्यो निरवयवो वटकटिकाणिमी(णिमा ?) ता ताम् अवस्था गत्वा स्थूलीभवन् उपलभ्यते । दर्शित च 'महान् न्यग्रोधस्तिष्ठति' इति । न हि दृष्टे अनुपपन्न नाम । यथा च पुस्त्व विद्यमानमेव यौवनावस्थायाम् अभिव्यज्यते, अन्यथा षण्डस्यापि पुस्त्वप्रसङ्गात् ॥ भा सू १०२

(६) परमात्मा स्वयमात्मान कार्यत्वेन परिणमयामासेत्यर्थ. । शक्तिविक्षेप कृतवान् । अनन्ता हि तस्य शक्तयोऽचिन्त्याश्च । तासा विक्षेप करोति सृष्टिस्थितिकाले यथा सूर्यो रश्मीनाम्, तद्वदेव सहरति । तथा च मन्त्रवर्णः श्वेताश्वतराणाम् – 'न तस्य कार्यं करण च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे ६-८) इति ॥ भा सू पा ८५

(७) अथ प्रपञ्च प्रविलीयमान शक्त्यात्मना कारणमग्रे अनु प्रविशति ॥ भा सू पा ९१

(८) ईश्वरस्य द्वे शक्ती भवत भोग्यशक्तिरेका, भोक्तृशक्तिश्चापरा। भोग्यशक्तिश्च सा आकाशादिरूपेणाचेतनपरिणाममापत्ते (परिणाममापद्यते?), भोक्तृशक्ति सा चेतना जीवरूपेणावतिष्ठते ॥ भा सू पा १-५

(९) न हि भावाना शक्तय केनचित् प्राकृतबुद्धिना परिच्छेत्तु शक्यन्ते। तर्काणाम् अप्रविष्टत्वात् (अप्रतिष्ठत्वात्)। साधर्म्यवैधर्म्यस्य सर्वत्र योजयितुमशक्यत्वात् (तु शक्यत्वात्?)। किमुत चेतनस्य सर्वज्ञस्य सर्वशक्ते स्वतन्त्रस्य शास्त्रैकसमधिगम्यस्य जगत्कारणस्य परिणामो व्यवस्थाप्येत। स हि स्वेच्छया स्वात्मान लोकहितार्थं परिणामयन् स्वशक्त्यनुसारेण परिणामयति ॥ भा सू पा ९७

(१०) स च सर्वज्ञ प्राणिनाम् उपभोगकाल ज्ञात्वा प्रथम भूत सूक्ष्मम् अव्याकृताकाश सृजति, तदनन्तर हिरण्यगर्भम्। तस्मिन् अनु प्रविश्य तदात्मना स्थित्वा आकाशादिक्रमेण अण्ड सृष्ट्वा तत स्थावरपर्यन्त सृजति प्राणिना कर्मानुरूपेण ॥ भा सू पा ६५

(११) अन्तर्यामिपरमात्मनोर्नि(नो नि?)यन्तृरूपा शक्ति पारमार्थिकी। न हि सा केनचित् कल्पिता, येनाविद्यानिबन्धनापि स्यात् मृगतृष्णादिवत् ॥
भा सू पा १०७

यथोदाहृतभास्करवाक्यानामियदेव जीवित यत् सदेवोत्पद्यते नासदिति। उत्पत्ते प्राक्च शक्त्यात्मना कारणे विद्यमानमेवाभिव्यज्यते, तादृशाभिव्यक्तिरेवोत्पत्ति। ईश्वरश्च अनन्तशक्तित्वात् तथा तथा विकारान् सृजतीति। सर्वमेतत् सर्ववेदान्तिसंप्रतिपन्नम्, तथा तत्र तत्र वेदान्तेषूच्य मानत्वात्। एतदेव परमत्र विचिन्त्यम्—किमिय सृष्टि पारमार्थिकी, उत मायिकी ?— इति। तत्र शक्तिविषये इद भगवत्पादैरुक्तम् अनुशीलनीय पण्डितै –

(१) शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना नान्या, असती वा कार्यं नियच्छेत्। असत्त्वाविशेषात्, अन्यत्वाविशेषाच्च। तस्मात् कारण स्यात्मभूता शक्ति, शक्तेश्चात्मभूत कार्यम् ॥
सू भा २-१-१८, पा २०४

न हि वह्नेरौष्ण्यशक्तिस्तदनात्मभूता, तदन्या वा शक्या कल्पयितुम् । एवं ब्रह्मणोऽपि शक्तिर्ब्रह्मणोऽन्या न शक्या कल्पयितुम् । व्यावहारिक कार्यापेक्षया तु शक्तिरिति व्यपदेशमात्रम्, शिलापुत्रकस्य शरीरमितिवत्– इति श्लिष्यते । अत एव यदुच्यते भास्करेण–' विविधा शक्तिः, सा च स्वाभाविकी न चागन्तुकीति ब्रुवन्त्या कुत किंकचोद्यं किं नाम न परिहृतम् ? ' इति, तत् तथैवेति ब्रूमहे । ' स्वाभाविकी' इति अभ्युपगच्छन् स्वात्मानन्यत्वात् शक्तेः । शक्तिस्तु शक्यापेक्षयैवेति शक्यस्य कार्यस्या नन्यत्वदृष्ट्या परमात्मानन्यैव भवतीति न किञ्चिदवद्यम् ॥

यत्पुनरुच्यते भास्करेण –

'अथ मन्यसे नेदं शास्त्रं सृष्टिप्रतिपादनपरम्, किं तर्हि, अद्वैत प्रतिपादनपरम् । सृष्टौ प्रयोजनाभावात्, भेदस्य च प्रमाणान्तरा(र?) सिद्धत्वादिति । अत्रोच्यते । कार्यकारणयोरनन्यत्वात् – इत्यनेन हेतुना आत्मैकत्वं प्रतिपाद्यते भवता, स चायम् असिद्धो हेतुः । सर्गानभ्युपगमे वियदादि सर्वं नित्यं मीमांसकानामिव प्रसज्यते । न च सृष्टिर्निष्प्रयोजना । विज्ञानात्मना भोगज्ञानार्थत्वात् ' ॥ भा सू ९८

इति, तदेतदनवहिताभिधानम् । न हि सृष्टिरविवक्षितेत्यनेन वाक्येनेदमुच्यते यद् वियदादिनित्येति । किं तर्हि ? अवहितमनोभिरनुशीलनीयानीमानि वाक्यानि भगवत्पादानाम् –

(२) न हि तत्प्रतिबद्धः कश्चित् पुरुषार्थो दृश्यते श्रूयते वा । न च कल्पयितुं शक्यते । उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैर्वाक्यैः साकम् एकवाक्यताया गम्यमानत्वात् ॥ सू भा १-४-१४, पा १६३

[सृष्टिज्ञानप्रतिबद्धं प्रयोजनं नास्तीत्युच्यते । भोगार्थत्वं तु तस्या न निषिध्यते । दृश्यते हि स्वाप्निकपदार्थानामपि तात्कालिकभोगोपयोगित्वमिति । श्रुत्यापि सृष्टिज्ञानेन फलं न ज्ञाप्यते ॥ ]

(३) दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थताम् । 'अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ ' इति ॥ सू भा पा १६३

[कार्येण तदात्मकत्व कारणमन्वेषणीयम् इत्यर्थ । तस्मात् सृष्टिवचनस्य स्वकारणप्रतिपत्त्यर्थता अवगम्यते । न च वस्तुसत एव कार्यकारणभावस्याय नियम । पदार्थानां मायिकत्वेऽपि केनेयं माया सृष्टा ? – इति जिज्ञासुबुद्धिरुत्पद्यतैव । तदर्थं प्रकरणम् ॥]

(३) मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाभेदं वदितुं सृष्ट्यादिप्रपञ्च श्राव्यत इति गम्यते । तथा च सम्प्रदायविदो वदन्ति 'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा । उपाय सोऽवताराय नास्ति भेद कथञ्चन' ॥ (गौ का ३-१५) इति ॥ सू भा पा १६३

[न हि मृदादीनां कारणत्वं घटादीनां सत्त्वं वा अभिप्रेत्य दृष्टान्त –इति शक्यं कल्पयितुम् । लोकसिद्धत्वात् कार्यकारणभावस्य । एकेन मृत्पिण्डेन ज्ञातेन सर्वं मृन्मयं यथा विज्ञातं स्यात् एवम् एकेन ब्रह्मणा ज्ञातेन सर्वं कार्यं विज्ञातं स्यात्-इति तु प्रस्तावनाभिप्रेतम् । ]

(४) ब्रह्मप्रतिपत्तिप्रतिबद्धं तु फलं श्रूयते 'ब्रह्मविदाप्नोति परम्', 'तरति शोकमात्मवित्', 'तमेव विदित्वाऽतिमृत्युमेति'-इति । प्रत्यक्षावगमं चेदं फलम् । 'तत्त्वमसि' इत्यसंसार्यात्मत्वप्रतिपत्तौ सत्यां संसार्यात्मत्व-व्यावृत्ते ॥ सू भा पा १६४

[उपायभूतसृष्टिकथनप्रतिपत्तौ फलं न श्रूयते नाप्यनुभूयते यथा तद्विपर्ययेण आत्मैक्यज्ञाननिमित्तं फलं श्रूयते अनुभूयते च । अत सृष्टिवाक्यानि न तत्पराणि, किं त्वात्मज्ञानपराणीत्यर्थ ॥ ]

(६) जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरनेकशक्तित्वं ब्रह्मण इति चेत्, न । विशेषनिराकरणश्रुतीनामनन्यार्थत्वात् । उत्पत्त्यादिश्रुतीनामपि समानम् अनन्यार्थत्वम् इति चेत् । न । तासाम् एकत्वप्रतिपादनपरत्वात् । मृदादिदृष्टान्तैर्हि सतो ब्रह्मण एकस्य सत्यत्वं विकारस्य चानृतत्वं प्रतिपादयत् शास्त्रं नोत्पत्त्यादिपरं भवितुमर्हति । कस्मात् पुनरुत्पत्त्यादिश्रुतीनां विशेषनिराकरणश्रुतिशेषत्वं न पुनरितरशेषत्वम् इतरासामिति ? उच्यते । विशेषनिराकरणश्रुतीनां निराकाङ्क्षत्वात् । न ह्यात्मन एकत्वनित्यत्वशुद्धत्वाद्यवगतौ सत्यां भूय काचिदाकाङ्क्षा उपजायते । पुरुषार्थसमाप्तिबुद्ध्युपपत्ते । नैवमुत्पत्त्यादिश्रुतीनां निराकाङ्क्षार्थप्रतिपादनसामर्थ्यमस्ति । प्रत्यक्षं तु तासाम् अन्यार्थत्वं समनुगम्यते ॥ सू भा ४-३-१४, पा ४९८

यत्तु भास्करेणोच्यते 'कारणे कार्यरूपम् अनेकविधं नास्तीत्येव धार्यते, न पुन प्रपञ्चरूपस्याभाव प्रतिपाद्यते' (भा सू पा १६५),

"सृष्टिप्रकरणपर्यालोचनया प्रपञ्चस्य न्यान्याम् अधिगम्यमानायाम् अरूपमदेव ब्रह्मावधार्यते । तत्प्रधानत्वात् 'अस्थूलमनणु ' इत्येवमादीनां वाक्यानाम्, सृष्टिप्रकरणस्यापि अरूपवद्ब्रह्मप्रतिपादने तात्पर्यं सूत्रकारस्याप्यवगम्यते । अत 'सन्मात्रमेवाद्वितीय प्रलयावस्थायामेवोपसहृतसमस्तविकारं 'ब्रह्माहमस्मि' इति ध्येयम्" (भा सू पा १६६) - इति च, तदेतद नालोचितस्ववाक्याभिप्रायस्य व्याहत वचनम् । न हि सृष्टिवाक्यसहितस्य सर्वस्य प्रकरणस्य अरूपब्रह्मावधारणपरत्वे सिद्धे, तत्ततन्यत्व विज्ञातवत पुनरपि ध्यान कर्तव्यमवशिष्यत इति । अतोऽद्वितीयात्मतत्त्वमेव मेव मायया मायाविवत् अनेकधा कार्यरूपेण विभाव्यते – इति भगवत्पादीयमेव प्रस्थान शरण भवत्येवमन्वानस्य । तस्मात्, 'न तु शब्दादिमत्कार्य कारणात्मना हीन प्रागुत्पत्तेरिदानीं वा अस्ति' (सू भा २–१–७, पा १८९), कारणात्मना सत्त्वमेव तु कार्यस्य सत्त्व नापरम्, 'यस्मात् पर नापरमस्ति किञ्चित्' (ना १२–२८) इति श्रुतेरित्ययमेव सत्कार्यवादो नामेत्यकामेनाप्यभ्युपगन्तव्यम् । इत्थमेव चाध्यारोपापवादप्रक्रिया श्रौती समनुगृह्यत इत्यल पल्लवितेन ॥

## जीवपरमेश्वरसबन्धः –

१६९ परिशीलितो यथावकाश किञ्चिद्विस्तरेणैव भास्करीय कार्यकारणवाद । उपपादित च तस्य वेदान्ताभिमतप्रक्रियाविरोधित्वम् । अथ तन्मतानुसारेण जीवविचार क्रियते, सक्षेपेणैव । प्रायशो भगवत्पादीयप्रक्रियानुसारिण्येवात्रत्या प्रक्रिया, जीवपरयोर्भेदस्य सत्यतैव स्वीकृतात्रेति[1] तु सुमहद् वैषम्यम् । तथा हि वेदान्तप्रक्रियया विरोध सुस्थित इति ॥

(१) न प्रकृतिविकारभाव, नाप्यत्यन्तभिन्नस्य जीवस्य मुक्त्यवस्थायाम् अभेदापत्ति, किं तर्हि, उत्क्रमणात् प्रागपि जीवरूपेण परमात्मनोऽवस्थानात् अभेदेनोपक्रम –इति काशकृत्स्नो मन्यते स्म ॥

भा सू पा ८१

(२) अस्ति भेदोऽप्यनादिकालप्रवृत्ताविद्याकर्मोपाध्यवच्छेदात् । अशो हि परस्याह(य?) जीवो नाम । यथाग्नेर्विस्फुलिङ्गा यथाकाशस्य पार्थिवा द्यधिष्ठानोपाध्यवच्छिन्नश्छिद्रप्रवेशस्तद्वश शब्दग्रहणशक्त्यपेक्षा (क्षया?), यथा च वायो प्रतिशरीर पञ्चवृत्ति प्राण , तथाय भिन्नाभिन्नस्वभावो जीव ससारी, न कदाचिन्मुक्तपूर्व ॥ भा सू १-४-२१, पा ८१

[उपलभ्यमानेषु वाक्यद्वयम् तत् द्रष्टव्यम् । पा ३३९]

(३) भूयसीना च श्रुतीनाम् अन्यथाकर्तुम् अशक्यत्वात् तदविरोधाय विस्फुलिङ्गश्रुतिर्विपरिणेया । न चात्रापि विकारभावो विवक्षित किं तु उपाधिकृतभेदाभिप्राया हि सा । तेऽप्यग्निसामान्यानुगमात्, पार्थिव द्रव्यविश्लेषवशात विच्छेदमात्र नान्यत्र भेद । सुषुप्तिप्रकरणत्वान्न सृष्ट्यभिप्रायेणेति स्थितम् ॥ भा सू १-३-१७, पा १३४

(४) उपाध्यवच्छिन्नस्यानन्यभूतस्य वाचकोऽयमशशब्द प्रयुक्तो यथाग्नेर्विस्फुलिङ्गस्य । कथ पुनर्निरवयवस्य परमात्मनोऽश सभवति ? आगमात् तावदवगम्यते । 'यथाग्ने क्षुद्रा विस्फुलिङ्गा ' – इति दृष्टान्त-प्रणयनात् । यथा चाकाशस्य पार्थिवाधिष्ठानावच्छिन्न कर्णच्छिद्र च, यथा च वायो पञ्चवृत्ति प्राण , यथा च मनस कामादयो वृत्तय । स च भिन्नाभिन्नस्वरूप । अभिन्नरूप स्वाभाविकम्, औपाधिक तु भिन्नरूपम् । उपाधीना च बलवत्त्वात् समूर्छितस्तन्मय ससरतीत्य(ति?)भेदोऽभ्युप गम्यते ॥ भा सू २-३-४३, पा १४०, १४१

उपाध्यवच्छिन्नस्य, अनन्यभूतस्य वाचकोऽयमशशब्द–इति वक्तु न युक्तम् । न हि लोके शास्त्रे वा तथा प्रसिद्धिरस्ति । उपाध्यवच्छिन्नस्य अनन्यता द्योतयितु लक्षणया गौण्या वा वृत्त्या अशशब्द प्रयुज्यते । अश इवाश इति–इति यद्यभिप्राय , तर्हि तथा नामास्तु । न चाशादिशब्दा , वस्तुवृत्तैवात्मनोऽवच्छिन्नत्व द्योतयितु प्रयुक्ता , किं तु एकत्वज्ञापनार्था । तथा चाभियुक्ता –

(१) ' न कर्मणा लिप्यते पापकेन ', 'सम सर्वेषु भूतेषु तिष्ठन्तम्', ' शुनि चैव श्वपाके च ' – इत्यादिश्रुतिस्मृतिन्यायेभ्य परमात्मनोऽससारित्वे । अत एकदेश , विकार , शक्तिर्वा विज्ञानात्मा, अन्यो वा–इति विकल्पयितु निरवयवत्वाभ्युपगमे विशेषतो न शक्यते । अशादिश्रुतिस्मृति

वादाश्च, एकत्वार्था, न तु भेदप्रतिपादका । विवक्षितार्थैकवाक्ययोगात्-इत्यवोचाम ॥ बृ भा २-१-२०, पा ७४०

(२) अग्निविस्फुलिङ्गादिदृष्टान्तश्रुतेर्न दोष इति चेत् । न । श्रुते र्ज्ञापकत्वात् । न शास्त्र पदार्थानन्यथा कर्तुं प्रवृत्तम्, किं तर्हि यथा भूतानाम् अज्ञाताना ज्ञापने । किं चात ? शृणु, अतो यद्भवति । यथा भूता मूर्तामूर्तादिपदार्थधर्मा लोके प्रसिद्धा । तद्दृष्टान्तोपादानेन तदविरो ध्येव वस्त्वन्तर ज्ञापयितु प्रवृत्त शास्त्र न लौकिकवस्तुविरोधज्ञापनाय लौकिकमेव दृष्टान्तमुपादत्ते । उपादीयमानोऽपि दृष्टान्तोऽनर्थक स्याद् दार्ष्टान्तिकासङ्गते । न हि 'अग्नि शीत', 'आदित्यो न तपति' इति वा दृष्टान्तशतेनापि प्रतिपादयितु शक्यम् । प्रमाणान्तरेण अन्यथा अधि गतत्वाद् वस्तुन ॥ बृ भा २-१-२०, पा ७३७

+जीवस्य ब्रह्माभिन्नत्वेऽपि भेदोऽप्यौपाधिक सत्य एव इति भास्करभाष्ये इत्थमुपपादितम् —

(१) यथा च भग्ने घटे घटाकाशो महाकाश एव भवति दृष्टत्वात्, एवमत्रापीति । जीवपरयोश्च स्वाभाविकोऽभेद, औपाधिकस्तु भेद, स तन्निवृत्तौ निवर्तते ॥ भा सू ४-४-४, पा २४३

(२) 'तत्त्वमसि' इति श्रुतेर्भिन्नाभिन्नो जीव । स्वाभाविक नित्य सिद्धम् अभिन्न रूपम्, इतरदौपाधिक प्रवाहनित्यम् इति विवेक ॥
भा सू ३-२-६, पा १६२

(३) 'द्वा सुपर्णा' इत्यत्रापि, अयमेव न्याय । परप्रकरणे श्वेताश्वतराणामपि, अय मन्त्र पठ्यते । अनन्तरश्च मन्त्रस्तामेव दर्शयति 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान । जुष्ट यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक' इति । तदेव श्रुतिसूत्रकारौ जीवपरयोर्भेद दर्शयत । केचित्तु श्रुत्यर्थम् आचार्योक्तिं च पृष्ठत कृत्वा मायामात्र स्वबुद्ध्या कल्पयित्वा अन्यदेव दर्शन रचयन्ति ॥
भा सू १-२-१२, पा ४१

(४) जीवाना परस्पर भेद एव परमात्मना चाभेद । फेनतरङ्गाणामिव ॥ भा सू १-४-१०, पा ७५

तत्साम्य वक्ष्यामीति प्रवृत्ता । 'यदा पश्य पश्यते' (मु ३-१-७) इति वाक्यशेषात् । द्वितीयापि 'सोऽध्वन पारमाप्नोति' (का १-३-९) इति वाक्यशेषात्, विष्णो परमपदप्रेप्सो साधन विवक्षतीति गम्यते । न च जीवस्य परमगुहाप्रवेशरूप न जीवपरभेद चैकमेव वाक्य वक्तुमलम् । एव सूत्रमपि जीवाद् विलक्षण तत्प्राप्य परमात्मानमुद्दिश्यैव प्रववृते—इति युक्तम् । समन्वयाध्याये हि नाकस्माज्जीवस्य प्रतिपादनप्रसक्तिरस्तीति । अत श्रुतिसूत्रयो कुत्र प्रस्थाने सामञ्जस्यमिति वाक्यार्थनिर्णयकोविदैरेव निर्णेयमेतत् ॥

## जीवस्य व्यवहारः –

१७० सर्वोऽपि जीवस्य व्यवहार उपाधिप्रयुक्तो न स्वाभाविक इति भास्करप्रस्थान वेदान्तप्रक्रियानुगुणमेव । उपाधीना तु न पारमार्थिकत्वम्, किं त्वविद्याप्रत्युपस्थापितत्वमि येतावत्तु प्रस्मृतम्, अपरीक्षित चानेनाचार्येण ॥

(१) योऽयमुत्पत्तिप्रलयव्यपदेशो लौकिक, स भाक्त, गौण इत्यर्थ ॥ भा सू २-३-१६, पा १३४

(२) नात्मा जायते । कस्मात् ? अश्रुते । न ह्याकाशादिसृष्टिप्रकरणे जीवस्योत्पत्तिश्रुतिरस्ति ॥ भा सू २-३-१७, पा १३४

(३) स्वप्रत्यक्ष चास्य चैतन्यम् । ज्ञातृस्वरूपस्य सर्वदा अपरोक्षत्वात् । घटादीना च कादाचित्काना पृथगेव गृह्यमाणत्वात् ॥
भा सू २-३-१८, पा १३५

[ ज्ञातृस्वरूपस्येति तत्साक्षिरूप चेद् विवक्षित समीचीनतर स्यात् ॥ ]

(४) गृह्णीम एतत्, ससारावस्थायाम् अणुरात्मेति, न तु तदेवास्य निज रूपम् । तत्त्वमसीति ब्रह्मात्मत्वोपदेशात् ।
भा सू २-३-२९, पा १३७

(५) न स्वाभाविक कर्तृत्वम् । अनिर्मोक्षप्रसङ्गात् । न चौपाधिक कर्तृत्वमपारमार्थिकम् । यथाग्निगतेन उष्णगुणेन दाहोऽनुभूयते, किमसाव पारमार्थिको भवति, यद्यपि स्वात्मन्यौष्ण्य स्वतो नास्ति ? ॥ भा सू पा १३९

[अग्नेरौष्ण्यम् अग्नेरेव नात्मन । एव दाहोऽपि शरीरस्यैव न तु तत्साक्षिण आत्मन इत्येव सत्तक । न ह्यात्मनि दाहोऽनुभूयत इति ॥ ]

(६) परादीश्वरात् । (जीवस्य कर्तृत्वम् ) तच्छ्रवणात् ॥
भा सू २-३-४१, पा १४०

(७) स्वतन्त्रस्यैव जीवस्य कर्तृत्वम् इत्याशङ्क्य ईश्वरापेक्ष कर्तृत्वमिति स्थापितम् । 'वैषम्यनैर्घृण्ये' इत्यत्र तु कर्मापेक्षाया जगत्सर्ग इति विवेक ॥
भा सू २-३-४२ पा १४०

(८) यथा जीव सुखी च स्वकर्मवशात्, नैव पर । तस्य निमित्ताभावात् । प्रकाशादिवत् ॥ भा सू २-३-४६, पा १४१

(९) परमात्मना चेदभिन्नो जीव, कस्यानुज्ञापरिहारौ स्याताम् ?
अत्रोच्यते – स्याताम् अनुज्ञापरिहारौ अशस्य देहसबन्धमधिकृत्य ॥
भा सू २-३-४८, पा १४२

[देहसबन्धो नाम देहादिरय सघातोऽहमेवेति आत्मनि विपरीतप्रत्ययोत्पत्ति । सा च भास्करप्रस्थानेऽपि समत । देहाद्युपाधिरविद्यानिमित्त इति तु नात्राभ्युपगम्यते ॥ ]

(१०) जीवो मुख्यप्राणसचिव, सेन्द्रिय, समनस्कोऽविद्याकर्मपूर्वप्रज्ञावशेन सुखदु खभोगार्थं पूर्वदेह विहाय देहान्तर प्रतिपद्यते ॥
भा सू ३-१-१, पा १५२

कि बहुना ? सर्व एव तु जीवव्यवहार उपाधिनिमित्त एवेति सग्रह । उपाधयस्तु अविद्याकल्पितमायासृष्टा इति तु भगवत्पादीय-प्रस्थाने विशेष । अपेक्षितस्तु स विशेषोऽध्यारोपापवादप्रक्रियानुग्रहार्थम् । न ह्यन्यथा विद्यमानस्य ससारस्याभावो वा, अविद्यमानस्य मोक्षस्य उत्पत्तिर्वा घटत इति । अत एवाभियुक्ता –

(१) मरणे सभवे चैव गत्यागमनयोरपि ।
स्थितौ सर्वशरीरेषु चाकाशेनाविलक्षण ॥

(२) सघाता स्वप्नवत् सर्वे आत्ममायाविसर्जिता ।
आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥

गौ का ३-९, १०

कथमेकस्मिन् देहे द्वौ द्रष्टारौ सम्भवत इति ? श्रुतिर्हि 'नान्योऽतोऽस्ति द्रष्टा ' (बृ ) इति प्रकृतात् अन्तर्यामिणोऽन्य वारयति–इत्याशङ्कामुत्थाप्य भास्करेणेत्थ समाधान लिखितम् –

(११) अत्रोच्यते – यथैषेयमेव भेद दर्शयति तथा पूर्वम् उदाहृतम् । 'आत्मनि तिष्ठन्' (बृ ) इति भेद दर्शयति, कि न पश्यसि ? न ह्यस्या श्रुतेवचन सुभगावचनमिवानादरणीयम् । प्रामाण्यतुल्यत्वात् । अतो भेदाभेदौ ग्रहीतव्यौ । न च तात्पर्यकृतो विशेष । अन्तर्यामिस्वरूपविज्ञानपरत्वात् प्रकरणस्य नियन्त्रन्तराशङ्कानिवृत्त्यर्थमपि शक्यते वर्णयितुम् – नान्य सवस्य द्रष्टाऽस्ति । यथा 'य पृथिवी न वेद' इति देवतादिक्षेत्रज्ञानुपन्यस्य तदपलापो न युज्यते ॥ भा सू १–२–२०, पा ४५

भगवत्पादै शङ्कामुद्भाव्य कृतनिरासस्यैव पक्षस्य सिद्धान्तत्वेन स्वीकारो भास्करोपज्ञ । स एवाद्य यावत् सर्वैरप्यध्यारोपापवादप्रक्रियाविरोधिभिरनुस्रियत इत्यन्धपरम्परेयम् इहैव दूरीकरणीया । अत किञ्चिदत्रोच्यते । 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ' (वे सू १-२-२०) इति सूत्र तावत्, अन्तर्यामिणो भेदेनैन काण्वा माध्यन्दिनाश्चेत्युभयेऽपि शाखिनोऽधीयते – इत्याह , न तु भेद परमार्थ इति । न च भेदाभेदशब्द कुत्राप्याम्रात सूत्रकारेण । अत शारीरश्च नान्तर्यामी–इत्येतावान् सूत्रार्थ आस्थेय । कथ तर्हि 'नेतर ' (वे सू १-१-१६, १ २-१७ )। 'भेदव्यपदेशाच्चान्य ' (वे सू १–१–२१) इत्यादिसूत्रेषु जीवमाशङ्क्य निरस्यति ? तत्र भगवत्पादैरेव समाधानमुक्तम् –

(१) नित्यशुद्धबुद्धमुक्तस्वभावे कूटस्थनित्ये एकस्मिन् असङ्गे परमात्मनि तद्विपरीत जैव रूप व्योम्नीव तलमलादि परिकल्पितम् । तदात्मैकत्व प्रतिपादनपरैर्वाक्यै , न्यायोपेतै , द्वैतवादप्रतिषेधैश्च अपनेष्यामि – इति परमात्मनो जीवादन्यत्व द्रढयति । जीवस्य तु न परस्मादन्यत्व प्रतिपिपादयिषति, कि तु अनुवदत्येवाविद्याकल्पित लोकप्रसिद्ध जीवभेदम् । एव हि स्वाभाविककर्तृत्वभोक्तृत्वानुवादेन प्रवृत्ता कर्मविधयो न विरुध्यन्त इति मन्यते। प्रतिपाद्य तु शास्त्रार्थम् आत्मैकत्वमेव दर्शयति 'शास्त्रदृष्ट्या तूपदेशो वामदेववत् ' (वे सू १-१-३०) इत्यादिना इति ॥

सू भा १-३-१९, पा ११५

प्रकृतसूत्रभाष्ये च –

(२) कथ पुनरेकस्मिन् देहे द्वौ द्रष्टारावुपपद्येते ? यश्चायमीश्वरोऽन्तर्यामी, यश्चायमितर शारीर । का पुनरिहानुपपत्ति ? 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि श्रुतिवचन विरुध्येत । अत्र हि प्रकृतादन्तर्यामिणोऽन्य द्रष्टार श्रोतार मन्तार विज्ञातार चात्मान प्रतिषेधति । नियन्त्रन्तर प्रतिषेधार्थमेतद् वचनम् इति चेत् । न । नियन्त्रन्तराप्रसङ्गात्, अविशेष श्रवणाच्च ॥ सू भा १-२-२०, पा ८१

इति शङ्काग्रन्थ । तदनालक्षयन्निव भास्करोऽभाणीत् 'नियन्त्रन्तराशङ्का निवृत्त्यर्थमपि शक्यते वर्णयितुम्' इति । कथ हि प्रतिपर्याय 'एष त आत्मा अन्तर्याम्यमृत' (का), 'स त आत्मा अन्तर्याम्यमृत' (मा) इत्यविशेषेण श्रूयमाण आत्मा अन्तर्यामी, अन्योऽन्य स्यादिति कश्चिद् बधिर शङ्केत । अत एव भगवत्पादै समाधानवाक्ये लिखितम् –

√(३) अत्रोच्यते – अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽय शारीरान्तर्यामिणोर्भेदव्यपदेश, न पारमार्थिक । एको हि प्रत्यगात्मा भवति । न द्वौ प्रत्यगात्मनौ सभवत । एकस्यैव तु भेदव्यवहार उपाधि कृत । यथा 'घटाकाशो', 'महाकाश' – इति ॥ सू भा पा ८१

इति । नैव चान्तर्याम्यनेकत्वे शङ्कासमुन्मेषोऽस्ति । यत्कारण प्रष्टा उद्दालकोऽन्तर्यामिणमेक जानन्नेव वक्ति – 'तदह वेद तच्चेत् त्वं याज्ञवल्क्य सूत्रमविद्वास्त चान्तर्यामिण ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यति' (बृ ३-७-१) इति ॥

न च जीवरूपप्रत्याख्यानेन परमात्मरूपप्रतिपादने तात्पर्यं श्रुतीनाम् इति भवतोऽप्यसप्रतिपन्नम् । लिखित हि भवतैव –

(१२) 'प्रस्थानादिगतय (नगतय ?) काश्चित् पर प्रतिपाद्य-तदसीति ग्राहयन्ति यथा 'तत् त्वमसि' इति, काश्चित् पुनर्जीवमेवाधि कृता (कृत्य ?) ता तामवस्था प्रत्याख्याय तत परम् आत्मरूप दर्शयन्ति ।

यथा 'कतम आत्मा योऽय विज्ञानमय' इत्युपक्रम्य 'अनस्थिकोऽशरीर स वा एष महानज आत्मा' इत्युपसहारात्(हार?)' इति ॥
भा सू १-३-२०, पा ५८

तत्र यत्प्रत्याख्यायते जीवरूप तदविद्याकल्पितमिति नानुमन्यते, उपाधिकृतमपि परमार्थमेवेति चास्थीयते दुराग्रहमात्रेणेत्यन्यदेतत् ॥

## पञ्चकोशविवेकप्रक्रिया –

१२१ आनन्दमयाधिकरणभाष्य प्रायेण भगवत्पादैरनूदित वृत्तिकारमतमेवानुहरति, पुच्छब्रह्मप्रतिपादन तु निराकुरुते। तत्र प्रथम तावदिद वक्तव्य यत् सूत्रभाष्यानूदित पक्षो न भास्करसम्प्रदायानुवर्तीति। यतो भगवत्पादैर्वृत्तिकारमतम् इत्थमनूदितम् –

"यत्तु ब्रूषे प्रियादीना शिरस्त्वादिकल्पनाऽनुपपन्ना मुख्यस्यात्मन इति, अतीतानन्तरोपाधिजनिता सा न स्वाभाविकीत्यदोष। शारीरत्वमपि आनन्दमयस्यान्नमयादिशरीरपरम्परया प्रदर्श्यमानत्वात्। न पुन साक्षादेव शारीरत्व ससारिवत्" ॥ सू भा १-१-२, पा ३७

इति। भास्कराचार्येण तु –

(१) 'यदुक्तमवयवयोग – इति तत्प्रायापत्यापि पुरुषविधत्व-कल्पनार्थो नावयवशरीरप्रतिपत्त्यर्थ इत्यदोष ॥ भा सू पा २५

इत्यन्यथैवोपपादितम्। यद्यप्यर्थतो वृत्तिकारानुगुणमेव भवत्येतदपि, तथापि नासौ वृत्तिकारो भास्करसप्रदायीत्यत्र गमकान्तरमप्यस्ति ॥ किञ्च, भाष्ये वृत्तिकारमतदूषणप्रसङ्गेनोक्तम्

'अपि च आनन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेष ब्रह्माभ्युप-गन्तव्यम्, निर्विशेष तु ब्रह्म वाक्यशेषे श्रूयते वाङ्मनसयोरगोचरत्वाभि धानात् 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्द ब्रह्मणो विद्वान्। न बिभेति कुतश्चनेति' (तै २-९)

इति। एतेन दूषितवृत्तिकारा निर्विशेषब्रह्माभ्युपगन्तार इति गम्यते अन्यथा नैवेद तद्दूषण स्यादिति। भास्कराचार्यस्तु प्रतिवक्ति प्रकारान्तरेणैव। तद्यथा –

Imp (२) यदप्युक्तं निर्विशिष्ट (निर्विशेष) ब्रह्मात्र विवक्षितमिति । तद् प्ययुक्तम् । आनन्दगुणस्य ब्रह्मणो विवक्षितत्वात् । अत एवोत्तरत्र केवलेन गुणवचनेन गुणी निर्दिश्यते । 'सैषानन्दस्य मीमांसा', 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति । 'यतो वाचो निवर्तन्ते' इति च रागादिदोषदूषितयोर्वाङ्मनसो(सयो?)र्न गोचरं ब्रह्मेत्यर्थः । शुद्धयोस्तु पुनर्गोचर एव । तथा च श्रुत्यन्तरम् – 'दृश्यते त्वग्र्यया बुद्ध्या' 'ज्ञानप्रसादेन विशुद्धसत्त्वः' इति च ॥ भा सू पा २८

अपि च – 'भेदव्यपदेशाच्च' इति सूत्रभाष्ये 'जीवानन्दमयौ भेदेन व्यपदिशति । न हि लब्धैव लब्धव्यो भवति ।' इति वृत्तिकार मतमनूद्य तत्र चोद्यमुद्भावितम् – "कथं तर्हि 'आत्मान्वेष्टव्यः', 'आत्मलाभान्न परं विद्यते' इति श्रुतिस्मृती" इति । तत्र परिहारश्च लिखितः –

"आत्मनोऽप्रच्युतात्मभावस्यैव सतः, तत्त्वानवबोधनिमित्तो देहादिष्वनात्मस्वात्मत्वनिश्चयो लौकिको दृष्टः । तेन देहादिभूतस्य आत्मनोऽप्यात्माऽनन्विष्टोऽन्वेष्टव्योऽलब्धो लब्धव्योऽश्रुतः श्रोतव्योऽमतो मन्तव्योऽविज्ञातो विज्ञातव्यः – इत्यादिभेदव्यपदेश उपपद्यते । प्रतिषिध्यत एव तु परमार्थतः सर्वज्ञात् परमेश्वरादन्यो द्रष्टा श्रोता वा 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना । परमेश्वरस्तु अविद्याकल्पितात्, शारीरात् कर्तुर्भोक्तुर्विज्ञानात्मा ख्यादन्यः । यथा मायाविनश्चर्मखड्गधरात् सूत्रेणाकाशमधिरोहतः स एव मायावी परमार्थरूपो भूमिष्ठोऽन्यः । यथा वा घटाकाशात्, उपाधिपरिच्छिन्नात्, अनुपाधिपरिच्छिन्न आकाशोऽन्यः । ईदृशं च विज्ञानात्मपरमात्मभेदमाश्रित्य 'नेतरोऽनुपपत्तेः', 'भेदव्यपदेशाच्च' इत्युक्तम्" सू भा १-१-१७, पा ३९

इति । अत्र वृत्तिकारा इमे आनन्दमयब्रह्मवादिनोऽपि, अविद्याकल्पितत्वमेव शारीरत्वं कर्तृत्वभोक्तृत्वं चात्मन इच्छन्ति स्म । अतस्तेषां वेदान्तप्रक्रिया भगवत्पादसमतादनतिविलक्षणेति स्फुटम् । तथाप्याचार्यभास्कर इह ब्रूते –

(३) अत्र केचित् स्वमतिकल्पितदर्शनपरित्राणाय सूत्रार्थं विनाशयन्तो व्याचक्षते – न हीश्वरादन्य संसारी विद्यते स एव संसारी । तत्र 'नेतरोऽनुपपत्ते'। 'भेदव्यपदेशाच्च' इति कथं सूत्रद्वयमिति चेत् । नैष दोष । उपाधिकृतभेदमात्राङ्गीकरणं विदमुच्यते । यथा 'घटाकाश' 'पटाकाश' इत्याकाशस्य भेदव्यपदेश कल्पनामात्रेणेति । तदेतदयुक्तम् ॥

भा सू पा २६

इत्यादि । अत्र वृत्तिकारमतमिदमित्यविजानन्, भाष्यकार प्रति प्रसिद्ध नैसर्गिकद्वेषेण विजानन्नेव वा, आनन्दमयब्रह्मवादिवृत्तिकारमत दूषयति भास्कराचार्य । अथ चोपसंहारे भणति –

(४) 'तस्मात् सम्प्रदायपरम्परया च तद्व्याख्यानं शोभनमिति स्थितम्' इति ॥ भा सू पा २९

उभयथापि तु निर्विशेषब्रह्मवादिनो वृत्तिकारा , भगवत्पादैर्दूषिता केवलमत्राधिकरणे तदभ्युगतैकदेशनिराकरणार्थम् । भास्कराभिमत-भेदाभेदसिद्धान्तसम्प्रदायस्तु सर्वथा ततो विलक्षण । यदि भर्तृप्रपञ्चाभिमत-द्वैताद्वैतसम्प्रदायस्य वेषान्तरमेव तस्य, यदि वा नूत्नतया रचितप्रक्रियान्तर-प्रदर्शक स –इति सिद्धम् ॥

पञ्चकोशविवेकेन साधकस्य निर्विशेषानन्दरूपे ब्रह्मणि अभय-प्रतिष्ठालक्षण फलम् – इति कोशाध्यारोपापवादेन भगवत्पादैर्निरू-पितम् । एतस्मिन् पक्षे 'एतमानन्दमयमात्मानमुपसंक्रामति' (तै २–५) इति संक्रमणवाक्यम् तद्विज्ञानेन तत्तत्त्वभूत ब्रह्म सद्य प्राप्नोति – इति सुव्याख्यानम् । पुच्छब्रह्मणो निर्विशेषत्वात् 'असन्नेव स भवति, असद् ब्रह्मेति वेद चेत्' (तै २–६) इति नास्तित्वशङ्कोत्थापनश्रुति 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' (तै २–९) इति ब्रह्मणो वाङ्मनसागोचरत्ववादिनी श्रुतिश्च अनुगुणे भवत । भास्करस्तु 'शुद्धयोस्तु वाङ्मनसयोर्गोचर एव वर्तते ब्रह्म' – इति ब्रुवन् सर्वसाक्षिणोऽपि वाङ्मनसगोचरत्वमाह । 'मनसो मनो यद् वाचो ह वाचम्' (के १–२)

'न वाग्गच्छति नो मन ' (के १ ३), 'यद्वाचाऽनभ्युदितम्' (के १ ५), 'यन्मनसा न मनुते' (के १-६) – इति वार वार वाङ्मनसोगोचरत्व निषेधन्तीमपि श्रुति पृष्ठत कृत्वा, अविद्यमानस्य कर्तृत्वमपि शास्त्रस्य प्राहेत्यहो साहसरसिकता स्वमताभिनिवेशिन !

## अवस्थात्रयविवेकप्रक्रिया –

१७२ पञ्चकोशविवेकवत् अवस्थात्रयविवेकोऽपि भास्करप्रस्थाने न शुद्धब्रह्मस्वरूपम् उपस्थापयितुम् अलम् । तत्र तन्मतप्रकाशकानि कतिचिद् वाक्यानि समुदाह्रियन्ते –

(१) स्वप्नावस्था चिन्त्यते जीवस्य स्वयज्योति स्वप्न(ज्योतिष्ट्व)प्रसिद्ध्यर्थम्, सुषुप्त्यवस्था च सर्वोपाधिविनिर्मुक्तम् अभयम् आत्मरूप दर्शयितुम् ॥ भा सू ३-२-१, पा १६०

(२) स्वप्ने सृष्टिर्मायामात्रम् । न बाह्यार्थोऽस्तीति मात्रग्रहणम् । नन्वेव निरालम्बन प्रत्यय प्राप्नोति । नाय दोष । देशान्तरकालान्तरानुभूतानुस्मरणात् । स्वप्ने पूर्वप्रवृत्ताथभव(अनुभव ?)जनितवासनावासित मनो नाडीषु परिवर्तमान स्मृतिज्ञानहेतुर्भवति, शुभाशुभकर्मप्रेरित मोदत्रासादिदर्शनात् । स एव स्मर्यमाणोऽर्थ प्रत्ययालम्बन इति न दुष्यति ॥

भा सू भा ३-२-३, पा १६१

[अत्र जाग्रद्वदेव स्वप्नेऽपि प्रत्यक्षाभासानुभव स्मरण च विविक्तमनुभूयते, तत् कि निमित्तम् ? – इति न विवेचितम् । 'देशान्तरकालान्तर' शब्दाभ्या कि विवक्षितम् स्वप्नोपलब्धदेशकालाभासानुभवस्य का गति ? – इत्यपि न विवेचितम् ॥ ]

(३) अत एव 'वैधर्म्याच्च स्वप्नादिवत्' इत्युक्त तर्कपादे ॥

भा सू पा १६१

(४) ये तु बौद्धमतावलम्बिनो मायावादिन, तेऽप्यनेन न्यायेन सूत्रकारेणैव निरस्ता वेदितव्या । यदि बाह्योऽर्थो नाभिप्रेत स्यात्, किमर्थमिद यतते सूत्रकार ? अथ मन्यसे, अन्यस्मिन् स्थायिनि वस्त्वन्तरे असति विज्ञानमात्र नेष्यते, सति पुनरात्मतत्त्वे प्रपञ्चापलाप इति । कोऽय

न्यायो यत् सत्यस्मिन् (अन्यस्मिन् ?) प्रतिपन्ने अन्यन्नेष्यत इति ? प्रत्युत ब्रह्मकार्यत्वात् पृथिव्यादीना तथात्वमेव युक्तम् ॥

भा सू २-२-२९, पा १२४

अत्र 'यथा हि स्वप्नमायामरीच्युदकगन्धर्वनगरादिप्रत्यया विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवन्ति, एव जागरितगोचरा अपि स्तम्भादिप्रत्यया भवितुमर्हन्तीत्यवगम्यते । प्रत्ययत्वाविशेषात्' इति अनुमानेन बाह्यार्थापलापे प्रवृत्ते, अनुमानदूषणमुक्त 'वैधर्म्यात्' इति । नैव शक्यमनुमातु प्रत्ययत्वसाम्यात् स्वप्नप्रत्ययवत् जाग्रत्प्रत्यया अपि निरालम्बना भवितुमर्हन्तीति स्वप्नजागरितयोर्वैधर्म्यं स्वयमाश्रितवता – इति । स्वप्नो हि नाम जागरिते स्मर्यमाणा जागरितबाध्या अवस्था इत्यङ्गीकृत्य को नामानुन्मत्तोऽनुमिमीत स्वप्नवज्जागरितमिति ? – इति । न चास्ति भाष्यकारस्याऽऽग्रहो यद् बाह्यार्थो नाभिप्रेत सूत्रकारस्येति, यत्कारण यद् यथानुभूत तत् तथैव ह्यनुमन्तव्यम् । सौगतेन पर यत्किञ्चित् साधर्म्य मवष्टभ्य स्वप्नादिवत् जागरितप्रत्यय इत्यनुमीयते, तन्न साधु–इत्येतावदिहोच्यते । न चान्यस्मिन् प्रतिपन्ने अन्यन्नेष्यत इति न्यायमनुसरति भाष्यकार । स हि शून्यवादनिराकरणप्रसङ्गेनेद ब्रवीति –

'न ह्यय सर्वप्रमाणप्रसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम् । अपवादाभावे उत्सर्गप्रसिद्धे' ॥ सू २-२-३१, पा २५२

इति । तत्रायमभिप्राय । शुक्तिरजतादयोऽपि यावत् प्रतिभास सत्यत्वेनैव स्वीक्रियन्ते प्रतिपत्तृभि , यदा तु शुक्तिकेयमिति प्रतिपद्यन्ते, तदा रजतव्यवहारमपह्नुवते 'नेद रजतम्, मिथ्यैव रजतवदवाभासिष्ट' इति । एव यदि शून्यवादी सर्वमिद प्रमाणप्रमेयव्यवहारविषयतामध्यासीन जगत् अपजुह्नुषते, तर्हि अवश्य तेन सर्वस्यापि विकल्पत्व विवक्षता सर्व विकल्पास्पद परमार्थतत्त्वम् अनुभवपथे आनेतव्यम्, त्यक्तव्यो वा सर्वशून्यतादुराग्रह इति ॥

यत्तूच्यते ब्रह्मकार्यत्वात् पृथिव्यादीना तथात्वमेव युक्तम् – इति, तत्र सूत्रभाष्यकारौ ओमिति ब्रुवाते । अभ्युपगम्यते हि पृथिव्यादिसर्वकार्यस्य तथात्व तदनन्यत्वन्यायेन । 'ब्रह्मैवेद विश्वम्' (मु) इत्यादि श्रुतेरिति । प्रातीतिकेन तु रूपेण तेषा तथात्व नैव शक्य विज्ञातुम् । दृष्टनष्टस्वरूपत्वात् शुक्तिरजतादिवत् 'वाचारम्भण विकारो नामधेयम्' (छा ६–१–४), 'अपागादग्नेरग्नित्वम् ' (छा ६–४–१) इत्यादिश्रुते ॥

**(४) ये पुनर्जागरितावस्थापि मायामात्रम् – इत्याघोषयन्ति ते सूत्रकाराभिप्राय नाशयन्त श्रोत्रियजन मोहयन्ति ॥ सू भा १६१**

विवृत सूत्रकाराभिप्राय 'आरम्भणशब्दादिभ्य' इत्यत्र । न च सर्वस्यापि जगतस्तदनन्यत्वमिच्छन् सूत्रकार, जाग्रदवस्थाया, तदन्तर्गत भेदप्रपञ्चस्य वा, तदन्यत्वम् आतिष्ठते इति वक्तुम् उचितम् । अतो मायामात्रत्वोक्तिरिय जागरितस्यापि मायामात्रत्व न व्यवच्छिनत्ति । अपि च स्वप्नस्य स्वप्नत्व जागरितस्य च तद्वैलक्षण्य व्यावहारिकदृष्ट्या सर्वैरप्यङ्गीकृत प्रतिवादिनाप्युररीकृत सिद्धवत् कृत्वैवेद वैधर्म्यमुक्त सूत्रकारेण । वस्तुतस्तु विचार्यमाणे जाग्रत्स्वप्नयोर्वैलक्षण्य नैव शक्यसाधनम् । स्वप्नेऽपि हि जागरितवदेव तदनुभवकाले ग्राह्यग्राहकादिविभागोऽनुभूयत एव, तत्रापि जागरितवदेव जागरितावस्थाबुद्धिरनुवर्तत एव यावद्बाधम् । तस्मात्, 'स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिण' (गौ का २–५) इत्यभियुक्तोक्तिर्दुर्धर्षैव । तदेतदनुभवमवलम्ब्य स्वप्नजागरितस्थानयोरुभयोरपि मायामात्रत्वम्, आत्मन एव तु सत्यत्व च वितत्य विचार्य प्रतिष्ठापित **वैतथ्यप्रकरणे** । तत्प्रकारस्तत एवाधिगन्तव्य । श्रौती चेय प्रक्रिया – 'त्रय स्वप्ना' (ऐ ३–१२) इति हि तिसृणामपि स्थानाना स्वप्नत्वमवगम्यते आगमशासनात् । तस्मान्न श्रोत्रियजनव्यामोहनमिदम्, अपि तु श्रुतिसूत्रानुभवसगानेन अवस्थात्रयाध्यारोपापवादप्रक्रियाप्रदर्शनेन मुमुक्षुजनानुग्रह एवेत्यल पल्लवितेन ॥

जाग्रद्दृष्ट्या त्विद स्वप्नस्य मायामात्रत्वकथनमिति सतोष्टव्यम् । आह हि भाष्यकार –

" प्राक्तु ब्रह्मात्मत्वदर्शनात् वियदादिप्रपञ्चो व्यवस्थितरूपो भवति । सध्याश्रयस्तु प्रपञ्च प्रतिदिन बाध्यते-इत्यतो वैशेषिकमिद सध्यस्य माया मात्रत्वमुदितम् ॥ " सू भा ३-२-४, पा ३४७

इति ॥

(५) तद्भाव स्वप्नदर्शनाभाव तदात्मनि नाडीषु च न विकल्पेन इत्यर्थ । नाडीभिर्द्वाभिर्हृदयाकाश परमात्मानम् आसाद्य स्वपिति । नाडीषु सुप्तस्य नि सज्ञत्वे हेत्वभावात् । इतरत्र तु सति सपद्य न विदु – इति ॥ भा सू ३-२-७, पा १६२, १६३

(६) सुषुप्तिप्रलययो कथम् उपाधियोग शक्यते वक्तुम् इत्युत्तर पठति – पुस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् । तुशब्दोऽवधारणे । सत एवास्य बुद्धिसबन्धस्य प्रबोधकाले चाभिव्यक्ति ॥

भा सू २-३-३१, पा १३८

[कथ तर्हि सत्सपत्ति ? उपाधिना हि भेदरूपो भवति जीव । यदि [illegible] एव, न तर्हि कृत्स्नसपत्ति ॥ ]

(७) ब्रह्माप्येति प्रपञ्चोऽय रूप हित्वा तु वैकृतम् ।
जहाति कठिनावस्था ज्लस्थ लवण यथा ॥

भा सू २-१-९, पा ९१

[प्रलयेऽपि ब्रह्मणि जगदप्ययो न मुख्य , जगत्स्वरूपस्यापरित्यागादित्युक्त भवति ॥ ]

(८) यत् सूक्ष्मशरीर करणायतनम् आपीते आविमोक्षात् सम्यग्ज्ञाननिमित्तात् अनुवर्तते । न मरणवेलायामेव विलीयते ॥

भा सू ४-२-८, पा २२९

सर्वत्रैवविधस्थलेषु बीजभावावशेषो भाष्यकारैरपि यद्यप्यङ्गीक्रियते, तथाप्यस्ति तत्र विशेष –

" यथा हि अविभागेऽपि परमात्मनि मिथ्याज्ञानप्रतिबद्धो विभाग व्यवहार , स्वप्नवदव्याहत स्थितौ दृश्यते, एवमपीतावपि मिथ्याज्ञानप्रतिबद्धैव विभागशक्तिरनुमास्यते ॥ " सू भा २-१-९, पा १९२

परमात्मा नित्यनिरस्तविभागव्यवहार एव सन् मिथ्याज्ञानेन निमित्तेन प्रबोधाद्यवस्थासु विभागव्यवहारविषय इव भवति । निरस्ते तु सम्यग्ज्ञानेन मिथ्याज्ञाने सर्वव्यवहारप्रहाणिर्भवतीति भाष्यकाराभिप्राय । भास्करमते तु न सम्यग् ज्ञाननिमित्तो विभागपरिहार सभवति, वास्तविकत्वादेव सर्वावस्थास्वपि विभागशक्त्यवस्थानस्येति वैषम्यम् ॥

## मुक्तिसाधनविचारः –

१७३ यथैव भेदाभेदवाद, तथैव ज्ञानकर्मसमुच्चयवादोऽपि भास्करमते भर्तृप्रपञ्चैरिव स्वीकृत –

✓(१) तच्चोभयत्र ब्रह्मज्ञान प्रति हेतुत्वम्, आरम्भे फलप्राप्तौ च । कर्मणि पूर्ववृत्ते तदपेक्षा ब्रह्मजिज्ञासा कर्तुं शक्यत इति आरम्भे हेतुत्वम् । कर्मणा समुच्चित ज्ञान क्षेमप्राप्तिनिमित्तम् इति फलप्राप्तौ हेतुत्वम् ॥

भा सू १-१-१, पा ४

✓(२) अत्र हि ज्ञानकर्मसमुच्चयान्मोक्षप्राप्ति सूत्रकारस्याभिप्रेता । तथा च वक्ष्यति । 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति । कर्मणि चापरिज्ञाते विद्याया केन समुच्चय, केन न–इति विभागो न शक्यते वदितुम् । हेयोपादेयप्रतिपत्त्यभावात् । पूर्ववृत्ते तु कर्मज्ञाने काम्य प्रतिषिद्ध च हेयम्, नित्येन कर्मणा समुच्चय – इति प्रतिपादयितु शक्यते ॥

भा सू १-१-१, पा २

(३) अन्ये पुनरन्यथा सबन्ध वर्णयन्ति । देवादिभ्योऽनृणीभाव पूर्ववृत्त प्रज्ञाकषायपरिपाकश्च । एतदानन्तर्यमथशब्देनोच्यत इति । कथम् ? वेदेन किल बुद्धिपूर्वं स्वाध्यायाध्ययनप्रभृति पुरुष कर्मस्वेव प्रवर्त्यते । तत शास्त्रीयनैसर्गिकवासनयोर्भवाभिभवौ । ततश्च पुण्यापुण्ययोरुपचयापचयौ । ततश्च उत्तमाधिकारविधियोग्य पुरुषो भवति । क पुनरुत्तमाधिकारविधि ? आत्मा वा अरे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति । तदिद सबन्धकथन न्यायविदो न श्रद्दधते । न हि धर्माधिकारस्य कृत्स्नस्य पुरुषसस्कारद्वारेणोत्तमाधिकारोपयोगित्वेऽस्ति किञ्चित् प्रमाणम् ॥ भा सू १-१-१, पा ४-५

[[illegible] सुप्रसिद्ध शाङ्करप्रस्थानत्रयभाष्येषु कृतपरिश्रमाणाम्। कर्मणा पुरुषसंस्कारहेतुत्व प्रसिद्धम् " इद मेऽननाङ्ग संस्क्रियते (शत ब्रा ११-२-६-१३) इत्यादौ (बृ भा ३-३-१, पा ८०१)। संस्कारपक्षश्च स्वीकृत एव समुच्चयवादिनाप्याचार्यमण्डनमिश्रेण ॥ ब्र सि 36]

✓(४) एव पूर्वो वेदभाग पर नापेक्षते । स पुन पूर्वमपेक्षते। वेदान्तवाक्यैरेव ज्ञानसहकारितया नित्यकर्मोपदेशात् 'तमेत वेदानुवचनेन' इति ॥ भा सू १-१-४, पा १६

✓ (५) सर्वेषु आश्रमवत्सु अपेक्षा सा सर्वापेक्षा। कुत ? 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' – इति श्रुते, ज्ञान प्रति अपवर्गसिद्धौ यज्ञादयस्तृतीयया विभक्त्या अङ्गत्वेन प्रयाजादिवद् विधीयन्ते। तस्मात्, यथैव शमादयो यावज्जीवम् अनुवर्तन्ते विदुषाम् अपवर्गप्राप्तये, तथा आश्रमकर्माणि-इति नान्तराले परित्याग ॥
भा सू ३-४-२६, पा २०७

[अत्र विविदिषोत्पत्तौ, विद्योत्पत्तौ वा कर्मणा कारणत्व श्रूयते, न तु समुच्चय ॥]

(६) आत्मज्ञान कर्माङ्गप्रत्ययश्रवण च स्तुतिमात्रम्। ऐकाश्रम्य श्रौतम्, आश्रमान्तर स्मार्त विकलेन्द्रियादिविषये चरितार्थम् – इति मीमासकमतम्। तदत्र निरस्यते। स्थितेऽस्मिन पुरुषार्थे ज्ञाने कर्मसमुच्चितता तत सिद्धि ॥ भा सू पा २०१

(७) 'तुल्य तु दर्शनम्' (वे सू ३ ४ ९)। अकर्माङ्गत्वेऽप्यस्तीत्यर्थ। 'एतद्ध स्म वै तद्विद्वास आहुर्ऋषय कावषेया किमर्था वयमध्येष्यामहे किमर्था वय यक्ष्यामहे। 'एत वै तमात्मान विदित्वा ब्राह्मणा पुत्रैषणायाश्च वित्तैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति। किमर्था वयमिति सहिताविज्ञानस्तुत्यर्थं नाध्ययनादित्यागविधानम्, सर्वथा ज्ञानस्य प्राधान्य मभिप्रेतम् ॥ भा सू पा २०३

[अत्र 'व्युत्थाय' इति कर्मत्याग एव श्रूयते, न तु समुच्चय ॥]

(८) पुत्रादिलिङ्गात् गार्हस्थ्याद् व्युत्थाय, आश्रमान्तर प्रतिपद्यन्ते- इति स्मृतिप्राप्तमेवानूद्यते। स्मृत्यनपेक्षत्वे तु शाक्यक्षपणादिभिक्षाचरणमपि

श्रौत प्रसज्येत । स्मृतौ च मननादौ त्रिदण्डयज्ञोपवीतादिनियमात् उत्त माश्रम स्वरूपतो धर्मतश्च निर्ज्ञात इति नातिप्रसङ्ग ॥

भा सू ३०४-२६, पा २०८

[ श्रुतिस्मृतिवाक्याना भिन्नाधिकारिविषयत्व बृहदारण्यकभाष्ये (पा ८१५) निर्णीतम् स्मृत्यनपेक्षमात्रेण न शान्त्यादीना श्रौतत्वप्रसक्ति । तेषा श्रुते रप्यनपेक्षणात् ॥]

(९) ब्रह्मसस्थता च ब्रह्मनिष्ठोच्यते । सा च सर्वाश्रमिणाम् अविशिष्टा । अत एव ज्ञानकर्मणोरेकप्रयोजनत्वात् अविरोध । तथा चाह ' स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते, इति । स्वत क्षणिकमपि अक्षयफलत्वादक्षयमुच्यत इति । यदि च कर्मसबन्धमात्रेणामृतत्व नास्तीत्युच्यते परिव्राजकस्यापि न स्यात् । तस्यापि शौचाचमनस्नानभिक्षाट नादिकर्म कायिक वाचिक मानसिकम् । तच्च अपरिहार्य ध्रियमाणशरीरस्येति न कस्यचिन्मुक्ति स्यात् ॥ भा सू पा २०५-२०६

[ मेवम् । परिव्राजकस्य शौचादेर्विध्यपेक्षाभावे सति तेन ज्ञानसमुच्चया भावात् । अधिकत्वत्र गीताभाष्यच्छान्दोग्यभाष्य सूत्रभाष्येभ्योऽवगन्तव्यम् ॥ ]

(१०) श्वेताश्वतरे 'अत्याश्रमिभ्य प्रोवाच' इत्यत्र, 'अति सु इत्यभि पूजितार्थे ' (नि १-१-४, पा १२) इति निरुक्तकारवचनात् पूजिताश्रमिणो वृत्तस्वाध्यायसपन्ना निर्दिश्यन्ते । तेभ्य प्रोवाचेति मन्त्रार्थ ॥

भा सू पा २०८

[ नैष्कर्म्यसिद्ध्यापि पूजिताश्रमवत्त्व भवेदेवेति न वक्तव्य किञ्चिदत्र ॥ ]

(११) यत्पुनरत्र (जाबालश्रुतौ अ)यज्ञोपवीती कथ ब्राह्मण स्यात् इति पठ्यते तत् सदिग्धम् । पुरस्ताच्चोपवीतन्यासत्यागयोरभावात् । कथम् अकस्मात् एवमाशङ्कावचनम् उत्तिष्ठेत ? ब्राह्मण (णग्रहण) चानर्थकम् । क्षत्रियादिरपि कथमय यज्ञोपवीती स्यात् ? अतिदुर्विदग्धेन केनापीद वाक्य प्रक्षिप्तम् इत्याशङ्कामहे ॥ भा सू पा २०८

[ वाक्यशेषे 'मुण्डोऽपरिग्रह ' इत्युपलभामहे । अतो नाकस्मिकमिद वचनम् 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्यस्यैवाय प्रपञ्च इति युक्तम् । न च ब्राह्मणग्रहणमनर्थकम् । ब्राह्मणस्यैव सन्यासे विशेषतोऽधिकार इत्यर्थद्योतनात् । 'ब्राह्मणो निर्वेदमायात्' (मु ) – इत्यादिश्रुत्यन्तरात् । उत्तरत्र 'अव्यक्त लिङ्गा अव्यक्ताचारा ', ' त्रिदण्ड कमण्डलु शिक्य पात्र जल (?) पवित्र शिखा यज्ञोपवीत च इत्येतत्सर्वं भू स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत् ' इति च त्रिदण्डिनामपि पारमहंस्यविधानाच्चैवमवसीयते ॥ ]

**(१२) यथा प्रधान जगत्कारणम् इति ज्ञानमपस्मृति , तथा तेषामेव साङ्ख्यादीना सर्वकर्मापवादेन ज्ञानादेव केवलात् अपवर्ग इत्यपस्मृति । तामनुसरन्तो येऽपि कर्मत्याग वर्णयन्ति, तेऽपि अपसिद्धान्तिन एव । तथा च आपस्तम्बेनोपन्यस्य निरस्तम् 'तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धौ चेत् क्षेमप्रापणम् इहैव न दु खमुपलभेत' (आप ध सू २-२१-१६) इति ॥ भा सू पा २०९**

[नियमपस्मृति । 'ब्रह्मचर्यादेव ' इत्यादिश्रुतिमूलवत्वात् । 'नैव कुर्वन्न कारयन्' (गी ५-१३) इत्यादिस्मृते । 'इति होक्त्वा याज्ञवल्क्यो विजहार ' (बृ ४-५-१५) इत्याचारदर्शनाच्च । न चापस्तम्बेन इद सिद्धा तत्वेन विवक्षित वचनम् । तत्र सर्वेषामप्याश्रमाणा दूषणभूषणोपलब्धे । 'बुद्धौ चेत् क्षेमप्रापणम् ' इति चदित्याक्षेपानुपपत्ति 'अमृत इह भवति ' (तै ना ) इत्यादिश्रुत्या बुद्धस्य क्षेमप्राप्तिविज्ञापनात् । न च दु खोपलम्भनम् ज्ञानस्यापवादकरम् , उपलभ्यस्य दु खस्य नस्याप्युपलब्धुर्वैभवानुपपत्ते ॥ ]

## ज्ञानकर्मफलम् –

१७४ कर्मापि ज्ञानवत् कैवल्यप्रतिबन्धनिवर्तकमिति भास्करमतम्–

**(१) इद चात्र वक्तव्य केन प्रकारेण विद्यापवर्गोपयोगिनी ? स्यान्मतम् , भेदज्ञानम् अविद्या । तन्निवृत्त्या इति । तदसत् । दृष्टविरोधात् । न हि वाक्यार्थज्ञानोत्पत्तौ कस्यचित् कृत्स्न द्वैतज्ञान निवर्तते । ध्रियमाण शरीरस्य शरीरेन्द्रियमनासि रूपादिज्ञाननिमित्तानि । न हि निमित्ते सति नैमित्तिक नोत्पद्यते । यथाग्नीन्धनसयोगे धूम ॥ भा सू पा २०९**

[ द्वैतज्ञाननिवृत्तिरिति कोऽर्थ ? द्वैतप्रतीतिनिवृत्तिर्वा, उत द्वैतसत्यत्वबुद्धिनिवृत्तिरिति ? यदि प्रथम कल्प , न सा अभ्युपगता अद्वैतिभि , अथ द्वितीय , इष्यत एव तादृशी निवृत्ति । न ह्यधिगतशुक्तितत्त्वस्य रजतावभाससत्यबुद्ध्यनुवृत्तिरस्तीति ॥ ]

**(२) यदि च भेदप्रतिभासो नास्ति पारमेश्वराश्च गुणा सर्वज्ञत्वादय प्रादुर्भूता ततो लौकिक वैदिक वा कर्म युगपत् निवर्तते ॥ भा सू पा २०९**

[असदेतत् । न हि कस्यचित् जीवत सर्वज्ञत्वादय प्रादुर्भवन्ति । अथोपासनाफलमिति । तर्हि भावनामात्रपरिप्रापितत्वात् । तेषा पारमार्थिकत्व श्रद्धामात्रगम्यम् इति भवति ॥ ]

**(३) कथ पुनरात्मन कर्तृत्वम् शुद्धचैतन्यस्वभावत्वात् ? यथा तव लौकिके कर्मणि । किञ्चौपाधिकमिद कर्तृत्व यावदुपाधि अनुवर्तते । यथा**

इन्धनसयोगे वह्नेर्धूमकर्तृत्वम् । आरब्धकर्मविनाशाच्च कर्तृत्वभोक्तृत्वे याव च्छरीरभाविनी । विशेषस्त्वय विद्वदविदुषो –नौपधिक कर्तृत्व मन्यते विद्वान् इतरस्तु स्वाभाविकमिति ॥ भा सू पा २१०

[ शाङ्करसिद्धान्ते [illegible] । कि तवाप्येवम् ? नो चत, औपाधिक नाभिमन्यते कर्तृत्वम्, [illegible] इति कोऽथ ? ]

(४) कथ पुन कर्मणो मुक्त्युपायत्वम् ? यथैव ज्ञानस्य तव । ननु ज्ञानमविद्या निवर्तयति । सत्यम् । न भेदज्ञान निवतयतीत्युक्तम् । अनात्म न्यात्मज्ञान प्रतिबन्धक निवतयतीति चेत्, तथा कर्म । माहारजनादि रूपाणा चात्मान वृप(ष?)यित्वा स्थितानाम् अपकर्षण ज्ञानकर्मभ्याम् । शास्त्रलभ्यत्वादपुनर्भावस्य । केन द्वारेणोपकरोतीति चेत्, को जानीयात् मातृतुल्या श्रुतिरेव चेति (चाहेति?) ॥ भा सू पा २१०

[ ज्ञानस्य द्वैतसत्य ववाधकत्वमुपपादितम् । अनात्मन्यात्मज्ञान कम निवर्तयतीति दृष्टविरुद्धा कल्पना । अज्ञान ह्यनात्मन्यात्मत्वज्ञानम् । तच्च ज्ञानमात्र वाध्य न कर्मबाध्य दृष्टम् । 'को जानीते' इत्यदृष्टफलकल्पनात् उपपन्नमस्मि प्रस्थाने । तत्रोपासनाव्यतिरिक्त वस्तुतन्त्रज्ञानमपि दृष्टफलकमस्तीति तु समा लोचयितव्यम् ॥ ]

## श्रवणाद्यावृत्तिः –

१७५ ✓ज्ञानमात्र नालम् अपवर्गप्रदानायेति तदर्थमुपासनमेष्टव्य मित्याह भास्कर –

✓(१) श्रवणमननयोरसकृत् क्रियमाणयोरज्ञानसशयविपर्ययनिवर्तकम् आत्मविषयकत्व(क?)ज्ञानम् उत्पद्यते । दृष्टार्थत्वात् अवहन्त्यादिवत् ॥
भा सू पा २१८

(२) सकृदेव श्रवणमननाभ्या साक्षात्कारिज्ञानमुत्पद्यते इति वार्तमे तत् । श्वेतकेतोरपि यत्र बहुश्रवणमन्तरेणाज्ञानसशयादिनिवृत्तिर्नासीत्, किं नु खलु मनुष्याणा रागादिदोषकलुषितचेतसाम् ॥ भा सू पा २१९

(३) आत्मस्वरूपविषये विशेषज्ञाने वाक्यादुत्पन्ने समानप्रत्ययावृत्ति- लक्षणमुपासन यावज्जीव कर्तव्यम् ॥ भा सू पा २१९

✓(४) अनात्मसु देहादिषु विपरीतप्रतिपत्ति, ब्रह्मस्वरूपाप्रतिपत्तिश्च अविद्या, सा सम्यग्ज्ञानोत्पत्तौ निवर्तते । तच्च सम्यग्ज्ञानमुत्पन्नम् इति (?)

यावज्जीवम् अभ्यस्यमान परिपक्वम् अपवर्गक्षम भवतीति शास्त्रादवगम्यते ॥
भा सू पा २१९

[ अत्रापि वस्तुतन्त्रतानानात्वेण स्पष्टम् ॥ ]

## ज्ञानयोगयोः सबन्धः –

१७६ योगोऽपि अत्राशेन परिगृहीत –

(१) भवतु श्रुतिसवादात् सम्यग्दर्शनोपायोपदेशाशस्य तथात्वम् । विप्रतिपन्नाशस्य तु मिथ्यात्वम् । पुरुषाणाम् अन्यथार्थदर्शित्वसभवात् ॥
भा सू २-१-३ पा ८९

(२) सनकादौ च योगशास्त्रे अयमेव (काठकोक्त ) योग प्रदर्श्यते। ध्यान धारणा समाधिरिति । ध्यानम् अभिप्रेतार्थप्राप्त्यर्थं चित्तैकाग्रतोच्यते। प्राणेन्द्रियबुद्धिमनसा युगपत् सधान धारणा । श्रद्धाप्रयत्नाभ्यां नित्य-चिन्ता समाधि ॥ भा सू १-४ १, पा ७२

(३) ज्ञानातिशयमादाय(?) योगाभ्यास कुर्याद् ज्ञानपरिपाकाय इत्यथ । विभ्यादिवत् । यथा अग्निहोत्रादि अविदुषो विधीयते फलाति शयार्थिन , तथा अथ विदुषो व्युत्थायिनोऽपवर्गार्थिन सन्यासिनो नैष्ठिकस्य विधीयते ॥ भा सू ३-४-४५, पा २१६

(४) यथा प्रकाश सौर्य , आदिग्रहणात् आकाशो वा, जलघटा द्युपाधिधर्मानुविधायी विगतेषु उपाधिविधिषु(उपाधिषु?) अवैशेष्य प्रतिपद्यते, अभिन्न सन् , एवमय जीव प्रागपि अभिन्न सन्नेव पर रूप प्रतिपद्यते । परस्वरूपप्रकाशोऽभिव्यक्ति । स च तस्मिन् कर्मणि उपास्ये परमात्मनि सराधनाभ्यासात् , नान्यथा इति । सति चैव ये समाधिमन्तरेण ब्रह्मभूता वयम् इति मन्यन्ते तेषा मिथ्याभिमान स इति सूत्रकारेण सूचित भवति ॥
भा सू ३-२-२५ पा १७०

[ ज्ञानप्रकरणेषु नियमेन योगविधानादर्शनात् । 'विजज्ञौ' इत्युपदेश मात्रेण विज्ञानसिद्धिप्रदर्शनाच्च नाय समीचीनो वाद । किञ्च समाधिप्राप्त्यैव चेत् प्राप्तिर्ब्रह्मभावस्य, तर्हि क्वाचित्कत्वादनित्यत्वप्रसङ्गस्तद्भावस्य । तस्मात समा ध्यनुभवोऽप्यात्मनो निर्विशेषत्वे प्रमाणम्–इत्येव सूत्रार्थ , न तु तत्र विधिरपि । न हि सूत्रे विधायकशब्द कोऽपि दृश्यत इति ॥ ]

## मुक्तिनिरूपणम् –

१७७ मुक्तिविषये भास्कराभिप्रायाविष्करणाय कतिचिद् वाक्यान्युदाह्रियन्ते –

(१) न भेदज्ञाननिवृत्तिरविद्यानिवृत्तिः किं तर्हि, शरीरादौ अनात्मन्यात्मबुद्धिनिवृत्तिः । तन्निवृत्तौ शरीरपातादनन्तरं सर्वज्ञः सर्वशक्तिः, निरतिशयसुखसंवेदी मुक्तो भवति ॥ भा सू १-१-५, पा २१

(२) द्विधा मुक्तिः । जीवदवस्थायां रागद्वेषमोहैः तदङ्गैश्च मदादिभिर्विमुक्तिः । पातोत्तरकालमात्यन्तिकीति ॥ भा सू ४-१-१४, पा २२४

[ 'अत्र ब्रह्म समश्नुते' – इति श्रुत्यर्थोऽनालोचितोऽत्र ॥ ]

(३) द्विधा मुक्तिः सद्य एव मुक्तिः क्रममुक्तिश्चेति । ये साक्षाद् ब्रह्मैव उपासते (ते) सद्य एव मुच्येरन्, इतरे तु हिरण्यगर्भं प्राप्य शुद्धान्तःकरणाः तत्रैव ज्ञानप्रकर्षमासाद्य 'छायातपयोरिव ब्रह्मलोके' इति विविक्तबोधोत्पत्तिसंकीर्तनात् तेन सह मुच्येरन् ॥ भा सू ४-३-१४, पा २४०

(४) परमात्मना संपन्नस्य एका(वा?)त्मनः कर्तृभोक्तृस्वरूपविनिवृत्तिः । सा च श्रुत्या दर्शिता 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा)। 'अस्माच्छरीरात् समुत्थाय' (छा) इति च। प्रारब्धकर्मफलभोगस्यावश्यभावित्वात्, ध्रियमाणशरीरस्य अवश्यभावी सुखदुःखानुभवः । तस्मात् जीवनदेव (जीवन्तमेव ?) मुक्तमिति ये प्रतिजानते ते श्रुतिमतिवर्तन्ते । दृष्टानुभवं बाधन्ते ॥ भा सू पा ५८

[ 'अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' (बृ ६-४-७) इति श्रुत्यर्थोऽत्र समालोचनीयः । तत्र वाक्यशेषे 'अथायमशरीरः' इत्यपि विज्ञायते ॥ ]

(५) यदि च जीवन्नेव मुक्तो भवान् सर्वज्ञत्वात् पराकूतावेदनमपि प्राप्नोति । ननु सर्वश्चासौ ज्ञश्चेति विग्रहः । नैवम् । त्वत्पक्षे सर्वस्य निवृत्तत्वात् चैतन्यमात्रमवशिष्यते । तत्र निःसंबोधो मोक्षोऽभ्युपेयः, श्रुत्यनुसारित्वाद् वा सर्वज्ञत्वं सर्वशक्तित्वं चेति । अतो जीवदवस्थायां न मोक्षः । मुक्त्युपायभूतं ज्ञानं कर्म चानुष्ठेयम् ॥

भा सू ३-४-२६, पा २१०

[ सर्वज्ञत्वं नाम न सर्वविषयकज्ञानवत्त्वम्, किं तु अद्वितीयचैतन्यस्वरूपत्वम् । यत्तु सर्वस्य निवृत्तत्वादिति । तत् सत्यम्, तथापि सर्वमपि चैतन्यमेव संपद्यते । यदपि 'निःसंबोधो मोक्षः' इति, तदपि सत्यम्, संबोधः पर तु नास्य स्वरूपमिति निरवद्यम् ॥ ]

## भास्करप्रस्थानपरीक्षोपसंहारः –

१७८ अध्यारोपापवादप्रक्रियाप्रत्यर्थिषु प्रस्थानेषु भास्करीयमेव अद्य यावत् परिपूर्णाकारेणोपलभ्यमान प्राचीनतमम् । तत्र भर्तृप्रपञ्च-प्रस्थान न यथावदनुसृतम्, द्वैताद्वैतप्रक्रियोपष्टम्भिका काश्चनाभिनवा युक्तय प्रत्युपस्थापिता, शाङ्करीययुक्तयश्च तत्र तत्राभिनिवेशपूर्वक खण्डिता । तत्र शाङ्करप्रक्रिया न सर्वत्र मूलानुरोधेनानूदिता, विशिष्य च माहायानिकवादेभ्यो शाङ्करवादस्य वैलक्षण्य न सम्यग् ज्ञातमिति स्पष्टम् । वाक्याना स्वाभिलषितसिद्ध्यनुगुण व्याख्यानम्, तत्रानुगुणयुक्तीना केवल दृष्टान्तबलेन साधर्म्यवैधर्म्यप्रदर्शनार्थमानयनम्, वेदान्तवाक्यस्य वाक्यत्वे-नैव प्रमाणीकरण च–इत्येतत् सर्वमसाधारणमस्य प्रस्थानस्य । ब्रह्मजिज्ञासा अनुभवावसाना, वस्तुनि क्रियास्विव विकल्पासभव, वाक्यस्य ज्ञापकत्व न कारकत्वम् – इत्येतादृशा शङ्करभगवत्पादानुसृता न्याया नैकान्तेन मनसि कृता इति वाचकैरवधेयम् । वेदान्तविचारे इत परमयमेव पन्था प्रायश सर्वै प्रस्थानान्तरावलम्बिभिराद्रियत इत्येतद् वयम् तत्र तत्र यथावसर दर्शयिष्याम ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिचयावाप्त-वेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्यसच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीताया वेदान्तप्रक्रियाप्रत्यभिज्ञाया

**भास्करप्रस्थानपरीक्षा नाम नवम काण्ड**

---

# १०. भामतीप्रस्थानपरीक्षा

भाष्यव्याख्यातृपद्मपादसुरेश्वरवाचस्पतिसंबन्धः –

१७९ माधवीयशङ्करविजये सुरेश्वरपद्मपादवाचस्पतिमिश्रप्रस्थान सबन्ध द्योतयितु प्रवृत्त कथानकमेकमुपलभ्यते । श्रीसुरेश्वराचार्ये गुर्वनुज्ञया शारीरकभाष्यवार्तिकचिकीर्षाव्यासक्तमनसि, (श वि १३, श्लो ४, ५), भगवत्पादीयशिष्यास्तदसहमाना रहसि आचार्यमुपेत्य प्रोचु 'अय कर्मवासनावासितधीर्यदि भाष्यवार्तिक निबध्नीयात्, तर्हि नून सर्व भाष्य कर्मपर योज्येत (श्लो १०, ११)। तस्मात् पद्मपादाचार्य, गिरि, हस्तामलको वा (श्लो १९, २०, २२) अत्र वार्तिक भवदनुज्ञया विरचयतु' इति । त च स्वविधित्सिते विघ्नमाचरित श्रुत्वा सुरेश्वर, 'यद्यन्ये वार्तिक कुर्यु, तन्मा लोके प्रचय गच्छतात्' इति शशाप । तस्य शोक शिशमयिषुणा आचार्येण 'त्वमिदानी बृहदारण्यकतैत्तिरीयभाष्ययोरेव वार्तिके प्रणय विस्रब्धम्' इत्याज्ञप्तस्तथैव चकार (श्लो ६६)। पद्मपादस्तु गुर्वनुज्ञया सूत्रभाष्यटीका चकार (श्लो ७१)। ता च दृष्ट्वा सतुष्टोऽप्याचार्य कालगतिज्ञ 'अत्र पञ्चैव पादा, तत्रापि विशेषतश्चत्वार्येव सूत्राणि, प्राचुर्य गच्छेयु' (श्लो ७२) इति सुरेश्वरमुक्त्वा तस्य मन समाधानार्थम् इदमूचे–

> प्रारब्धकर्मपरिपाकवशात् पुनस्त्व ।
> वाचस्पतित्वमधिगम्य वसुन्धरायाम् ।
> भव्या विधास्यसितमा मम भाष्यटीका
> माभूतसंप्लवमधिक्षिति सा च जीयात् ॥ श्लो ७३ ॥

इति । तदेतत् प्रचलितपञ्चपादिकाग्रन्थे सूत्रचतुष्टयमात्रपरिमितत्वम्, वाचस्पतिटीकायाश्च परिपूर्णत्वम् आलक्ष्य वेदान्तसिद्धान्तरहस्यान्यनेकानि वार्तिकद्वये विवृतवतामपि सुरेश्वराचार्याणा सूत्रभाष्यव्याख्यायामप्रवृत्ति कथञ्चिदुपपादयितु पाठकमनसि चमत्कृतिजननार्थं च कविताचातुरीमात्र प्रदर्शित शङ्करविजये – इत्यतिरोहितम् । न हि वार्तिके बृहदाकारेऽपि

क्वचित् पञ्चपादिका सकृदपि परामृष्टा, तदीयविचारा वा तत्र तत्र स्वप्रस्थानेऽसंप्रतिपन्ना अपि कटाक्षिता । न च सुरेश्वरवाचस्पतिप्रस्थानयो प्रस्थानविषयेष्वपि प्रतिशाखं तिमात्य भूरिश उपलभ्यन्ते, वैलक्षण्यमेव तु तत्र तत्र स्फुरतीति प्रस्थानभेदं दर्शयिष्याम । तस्मात्, भिन्नप्रस्थानमेवैषा वर्तीदृश्यमान न काव्याख्यायिकाश्रामक्रमेण इत्यत्र मन्दा मिति बोध्यम् ॥

### वाचस्पतिमिश्रकृता ग्रन्थाः –

१८० तत्र वाचस्पतिमिश्रकृतित्वेन प्रसिद्धा अनेके ग्रन्था समुल्लसन्ति गीर्वाणवाङ्मये । यद्यपि ते सर्वे नैककर्तृका इति प्रमाणान्तरा न्निधीयते तथापि प्रकृतभाष्यटीकाकारेण विरचितत्वेन सुनिश्चेया इमे – (१) **न्यायकणिका** मण्डनमिश्रकृतविधिविवेकटीका, (२) **तत्त्वपरीक्षा** ब्रह्मसिद्धिव्याख्यानरूपा, (३) **तत्त्वबिन्दुः,** वाक्यार्थविचारमधिकृत्य कृत स्वतन्त्र प्रकरणम्, (४) **न्यायवार्तिकतात्पर्यटीका,** (५) **न्यायसूची** चेति न्यायदर्शने ग्रन्थौ, (६) **साङ्ख्यतत्त्वकौमुदी** नाम्नी साङ्ख्य कारिकाटीका, (७) **तत्त्ववैशारदी** योगभाष्यटीका चेति । त इमे ग्रन्था अनुक्रमेण विरचिता, पर्यन्ते च भामतीनाम्नी शाङ्करभाष्यव्याख्या निर्मिता – इत्युन्नीयते । यत्कारणम् अत्र निर्दिष्टेषु निबन्धेषु पूर्वपूर्वस्मिन् उत्तरोत्तरग्रन्थपरामर्शो न दृश्यते ॥

अनेन नैकशास्त्रपारदृश्वाऽत्रभवान् श्रीवाचस्पतिमिश्र व्याचि ख्यासिततत्तत्प्रस्थानप्रेमाविष्ट स्वोदाहृतमूलग्रन्थवाक्यान्यपि व्याख्येय ग्रन्थानुगुण्येन क्वचिद् विपरिणमयन् दृश्यते । तद्यथा ‘गुणाना परम रूप न दृष्टिपथमृच्छति । यत्तु दृष्टिपथ प्राप्त तन्मायेव सुतुच्छकम् ॥’ इतीद **वार्षगण्य**वचन ‘मायेव न तु माया । सुतुच्छकम्–विनाशि । यथा हि माया झटित्यैव अन्यथा भवति, एव विकारा अपि आविर्भावतिरोभावधर्माण प्रतिक्षणम् अन्यथा । प्रकृतिर्नित्यतया मायाविधर्मिणी परमार्था’ इति

**तत्त्ववैशारद्याम्** (यो सू भा १८८) लिखितवतीमेव लेखिनी 'तन्मायैव सुतुच्छकम्' इति पाठान्तर प्रकल्प्य 'योग व्युत्पिपादयिषता निमित्तमात्रेण इह गुणा उक्ता, न तु भावत । तेषाम् अतात्त्विकत्वात् इत्यर्थ ॥' इति **भामत्याम्** (वा भा २-१-३, पा ४३८) गुणानामतात्त्विकत्व स्फोरयितु व्यापारितवान् । आत्मनैवान्यत्र परमार्थत्वेन वर्णिता प्रकृति, कथ वार्षगण्यवचनपाठमेवाद्दत्यैवमत्र तद्वैपरीत्येन स्वीकृता इति तु विस्मयते विमर्शकाना मन ॥

## भामतीप्रस्थानस्य स्थान वेदान्ते –

१८१ भामतीग्रन्थप्रणयनकाले भास्करप्रस्थान केवलाद्वैति प्रस्थानाभिभवपूर्वक बहुत्र लब्धप्रचारमासीदिति गम्यते । यतो वाचस्पतिमिश्रैरद्वैते भास्करोत्थापिताना दोषाणामुद्धारे भेदाभेदवाददोषोद्घाटने च बलवान् प्रयत्न कृतो दृश्यते । एतद्दृष्ट्या, अद्यापि भास्करप्रभावित भाष्यान्तरेषु दरीदृश्यमानाक्षेपान् उद्दिवीर्षूणामद्वैतिना भामत्यवलोकनम् उपकारक भवेत् । वेदान्तप्रक्रिया प्रत्यभिजिज्ञासूना कियदत्र साहाय्य भवेदिति दृष्ट्यैव त्वत्र प्रस्थानमिद परीक्ष्यते ॥

किञ्च, शाङ्करभाष्यटीकापदेशेनात्र बहुषु स्थलेषु मण्डनाभिप्राया एव भाष्यकारीयत्वेन प्रत्युपस्थापिता दृश्यन्ते । ब्रह्मतत्त्वसमीक्षाया अद्यापि मुद्रणद्वारेण नेत्रपथमनानीताया अल्पावशेषा भामत्यामेव दृग्गोचरीभवन्ति । यद्यपि सुरेश्वरवार्तिकेऽपि, विशेषत सबन्धवार्तिके, मण्डनाभिप्राया ग्रन्थ शरीरे यत्किञ्चिदक्षरविपरिणामपूर्वक प्रवेशिता सन्ति, तथापि मण्डन प्रस्थानप्रवाहमपि शङ्करप्रस्थानविचारधाराया गङ्गायामिव यमुनास्रोतस्विनी मिथुनीकृत्याभिनवमेव प्रस्थान लोके प्रप्रथम प्रसार्य जिज्ञासुजनचित्ताकर्षण भामत्यैव कृतम् । अपि च पञ्चपादिकायामनुपलभ्या नैके उपदेशविशेषा भामत्यामेव शक्योपलम्भना । भामत्या प्रभाविता बहवो विद्वास

स्वव्याख्यानोपव्याख्यानैस्तामलञ्चक्रिरे । अतो भाष्यप्रस्थानद्वारेण वेदान्त प्रक्रियानिर्दिधारयिषूणाम् अवश्यविजिज्ञास्या सजाता भामती ॥

## भामतीप्रस्थाने अविद्याद्वयम् –

१८२ ग्रन्थारम्भश्लोकेनैव आचार्यवाचस्पतिमिश्र, अविद्या मेवमुपनिबध्नाति –

(१) 'अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो विवर्ता यस्यैते वियदनिलतेजोऽबवनय'

इति । अत्र अविद्याद्वितयम् अनिर्वचनीयमिति प्रतिज्ञातम् । 'कार्यकारणाविद्याद्वयम्' इति पदेपदे भामत्या परामर्श उपलभ्यते । तद्यथा –

(२) 'कार्यकारणाविद्याद्वयाधारोऽहङ्कारास्पद ससारी' (वा भा पा ४५)[1] । 'अविद्याद्वयप्रतिबन्धापनयमात्रेण च विद्याया मोक्षसाधनत्वम्' (पा १२१), 'द्विधाऽविद्यातम' (पा १०२०) ॥

एव लयविक्षेपाभिधानाभ्या चाविद्याद्वितय परामृष्टमत्र । तद्यथा –

(३) स्वच्छतारूपमिव रूपमस्येति स्वच्छतारूप, न तु स्वच्छतैव। लयविक्षेपसस्कारयोस्तत्र भावात् (वा भा पा ४०९), 'यदा तु लयलक्षणाविद्योपबृहितो विक्षेपसस्कार समुदाचरति, तदा विशेषविज्ञानोत्पादात् स्वप्नजागरितावस्थात, परमात्मनो रूपाद् अशरूपमागमनम् । (वा भा पा ४१०), 'न चाविद्या केवला' इति लयाभिप्रायम् (पा ४८४), कारणभूतया लयलक्षणया अविद्यया प्राक्सर्गोपचितेन च विक्षेपसस्कारेण यत् प्रत्युपस्थापित नामरूप तदेव माया (पा ४९४) ॥

(४) प्रत्यगात्मनि अनात्माध्यास एव सर्वानर्थहेतु, न पुना रजतादिविभ्रमा इति स एवाविद्या ॥ वा भा पा ४०

(५) अध्यासो भेदाग्रहेण व्याप्त (पा ८), 'इतरेतराविवेकेन' विवेकाग्रहेण – इत्यर्थ ॥ पा १६

---

1 वा भा इति सङ्केतेन परामृष्टपत्रपृष्ठानि निर्णयसागर (1917) मुद्रित वाचस्पतिमिश्रकृतभामतीपुस्तकस्थानीति बोध्यम् ॥

यथोक्तदृशा नैतदभ्यूहितुं शक्यते यद् ब्रह्मसिद्धाविवात्रापि अग्रहणविपरीतग्रहणलक्षणे एव द्वे अविद्ये स्वीकृते इति । यतो ब्रह्मसिद्धावपि एते एव लयविक्षेपसंज्ञाभ्यां निर्दिष्टे दृश्येते –

(६) अथ मन्यसे – द्विप्रकारेयम् अविद्या प्रकाशस्याच्छादिका विक्षेपिका च, स्वप्नजागरितयोर्विक्षेपिका, सुषुप्ते आच्छादिका लयलक्षणा । तत्राच्छादिकाविद्यानिवृत्तिर्ज्ञानविधेः फलम् । तच्चासत्, यतो नाच्छादिकाया अविद्याया निवृत्तिः पुरुषेणार्थ्यते तथा, यथा विक्षेपस्य, स हि विविधदुःखात्मकः । लयस्तु विविधदुःखनिवृत्तेरसकृदानन्दत्वेन श्रुतौ गीतः प्रत्युत प्रार्थनीयः स्यात् । अपि च विपर्यासमनिरुन्धानोऽविद्याभेद एव न स्यात्, अवस्थात्रयेऽप्यग्रहणभावत्वात् । तस्मादग्रहणविपर्ययग्रहणे द्वे अविद्ये कार्यकारणभावेनावस्थिते ॥ ब्र सि पा 149

अत्राभावरूपैवाविद्या लयलक्षणत्वेन व्यपदिष्टा, कारणत्वेन च – इति स्पष्टम् । तस्मात्, भामत्यामपि अग्रहणविपर्ययावेव लयविक्षेपापरपर्यायौ अनिर्वाच्याविद्याद्वितयशब्देन विवक्षितौ–इत्यभ्यूहितुं शक्यते ॥

परं तु भामतीप्रस्थाने पञ्चपादिकोपात्ताविद्याशक्तिशब्दोऽपि तत्र तत्र प्रयुक्तो दृश्यते ब्रह्मसिद्धौ शाङ्करभाष्ये वा क्वचिदप्यदृष्टचरः । तत्र कानिचिद् वचनान्येतच्छब्दगर्भितान्युदाहरिष्यामः –

(१) तेन 'तदैक्षत' इत्यादौ उपचर्यता ब्रह्मणो जगद्योनिता अविद्याशक्त्याश्रयत्वेन, इह तु अविद्याशक्तेरेव जगद्योनित्वसंभवेन न द्वारद्वारिभावो युक्त इति प्रधानमेवात्र वाक्ये जगद्योनिरुच्यत इति पूर्वः पक्षः ॥ वा भा पा २५६

[ अत्र प्रकृतिरेव 'अविद्याशक्ति'शब्देन व्यपदिष्टा इति स्पष्टम् ॥ ]

(२) यद्यपि महाप्रलयसमये नान्तःकरणादयः समुदाचरद्वृत्तयः सन्ति, तथापि स्वकारणेऽनिर्वाच्यायाम् अविद्यायां लीनाः, सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपकाविद्यावासनाभिः सहावतिष्ठन्त एव ॥ वा भा पा ३३३

[ अत्रापि यस्यामविद्यायामन्तःकरणादयो लीनाः सैव प्रकृत्याख्या लयलक्षणा अविद्या – इति गम्यते ॥ ]

(३) ब्रह्मणस्त्वियमविद्याशक्तिर्मायादिशब्दवाच्या न शक्या तत्त्वे नान्यत्वेन वा निर्वक्तुम् । इदमेवास्या अव्यक्तत्व यदनिर्वाच्यत्व नाम । सोऽयमव्याकृतवादस्य प्रधानवादाद् भेद ॥ वा भा पा २७७

[ इह सुस्पष्ट यदव्याकृताख्या जगत्प्रकृतिरेवाविद्याशक्तिशब्दवाच्या इति ॥ ]

उपरिनिर्दिष्टैर्वाक्यै पञ्चपादिकावदेवात्रापि जगत्प्रकृतिरविद्याशक्तिशब्देन व्यपदिश्यत इत्यवगम्यते । तत्र किमग्रहणम् अध्यासलक्षणाविद्या निमित्तभूत कारणाविद्याशब्देन न व्यपदिश्यते ? कि सापि ब्रह्मसिद्ध्युक्तप्रकारेण लयलक्षणाविद्यात्वेनाभ्युपगम्यते—इत्येतत्तु न स्पष्टतया कुत्राप्युक्त भामत्याम् ॥

अध्यासलक्षणम् –

१८२ भाष्ये अध्यासलक्षण 'स्मृतिरूप परत्र पूर्वदृष्टावभास' इति वाक्येन निर्दिष्टमत्र न पञ्चपादिकावत् प्राधान्येनार्थाध्यासपरतया व्याख्यातम् –

(१) अवसन्नोऽवमतो वा भासोऽवभास । प्रत्ययान्तरबाधश्च अस्य अवसादोऽवमानो वा । एतावता 'मिथ्याज्ञानम्' इत्युक्त भवति ॥ वा भा पा १८

अत्र अध्यासो मिथ्याज्ञानम् – इति व्याख्यानात् ज्ञानाध्यासस्यैव प्रामुख्यता गम्यते । अत एव 'मिथ्याज्ञाननिमित्त सत्यानृते मिथुनीकृत्य अहमिदम् ममेदम्—इति नैसर्गिकोऽय लोकव्यवहार' इति भाष्यवाक्यम्, मिथ्या च तद्ज्ञान च' इति पञ्चपादिकानुसारेण न विगृहीतम् । न चाध्यास एव व्यवहार इति पञ्चपादिकामतमनुसृतम् –

(२) मिथ्याज्ञानम् अध्यास, तन्निमित्त । तद्भावाभावानुविधानाद् व्यवहारभावाभावयो –इत्यर्थ । तदेवम् अध्यासस्वरूप फल च व्यवहारम् उक्त्वा तस्य निमित्तमाह – इतरेतराविवेकेन । विवेकाग्रहेणेत्यर्थ ॥ वा भा पा १६

अत्राध्यासस्य मिथ्याज्ञानत्वमेवोररीकृतम् । लक्षणवाक्यशेष व्याख्यानेन त्वारोपणीयस्य अनिर्वचनीयत्व विशदीकृतम् –

(३) पूर्वदृष्टस्यावभास पूर्वदृष्टावभास । मिथ्याप्रत्ययश्च आरोपविषया-(?)रोपणीयस्य मिथुनमन्तरेण न भवतीति पूर्वदृष्टग्रहणेन अनृतमारोपणीयम् उपस्थापयति । तस्य च दृष्टत्वमात्रम् उपयुज्यते न वस्तुसत्ता–इति दृष्ट ग्रहणम् । तथापि वतमान दृष्ट दर्शन नारोपोपयोगीति 'पूर्व' इत्युक्तम् । तत्र पूर्वदृष्ट स्वरूपेण न्मदपि आरोपणीयतया अनिर्वाच्यम् इत्यनृतम् । आरोप-विषय सत्यमाह – परत्रेति । परत्र शुक्तिकादौ परमार्थसति । तदनेन सत्यानृतमिथुनमुक्तम् ॥ वा भा पा १८

अध्यासस्यासनिहितविषयत्व चाह लक्षणवाक्यव्याख्यानव्याजेन–

(४) स्मृते रूपमिव रूपम् अस्येति स्मृतिरूप । असनिहित विषयत्व च स्मृतिरूपत्वम् ॥ वा भा पा २०

## अर्थाध्यासविचारः –

१८३ तदेवम् अध्यासस्य ज्ञानप्राधान्येनैव लक्षयन्त्या भामत्याम् अर्थाध्यासो विस्मृत इति तु न शङ्कयम् । यत आह –

(१) हन्त तोयाभावात्मना मरीचीना तोयभावात्मत्व तावन्न सत् । तेषा तोयाभावादभेदेन तोयभावात्मतानुपपत्ते । नाप्यसत् । वस्त्वन्तरमेव हि वस्त्वन्तरस्य असत्त्वमास्थीयते । 'भावान्तरमभावोऽन्यो न कश्चिद्-निरूपणात्' इति वदद्भि । न चारोपित रूप वस्त्वन्तरम् । तद् हि मरीचयो वा भवेत्, गङ्गादिगत तोय वा । पूर्वस्मिन् कल्पे मरीचय इति प्रत्यय स्यात्, न तोयमिति । उत्तरस्मिंस्तु गङ्गाया तोयमिति स्यात्, न पुन, 'इह' इति । देशभेदास्मरणे 'तोयम्' इति स्यात्, न पुन 'इह' इति । न च इदमत्यन्तमसत्, निरस्तसमस्तस्वरूपम्, अलीकमेवास्तु–इति साप्रतम् । तस्यानुभवगोचरत्वानुपपत्तेरित्युक्तमधस्तात् । तस्मात् न सत्, नाप्यसत्, नापि सदसत्, परस्परविरोधात् – इत्यनिर्वाच्यमेवारोपणीय मरीचिषु तोयमास्थेयम् । तदनेन क्रमेणाध्यस्त तोय परमार्थतोयमिव, अत एव पूर्वदृष्टमिव, तत्त्वतस्तु न तोयम्, न च पूर्वदृष्टम् । किं तु अनृतमनिर्वाच्यम् ॥ वा भा पा २३-२४

## अध्यासलक्षणस्य लक्ष्येषु समन्वयः –

१८४ उक्तलक्षणस्य स्वप्नज्ञानादावपि व्याप्तिर्दर्शिता भामत्याम् –

(१) स्वप्नज्ञानस्यापि स्मृतिविभ्रमरूपस्यैवरूपत्वात् । तत्रापि हि स्मर्यमाणे पित्रादौ निद्रोपप्लववशादसंनिधानापरामर्शे तत्र तत्र पूर्वदृष्टस्यैव संनिहितदेशकालत्वस्य समारोप ॥ पा २०-२१

[अत्र 'पूर्वदृष्टस्यैव' इत्यवधारण कि तात्पर्येण, उत नेति विमर्शनीयम् । यत अधस्तादुदाहृतमरीचितोयवाक्ये 'तत्त्वतस्तु न तोय न च पूर्वदृष्टम्' इत्युक्तमस्ति ॥ ]

(२) एव 'पीत शङ्ख', 'तिक्तो गुड' इत्यत्राप्येतल्लक्षण योजनीयम् । तथा हि बहिर्विनिर्गच्छद्द्स्यच्छनयनरश्मिसपृक्तपित्तद्रव्यवर्तिनीं पीतता पित्त द्रव्यरहितामनुभवन्, शङ्ख च दोषाच्छादितशुक्लिमानमनुभवन्, पीततायाश्च शङ्खासबन्धमननुभवन्, असबन्धाग्रहणसारूप्येण 'पीत तपनीयपिण्डम्', 'पीत बिल्वफलम्' इत्यादौ पूर्वदृष्ट सामानाधिकरण्य पीतत्वशङ्खयोरारोप्याह 'पीत शङ्ख' इति । एतेन 'तिक्तो गुड' इति प्रत्ययो व्याख्यात ॥
वा भा पा २१

(३) एव विज्ञातृपुरुषाभिमुखेषु आदर्शोदकादिषु स्वच्छेषु चाक्षुष तेजो लग्नमपि बलीयसा सौर्येण तेजसा प्रतिस्रोत प्रवर्तित मुखसयुक्त मुख ग्राहयत्, दोषवशात् तद्देशताम् अनभिमुखता च मुखस्याग्राहयत्, पूर्वदृष्टाभिमुखादर्शोदकदेशताम् आभिमुख्य च मुखस्य आरोपयतीति प्रतिबिम्बविभ्रमोऽपि लक्षितो भवति ॥ पा २१

[तदेतत् पञ्चपादिकास्थवर्णनेन (प पा २३) विरुध्यत इव ॥]

(४) एतेन द्विचन्द्रदिङ्मोहालातचक्रगन्धर्वनगरवशोरगादिविभ्रमे ष्वपि यथासभव लक्षण योजनीयम् ॥ वा भा पा २१

अत्र सर्वत्राध्यासस्य मिथ्याज्ञानत्व लोकसिद्ध दृष्टान्तत्वेन वेदान्ताभियुक्तै प्रपञ्चाध्यासस्य जिज्ञासुहृदयारोपणार्थमादर्शितमिति सर्व सप्रतिपन्नम् । तद् विहाय मिथ्याज्ञान केन प्रकारेण जायते इत्येतद् विशदयितु तत्र सर्वत्रापि स्वाभिमतानिर्वचनीयख्याति प्रदर्शयितु च किमिति वृथा प्रयस्यत इति न विद्म । मण्डनमिश्रेण (ब्र सि 138-147)

विपरीतख्यातिस्थापनार्थं प्रयुक्ता युक्तयोऽत्र बाहुल्येन दृश्यन्ते। पञ्च पादिकाया (पा ९, १०) वितत्यदर्शितस्य कारणत्रिनयजन्यत्वरूपाध्यास लक्षणस्य परामर्शो नैवास्तीति तु स्फुटमेव ॥

एवमेव 'त केचिदन्यत्रान्यधर्माध्यास इति वदन्ति' इत्यारभ्य मतान्तरोपन्यास भाष्ये कृत व्याजीकृत्य य ख्यातिबाधविचारोऽत्र प्रतानित, तस्यापि परमप्रकृतप्रक्रियानिर्धारणप्रयत्नेऽनुपयोगात् फल्गु प्रयोजनत्वाच्च न समालोचनमिह क्रियते। तत्र वाचस्पतिमिश्राभिप्रायस्तु एकस्मिन् वाक्ये सगृह्य प्रदर्शित –

(५) स चायमेवलक्षणकोऽध्यासोऽनिर्वचनीय सर्वेषामेव समत परीक्षकाणाम्, तद्भेदे पर विप्रतिपत्तिरित्यनिर्वचनीयता द्रढयितुमाह ॥ वा भा पा २५

भाष्यकृदेवोत्तरत्र स्वाशय सगृह्य दर्शयत्यध्यासविषये – "अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम" इति। तत्र भामतीकारोऽप्याह –

(६) 'स्मृतिरूप परत्र पूर्वदृष्टावभास' इत्यस्य सक्षेपाभिधान मेतत्॥ वा भा पा ४४

इति। तत्रैव स्थिते किमित्यध्यासस्यानिर्वचनीयत्वमत्र विवक्षितमित्यधि कावाप क्रियत इति न जानीम। यद्यपि भाष्यकृन्मतेऽपि सर्वमनात्म-भूतम् आत्मत्वतदन्यत्वाभ्यामनिर्वचनीयमिति स्वीकृतमेव, तथापि तदे-तदत्रोल्लिख्य न कथनमर्हति। 'आत्मनि सर्वमध्यस्तम्' इत्युक्तेनैव सर्वेष्ट सिद्धे। भामत्या तु अनिर्वचनीयवादस्य प्रामुख्य जिज्ञासूना लक्ष्ये पदे पदे आनीयते। अत एव 'अध्यासो मिथ्याप्रत्ययरूप' इति भाष्य वाक्यस्य विवरणावसरे एव लिखितम् –

(७) मिथ्याप्रत्ययाना रूपम् अनिर्वचनीयत्वम्। तद् यस्य स तथोक्त। अनिर्वचनीय इत्यर्थ॥ वा भा पा ४७

भाष्यप्रस्थाने हि 'सर्वोऽप्ययब्रह्मप्रत्ययो मिथ्या' इत्यस्य ब्रह्मैवेद परमार्थत – इत्येवाभिप्राय। न पुन प्रत्ययस्य मिथ्यात्व नाम कश्चन धर्मोऽपि विवक्ष्यते। यथोक्त छान्दोग्यभाष्ये –

'मत एव द्वैतभेदेन अन्यथा गृह्यमाणत्वान्नासत्त्व कस्यचित् क्वचित्-
इति ब्रूम' छा भा ६-२-३, पा ५१०

इति । अतोऽनिर्वचनीयत्वनिर्धारणेन किमत्राधिक लभ्यत इति न विद्म ॥

अध्यामानादिता –

१८५ उक्तमेतत्, यद् भामतीप्रस्थाने न केवलम् अग्रहण-मिथ्याज्ञाने अविद्याशब्देन व्यवह्रियेते, कि तु जगतो बीजशक्तिरपि तच्छब्देन तत्र तत्र व्यपदिश्यत इति (पा ३९८ द्वितीयम् उदाहरणम्) । तेनाध्यासस्यापि सा अविद्याशक्तिरुपादानम् इति पञ्चपादिकायामिवात्रापि स्वीकृतेत्यर्थादाप्नोति । तथासमुल्लिख्यवचन तु भामत्या नोपलभ्यत इत्यन्यत् । यद्यय तर्क समीचीन, तर्हि अध्यास एवाविद्या, तस्य शक्तिरूपमेव च लयलक्षणाविद्या–इत्युक्त भवति वाचस्पतिमिश्रै । तदा तु भाष्यकारीयप्रस्थानात् विलक्षणमेवेद भामतीदृष्टमध्यासतत्त्वमित्यपि प्राप्नोति । यतोऽव्याकृतादिशब्दवाच्यजगद्बीजशक्तिकार्यत्वादध्यासस्य अनादित्व भाष्योक्त न तदा निरुपचरितमङ्गीकृत भवेत् ॥

(१) एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूप कर्तृत्वभोक्तृत्वप्रवर्तक सर्वलोकप्रत्यक्ष ॥

इति हि भाष्यम् । यद्यपि भामत्यामपि भाष्यवाक्यमेतत् –

(२) अनाद्यनन्तत्वे हेतुरुक्त, 'नैसर्गिक' इति ॥ वा भा पा ४५

इति व्याख्यातम् । तथा चाध्यासस्यानादित्वमप्युररीकृतमिव तत्र, तथाप्येतत्प्राक्तनवाक्ये –

(३) तदनेन अन्त करणाद्यवच्छिन्न प्रत्यगात्मा इदमनिदरूपश्चेतन, कर्ता भोक्ता कार्यकारणाविद्याद्वयाधारोऽहङ्कारास्पद ससारी सर्वानर्थसभार-भाजन जीवात्मा इतरेतराध्यासोपादान, तदुपादानश्चाध्यास – इत्यनादित्वात् बीजाङ्कुरवन्नेतरेतराश्रयत्वम् इत्युक्त भवति ॥ वा भा पा ४५

इत्यनादित्व गौणमेव, अध्यासजीवत्वयोर्बीजाङ्कुरन्यायेनानादित्वादित्युक्तम् ।

एव पूर्वमपि, युष्मत्प्रत्ययापेतत्वात् प्रत्यगात्मनोऽविषयत्वाङ्गीकारात् कथ तस्मिन् विषयतद्धर्माणाम यास ? – इत्याक्षेपसमाधानार्थं प्रवृत्तस्य 'न तावदयमेकान्तेनाविषय, अस्मत्प्रत्ययविषयत्वात' इति वाक्यस्य व्याख्यानावसरे –

(४) न चाध्यासे सति विषयत्वम् विषयत्वे चाध्यास - इत्यन्यो न्याश्रयत्वमिति साप्रतम् । बीजाङ्कुरवदनादित्वात् । पूर्वपूर्वाध्यासतद्वासना-विषयीकृतस्य, उत्तरोत्तराध्यासविषयत्वाविरोधात् – इत्युक्त 'नैसर्गिकोऽय लोकव्यवहार' इति भाष्यग्रन्थेन ॥ वा भा पा ३९

इति सर्वव्यवहारप्रवर्तकस्याप्यध्यासस्य क्वाचित्कत्वम्, अध्यासव्यक्तीना कालाधारकत्व बीजाङ्कुरदृष्टान्तानयनेन समापादितम् ॥

यद्यपि बीजाङ्कुरदृष्टान्तोऽय पञ्चपादिकायामपि क्वचिदुपात्त, तथापि भामत्यामिव वार वार स तत्र नैवानीत । यथा 'नैसर्गिकोऽय लोक व्यवहार' इत्यत्रैव यथा –

(५) नैसर्गिक इति । स्वाभाविकोऽनादिरय व्यवहार । व्यवहारा-नादितया तत्कारणस्याध्यासस्यानादितोक्ता । ततश्च पूर्वपूर्वमिथ्याज्ञानोप दर्शितस्य बुद्धीन्द्रियशरीरादेरुत्तरोत्तराध्यासोपयोग इत्यनादित्वात् बीजाङ्कुर वत् । न परस्पराश्रयत्वमित्यर्थ ॥ वा भा पा १७

अत्रेदमवधेयम् । व्यवहारे कालाधारणा बीजाङ्कुरादीना सतत्य नादित्व क्वचिद् यद्यप्यङ्गीक्रियते, तथापि शरीरादिसघातधर्माधर्मादि विमर्शनस्थले स न्यायो नैवाञ्जस । यथोक्त भाष्ये –

(६) शरीरसबन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य च इतरेतराश्रयत्व प्रसङ्गादन्धपरम्परैषा अनादित्वकल्पना ॥ सू भा १-१-४, पा २२

इति । गौडपादीयकारिकास्वपि शरीरधर्माधर्मादिसबन्धविचारप्रसङ्गे एव –

(७) बीजाङ्कुराख्यो दृष्टान्त सदा साध्यसमो हि स ।
न हि साध्यसमो हेतु सिद्धौ साध्यस्य युज्यते ॥
गौ का ४-२०, पा २३३

[भाष्ये च 'यथा इदानीमुत्पन्नोऽपरोऽङ्कुरो बीजादादिमान्, बीजं च परम् अन्यस्मादङ्कुरादिति क्रमेणोत्पन्नत्वादादिमत्, एवं पूर्वं पूर्वोऽङ्कुरो बीजं च पूर्वं पूर्वम् आदिमदेवेति प्रत्येकं सर्वस्य बीजाङ्कुरजातस्य आदिमत्त्वात् कस्यचिदप्यनादित्वानुपपत्तिः एवं हेतुफलयोः। अथ बीजाङ्कुरसंततेरनादित्वमिति चेत्। न। एकत्वानुपपत्तेः। न हि बीजाङ्कुरव्यतिरेकेण बीजाङ्कुरसंततिर्नामैका अभ्युपगम्यते हेतुफलसंततिर्वा तदनादित्ववादिभिः ॥]

इति बीजाङ्कुरदृष्टान्तोऽपि प्रत्याख्यातः। सर्वत्रानादित्ववादप्रसङ्गे बीजाङ्कुरदृष्टान्तमानयन्तो मिश्राः कुतस्तद्युक्तिं न विमृष्टवन्त – इति तु न ज्ञातम् ॥

विशिष्य चाध्यासस्य सर्वव्यवहारप्रत्युपस्थापकस्य बीजाङ्कुरवद् व्यक्तित्वेन पौर्वापर्यकल्पनं न केवलमसमञ्जसम्, किं तर्हि अध्यारोपापवादप्रक्रियास्वरूपविपरिलोपकमपीति सर्वथा हेयम्, न ह्यात्मव्यतिरिक्तस्य सर्वस्यापि अनध्यस्तत्वे तदपह्नवेनात्मोपदेश उपपद्यते। मूलाध्यासविषयेऽपि हि शुक्तिरजताद्यध्यासवत् कालाधारकत्वकल्पने कालो नैवाध्यस्तः स्यात्, ततश्च 'अद्वैतम्' इति श्रुतिकृतो विशेषो नैव स्यादिति ॥

## अविद्याश्रयः –

१८६ अविद्याविषये भास्कराचार्यकृताक्षेपाः प्रागेवानूदिता अस्माभिः। तत्र 'कस्येयमविद्या ? न तावज्जीवस्य वस्तुभूतस्य। तस्यानभ्युपगमात्, नापीश्वरस्य। (तस्य) नित्यविज्ञानप्रकाशत्वात् अज्ञानं विरुध्यते' (भा. सू. पा. ८२)–इत्यादिरूपेणाक्षेपे तत्परिहारार्थं भामत्या मण्डनमिश्रप्रस्थानमेवानुसृतम् –

(१) यत्तु कस्याविद्येति। जीवानामिति ब्रूमः। ननु न जीवा ब्रह्मणो भिद्यन्ते। सत्यं परमार्थतः, कल्पनया तु भिद्यन्ते। कस्य पुनः कल्पना भेदिका ? न तावद् ब्रह्मणः। तस्य विद्यात्मनः कल्पनाशून्यत्वात्। नापि जीवानाम्, कल्पनायाः प्राक् तदभावात्, इतरेतराश्रयप्रसङ्गात्। अनादित्वादुभयोरविद्याजीवयोर्बीजाङ्कुरसन्तानयोरिव नेतरेतराश्रयप्रक्लृप्तिमावहति ॥ (ब्र. सि. 10)

इति मण्डनमिश्रः ॥

(२) नाविद्या ब्रह्माश्रया, किं तु जीवे। सा त्वनिर्वचनीया इत्युक्तम्॥
वा भा पा १२६

(३) अनाद्यविद्यावच्छेदलब्धजीवभाव परः एवात्मा स्वतो भेदेनावभासते। तादृशाना च जीवानाम् अविद्या। न तु निरुपाधिनो ब्रह्मण। न चाविद्यायां सत्यां जीवात्मविभाग, सति च जीवात्मविभागे तदाश्रया अविद्या इत्यन्योन्याश्रयमि(य इ?)ति साप्रतम्। अनादित्वेन जीवाविद्ययोर्बीजाङ्कुरवदनवक्लृप्तेरयोगात्॥ वा भि पा २३५

इति वाचम्पतिमिश्र ॥

अत्रोभयत्रापि मिश्रप्रस्थान दोषमिश्रम्। अविद्याजीवयोरन्यतरस्यापि स्वेतरविरहेण–बीजस्येवाङ्कुरविरहेण – सत्त्वानुपलब्धे। बीजाङ्कुरसंतान न्यायस्यैव यथोक्तरीत्या दोषग्रस्तत्वाच्च ॥

(४) निरशस्यापि चानाद्यनिर्वाच्याविद्यातद्वासनासमारोपितविविधप्रपञ्चात्मन साशस्येव कस्यचिदशस्याग्रहणात् विभ्रम इव। परमार्थतस्तु न विभ्रमो नाम कश्चित्, न च ससारो नाम, किं तु सर्वमेतत् सर्वानुपपत्ति भाजनत्वेन अनिर्वचनीयमिति युक्तमुत्पश्याम॥ वा भा पा ९३८–९३९

अत्राप्यविद्याया अनादित्व स्वीकृत्यैव तद्बलाद् ब्रह्मणि साशत्व मुपपादितमिति यथोक्तदोषस्तदवस्थ ॥

## अविद्यानानात्वम् –

१८७ 'अथ ब्रह्मैव ससरति ब्रह्मैव मुच्यते, एकमुक्तौ सर्वमुक्ति प्रसङ्ग' (ब्र सि 12) इति मण्डनमिश्रेण ब्रह्माश्रिताविद्यावादिना पक्षो दूषित। भास्कराचार्येण तु – "सा चाविद्या प्रतिपुरुषमेका वा अनेका चेति ? यद्यनेका ततोऽर्थत्व प्राप्नोति, तत्त्वान्यत्वाभ्यामनिर्वचनीयेति हीयते। एकत्वे च युगपत् सर्वमुक्तिप्रसङ्ग ॥' (भा सू पा २१९) इति जीवाश्रिताविद्यावादिपक्षोऽप्याक्षिप्त। तत्र वाचस्पतिमिश्रोक्त परिहारो द्वेधा –

(१) अविद्योपस्थापितानां बुद्ध्यादिसंघातानां भेदात् तत्तद्बुद्ध्यादिसंघातभेदोपधान आत्मा, एकोऽपि भिन्न इव, विशुद्धोऽप्यविशुद्ध इव। ततश्च, एकबुद्ध्यादिसंघातापगमे तत्र मुक्त इव, इतरत्र बद्ध इव। यथा मणिकृपाणाद्युपधानभेदादेकमेव मुखं नानेव दीर्घमिव वृत्तमिव श्याममिवावदातमिव, अन्यतमोपधानविगमे तत्र मुक्तमिव अन्यत्रोपहितमिवेति नैकमुक्तौ सर्वमुक्तिप्रसङ्गः ॥ वा भा पा ६१७

[एतदपि मण्डनमिश्रप्रस्थानमेव ब्र सि 11, 12]

अत्राविद्याया एकत्वं नानात्वं वा कण्ठतो नोक्तम्। तत्राविद्याया एकत्वे तन्नाशात् सर्वोपाधिविनाश एव प्रसज्येतेति शङ्काप्रसञ्जनभयात् स्यात् द्वितीयः परिहारः –

(२) न वयं प्रधानवदविद्यां सर्वजीवेष्वेकाम् आचक्ष्महे येनैवमुपालभ्येमहि, किं त्वियं प्रतिजीवं भिद्यते। तेन यस्यैव जीवस्य विद्योत्पन्ना, तस्यैवाविद्या अपनीयते, न जीवान्तरस्य। भिन्नाधिकरणयोर्विद्याविद्ययोरविरोधात् ॥ वा भा पा ३७७, ३७८

अत्र भास्करकृतम् आक्षेपान्तरम् 'यद्यनेका ततोऽर्थत्वं प्राप्नोति' इत्येतद् असारतया उपेक्षितमित्युन्नीयते। अत्राविद्यानानात्वकृतं वा जीवनानात्वम्, आहोस्वित् जीवनानात्वकृतं वा अविद्यानानात्वम् – इति शङ्कायां भामत्या उत्तरम्, अनादित्ववादब्रह्मास्त्रमाश्रित्य –

(३) न च अविद्योपाधिभेदाधीनो जीवभेदः जीवभेदाधीनश्चाविद्योपाधिभेदः – इति परस्पराश्रयादुभयासिद्धिरिति साम्प्रतम्। अनादित्वाद् बीजाङ्कुरवदुभयसिद्धेः ॥ वा भा पा ३७८

प्रपञ्चे अनेके जीवाः, प्रत्येकमेकैककार्यकरणसंघातावच्छिन्ना दृश्यन्त इति तन्मूलभूता अविद्या नाना भवितुमर्हति, एवं हि बन्धमोक्षादिव्यवस्था सुस्था भवेदिति कृत्वा अविद्यानानात्वमुररीकृतम् अस्मिन् प्रस्थाने। नानात्वमेव तावदविद्याप्रत्युपस्थापितम्, अतोऽविद्याया एकत्वनानात्वविकल्पनमसङ्गतम् – इति कस्मान्नालोचितमिति न विज्ञायते ॥

## अविद्यायाः कारणम् –

१८८ अविद्याया अनादित्वाङ्गीकारादेव स्यात्, तस्या कारण गवेषणमत्र प्रस्थाने न क्रियते । पर तु अविद्याशब्दव्यपदेश्याध्यासस्य जीवस्य च बीजाङ्कुरन्यायेन प्रवाहतोऽनादित्वोक्ते, जगत्प्रकृतेरविद्याशक्ति शब्देन व्यपदेशाच्च शक्योत्प्रेक्षणमिद यद् भामतीकारा अपि पञ्चपादिका कृत इवाध्यासस्याविद्याशक्त्युपादानकत्व मेनिरे इति । तादृशोल्लिख्यवचन तु नोपलभ्यतेऽत्र । जीवात्मा इतरेतराध्यासोपादान, तदुपादानश्चाध्यास' (वा भा पा ४५) इति तु नोपादानकारणपरम् इति स्पष्टमेव । तस्मात्–

> (१) न च अध्यासे सति विषयत्वम्, विषयत्वे चाध्यास – इत्यन्योन्याश्रयत्वमिति साप्रतम् । बीजाङ्कुरवदनादित्वात्, पूर्वपूर्वाध्यासतद्वासनाविषयीकृतस्योत्तरोत्तराध्यासविषयत्वाविरोधात् इत्युक्तम् 'नैसर्गिकोऽय लोकव्यवहार' इति भाष्यग्रन्थेन ॥ वा भा पा ३९

इति वदन्तोऽस्मी

> (२) कि तर्हि निमित्तम् ? अनादिरप्रयोजना चाविद्या – इत्युक्तम् । तत्र च हेत्वनुयोगो निरवकाश । विपर्यासतत्सस्कारयोश्च परस्परहेतुफल भावेन व्यवस्थानान्न दोष ॥ ब्र सि पा 33

इति मण्डनोक्तिमेवात्राप्यनुसस्तु – इति मन्तुमुचित भाति ॥

## प्रमाणप्रमेयव्यवहारस्याविद्यकत्वम् –

१८९ 'तमेतमविद्याख्यम् आत्मानात्मनोरितरेतराध्यास पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ता । सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि' इति भाष्यवाक्यमेव व्याख्यात भामत्याम् –

> (१) यदुक्त 'सत्यानृते मिथुनीकृत्य विवेकाग्रहादध्यस्य अहमिद ममेदम् – इति लोकव्यवहार' इति, तत्र व्यपदेशलक्षणो व्यवहार कण्ठोक्त, इतिशब्दसूचित लोकव्यवहारमादर्शयति 'तमेतमविद्याख्यमिति' इति ॥ वा भा पा ४०

व्यवहारशब्देनैव प्रत्ययव्यपदेशादि सर्वोऽपि व्यवहारोऽत्र विवियत इति कुतो न व्याख्यातमिति न विज्ञायते ॥

'कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ?' इति भाष्योत्थापितशङ्कातत्परिहारग्रन्थौ प्रायश पञ्चपादिकानुसारेणैवात्र व्याख्यातौ । तत्र निगमनमित्थं कृतम् –

(२) तस्मात्, इतरेतराध्यासात् चिदात्मकर्तृस्थं प्रमाफलं सिध्यति तत्सिद्धौ च प्रमातृत्वम् । तामेव प्रमामुररीकृत्य प्रमाणस्य प्रवृत्ति । प्रमातृत्वेन च प्रमा उपलक्ष्यते । प्रमाया फलस्याभावे प्रमाण न प्रवर्तेत । तथा च प्रमाणमप्रमाण स्यादित्यर्थ ॥ वा भा पा ४२

अत्र 'प्रमाणानि कथमविद्यावद्विषयाणि ? न ।विद्यावन्त प्रमाणान्याश्रयन्ति । तत्कार्यस्य विद्याया अविद्याविरोधित्वात् ।' इति, तत्पूर्वम् 'तत्त्वपरिच्छेदो हि प्रमा विद्या, तत्साधनानि प्रमाणानि कथमविद्यावद्विषयाणि ?' इति च स्वोत्थापितशङ्काद्वयपरिहारत्वेनैव भाष्यग्रन्थो योजित । भाष्ये तु 'प्रमाणप्रमेयव्यवहारप्रवृत्तिमात्रम् अविद्यापुर सरमिति कथम् ?' इति शङ्कैव प्राधान्येन कृता, न पुन प्रमाविषये, प्रमाणवृत्तविषये वा आक्षेप –इति प्रस्थानयोर्वैलक्षण्य स्फुटम् । प्रमातृत्वमेव ह्यविद्यापुर सरम्, तन्निवृत्त्यर्थमेव च शास्त्रप्रवृत्ति – इति भाष्याशयो नानेन स्फुटित भवेद् । तथाहि भाष्यम् –

(३) न ह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाणि, अप्रमातृकाणि च प्रमाणानि भवितुमर्हन्ति ॥ सू भा १-१-४, पा २३

[अत्र 'प्रमातृत्वाभावे न केवल प्रमाणप्रवृत्तिर्नास्तीति, यावत् प्रमाणानां प्रमाणत्वमेव न संभवतीत्युक्तम् ॥ ]

(४) सिद्धे ह्यात्मनि प्रमातरि प्रमित्सो प्रमाणान्वेषणा भवति ॥ गी भा २-१८, पा १६

[अत्रापि प्रमातृत्वसिद्धिपुर सरमेव प्रमाणप्रवृत्तेरात्मलाभ – इति सूचितम् ॥]

52

(५) प्रमातृत्वं ह्यात्मनो निवर्तते, एव प्रमाणम् ॥
गी भा २-६९, पा ३९

[अत्रापि प्रमातृत्वमेव शास्त्रजन्यज्ञानेन प्राधान्येन निवर्त्यम्, तन्निवृत्ति-नान्तरीयकी तु प्रमाणप्रमेयव्यवहारनिवृत्तिरित्युक्तम् ॥ ]

शास्त्रप्रामाण्यम् –

१९० 'शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वा आत्मनः परलोकसंबन्धमधिक्रियते, तथापि न वेदान्त-वेद्यम्, अशनायाद्यतीतम् अपेतब्रह्मक्षत्रादिभेदम् असंसार्यात्मतत्त्वम् अधिकारेऽपेक्ष्यते । अनुपयोगात्, अधिकारविरोधाच्च । प्राक्च तथाभूतात्मविज्ञानात् प्रवर्तमानं शास्त्रम् अविद्यावद्विषयत्वं नातिवर्तते' इति भाष्यम्, कर्मशास्त्रस्यापि अविद्यापुरःसरैव प्रवृत्तिरित्युपपादयितुं प्रवृत्तम् इति स्फुटम् । 'अविद्यावद्विषयत्वं नातिवर्तते' इत्युपसंहारात् । भामत्या तु अविद्यापुरःसरत्वोपपादनं विहाय शङ्कान्तरोत्तरत्वेनैव वाक्यमिदं योजितम्

(१) यद्यपि विरोधानुपयोगाभ्याम् औपनिषदः पुरुषोऽधिकारे नापेक्ष्यते, तथापि उपनिषद्भ्योऽवगम्यमानः शक्नोत्यधिकारं निरोद्धुम् । तथा च परस्पराहतार्थत्वेन कृत्स्न एव वेदः प्रामाण्यम् अपजह्यादित्यत आह– प्राक्च तथाभूतात्मेति ॥ वा भा पा ४४

इति । नेह भाष्ये शास्त्रप्रामाण्यापहानिः शङ्क्यत इति प्रकरणालोचनयैव सिध्यति । स्वात्मानं कर्तृभोक्तृरूपं मत्वैव प्रवर्तते कर्मणि, सा च कर्तृत्वभोक्तृत्वमतिरविद्यापुरःसरैवेत्यविद्यावन्तमेव पुरुषं बोधयितुं प्रवृत्तं शास्त्रम्–इति खलु भाष्याशयः । तथा व्याख्यानमेव तु प्रकृतानुसारि वेदान्तप्रक्रियानुगुणं च, न तु वेदप्रामाण्यस्थापनपरत्वेन व्याख्यानमिति । एतदेव च ग्रन्थकारेणाप्यनुसृतं प्रतिज्ञावाक्यव्याख्यानावसरे –

(२) तस्मात्, अनाद्यविद्यालब्धकर्तृत्वभोक्तृत्वब्राह्मणत्वाद्यभिमानिनं नरम् अधिकृत्य विधिनिषेधशास्त्रं प्रवर्तते ॥ वा भा पा ४३

इति । एव वेदान्तशास्त्रमप्यविद्या पुरस्कृत्यैव प्रवृत्तमिति साधु लिखितमत्र–

(३) एव वेदान्ता अपि, अविद्यावत्पुरुषविषया एव । न हि प्रमात्रादिविभागादृते तदर्थाधिगम । ते तु, अविद्यावन्तम् अनुसरन्तो (?) निर्दृष्टनिखिलाविद्यमनुशिष्ट स्वरूपे व्यवस्थापयन्ति – इत्येतावानेव विशेष । तस्मादविद्यावत्पुरुषविषयाण्येव शास्त्राणीति सिद्धम् ॥ वा भा पा ४२

[अध्यारोपापवादप्रक्रियया अविद्यापनयनार्थं शास्त्रप्रवृत्तिरिति यावत् ॥]

अध्यासभाष्ये 'युष्मदस्मत्प्रत्ययगोचरयो' इत्यारभ्य 'मिथ्येति भवितु युक्तम्'–इत्येतदन्त भाष्यभाग आत्मतत्त्वस्य 'अहम्' इत्यसन्दिग्धाविपर्यस्तापरोक्षानुभवसिद्धत्वात्, विषयतद्धर्माणाम् भिन्नत्वेन स्फुटतर ग्रहणात् नास्ति तयोर्मिथोऽध्यास इत्येतत्परतया व्याख्याय तदुत्तरग्रन्थो यथोक्तपूर्वपक्षपरिहारेण सिद्धान्तोपस्थापनपरतया योजित । तत्रेदमुक्तम्–

(४) भवेदेतदेव यद्यहम् इत्यनुभवे आत्मतत्त्व प्रकाशेत, न त्वेतदस्ति । तथा हि – समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसम् उदासीनमेकम् अद्वितीयम् आत्मतत्त्वम् श्रुतिस्मृतीतिहासपुराणेषु गीयते । न चैतानि, उपक्रमपरामर्शोपसंहारै क्रियासमभिहारेणेदमात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यानि शक्रेणाप्युपचरितार्थानि कर्तुम् । अभ्यासे हि भूयस्त्वमर्थस्य भवति । यथा 'अहो दर्शनीया, अहो दर्शनीया !' इति । न न्यूनत्वम्, प्रागेवोपचरितत्वमिति । अहमनुभवस्तु प्रादेशिकम् अनेकविधशोकदुःखादिप्रपञ्चोपप्लुतमात्मानम् आदर्शयन् कथमात्मतत्त्वगोचर ? कथ वा अनुपप्लव ? वा भा पा ८–९

अत्रेत्थ न प्रतिभाति । यद्यप्यद्वितीयात्मतत्त्व सर्वस्यात्मभूत सर्वसाक्षि च शास्त्रैकगम्यम्, तथापि न शास्त्रप्रामाण्य सिद्धवत्कृत्यैवात्मानात्माध्यासमुपपादयितु प्रववृते भाष्यकार इति । तदेतत् कुत ? अध्यासपुरसरत्वमेव हि सर्वप्रमाणप्रमेयव्यवहारस्य प्रदर्श्य, तस्यानर्थहेतो प्रहाणाय सर्ववेदान्तानाम् अन्त्यप्रमाणभूतानामारम्भमुपपादयितुमध्यासभाष्यप्रणयनप्रयास । तत् कथमध्यासापह्नववादिन प्रत्यादावेव श्रुत्यादि-

प्राबल्यस्थापनपन्था, तत्र तेनैव पथा प्रस्थिताना, कि वेदबाह्यधार्मिकग्रन्थाना प्रत्यक्षाद्यपेक्षया प्राबल्य न प्राप्नोतीति तु प्रश्नान्तर दुरुत्तरम् ॥

वेदस्य नित्यनिर्दोषत्व तस्यापौरुषेयत्वमवष्टभ्यैव मीमासकै स्वीक्रियते। अत्रापि विधानान्तरेण तदेवापौरुषेयत्व स्वीक्रियते। तद् यथा –

(६) सृष्टिप्रलयमनिच्छन्तो जैमिनीया वेदाध्ययन प्रत्यस्मादृशगुरुशिष्यपरम्परामविच्छिन्नाम् अनादिमाचक्षते। वैयासिक तु मतमनुवर्तमाना श्रुतिस्मृतीतिहासादिसिद्धसृष्टिप्रलयानुसारेणानाद्यविद्योपधानलब्धसर्वेशक्तिज्ञानस्यापि परमात्मनो नित्यस्य वेदाना योनेरपि न तेषु स्वातन्त्र्यम्। पूर्वपूर्वसर्गानुसारेण तादृशतादृशानुपूर्वीविरचनात्। पुरुषास्वातन्त्र्यमात्र चापौरुषेयत्व रोचयन्ते जैमिनीया अपि। तच्च अस्माकमपि समानम् अन्यत्राभिनिवेशात्। न चैकस्य प्रतिभाने अनाश्वास –इति युक्तम्। न हि बहूनामप्यज्ञाना विज्ञाना वा आशयदोषवता प्रतिभाने युक्त आश्वास। तत्त्वज्ञानवतश्च अपास्तसमस्तदोषस्य, एकस्यापि प्रतिभाने युक्त एवाश्वास। सर्गादिभुवा प्रजापतिदेवर्षीणा धर्मज्ञानवैराग्यैश्वर्यसपन्नानाम् उपपद्यते तत्स्वरूपावधारणम्, तत्प्रत्ययेन च अर्वाचीनानामपि तत्र सप्रत्यय –इत्युपपन्न ब्रह्मण शास्त्रयोनित्वम्, शास्त्रस्य चापौरुषेयत्वम्, प्रामाण्य चेति ॥
वा भा पा ९१

(७) स हि भगवान् यादृश पूर्वस्मिन् सर्गे चकार शास्त्रम्, तदनुसारेणास्मिन्नपि सर्गे प्रणीतवान्। एव पूर्वतरानुसारेण पूर्वस्मिन्, पूर्वतमानुसारेण च पूर्वतरे – इत्यनादिरय शास्त्रेश्वरयो कार्यकारणभाव ॥
वा भा २-१-२, पा ४३६

(८) तत्रेश्वरस्य न शास्त्रार्थज्ञानपूर्वा शास्त्रक्रिया, येनास्य कपिलादिवत् स्वातन्त्र्य भवेत्। शास्त्रार्थज्ञान चास्य स्वयमाविर्भवदपि न शास्त्रकारणतामुपैति। द्वयोरप्यपर्यायेणाविर्भावात् ॥ वा भा २-१-२, पा ४३६

ब्रह्मसिद्धौ (ब्र सि 82, 155) अपौरुषेयत्व मीमासकमतमनुसृत्यैव सिद्धवत्कृत्य विचार प्रतानित। पञ्चपादिकाया तु ब्रह्मण शास्त्रयोनित्वे सापेक्षत्व स्याद्वेदस्येत्याशङ्क्य –

"नन्वेव सति बुद्धिपूर्वत्वात् सापेक्ष स्यात्। न स्यात्। ब्रह्मवदनादित्वात्। कूटस्थनित्यत्वाच्च। कथ पुनस्ततो जन्म? तत्परप्रज्ञत्वाद् रज्जुसर्प-

वत्। तथा च श्रुतिः 'निःश्वसितमेतत्' इति । यथा अपेक्षारहितैव लोके निःश्वासप्रवृत्तिः, तथा अस्यापीति न सापेक्षतादोषः ॥" प पा ८२

इत्येतावन्मात्रं सङ्ग्रहेणोक्तम्। अतो वाचस्पत्युपज्ञमेव विस्तरेण शास्त्रयोनित्व वेदापौरुषेयत्वयोरविरोधोपपादनं सूत्रभाष्यानुसारेणेति गम्यते ॥

तथा हि भाष्ये –

(१) तथा च मन्त्रवर्णः 'यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम्' इति स्थितामेव वाचमनुविन्नां दर्शयति ॥
सू भा १-३-२९, पा १२८

(२) सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसंधानोपपत्तेः । यद्यपि प्राकृताः प्राणिनो न जन्मान्तरव्यवहारमनुसंदधाना दृश्यन्त इति, तथापि न प्राकृतवदीश्वराणां भवितव्यम् ॥ सू भा १-३-३०, पा १२९

इति पूर्वकल्पस्थितानामेव वेदानाम् ऋषिभिरनुसंधानपूर्वकम् अनुविन्नत्वमुक्तम्। बृहदारण्यकभाष्ये च –

(३) पुरुषनिःश्वासवदप्रयत्नोत्थितत्वात् प्रमाणं वेदः, न यथान्यो ग्रन्थ इति ॥ बृ भा २-४-१०, पा ७६६

इतीत्थमेव प्रामाण्यमुक्तम्। परं तु वेदान्तप्रधानार्थविषये न वेदान्तवाक्यं केवलं वाक्यत्वेनैव प्रमाणमित्युदाह्रियते, किं तर्हि अद्वितीयात्मप्रतिपादकत्वेन अनाकाङ्क्षानुभवपर्यन्तत्वात् तदुपदेशजनितज्ञानस्येति भगवत्पादैरुक्तमिहावधेयम् –

(४) प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहाशङ्कानुपपत्तिः । कर्मफले हि स्वर्गादौ अनुभवानारूढे स्यादाशङ्का 'भवेद् वा न वा' इति। अनुभवारूढं तु ज्ञानफलम् 'यत् साक्षादपरोक्षाद् ब्रह्म' इति श्रुतेः । 'तत्त्वमसि' इति च सिद्धवदुपदेशात् ॥ सू भा ३-३-३२, पा ४०७

(५) अपि चान्त्यमिदं प्रमाणम् आत्मैकत्वस्य प्रतिपादकम्, नातः परं किञ्चिदाकाङ्क्ष्यमस्ति ॥ सू भा २-१-१४, पा १९९

यदपि 'अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य ' इति भाष्यवाक्य-व्याख्यानावसरे भामत्युक्तम् –

(६) सर्वमेव हि वाक्य नेदतया वस्तुभेद बोधयितुमर्हति । न हीक्षुक्षीरगुडादीना मधुररसभेद शक्य आख्यातुम् । एवमन्यत्रापि सर्वत्र द्रष्टव्यम् । तेन प्रमाणान्तरसिद्धे लौकिक एवार्थे यदा गतिरीदृशी शब्दस्य, तदा कैव कथा प्रत्यगात्मन्यलौकिके ? वा भा १-१-४, पा १२५

इति, तद्भाष्याशयासस्पर्शीति मन्महे । न हीक्षुक्षीरादीना मधुररसभेद-वाचकशब्द कस्यचिज्झटिति न स्फुरतीत्येतावता शब्दाविषयत्व तद्भेदा-नाम् । शब्दप्रवृत्तिनिमित्तवन्त एव हि ते भेदा स्वभावत । प्रत्यगात्मा त्वलौकिक इति हेतोरेव केवलात् शब्दागम्य । न हि भगवतो वेदस्य सर्वज्ञकल्पस्य शब्ददारिद्र्यम्, येन प्रत्यगात्मा शब्दागम्य स इति स्वाशक्तिप्रकटनाय ब्रूयात् । तस्मात्, वस्तुवृत्तत एवाविषय प्रत्यगात्मा । सर्वविकल्पवर्जित । ईदृशोऽप्यात्मा स्वयसिद्ध इति ज्ञापयितु तस्मिन्नध्या-रोपितवेद्यवेदितृवेदनादिभेदम् वाच्यवक्तृवचनादिभेद च अपनयन्नेव स्वात्मान समर्पयतीति भाष्याशयोऽत्रावसेय ॥

## शास्त्रतर्कसबन्धः –

१८९ ब्रह्म प्रसिद्धम्, अप्रसिद्ध वा ? यदि प्रसिद्धम्, न जिज्ञासितव्यम्, अथाप्रसिद्धम्, नैव शक्य जिज्ञासितुम्' इत्याशङ्क्य भाष्ये लिखितम् – ' अस्ति तावद् ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम् । ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते ' इति ॥

तत्र भामतीव्याख्या –

(१) प्रागपि ब्रह्ममीमासाया अधीतवेदस्य निगमनिरुक्तव्याकरणादि परिशीलनविदितपदतदर्थसबन्धस्य 'सदेव सोम्येदमग्र आसीत्' इत्युपक्रमात्,

'तत्त्वमसि' इत्यन्तात् सदर्भात् नित्यत्वाद्युपेतब्रह्मस्वरूपावगमस्तावदापाततो विचाराद् विनाप्यस्ति ॥ वा भा पा ७९

[ अत्र वेदान्तवाक्यादापाततो ब्रह्मास्तित्वसिद्धौ विचारेण तत्स्वरूप निर्धारणार्थं मीमासाशास्त्रलक्षणतर्के प्रवृत्तिरित्युक्त भवति ॥ ]

'वेदान्तवाक्यमीमासा तदविरोधितर्कोपकरणा निःश्रेयस-प्रयोजना प्रस्तूयते' इति भाष्यवाक्यस्य भामतीव्याख्यानम् –

(२) वेदान्तमीमासा तावत् तर्क एव । तदविरोधिनश्च येऽन्येऽपि तर्का, अध्वरमीमासाया न्याये च वेदप्रत्यक्षप्रामाण्यपरिशोधनादिषूक्ता, ते उपकरण यस्या सा तथोक्ता ॥ वा भा पा ८३

(३) शब्दाविरोधिन्या तदुपजीविन्या च युक्त्या विवेचन मननम् । युक्तिश्च अर्थापत्ति, अनुमान वा ॥ वा भा पा ८९

(४) तर्को हि प्रमाणविषयविवेचकतया तदितिकर्तव्यताभूत, तदाश्रय, असति प्रमाणे अनुग्राह्यस्याश्रयस्याभावात् शुष्कतया नाद्रियते । यस्त्वागमप्रमाणाश्रयस्तद्विषयविवेचकस्तदविरोधी स मन्तव्य इति विधीयते ॥ वा भा पा ४४४

(५) श्रुत्यनुगृहीत इति । श्रुत्या श्रवणस्य पश्चात्, इतिकर्तव्यतात्वेन गृहीत । अनुभवाङ्गत्वेनेति । मतो हि भाव्यमानो भावनाया विषयतया अनुभूतो भवतीति मननम् अनुभवाङ्गम् ॥ वा भा पा ४४५

(६) केवलागमगम्येऽर्थे स्वतन्त्रतर्काविषये न साख्यादिवत् साधर्म्य-वैधर्म्यमात्रेण तर्क प्रवर्तनीय, येन प्रधानादिसिद्धिर्भवेद् । शुष्कतर्को हि स भवति, अप्रतिष्ठानात् ॥ वा भा पा ४४८

(७) वैदिक चेद् चेतनजगदुपादानविषय विज्ञान वेदोत्थकर्मेति-कर्तव्यताक वेदजनित व्यवस्थितम् । वेदानपेक्षेण तु तर्केण जगत्कारणभेदम् अवस्थापयता तार्किकाणामन्योन्य विप्रतिपत्तेस्तत्त्वनिर्धारणकारणाभावाच्च न ततस्तत्त्वव्यवस्था–इति न तत सम्यग्ज्ञानम् ॥ वा भा पा ४४९

अत्र मीमासारूपतर्कस्य, श्रुत्यनुगृहीततदविरुद्धतर्कयो, शुष्कतर्कस्य च विवेचन न स्पष्टतया कृतमित्यसन्मति । मीमासाया प्राधान्येन

वाक्यधर्मनिर्धारणे प्रवृत्ति, तस्या एव विषयविवेचने प्रकृते श्रुत्यनुगृहीततदनुकूलतर्कान्यतरोपक्षेपे प्रवृत्ति, श्रुत्यनुगृहीततर्कस्यानुभवाङ्गत्वात् सार्वत्रिकानुभवानुसारेणैव श्रुत्यर्थनैर्मल्याय प्रयतनम्, श्रुत्यविरुद्धतर्कस्य लोकसिद्धस्यापि श्रुत्यनुगृहीततर्कोपबृहणे विनियोग, केवलतर्कस्य तु तत्तद्वादाभ्युपगमानुसारेण साधर्म्यवैधर्म्ये अवष्टभ्य तत्तत्सिद्धान्ताशमाधने बाधने वा उपयोग – इति हि मीमासाश्रुत्यनुगृहीततदनुकूलतर्ककेवलतर्काणा विवेक आश्रीयते भाष्ये ॥

शास्त्रतात्पर्यम् –

१९१ समन्वयाधिकरणभाष्ये वर्णकद्वयव्याख्याने वाचस्पतिमिश्रेण प्रायशो मण्डनसरणिरेवानुसृता । 'अज्ञातसगतित्वेन शास्त्रत्वेनार्थवत्तया । मननादिप्रतीत्या च कार्यार्थाद् ब्रह्मनिश्चय ॥' (वा भा पा १०८) इति श्लोकेन प्रतिपत्तिविधिशेषत्वेनैव ब्रह्मण शास्त्रप्रमाणकत्वम् आतिष्ठमानाना कार्यार्थत्वमेव शास्त्रस्य प्राधान्येनेति वादिना मत सगृह्य–तन्मत विस्तरेणानूद्य सिद्धान्त प्रदर्शित ॥

(१) आत्यन्तिक त्वशरीरत्वम् अनतिशय स्वभावसिद्धतया नित्यम् अकार्यम् आत्मज्ञानस्य फलम् । तद्धि फलमिव फलम् । अविद्यापनयमात्रेणाविर्भावात् ॥ वा भा पा ११४

(२) ब्रह्मभूयस्य अविद्यापिधानापनयमात्रेणाविर्भावात्, अविद्यापनयस्य च वेदान्तार्थविज्ञानाद् अवगतिपर्यन्तादेव सभवात्, उपासनाया सस्कारहेतुभावस्य सस्कारस्य च साक्षात्कारोपजनने[1] मन साचिव्यस्य च मानान्तरसिद्धत्वात्, 'आत्मेत्येवोपासीत' इति न विधि । अपि तु विधिसरूपोऽयम् ॥ वा भा पा ११५

[अत्र सस्कारविषये यद्वक्तव्यम्, तदनुभवविचारावसरे वक्ष्याम ॥]

(३) तत्र तावदेवम् अकार्येऽर्थे न सगतिग्रह, यदि तत्पर प्रयोगो न लोके दृश्येत, तत्प्रत्ययो वा व्युत्पन्नस्य उन्नेतु न शक्येत । न तावत्

1 द्वितीयसस्करणपाठोऽयम् ॥

तत्परप्रयोगो न दृश्यते लोके कुतूहलभयादिनिवृत्त्यर्थानाम् अकार्यपराणां पदसदर्थानां प्रयोगस्य लोके बहुलमुपलब्धेः । तद् यथा 'पर्वतराजः सुमेरुः' इति, 'नैष भुजङ्गो रज्जुरियम्' इत्यादि । नापि भूतार्थबुद्धिर्व्युत्पन्नपुरुषवर्तिनी न शक्या समुन्नेतुम् । हर्षादेरुन्नयनहेतोः संभवात् ॥ तथा च प्रयोजनवत्तया भूतार्थाभिधानस्य प्रेक्षावत्प्रयोगोऽप्युपपन्नः । एवं च ब्रह्मस्वरूपज्ञानस्य परमपुरुषार्थहेतुभावात्, अनुपदिशतामपि पुरुषप्रवृत्तिनिवृत्ती वेदान्तानां पुरुषहितानुशासनात् शास्त्रत्वं सिद्धं भवति ॥

वा भा पा १३१

['अन्नाकार्ये' न सगतिग्रह – इति पूर्वपक्षो भाष्यानारूढोऽपि शक्यसंभावन इत्याचार्यमण्डनमनुसृत्य तत्परिहारोऽर्वाचीनवेदान्तिभिः कृतो जिज्ञासुबुद्धिवैशद्यार्थं भवतीति न दोषः ॥ ]

(४) यद्यपि गवादिवन्मानान्तरगोचरत्वमात्मनो नास्ति, तथापि प्रकाशात्मन एव सतः, तत्तदुपाधिपरिहाण्या शक्यं वाक्यार्थत्वेन निरूपणम्, हाटकस्येव कटककुण्डलादिपरिहाण्या । न हि प्रकाशः स्वसंवेदनो न भासते नापि तदवच्छेदकः कार्यकरणसंघातः । तेन 'स एष नेति नेत्यात्मा' इति तत्तदवच्छेदपरिहाण्या बृहत्वादापनाच्च स्वयंप्रकाशः शक्यो वाक्यात्, ब्रह्मेति चात्मेति च निरूपयितुम् इत्यर्थः ॥ वा भा पा १३३

[इदमपि मण्डनस्यैवानुकरणम् 'संहृताखिलभेदोऽतः सामान्यात्मा स वर्णितः । हेमेव परिहार्यादिभेदसंसूचितम् ॥' (ब्र सि 37) इति वर्ण्यते । भाष्ये तु ब्रह्मात्मादिपदवाच्यत्वं नेतिनेतीत्यादिवाक्यार्थत्वं वा ब्रह्मणो न तात्पर्येण विवक्षितम्, किं तर्हि भूतवस्तुप्रतिपादको वेदभागोऽप्यस्ति, तच्च ब्रह्मवस्तु सर्वस्यात्मत्वादेव स्वयंसिद्धम् अहेयमनुपादेयं चेत्येव तत्र शिष्यत इति स्फुटम् । अतः भामतीकारस्यापि 'स्वयंप्रकाशः' इति विशेषणमाददानस्यात्रैव परमतात्पर्यमिति नेतव्यं वाक्यम् ॥ ]

वेदान्तवाक्यानां किमित्यर्थवादता न स्वीकार्या ? – इत्यत्रेमानि भामतीवाक्यानि अनुसंधेयानि –

(५) यथा एकस्मिन् वाक्ये पदानां पदार्था द्वारतो वाक्यार्थश्च तात्पर्यतो विषयः, एवं वाक्यद्वयैकवाक्यतायामपि । तत्र यद् द्वारतः, तत् प्रमाणान्तरविरोधेऽन्यथा नीयते । यत्र तु तात्पर्यम्, तत्र मानान्तर-

विरोधे पौरुषेयम् अप्रमाणमेव भवति , वेदान्तास्तु पौर्वापर्यपर्यालोचनया निरस्तसमस्तभेदप्रपञ्चब्रह्मप्रतिपादनपरा अपौरुषेयतया स्वत सिद्धतात्त्विक प्रमाणभावास्सन्त , तात्त्विकप्रमाणभावात् प्रत्यक्षादीनि प्रच्याव्य साव्यवहारिके तस्मिन् व्यवस्थापयन्ति । न च 'आदित्यो वै यूप ' इति वाक्यम् आदित्यस्य यूपत्वप्रतिपादनपरम् अपि तु यूपस्तुतिपरम् । (वा पा ३४३)

तस्मात्, विधिवाक्यादर्थवादवाक्यम् अन्यदिति वाक्ययोरेव स्वस्व वाक्यार्थप्रत्ययावसितव्यापारयो पश्चात् कुतश्चिदपेक्षाया परस्परान्वय इति सिद्धम् ॥ वा भा पा ३४६

[अत्र तात्पर्यवता वेदान्ताना प्रत्यक्षापेक्षया प्रबलत्व द्वारभूतार्थवादाना मप्यसति बाधकेऽवान्तरतात्पर्येणार्थवत्त्व चोक्तम् । वस्तुतो प्रमाणाना परस्पर विरोध एव नास्तीति भाष्यवार्तिकपक्षस्तु भामत्या स्पष्टमुल्लिखितो न दृश्यते ॥]

(५) 'सदेव सोम्येदम्' इति ब्रह्मोपक्रमात् 'तत्त्वमसि' इति च जीवस्य ब्रह्मात्मना उपसहारात् तत्परतैव वाक्यस्य । एव वाक्यान्तराणामपि पौर्वापर्यालोचनया ब्रह्मपरत्वम् अवगन्तव्यम् ॥ वा भा पा १०३-१०४

## ार्यकारणप्रक्रिया –

१९२ कार्यकारणप्रक्रिया अत्र भाष्यवदेव, अध्यारोपापवाद-क्रियानुगुणैव रचिता –

(१) यथा रज्ज्वज्ञानसहितरज्जूपादाना धारा, रज्ज्वा सत्यामस्ति, रज्ज्वामेव च लीयते । एवम् अविद्यासहितब्रह्मोपादान जगत् ब्रह्मण्येवास्ति तत्रैव च लीयत इति सिद्धम् ॥ वा भा १-१-२, पा ९५

(२) पूर्वसिद्धस्याप्यनिर्वचनीयविकारात्मना परिणामोऽनिर्वचनीयत्वात् भेदेनाभिन्न इवेति सिद्धस्यापि साध्यत्वम् इत्यर्थ ॥

वा भा १-१-२६, पा ४२८

(३) इय चोपादानपरिणामादिभाषा न विकाराभिप्रायेण, अपि तु यथा सर्पस्योपादान रज्जु, एव ब्रह्म जगदुपादान द्रष्टव्यम् । न खलु नित्यस्य निष्कलस्य ब्रह्मण सर्वात्मनैकदेशेन वा परिणाम सभवति नित्यत्वात्, अनेकदेशत्वादित्युक्तम् । न च मृद शरावादयो भिद्यन्ते, न चाभिन्ना , न वा भिन्नाभिन्ना , किं तु अनिर्वचनीया एव । यथाह श्रुति –

'मृत्तिकेत्येव सत्यम्' इति । तस्मात् अद्वैतोपक्रमात् उपसंहाराच्च सर्व एव वेदान्ता ऐकान्तिकाद्वैतपरा सन्त, साक्षादेव क्वचिदद्वैतमाहु क्वचिद् द्वैतनिषेधेन क्वचिद् ब्रह्मोपादानत्वेन जगत । एतावतापि तावद् भेदो निषिद्धो भवति । न तूपादानत्वाभिधानमात्रेण विकारग्रह आस्थेय । न हि वाक्यैकदेशस्यार्थोऽस्तीति ॥ वा भा १-४-२७, पा ४२९

(४) यथा कार्यं स्वरूपेण सदसत्त्वाभ्या न निर्वचनीयम् । अपि तु कारणरूपेण शक्य सत्त्वेन निर्वक्तुमिति । एव च कारणसत्त्वैव कार्यस्य सत्ता न ततोऽन्येति कथ तदुत्पत्ते प्राक् सति कारणे भवत्यसत् ? स्वरूपेण तूत्पत्ते प्राक् उत्पन्नस्य ध्वस्तस्य वा सदसत्त्वाभ्यामनिर्वाच्यस्य न सतोऽसतो वा उत्पत्तिरिति निर्विषय सत्कार्यवादप्रतिषेध इत्यर्थ ॥

वा भा २-१-७, पा ४४६

[अत्र जगत प्रतीयमानरूपेणाऽनिर्वचनीयस्याभ्युपगमात्, तस्य चोत्पत्तिनिषेधात्, अनिर्वचनीयप्रातिभासिकरजताद्युत्पत्तिरस्मिन् प्रस्थाने नाङ्गीक्रियत इति भाति । निर्णेय त्वेतत् तत्त्वान्वेषकै ॥]

अत्र कार्यस्य कारणरूपेण सत्त्वम्, स्वतस्तु अनिर्वचनीयतेत्यत सत्कार्यवाद साधित । भाष्ये पर 'न तु शब्दादिमत् कार्यं कारणात्मना हीन प्रागुत्पत्तेरिदानीं वा अस्ति' (सू भा २-१-७) इति कारणात्मनैव सत्त्व सर्वास्ववस्थासु जगत -इत्येतावन्मात्रमुक्तम्, न तु कार्यस्य सदसत्त्वाभ्याम् अनिर्वचनीयत्वम् । यद्यप्यन्यत्र भाष्येऽपि -

(१) सर्वज्ञस्येश्वरस्यात्मभूते इव अविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्याम् अनिर्वचनीये ससारप्रपञ्चबीजभूते सर्वज्ञस्य ईश्वरस्य माया शक्ति-प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते ॥ सू भा २-१-१४, पा २०१

इत्युक्तम्, तथापि भामतीसमतानिर्वचनीयतावादाद् भाष्योक्तानिर्वचनीयतावादस्येषद्वैलक्षण्य विद्यते । भाष्ये हि तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वमुक्तम्, भामत्या तु मण्डनानुसारेण सदसद्भ्यामनिर्वचनीयत्वम् तथा ह्युपदेशसाहस्र्यां विवृत भाष्यकारसंमतमनिर्वाच्यत्वम् -

(२) तच्चाकाशाख्य भूतम् अनेन प्रकारेण परमात्मन सभूत प्रसन्नादिव सलिलान्मलमिव फेनम् । न सलिल न च सलिलादत्यन्तभिन्न फेनम् । सलिलव्यतिरेकेणादर्शनात् । सलिल तु स्वच्छम्, अन्यत् फेनान्मलरूपात् । एव परमात्मा नामरूपाभ्यामन्य फेनस्थानीयाभ्या शुद्ध प्रसन्नस्तद्विलक्षण ॥ उ सा गद्य, पा २४-२५

एतच्च तत्त्वान्यत्वाभ्यामनिर्वचनीयत्ववचन यथाप्रतीतनामरूपाद् वैलक्षण्य द्योतयितु परमात्मन, न तु प्रतीतस्यानिर्वचनीयत्व द्रढयितुम् । तदेतद् बृहदारण्यके स्पष्टमुक्तम्

(३) य कारण सर्वस्य जगत, यदात्मके नामरूपे सलिलादिव स्वच्छान्मलमिव फेनम् अव्याकृते व्याक्रियेते । यश्च ताभ्या नामरूपाभ्या विलक्षण । स्वतो नित्यशुद्धबुद्धमुक्तस्वभाव ॥

बृ भा १-४-७, पा ६५५

अत्र ह्यनुल्लिख्यैव नामरूपयोरनिर्वचनीयत्व परमात्मनस्तद्विलक्षणत्वमवधारितम् । अत एव बृहदारण्यकभाष्ये नामरूपयोरभाव एव परमात्मनि निर्धारित –

(४) नामरूपोपाध्यस्तित्वे 'एकमेवाद्वितीयम्', 'नेह नानास्ति किञ्चन' इति श्रुतयो विरुध्येरन् इति चेत् । न । सलिलफेनदृष्टान्तेन परिहृतत्वात्, मृदादिदृष्टान्तैश्च । यदा तु परमार्थदृष्ट्या परमार्थतत्त्वात् श्रुत्यनुसारिभिरन्यत्वेन निरूप्यमाणे नामरूपे मृदादिविकारवद् वस्त्वन्तरे तत्त्वतो न स्त, सलिलफेनघटादिविकारवदेव, तदा तदपेक्ष्य 'एकमेवाद्वितीयम्', 'नेह नानास्ति किञ्चन' इत्यादिपरमार्थदर्शनगोचरत्व प्रतिपद्यते । यदा तु स्वाभाविक्या अविद्यया ब्रह्मस्वरूप रज्जुशुक्तिकागगनस्वरूपवदेव स्वेन रूपेण वर्तमान केनचिदस्पृष्टस्वभावमपि सत्, नामरूपकृतकार्यकरणोपाधिभ्यो विवेकेन नावधार्यते, नामरूपोपाधिदृष्टिरेव च भवति स्वाभाविकी, तदा सर्वोऽय वस्त्वन्तरास्तित्वव्यवहार ॥ बृ भा ३-५-१, पा ८११

अत्र हि नामरूपयोरनिर्वाच्यत्व नोल्लिखितम्, तयोरात्मरूपत्वादेव अद्वैतश्रुत्यनुपरोध, स्वाभाविकदृष्ट्यैव तु तेषामस्तित्वव्यवहार, शुक्तिरजतादिभ्रान्तिदृष्ट्यैव च रजतादिशब्दव्यवहार इति स्फुटीकृतम् ॥

तस्मात् यद्यात्मरूपेणैव जगत सत्त्वान्न सत्कार्यवादनिषेध, सत्कार्यत्व च तस्य सतोऽव्यतिरेकेणैव प्रतीतेरितीष्यते, तर्हि न भाष्यप्रस्थानादन्यत्वमस्य। यावता तु सदसत्त्वाभ्यामनिर्वचनीयत्वादेव तस्य नोत्पत्तिरिति सत्कार्यवादनिषेध प्रत्याख्यायते तावता त्वशेन विलक्षणत्व मस्त्येव भाष्यप्रस्थानात्। अपि च किमिदमभिप्रेयते सदसद्भ्या विलक्षण जगदिति–इति वक्तव्यम्। अत्र हि सच्छब्देन यदि ब्रह्मैव विवक्ष्यते, तर्हि ब्रह्मैवेद सर्वमिति, असच्छब्दव्यपदेश्यमपि सर्वान्तर्भावितमेवेति नास्त्येव सदसद्विलक्षणत्व जगत। तत्त्वान्यत्वाभ्यामनिर्वचनीयत्व तु सभविष्यति। न हि प्रतीयमानरूपेण जगद् ब्रह्म, नापि तदन्यदेव यथा अश्वान्महिष, ब्रह्मानन्नुविद्धस्य तस्यानुपलम्भात् इति ॥

## अव्याकृतम् –

१९३ जगत प्रागवस्थापि अव्याकृतादिशब्दवाच्या अविद्याशक्तिशब्देन अस्मिन् प्रस्थाने तत्र तत्र व्यपदिष्टेत्यवोचाम अविद्यास्वरूप निरूपणप्रसङ्गेन (१८२, पा ३९८)। कार्यकारणप्रक्रियानिरूपणप्रसङ्गेन पुनरप्यत्र किञ्चिदुच्यते ॥

(१) यद्यपि महाप्रलयसमये नान्त करणादय समुदाचरद्वृत्तय सन्ति, तथापि स्वकारणे अनिर्वाच्यायामविद्याया लीना सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपकाविद्यावासनाभि सहावतिष्ठन्त एव ॥

वा भा पा ३३३

[अत्र अनिर्वाच्यायामविद्यायामेवान्त करणादीना शक्तिरूपेणावस्थान मुक्तम्। अतोऽव्याकृतमेवाविद्याशब्देन व्यपदिष्टमिति भाति ॥]

(२) अनिर्वचनीयानाद्यविद्याशक्तिमच्चेतनोपादान जगदागमिकमिति ब्रह्मविद ॥ वा भा १–१–५ पा १६२

[अत्राविद्याशक्ते साहाय्यमात्मन उक्तमुपादानत्वे ॥]

(३) तथा च सर्वं विकारजातं तदविद्याशक्तिपरिणामस्तस्य शरीरेन्द्रियस्थाने वर्तते ॥ वा भा १-२-१८, पा २५३

[अत्रान्तर्यामिणो जीवशरीरेन्द्रियनियमने शरीरेन्द्रियादिकं नास्तीति – शङ्काव्युदासार्थमिदमुक्तम् ॥ ]

(४) न वयं प्रधानवदविद्यां सर्वजीवेष्वेकामाचक्ष्महे, येनैवमुपालभ्येमहि, किं त्वियं प्रतिजीवं भिद्यते । अविद्यात्वमात्रेण चैकत्वोपचारः अव्यक्तमिति चाव्याकृतमिति च ॥ वा भा १-४-३, पा ३७७, ३७८

[ अत्र स्पष्टमेवाव्याकृतम् अविद्याशब्देन व्यपदिष्टम्, तस्य नानात्वमप्युक्तम् ॥ ]

(५) न ह्यचेतनं चेतनानधिष्ठितं कार्याय पर्याप्तम् इति स्वकार्यं कर्तुं परमेश्वरं निमित्ततया उपादानतया चाश्रयते । प्रपञ्चविभ्रमस्य हीश्वराधिष्ठानत्वम् अहिविभ्रमस्येव रज्ज्वधिष्ठानत्वम् । तेन यथाऽहिविभ्रमो रज्जूपादान एवं प्रपञ्चविभ्रम ईश्वरोपादानः ॥ वा भा १-४-७, पा ३७८

[अत्र स्पष्टमेव जगतोऽध्यस्तत्वं परमात्मनि, रज्ज्वामिवाहे –इत्युक्तम् । अत एवाविद्याशक्तेः परिणामो नाम न विकार इत्युक्तं भवति ॥ ]

(६) तस्माज्जीवाधिकरणाप्यविद्या निमित्ततया विषयतया चेश्वरमाश्रयते इतीश्वराश्रयेत्युच्यते, न त्वाधारतया । विद्यास्वभावे ब्रह्मणि तदनुपपत्तेः ॥ वा भा १-४-३, पा ३७८

['अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया' इत्यस्य भाष्यस्य व्याख्यानमिदम् । भाष्ये नामरूपात्मिका शक्तिरविद्याकल्पितापि परमेश्वरोपाधिरिव भवतीति कृत्वा 'परमेश्वराश्रया' इत्युक्तम् । इह तु अध्यासस्य, तच्छक्तेश्चाव्याकृतस्याभेदमेव विवक्षित्वा जीवाश्रयत्वमुच्यते – इति स्पष्टम् ॥ ]

(७) अपि च स्थित्युत्पत्तिप्रलयकालेषु त्रिष्वपि कार्यस्य कारणादभेदममिदधती श्रुतिरनतिशङ्कनीया सर्वैरेव वेदवादिभिः । तत्र स्थित्युत्पत्त्योर्यः परिहारः स प्रलयेऽपि समानः कार्यस्याविद्यासमारोपितत्वं नाम, तस्मादपीतिमात्रमनुयोज्यम् ॥ वा भा २-१-९, पा ४४७

[ अत्रापि कार्यस्याविद्यासमारोपितत्वं तिसृष्वप्यवस्थासु – इत्युक्त्या अविद्याशक्तेरप्यव्याकृतापराभिधाया अविद्यासमारोपितत्वमुक्तं भवति । एवं च 'मिथ्याज्ञानप्रतिबद्धैव विभागशक्तिरनुमास्यते' (सू भा २-१-९) इति

भाष्याभिप्राय एवेहादृतो भवति । तस्मादविद्याशक्तिरिति तावदेवोक्त भवति यावदुक्त भवति अविद्यावस्थायामनुमिता शक्तिरिति ॥]

(८) **अविद्याशक्तेर्नियतत्वादुत्पत्तिनियम इत्यर्थ ॥**

**वा भा पा ४४७**

[ 'अत्राविद्याशक्ति ' इत्यविद्याकल्पिता विभागशक्तिरेवोच्यत इति स्पष्टम् ॥ ]

(९) **मिथ्याज्ञानविभागशक्तिप्रतिनियमेन मुक्ताना पुनरुत्पत्तिप्रसङ्ग प्रत्युक्त । कारणाभावे कार्याभावस्य प्रतिनियमात् तत्त्वज्ञानेन च सशक्तिक मिथ्याज्ञानस्य समूलघात निहतत्वादिति ॥**

**वा भा २-१-९, पा ४४७, ४४८**

[ मिथ्याज्ञानतत्कल्पितशक्त्योरित्यर्थ ॥ ]

(१०) **अविद्याकल्पितेन तु नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मना तत्त्वान्यत्वाभ्यामनिर्वचनीयेन परिणामादिव्यवहारास्पदत्व ब्रह्म प्रतिपद्यते ॥ वा भा २-१-२६, पा ४७५**

[भाष्यवाक्यमेवेदमनूदितम् । ' ननु शब्देनापीति चोद्यमविद्याकल्पितत्वोद्घाटनाय ' इत्युत्तरवाक्ये अव्याकृतस्याविद्याकल्पितत्व स्पष्टतरमनुमतम् । तर्हि अविद्यैवाव्यक्तमव्याकृत चेत्युक्त कथमनेन सगमनीयम् ? ]

(११) **कारणभूतया लयलक्षणया अविद्यया प्राक्सर्गोपचितेन च विक्षेपसस्कारेण यत् प्रत्युपस्थापित नामरूप तदेव माया तदावेशेनास्य चोद्यस्यासकृत् प्रत्युक्तत्वात् । एतदुक्त भवति । नेय सृष्टिर्वस्तुसती येनाद्वैतिनो वस्तुसतो द्वितीयस्याभावाद् अनुयुज्येत । काल्पनिक्यां तु सृष्टौ, अस्ति काल्पनिक द्वितीय सहाय मायामयम् । यथाहु – 'सहायास्तादृशा एव यादृशी भवितव्यता ' इति । न चैव ब्रह्मोपादानत्वव्याघात । ब्रह्मण एव मायावशेनोपादानत्वात् तदधिष्ठानत्वात् जगद्विभ्रमस्य । रजतविभ्रमस्येव शुक्तिकाधिष्ठानस्य शुक्तिकोपादानत्वम् इति निरवद्यम् ॥**

**वा भा २-२-२, पा ४९४, ४९५**

['एकत्वात् प्रकर्त्रभावे प्रवर्तकत्वानुपपत्तिरिति चेत्...न । अविद्याप्रत्युपस्थापितनामरूपमायावेशवशेनासकृत्प्रत्युक्तत्वात् ' इति भाष्यस्य व्याख्यानम् । व्याकृतस्याव्याकृतस्य च नामरूपलक्षणस्याविद्याकल्पितत्वमूरीकृत्यापि किमिति प्राक्सर्गोपचितसस्कारादत्रानीयत इति न विद्म. ॥ ]

यथोदाहृताना भामतीवाक्यानामेकवाक्यताकरणेनेद स्पष्ट भवति यत्, अत्रापि भाष्ये इवाविद्याकल्पितमेव नामरूपव्याकृत जगत्, तच्छक्तिरूप चेति, अव्याकृतस्याविद्याशब्दव्यपदेश्यता तस्याविद्याकल्पितत्वादेव स्यादिति च । अविद्यानानात्वोक्तिस्तु अविद्याया एव द्रव्यगुणसत्त्यादिसर्वव्यवहारमूलत्वानालोचनकृतेत्युपेक्ष्या – इत्यवोचाम ॥

जीवत्वाध्यासः –

१९४ अथास्मिन् प्रस्थाने जीवब्रह्मविभागव्यवहारसिद्ध्यर्थं जीवत्वाध्यास एव तावत् परीक्ष्यते –

(१) येऽप्यहङ्कारास्पदम् आत्मानम् आस्थिषत तैरपि अस्य न तात्त्विकत्वमभ्युपेतव्यम्, 'अहमिहैवास्मि सदने जानान' इति सर्वव्यापिन प्रादेशिकत्वेन ग्रहात् । उच्चतरगिरिशिखरवर्तिषु महातरुषु भूमिष्ठस्य दूर्वा प्रवालनिर्भासप्रत्ययवत् । न च – इद देहस्य प्रादेशिकत्वमनुभूयते न त्वात्मन – इति सांप्रतम्, न हि तदा एव भवति 'अहम्' इति । गौणत्वे वा न 'जानान' इति ॥ वा भा पा ११

(२) न त्वहङ्कारस्य मुख्योऽर्थो निर्लुठितगर्भतया देहादिभ्यो भिन्नोऽनुभूयते । येन परशब्द शरीरादौ गौणो भवेत् । न च अत्यन्तनिरूढतया गौणेऽपि न गौणत्वाभिमान सार्षपादिषु तैलशब्दवत् इति वेदितव्यम् । तत्रापि स्नेहात् तिलभवाद् भेदे सिद्ध एव सार्षपादीनां तैलशब्दवाच्यत्वाभिमान, न त्वर्थयोस्तैलसार्षपयोरभेदाध्यवसाय । तत् सिद्ध गौणत्वमुभयदर्शिनो गौणमुख्यविवेकविज्ञानेन व्याप्तम् । तदिह व्यापक विवेकविज्ञान निवर्तमान गौणतामपि निवर्तयतीति ॥ वा भा पा १३

(३) न च बालस्थविरशरीरभेदेऽपि 'सोऽहम्' इत्येकस्यात्मन प्रतिसंधानात् देहादिभ्यो भेदेनास्त्यात्मानुभव इति वाच्यम् । परीक्षकाणा खल्वियं कथा, न लौकिकानाम् ॥ वा भा पा १३–१४

[अत्र 'सोऽहम्' इत्यनुसधानमस्ति, परं तदेतदनुसधानम् आत्मविषयकम् इत्यत्र मानाभावाद् भ्रान्तिरेवेयमिति किं न स्यात्–इति न विवेचितम् 'पश्वादिभिश्चाविशेषात्' इति भाष्यवाक्यमुदाहरतापि ॥ ]

(४) न च अहङ्कारप्रामाण्याय देहादिवदात्मापि प्रादेशिक इति युक्तम् । तदा खल्वयम् अणुपरिमाणो वा स्यात्, देहपरिमाणो वा । अणुपरिमाणत्वे 'स्थूलोऽहम् दीर्घ' – इति च न स्यात् । देहपरिमाणत्वे तु सावयवतया देहवदनित्यत्वप्रसङ्ग ॥ वा भा पा १४

[अत्र तदप्यस्तु इति वदतश्चार्वाकस्य मतमपि विचारयितव्यतया प्राप्नोति । न हि तत्र केवलश्रुतिप्रामाण्योदाहरणेन पूर्वपक्षनिवारण कर्तुं शक्यमिति ॥ ]

(५) एव च देहेन्द्रियादिप्रपञ्चोऽप्यनिर्वाच्य । अपूर्वोऽपि पूर्व मिथ्याप्रत्ययोपदर्शित इव परत्र चिदात्मन्यध्यस्यत इत्युपपन्नम् । अध्यास लक्षणयोगात् । चिदात्मा तु श्रुतिस्मृतीतिहासपुराणगोचर तन्मूल तदविरुद्धन्यायनिर्णीतशुद्धबुद्धमुक्तस्वभाव सत्त्वेनैव निर्वाच्य । अबाधिता स्वयप्रकाशतैवास्य सत्ता सा च स्वरूपमेव चिदात्मन, न तु तदतिरिक्त सत्तासामान्यसमवाय अर्थक्रियाकारिता वा–इति सर्वमवदातम् ॥

वा भा पा २४-२५

[ अत्रात्मनिरूपणप्रकाशनमात्रेणैवोपक्रमः । श्रुत्यादिप्रसिद्धत्वस्य भाष्येऽनुल्लेखनात् तत्परामर्शोऽत्र नापेक्षित इत्यभाणि ॥ ]

(६) कर्ता भोक्ता चिदात्मा अहप्रत्यये प्रत्यवभासते । न चोदासीनस्य तस्य क्रियाशक्तिर्भोगशक्तिर्वा सभवति । यस्य च बुद्ध्यादे कारणसघातस्य क्रियाभोगशक्ती न तस्य चैतन्यम् । तस्मात्, चिदात्मैव कार्यकरणसघातेन ग्रथितो लब्धक्रियाभोगशक्ति, स्वयप्रकाशोऽपि बुद्ध्यादिविषयविच्छुरणात् कथञ्चित् 'अस्मत्प्रत्ययविषय' 'अहङ्कारास्पदम्', 'जीव'-इति च 'जन्तु' इति च, 'क्षेत्रज्ञ' इति चाख्यायते ॥ वा भा पा २९

[ अत्र पञ्चपादिका(पा २९)प्रकारेणैव 'कथञ्चित्' इत्युपचारेणास्मत्प्रत्ययविषयत्वम् उपपादितम् । तत्तु 'न तावदेकान्तेनाविषय, अस्मत्प्रत्ययविषयत्वात्' इति भाष्योक्तेर्दौर्बल्यापादकम् । अविषये विषयस्याध्यास कथमिति चोदिते खल्विद भाष्यसमाधानम् । युष्मत्प्रत्ययविषयत्वमेव केवल नास्त्यात्मन, न तु सर्वथा अविषयत्वम्, यस्मात् अस्मत्प्रत्ययविषयत्वमप्यस्तीत्यत्र हि भाष्य वाक्यस्वारस्यम् । अस्मत्प्रत्ययविषयस्य विषयित्व कथमिति तु पूर्वपक्षिणा नाक्षिप्त नापि सिद्धान्तिना परिह्रियते अत्रेत्यन्यत ॥ ]

ब्रह्मजीवसबन्धः –

१९५ **वाक्यान्वयाधिकरणे** जीवपरमात्मसबन्ध आश्मरथ्याद्याचार्यमतभेदेन त्रेधा वर्णित । तत्र आश्मरथ्यपक्ष परजीवयो प्रकृतिविकारभावमाश्रित्य प्रथित, औडुलोमिपक्षस्तु ससारदशायामत्यन्तभिन्नस्यापि जीवस्य मुक्त्यवस्थायामभेद इति मतमाश्रित्य । तृतीयपक्षस्तु 'अवस्थितेरिति काशकृत्स्न' (वे सू १-४-२२) इति सूत्रेण निबद्ध । सूत्र तु 'अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते' इति भाष्ये व्याख्यातम् । तदिद भास्करेण दूषितमनूद्य भामत्या समाहितम् । तत्र काशकृत्स्नमत सिद्धान्ते तावदित्थ प्रदर्शितम् –

**(१) न जीव आत्मनोऽन्य, नापि तद्विकार, किं तु आत्मैवाविद्योपधानकल्पितावच्छेद, आकाश इव घटमणिकादिकल्पितावच्छेदो घटाकाशो मणिकाकाशो न तु परमाकाशादन्यस्तद्विकारो वा। ततश्च जीवात्मनोपक्रम परमात्मनैवोपक्रम, तस्य ततोऽभेदात् ॥ वा भा पा ४१६**

**(२) आत्यन्तिके हि जीवपरमात्मनोरभेदे तात्त्विकेऽनाद्यविद्योपाधिकल्पितो भेद 'तत् त्वमसि' इति जीवात्मनोर्ब्रह्मभावतत्त्वोपदेशश्रवणमनननिदिध्यासनप्रकर्षपर्यन्तजन्मना साक्षात्कारेण विद्यया शक्य समूलकाष कषितुम्, रज्ज्वाम् अहिविभ्रम इव रज्जुतत्त्वसाक्षात्कारेण राजपुत्रस्येव च म्लेच्छकुले वर्धमानस्यात्मनि समारोपितो म्लेच्छभावो 'राजपुत्रोऽसि' इत्याप्तोपदेशेन । न तु मृद्विकार शरावादि शतशोऽपि 'मृत्' 'मृत्' इति चिन्त्यमानस्तज्जन्मना मृद्भावसाक्षात्कारेण शक्यो निवर्तयितुम्। तत्कस्य हेतो ? तस्यापि मृदो भिन्नाभिन्नस्य तात्त्विकत्वात् । वस्तुतस्तु ज्ञानेनोच्छेत्तुमशक्यत्वात् ॥ वा भा पा ४१७**

[ साक्षात्कारवादपरीक्षा अग्रे स्वावसरे भविता । मृद्विकारदृष्टान्तस्तु आश्मरथ्यमतेन कार्यस्य कारणाद्भेदाभेदमङ्गीकृत्य इति भाति । श्रुत्यनुसारेण हि शरावादिसस्थान चक्षुषा निरूप्यमाण मृद्व्यतिरेकेणानुपलब्धेरसदेव । 'मृत्तिकेत्येव सत्यम्' इति श्रुतेरिति शक्यत एव तत्सत्यत्वबुद्धिर्निवर्तयितुमिति ॥ ]

(३) अपि च जीवस्यात्मविकारत्वे तस्य ज्ञानध्यानादिसाधनानुष्ठानात् स्वप्रकृतावप्यये सति नामृतत्वस्याशास्तीति अपुरुषार्थत्वम्, अमृतत्वप्राप्ति श्रुतिविरोधश्च। काशकृत्स्नमते त्वेतदुभय नास्ति ॥ वा भा पा ४१७

भास्कराक्षेपस्येद समाधानम् –

(४) द्वैतदर्शननिन्दया चैकान्तिकाद्वैतप्रतिपादनपरा पौर्वापर्या लोचनया सर्वे वेदान्ता प्रतीयन्ते। तत्र यथा बिम्बादवदातात् तात्त्विके प्रतिबिम्बानामभेदेऽपि नीलमणिकृपाणकाचाद्युपधानभेदात् काल्पनिको जीवाना (प्रतिबिम्बाना?) भेदो बुद्धिव्यपदेशभेदौ वर्तयति 'इद बिम्बमवदातम्, इमानि च प्रतिबिम्बानि नीलोत्पलपलाशश्यामलानि वृत्त दीर्घादिभेदभाञ्जि बहूनि' इति, एव परमात्मन शुद्धस्वभावात् जीवानाम् अभेदे ऐकान्तिकेऽपि अनिर्वचनीयानाद्यविद्योपधानभेदात् काल्पनिको जीवाना भेदो बुद्धिव्यपदेशभेदौ 'अय च परमात्मा शुद्धविज्ञानानन्द स्वभाव, 'इमे च जीवा अविद्याशोकदु खाद्युपद्रवभाज' इति वर्तयति। अविद्योपधान च यद्यपि विद्यास्वभावे परमात्मनि न साक्षादस्ति, तथापि तत्प्रतिबिम्बकल्पजीवद्वारेण परस्मिन् उच्यते। न चैवम् अन्योन्याश्रय, जीवविभागाश्रयाविद्या, अविद्याश्रयश्च जीवविभाग इति। बीजाङ्कुरवदनादित्वात् ॥ वा भा पा ४२०-४२१

[अत्र मण्डनप्रस्थानाश्रयण मणिकृपाणादिनिदर्शने, (ब्र सि 7) बीजाङ्कुरदृष्टान्तेन अनादित्वाश्रयणे (ब्र सि 10) चेति स्पष्टम् ॥]

(५) न च ब्रह्मस्वभावस्य जीवात्मन कूटस्थनित्यस्य स्वत इच्छा द्वेषानुषङ्गसभव इति बुद्धिगुणाना तेषा तदभेदाध्यासेन तद्धर्मत्वाध्यास। उदशरावाध्यस्तस्येव चन्द्रमसो बिम्बस्य तोयकम्पे कम्पवत्त्वाध्यास ॥

वा भा पा ६१०, ६११

(६) अद्वैते भाविके स्थिते जीवभावस्तस्य ब्रह्मणोऽनाद्यनिर्वचनीया विद्योपधानभेदात् एकस्येव बिम्बस्य दर्पणाद्युपाधिभेदात् प्रतिबिम्बभेदा। एव चानुज्ञापरिहारौ लौकिकवैदिकौ सुखदु खमुक्तिससारव्यवस्था चोपपद्येत। न च मोक्षस्यानर्थबहुलता। यत प्रतिबिम्बानामिव श्यामतावदातत्वादि जीवानामेव नानावेदनाभिसबन्ध, ब्रह्मणस्तु बिम्बस्येव न तदभिसबन्ध।

यथा च दर्पणापनये तत्प्रतिबिम्ब बिम्बभावेऽवतिष्ठते, न कृपाणे प्रति बिम्बितमपि । एवम् अविद्योपधानविगमे जीवे ब्रह्मभाव इति सिद्धम् ॥
वा भा पा ६२२, ६२३

[एव व्यवस्थितमत्र विज्ञानान्त त्व स्वीकृत स्यादत्र प्रस्थाने ॥ ]

(७) [अ] सत्यमय परमात्मा सर्वज्ञत्वाद् यथा जीवान् वस्तुत आत्मनोऽभिन्नान् पश्यति, पश्यत्येव न भावत एषा सुखदु खादिवेदना सङ्गोऽस्ति, अविद्यावशात्तु एषा तद्वदभिमान इति । तथा च तेषा सुख दु खादिवेदनायामपि अहमुदासीन इति न तेषा बन्धनागारनिवेशोऽप्यस्ति क्षति काचिन्ममेति ॥ वा भा पा ४७२

[आ] किं नाम ततोऽद्वितीयादसहायादुपजायते ? न हि तस्य शुद्धबुद्धमुक्तस्वभावस्य वस्तुसत् कार्यमस्ति (इति परमार्थदृष्ट्या) । यदि कुलालादिवत् अत्यन्तव्यतिरिक्तसहकारिकारणाभावात् अनुपादानत्व साध्यते, तत्र क्षीरादिभिर्व्यभिचार । तेऽपि हि बाह्यचेतनादिकारणानपेक्षा एव कालपरिवास(?)वशेन स्वत एव परिणामान्तरमागादयन्ति । अत्रा(अथा?) न्तरकारणानपेक्षत्व हेतु क्रियते तदसिद्धम् । अनिर्वाच्यनामरूपबीज सहायत्वात् । तथा च श्रुति 'माया तु प्रकृति विद्यान्मायिन तु महेश्वरम्' इति । कार्यक्रमेण तत्परिपाकोऽपि क्रमवान् उन्नेय । एकस्मादपि च विचित्रशक्ते कारणात् अनेककार्योत्पादो दृश्यते । यथा एकस्माद् वह्नेर्दाह पाकौ एकस्माद् वा कर्मण सयोगविभागसस्कारा (इति व्यवहारदृष्ट्या) ॥
वा भा पा ४७४

[इ] नेय पारमार्थिकी सृष्टिर्येनानुयुज्येत प्रयोजनम्, अपि तु अनाद्यविद्यानिबन्धना । अविद्या च स्वभावत एव कार्यो मुखी न प्रयोजन मपेक्षते । न हि द्विचन्द्रालातचक्रगन्धर्वनगरादिविभ्रमा समुद्दिष्टप्रयोजना भवन्ति । न च तत्कार्या विस्मयभयकम्पादय स्वोत्पत्तौ प्रयोजनमपे क्षन्ते । सा च चैतन्यविच्छुरिता जगदुत्पादहेतुरिति चेतनो जगद्योनिरा ख्यायते ॥ वा भा पा ४८२

[क्वचिदविद्यैव जगदुपादानमिति क्वचिच्च तद्द्वारा ब्रह्मैव तदुपादान रज्जुरिव सर्पादेरिति च द्वेधा भामतीप्रवृत्ति ॥ ]

[ई] अभ्युपेत्य च सृष्टेस्तात्त्विकत्वमिदमुक्तम् । अनिर्वाच्या तु सृष्टिरिति न प्रसर्तव्यमत्रापि । तथा च मायाकारस्येवाङ्गसाकल्यवैकल्य

> भेदेन विचित्रान् प्राणिनो दर्शयतो न वैषम्यदोषः । संहरतो वा न नैर्घृण्यम् । एवमस्यापि भगवतो विविधविचित्रप्रपञ्चमनिर्वाच्यं विश्वं दर्शयतः संहरतश्च स्वभावाद् वा लीलया वा न कश्चिद्दोषः ॥
>
> वा १-१ पा ४८३

अत्रोदाहृतैर्वाक्यैः, ब्रह्मजगतोः सबन्धविषये, ब्रह्मजीवसबन्धविषये च वाचस्पतिमिश्रप्रस्थानं यथा मण्डनमिश्रप्रस्थानप्रभावितं तत्पृष्ठगाम्येव प्रायशः, तथा आविष्कृतं भवति । अनिर्वाच्याविद्यावादलक्षणैकमूलिका प्रयोगो यथा [illegible] भिषक्कर्मेति च ॥

## भेदाभेदवादनिरासः –

१९६ 'परिणामिनित्यता न पारमार्थिकी' इति प्रतिज्ञाय तत्प्रसङ्गेन भेदाभेदवादोऽपि भास्करसमतोऽत्र निरस्तः –

> (१) तथा हि तत् सर्वात्मना परिणमेत् एकदेशेन वा ? सर्वात्मना परिणामे कथं न तत्त्वव्याहतिः ? एकदेशपरिणामे वा स एकदेशस्ततो भिन्नो वा अभिन्नो वा ? भिन्नश्चेत् कथं तस्य परिणामः ? न ह्यन्यस्मिन् परिणममानेऽन्यः परिणमते अतिप्रसङ्गात् । अभेदे वा कथं न सर्वात्मना परिणामः ? भिन्नाभिन्नं तदिति चेत् । अत्रोच्यते – कः पुनरयं भेदो नाम, यः सहाभेदेनैकत्र भवेत् ? परस्पराभाव इति चेत् । किमयं कार्यकारणयोः कटकहाटकयोरस्ति न वा ? न चेत्, एकत्वमेवास्ति, न च भेदः । अस्ति चेत् भेद एव नाभेदः । न च भावाभावयोरविरोधः । सहावस्थानासंभवात् । संभवे वा कटकवर्धमानकयोरपि तत्त्वेनाभेदप्रसङ्गः । भेदस्याभेदाविरोधात् । अपि च कटकस्य हाटकादभेदे यथा हाटकात्मना कटकमुकुटकुण्डलादयो न भिद्यन्ते एवं कटकात्मनापि न भिद्येरन्, कटकस्य हाटकादभेदात् । तथा च हाटकमेव वस्तुसन् न कटकादयः, भेदस्याप्रतिभासनात् । अथ हाटकत्वेनैवाभेदो न कटकत्वेन । तेन तु भेद एव कुण्डलादेः । यदि हाटकादभिन्नं कटकं, कथमयं कुण्डलादिषु नानुवर्तते ? नानुवर्तते चेत्, कथं हाटकादभिन्नं कटकं ? ये हि यस्मिन् अनुवर्तमाने व्यावर्तन्ते ते ततो भिन्ना एव । यथा सूत्रात् कुसुमभेदाः । नानुवर्तन्ते चानुवर्तमानेऽपि हाटकत्वे कुण्डलादयः । तस्मात् तेऽपि हाटकाद् भिन्ना

एवेति । सत्तानुवृत्त्या च सर्वेतरत्वनुगमे 'इदमिह नेदम्' 'इदमन्मा भेदन्', 'इदमिदानीं नेदम्' 'इत्नेव नेदम्' – इति विभागो न स्यात् । कस्यचित् क्वचित् कदाचित् कथञ्चिद् विवेकहेतोरभावात । अपि च दूरात् कनकम् इत्यवगते न तस्य कुण्डलादयो विशेषा जिज्ञास्येरन् । कनकादभेदात्तेषाम् तस्य च ज्ञातत्वात् । अथ भेदोऽप्यस्ति कनकात् कुण्डलादीनामिति कनकावगमेऽप्यज्ञातास्ते । नन्वभेदोऽप्यस्तीति किं न ज्ञाता ? प्रत्युत ज्ञानमेव तेषा युक्तम् । कारणाभावे हि कार्याभाव औत्सर्गिक, स च कारणसत्तया अपोद्यते । अस्ति चाभेदे कारणसत्ता – इति कनके ज्ञाते ज्ञाता एव कुण्डलादय इति तज्जिज्ञासाज्ञानानि चानर्थकानि स्यु । तेन यस्मिन् गृह्यमाणे यन्न गृह्यते तत्ततो भिद्यते । यथा करभे गृह्यमाणेऽगृह्यमाणो रासभ करभात् । गृह्यमाणे च दृश्तो हेम्नि न गृह्यन्ते तस्य भेदा कुण्डलादय । तस्मात् ते हेम्नो भिद्यन्ते । कथ तर्हि हेम कुण्डलम् इति सामानाधिकरण्यम् इति चेत् न ह्याधाराधेयभावे समानाश्रयत्वे वा सामानाधिकरण्यमित्युक्तम् । अथानुवृत्तिव्यावृत्तिव्यवस्था च हेम्नि ज्ञाते कुण्डलादिजिज्ञासा च कथम् ? न खल्वभेद ऐकान्तिकेऽनैकान्तिके चैत दुभयम् उपपद्यते इत्युक्तम् । तस्माद् भेदाभेदयोरन्यतरस्मिन्नवहेयेऽभेदोपादानैव भेदकल्पना, न भेदोपादानाऽभेदकल्पनेति युक्तम् । भिद्यमानतन्त्रत्वाद् भेदस्य भिद्यमानाना प्रत्येकमेकत्वात् । एकाभावे चानाश्रयस्य भेदस्यायोगात् एकस्य च भेदानधीनत्वात् 'नायमयम्' इति च भेदग्रहस्य प्रतियोगिग्रहसापेक्षत्वात्, एकत्वग्रहस्य चान्यानपेक्षत्वात्, अभेदोपादानैवानिर्वचनीयभेदकल्पनेति साम्प्रतम् । तथा च श्रुति – 'मृत्तिकेत्येव सत्यम्' इति ॥ वा भा पा ११७ ११९

[अत्र शक्तिविक्षेपलक्षण परिणामो भास्करसमत (भा सू पा ८७) किमिति न परीक्षित इति न ज्ञायते ॥]

(२) **यद्यपि गोत्वस्य सामान्यस्य विशेषा अनिर्वाच्या न परमार्थसन्त, तथा च क्वास्य प्रत्येकपरिसमाप्तिरिति, तथापि, अभ्युपेत्येदमुदितमिति मन्तव्यम्** ॥ वा भा पा ४६९

['गोत्ववत् प्रत्येक परिसमाप्तेर्न दोष इति चेन (सू भा २-१-१८) इत्यवयवावयविसबन्धपरीक्षावसरे इदमुक्तम् ॥]

(३) **कारणमेवं विशेषवदवस्थान्तरमापद्यमान कार्यम्, तच्च सामान्यात्मकम् । तथा हि मृद् वा सुवर्णं वा सर्वेषु घटरुचकादिष्वनुगत**

सामान्यम् अनुभूयते, न चैते घटरुचकादयो मृत्सुवर्णाभ्यां व्यतिरिच्यन्त इत्युक्तम् । अग्रे च वक्ष्यामः । तस्मात् सामान्यस्य परमार्थसतोऽनिर्वाच्य विशेषावस्थान्तराधिष्ठाना भुजङ्गादय इव रज्ज्वाद्युपादाना उपजनापायधर्माण इति साम्प्रतम् ॥ वा भा पा २१५

(४) वस्तुतः कार्यतत्त्वं न कारणाद् भिद्यते कारणस्वरूपमेव हि तत् । अनिर्वाच्यं तु कार्यरूपं भिन्नमिवाभिन्नमिव चावभासते । वस्तुतः परमार्थतोऽन्यत्वं न विशेषदर्शनमात्राद् भवति । सांव्यावहारिके तु कथञ्चित् तत्त्वान्यत्वे भवत एवेत्यर्थः । वा भा पा ४७०

अत्रापि वाचस्पतिमिश्रस्य स्वाभिप्रायः स्पष्टः नास्य भेदाभेदनिरासे इति ब्रह्मसिद्धितर्कवादे कृतपरिश्रमाणां स्फुटम् । ब्रह्मसिद्धि–वार्तिक–भामतीतुलनाद् भेदाभेदवादनिरासयुक्तिविकासप्रकारो पाठकानां हृदय मागच्छेत् । कार्यस्य विशेषाणामंशस्य चानिर्वचनीयत्वस्वीकारेण भेदाभेद निरासप्रकारस्त्वसाधारणो भामत्याः ॥

## पञ्चकोशविवेकः –

१९७ आनन्दमयाधिकरणे वृत्तिकारमतेनाधिकरणरचनावर्णनप्रस्तावे 'यथा परमेश्वराद् भिन्नो जीवात्मा द्रष्टा न भवति । एवं जीवात्मनोऽपि द्रष्टुर्न भिन्नः परमेश्वर इति जीवस्यानिर्वाच्यत्वे परमेश्वरोऽप्यनिर्वाच्यः स्यात् । तथा च न वस्तुसन्' इति पूर्वपक्षमुत्थाप्योक्तम् –

(१) रजतं हि समारोपितं न शुक्तितो भिद्यते । न हि तद्भेदेनाभेदेन वा शक्यं निर्वक्तुम् । शुक्तिस्तु परमार्थसती निर्वचनीया अनिर्वचनीयाद् रजताद् भिद्यत एव ॥ वा भा पा १८४

इति । अत्र यद्यपि वृत्तिकारा इमे अद्वैतवादिनः, निर्विशेषब्रह्मस्वीकर्तारश्च इति गम्यते 'तस्मादणुमात्रमपि विशेषमनाश्रित्य न स्वत एव प्रियशिरस्त्वादि ब्रह्मण उपपद्यते । न चेह सविशेषं ब्रह्म प्रतिपिपादयिषितम्, वाङ्मनसगोचरातिक्रमश्रुतेः' । तस्मादन्नमयादिष्विवानन्दमयेऽपि विकारार्थ

एव मयड् विज्ञेयो न प्राचुर्यार्थे ॥' (सू भा १-१-२०, पा ४३) इति भाष्यस्वारस्यात् । न हि पूर्वपक्षिणो निर्विशेषब्रह्मानङ्गीकारपक्षे तस्यैऽथमनिष्टापादनमात्रस भवदिति । तथापि तु किममी वृत्तिकारा शुक्तिरजतादीना भामतीसमतप्रक्रियानुरोधेनानिर्वचनीयताम् आतिष्ठन्ते स -ईत्यत्र न नोऽस्ति विनिगमना । किञ्च, वृत्तिकारमतात् सिद्धान्तपक्षस्य ज्यायस्त्वप्रदिदर्शयिषया भामत्याम् एप श्लोक सगृहीत -

(२) प्रायपाठपरित्यागो मुख्यत्रितयलङ्घनम् ।
पूर्वस्मिन्नुत्तरे पक्षे प्रायपाठस्य बाधनम् ॥

इति । विवृतश्च श्लोकाभिप्राय इत्थम् -

(३) पुच्छपद हि वालधौ मुख्य सत्, आनन्दमयावयवे गौणमेवेति मुख्यशब्दार्थलङ्घनम् अवयवपरतायाम् अधिकरणपरतायां च तुल्यम् । अवयवप्रायलेखबाधश्च विकारप्रायलेखबाधेन तुल्य । ब्रह्मपदम्, आनन्दमयपदम्, आनन्दपदमिति त्रितयलङ्घन त्वधिकम् । तस्मात् मुख्यत्रितय लङ्घनादसाधीयान् पूर्व पक्ष, मुख्यत्रयानुगुण्येन तूत्तर एव पक्षो युक्त ॥
वा भा पा १८७

इति । पर तु 'स्वप्रधानमिह ब्रह्म पुच्छ ज्ञेयत्वेन' (विवक्षितम्) इत्युप संहरद्भिरपि पञ्चकोशविवेकेन कथङ्कार पुच्छब्रह्मज्ञान समुदेतीति नेह प्रतिपादितम् । वृत्तिकाराणाम् आनन्दमय ब्रह्मोपास्यत्वेनाभिमतमित्यपि कथ निश्चीयते, येन 'तस्मादानन्दमयविकारावयवो ब्रह्मेति तदवयवयोग्या-नन्दमयो विकार इह नोपास्यत्वेन विवक्षित' (वा भा पा १९१) इति निगम्यते ? - इत्यपि न विवेचितम् ॥

वय तु पश्याम - **वृत्तिकारा** इमे निर्विशेषवादिन एव। यथोक्त रीत्या 'प्रियशिरस्त्वादिधर्मोपदेशात्, सविशेषमेव ब्रह्मोपदिष्ट स्यात् भवत्पक्षे' - इत्यनिष्टापत्तिदोषप्रदर्शनात् भाष्यकारै । न चेमे ब्रह्मे-होपास्यत्वेन निर्दिष्टमिति स्वीकुर्वन्ति । कथमिद गम्यते ? अन्नमये

आत्मत्वबुद्धि लोकसिद्धमनूद्य प्राणमयादीनप्यात्मत्वेन ग्राहयति अरुन्धती निदर्शनन्यायेन मुख्यमात्मानमुपदिदिक्षु शास्त्रम् – इति युक्त्यानयनदर्शनात्, प्रियादीना शिरस्त्वादिकल्पनमप्यतीतानन्तरोपाधिजनितत्वोक्त्या आभासीकृत्य निरवयवस्यैव ब्रह्मण प्रतिष्ठापनात् । 'शारीरत्वमपि' न शरीरे भव इत्यभिप्रेत्य, किं तर्हि अन्नमयादिशरीरपरम्परया प्रदर्श्यमानत्वादित्यशरीरत्वस्यापि मुख्यात्मन उपपादनात् । 'आनन्दमय' इति मयट्प्रत्ययस्यापि प्रचुरानन्दत्वेनानन्दमीमासाश्रुतिमालम्ब्य विकारार्थकत्वप्रत्याख्यानात्, आनन्दहेतुत्वादेव प्रचुरानन्दत्वमुपपद्यत इति स्वोक्तयुक्तिदृढीकरणाच्च । सर्वान्तरत्वनिर्देशेनैव मन्त्रवर्णे प्रकृतस्यैव सत्यज्ञानानन्तविशेषणस्य ब्राह्मणेऽपि प्रत्यभिज्ञानम् इति गम्यते – इत्युपक्रमादि लिङ्गप्रदर्शनाच्च । तस्मात्, यथोपदर्शितेभ्यो हेतुभ्य इह निर्विशेष परब्रह्मैवानन्दमयशब्देन ज्ञेयत्वेन निर्दिष्टमिति वृत्तिकाराशय । यद्यप्यद्वैतमेवेद ब्रह्म परमार्थत, तथाप्यविद्याकल्पितात्, शारीरात् कर्तुर्भोक्तुर्विज्ञानात्माख्यादन्य इति कृत्वा 'नेतरोऽनुपपत्ते', 'भेदव्यपदेशाच्च' इति सूत्रितमिति ते अवयन्ति ॥

तदेव ज्ञेय ब्रह्मैव निर्विशेषमविद्याकल्पितात्मभ्योऽन्नमयादिभ्यो विलक्षणम् आनन्दमयशब्देनात्र ज्ञेयत्वेनोपदिष्टमिति वृत्तिकारा कल्पयन्ति। न त्वेव क्वचिदप्युपास्य ब्रह्मात्र निर्दिष्टमिति तेषामभिप्रायो गम्यते, भाष्यकारकृततन्मतानुवादानुसरणेन । भास्करस्तूपास्यब्रह्मवादी वृत्तिकारमतमेव भगवत्पादाभिप्रेतमिति बभ्राम । वृत्तिकारसिद्धान्तमेवानुसृत्य सूत्राणि व्याख्यायापि भेदव्यपदेशाच्चेति सूत्रव्याख्याने निर्दिष्ट मायाविदृष्टान्तमुपलभ्यातीवोद्वेजित प्राह – 'अत्र केचित् स्वमतिकल्पितदर्शनपरित्राणाय सूत्रार्थं विनाशयन्तो व्याचक्षते' (भा सू पा २६) इत्यादि । तत्खण्डनव्यग्रै स्याद्वामतीकारैरपीह वृत्तिकारमते उपास्य ब्रह्म विवक्षितमिति कल्पितम् । वस्तुतस्तु 'ब्रह्म पुच्छ प्रतिष्ठा' इति निर्दिष्टस्य ब्रह्मण स्वातन्त्र्येण

प्रतिपिपादयिषितत्वे एव ज्ञेयब्रह्मवाक्यान्वय सूपपादनो भवति, न त्वानन्दमयपुच्छत्वेन स्वीकृतत्वे–इत्येतावदभिप्रेत्य भाष्ये वृत्तिकारमत दूषितमिति ॥

भवतु वेद यथा तथा । पञ्चानामपि कोशाना पूर्वस्य पूर्वस्य उत्तरस्मिन्नुत्तरस्मिन् प्रविलापनार्थमेव 'अन्योऽन्तर आत्मा' इति कोशेषु आत्मबुद्धिरुपदिष्टा । तथा च सर्वस्यापि द्वैतप्रपञ्चस्य सर्पादेरिव रज्ज्वादौ प्रविलापनेन सर्वविकल्पास्पद ब्रह्म विज्ञेयमित्युपदेश एव पञ्चकोशविवेक-प्रक्रियार्थ – इति पुच्छब्रह्मप्रक्रियाया ऐदम्पर्यमिति तु निर्विवादम् । तदेतदत्र प्रस्थाने कुत स्पष्टतया न निर्दिष्टमिति चिन्त्यमेतत् ॥

## अवस्थात्रयविवेके स्वप्नविचारः –

१९८ भाष्यवार्तिकयोरिवात्रावस्थात्रयस्य प्रामुख्य न दृश्यते । '**वैधर्म्याच्च न स्वप्नादिवत्**' (वे सू २–२–२९) इति सूत्रभाष्ये 'अपि च स्मृतिरेषा यत् स्वप्नदर्शनम्' इति भाष्यमित्थ व्याख्यातमत्र –

**(१) सस्कारमात्रज हि विज्ञान स्मृति । प्रत्युत्पन्नेन्द्रियसप्रयोग-लिङ्गशब्दसारूप्यान्यथानुपपद्यमानयोग्यप्रमाणानुत्पत्तिलक्षणसामग्रीप्रभव तु ज्ञानमुपलब्धि । तदिह निद्राणस्य सामग्र्यन्तरविरहात् सस्कार परि-शिष्यते । तेन सस्कारजत्वात् स्मृति । सापि निद्रादोषाद् विपरीता अवर्तमानमपि पित्रादि वर्तमानतया भासयति । तेन स्मृतेरेव तावदुपलब्धि-विशेष, तस्याश्च स्मृतेर्वैपरीत्यमित्यतो महदन्तरम् इत्यर्थ ॥**

**वा भा २–२–२९, पा ५५५, ५५६**

[अत्र जाग्रत्, स्वप्न – इति च व्यपदेशभेदादेव लोको जाग्रद्दर्शनम् अनुभवत्वेनोपगम्य, तद्दृष्ट्या स्वप्न स्मृतित्वेनावगच्छतीति स्पष्टम् । तदेतदेतयो-रन्तर स्वीकृत्यैव च सौगतेनाप्यनुमान क्रियते स्वप्नादिप्रत्ययवज्जागरित गोचरा अपि स्तम्भादिप्रत्यया विनैव बाह्येनार्थेन भवितुमर्हन्तीति । तदेतदयुक्तमनु भवापलापप्रसङ्गात्, न ह्युपलब्धे स्मृतेश्चान्तरमनुभवतैव शक्यमनुमातुम् स्मृतिवदुपलब्धि स्यादिति–इत्येतावान् भाष्याशय । न तु स्वप्न स्मृतिरिति निर्धारणमत्र विवक्षितम् । अन्यत्रावस्थयोरुभयो साम्यस्थापनात् ॥ ]

'आत्मनि चैव विचित्राश्च हि' (वे सू २-१-२८) इति सूत्रभाष्यटीकायाम् –

(२) 'अनेन स्फुटितो मायावाद । स्वप्नदृगात्मा हि मनसैव स्वरूपानुपमर्देन रथादीन् सृजति ॥ वा भा पा ४७७

[अत्र सृष्टिरविवक्षितेत्यनुपदमेव [illegible] ॥ ]

(३) यद्यपि ब्रह्मणोऽन्यस्यानिर्वाच्यतया जाग्रत्स्वप्नावस्थागतयो रुभयोरपि सर्गयोर्मायामयत्वम्, तथापि यथा जाग्रत्सृष्टिर्ब्रह्मात्मभाव साक्षात्कारात् प्रागनुवर्तते ब्रह्मात्मभावसाक्षात्कारात्तु निवर्तते । एव कि स्वप्नसृष्टि आहोस्वित् प्रतिदिनमेव निवर्तते ? – इति विमर्शार्थं ॥

वा भा पा ६८७-६८८

[नाय विमर्शार्ह । स्वप्न प्रतिदिन बाध्यत इति लोकप्रसिद्धत्वात् । 'ब्रह्मणोऽन्यस्यानिर्वाच्यतया' इत्येतत् स्वप्रस्थानानुगुणम् । वस्तुतस्तु सर्वस्यापि ब्रह्मणोऽनन्यत्वेन, उभयोरपि [illegible] मायामयमित्येव वक्तु युक्ततरम् । साक्षात्कारात् सृष्टिनिवृत्तिस्तु तत्परीक्षावसरे एव विमृक्ष्यते ॥]

(४) इह हि सर्वाण्येव मिथ्याज्ञानान्युदाहरणम् । तेषा सत्यत्व ज्ञायते प्रकृतोपयोगितया तु स्वप्नज्ञानमुदाहृतम् ॥ वा भा पा ६८८

[यद्यपि स्वप्नज्ञानविमर्शनेन शुक्तिरजतादिमिथ्याज्ञानान्यपि विमृष्टानि भवन्ति, तथापि सर्वेषामपि मिथ्याज्ञानाना परीक्षण नात्र विवक्षितमिति भाति । न हि शुक्तिरजतादीना सत्यत्व लौकिका आतिष्ठन्ते । न च ज्ञानसामान्य वेदान्ते विमृश्यते । स्वप्नविचारस्तु अवश्यकरणीयोऽत्र । यदि हि स्वप्नदृश्य सत्य तत्कालेऽपि, तर्हि नात्मनोऽसङ्गता, अथ मिथ्या तत्, तत्सिद्धिरप्रत्यूहेति । अपि च शुक्तिरजतादिप्रतीति, वस्त्वन्तरदर्शन न विरुणद्धि । तत्र पाषाणमस्ति, अत्र तु रजतम् – इत्यपि भ्रान्तिवेलाया सत्यवस्त्वन्तरपरामर्शसभवात् । स्वप्ने पुनर्जाग्रत्परामर्श सर्वथा नास्त्येवेति वैषम्यम् । जाग्रद्बुद्ध्युत्पादकत्वाच्च स्वप्नस्य न तत्काले मिथ्यात्वनिश्चयावकाश । श्रुतिश्च 'सृजते' इति स्वप्नस्य तत्काले सत्यतामाचष्टे । अत स्वप्न कि स्वकाले सत्य एव, उत मिथ्यैव सन् सत्यबुद्धि कारणमात्रमिति विमर्श इति युक्तमिति भाति ॥ ]

'मायामात्र तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्' (वे सू ३-२-३) इत्यस्य टीकायाम् –

(५) 'न तावत् क्षीरस्येव दधि रजतस्य परिणाम शुक्ति सभवति इत्यादि, 'अध्यवसेयश्च सन्तान' इत्यन्तम् ॥ वा भा पा ६८९-६९२

[अत्र शुक्तिरजताऽ न यत्र ा ऽतिभेनो नापेक्षित इत्युक्तम् । 'एतेन स्वप्नप्रत्ययो मिथ्यात्वेन व्याख्यात' इति तु भाष्योक्तप्रकारेण सङ्गसप्रतिपन्नम् ॥]

अत्र 'सध्ये सृष्टिराह हि' इति पूर्वपक्षस्य दौर्बल्यप्रदर्शनपरो भाष्यग्रन्थो न व्याख्यात । तत्र भाष्यार्थविभाग इत्थ करणीय –

(१) यथा 'लाङ्गल गवादीन् उद्वहति' इति निमित्तमात्रत्वादेव-मुच्यते, न तु प्रत्यक्षमेव लाङ्गल गवादीन् उद्वहति, एव निमित्तमात्रत्वात् सुप्तो रथादीन् सृजते स हि कर्ता' इत्युच्यते न तु प्रत्यक्षमेव सुप्तो रथादीन् सृजति । निमित्तत्व त्वस्य रथादिप्रतिभाननिमित्तमोदत्रासादिदर्शनात् तन्निमित्तभूतयो सुकृतदुष्कृतयो कर्तृत्वेनेति वक्तव्यम् । एतेन निर्माणश्रवण व्याख्यातम् ॥ सू भा ३-२-४, पा ३४६

[अत्र सुप्तस्य स्रष्टृत्व नास्त्येव, कर्तृत्व तु गौण पूर्वोक्त कर्मफलभूतमोदत्रासाद्यनुभवदृष्ट्या-इत्युक्तम् ॥]

(२) यदप्युक्त 'प्राज्ञमेन निर्मातारमामनन्ति' (वे सू ३-२-२) इति, तदप्यसत् । श्रुत्यन्तरे 'स्वय विहत्य स्वय निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' इति जीवव्यापारश्रवणात् । इहापि 'य एषु सुप्तेषु जागर्ति' इति प्रसिद्धानुवादात्, जीव एवाय कामाना निर्माता सकीर्त्यते ॥ सू भा पा ३४६

[अत्र स्वप्नदृश्यनिर्माण जीवकर्तृकमेव, न प्राज्ञकर्तृकम्, तदप्युक्तेन प्रकारेण गौणम्-इत्युक्तम् ॥]

(३) अपि च जागरिते विषयेन्द्रियसयोगात्, आदित्यादिज्योतिर्व्यतिकराच्च, आत्मन स्वयञ्ज्योतिष्ट्व दुर्विवेचनमिति तद्विवेचनाय स्वप्न उपन्यस्त । तत्र यदि रथादिसृष्टिवचन श्रुत्या नीयेत, तदा स्वयञ्ज्योतिष्ट्व न निर्णीत स्यात् । तस्मात्, रथाद्यभाववचन श्रुत्या, रथादिसृष्टिवचन तु भक्त्या इति व्याख्येयम् ॥ सू भा ३-२-४

[स्वयञ्ज्योतिष्ट्वमेव तात्पर्येण प्रतिपिपादयिषितमिति रथाद्यभाव एव प्राधान्येन श्रूयते, सृष्टिस्तु पूर्वोक्तप्रकारेण जीवस्य निमित्तमात्रत्वात् ॥]

**(४) न चास्माभि स्वप्नेऽपि प्राज्ञव्यवहार प्रतिषिध्यते । तस्य सर्वेश्वरत्वात् , सर्वास्ववस्थास्वधिष्ठातृत्वोपपत्ते ॥ सू भा पा ३४६**

[प्राज्ञकर्तृकसृष्टिमात्र प्रतिषिध्यते, न तु जीवस्य मोदत्रासाद्यनुभवफल प्रदातृत्वम् । सर्वकर्माध्यक्षत्वात्, तन्निमित्त एव हि जीवाना फलानुभव इत्यथ ॥ ]

**(५) पारमार्थिकस्तु नाय सध्याश्रय सर्गो वियदादिसर्गवत् – इत्येतावत् प्रतिपाद्यते ॥ सू भा ३-२-४, पा ३४६**

[यथा श्रुति 'आत्मन आकाश सभूत ' इति प्राज्ञकर्तृका सृष्टि ब्रूते, एव 'स्वप्न सभूत ' इति न वक्ति । अत स्वप्न परमार्थ इति न श्रुतिप्रमाणेन प्रत्यवस्थातव्यम् इत्यर्थ ॥ ]

**(६) न च वियदादिसर्गस्याप्यात्यन्तिक सत्यत्वमस्ति । प्रतिपादित हि 'तदनन्यत्वमारम्भणशब्दादिभ्य ' (वे सू २-१-१४) इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम् । प्राक् तु ब्रह्मात्मत्वदर्शनात् वियदादि-प्रपञ्चो व्यवस्थितरूपो भवति । संध्याश्रयस्तु प्रपञ्च प्रतिदिनं बाध्यत इति । अतो वैशेषिकमिद सध्यस्य मायामात्रत्वमुदितम् ॥ पा ३४६ ३४७**

[वियदादिसर्गस्य प्राज्ञसृष्टत्व यथा, न तथा सध्यस्य सृष्टत्वम् । मायात्व तु समानम् उभयो – इति ॥ ]

अङ्गीकृत्यापि जाग्रत्प्रपञ्चस्य सत्यत्वम्, तदपेक्षया न मन्त्येव रथादय स्वप्ने । प्रतिभानमात्र तु तेषामित्युक्तमत्र । सर्वस्यापि स्वप्नदृश्यस्य बाह्यस्येवाध्यात्मिकस्यापि मिथ्यात्वे निश्चिते स्वयञ्ज्योतिष्ट्व सिध्यतीति च । वियदादिसर्गस्यापि मायामात्रत्वमुदित कार्यकारणानन्यत्वन्यायमालम्ब्य । उभयोरप्यवस्थयो सर्वसमत्व वैतथ्य च गौडपादीयवैतथ्यप्रकरणे प्रति पादितमेवमनेन भाष्येणैकवाक्यता भजते । तदिह भामतीप्रस्थाने नैव सूचितम् ॥

## अवस्थात्रयविवेके सुषुप्तिविचारः –

१९९ सुषुप्तिविचारे मण्डनप्रस्थानमेव प्रायशोऽनुसृतमत्र –

(१) यद्यपि चात्राभावप्रत्ययालम्बना वृत्तिर्नेष्यते, तथापि विक्षेप-संस्कारलक्षणा मनोवृत्तिरिहास्त्येवेति सर्वमवदातम् ॥

वा भा २-४-१३, पा ६४२

(२) यद्यपि प्राणमात्रावशेषतानतिशेषते सुषुप्तिप्रलयावस्थयोर्विशेष, तथापि कर्मविक्षेपसंस्कारसहितलयलक्षणाविद्यावशेषसाम्येन स्वापप्रलयावस्थयोरभेद इति द्रष्टव्यम् ॥ वा भा १-३-३, पा ३३५

[अत्र पुरुषान्तरदृष्टयैव सुषुप्ति परीक्षिता न सुप्तपुरुषदृष्टया – इति न प्रस्मर्तव्यम् । सौषुप्तानुभवदृष्टया तु नास्त्येव सुषुप्तिप्रलययोर्भेद । 'सुषुप्ताव्याकृतयोस्त्वेकत्व सिद्धमेव, निर्विशेषत्वात्' इति माण्डूक्यभाष्यम् (पा १८०) इहानुसधेयम् ॥ ]

(३) तस्माद्यत्रास्य आत्मनो यतो नि सबोधोऽत स्वच्छतारूपमिव रूपमस्येति स्वच्छतारूप । न तु स्वच्छतैव, लयविक्षेपसंस्कारयो तत्र भावात् ॥ वा भा १-४-१८, पा ४०९

(४) यथा घटाकाशो नाम न परमाकाशादन्य, अथ चान्य इव यावद्घटम् अनुवर्तते, न चासौ दुर्विवेच, तदुपाधेर्घटस्य विविक्तत्वात्, एवम् अनाद्यनिर्वचनीयाविद्योपधानभेदोपाधिकल्पितो जीवो न वस्तुत परमात्मनो भिद्यते, तदुपाध्युद्भवाभिभवाभ्या चोद्भूत इव, अभिभूत इव प्रतीयते । ततश्च सुषुप्तादावपि अभिभूत इव, जाग्रदवस्थादिषूद्भूत इव । तस्य च, अविद्यातद्वासनोपाधेरनादितया कार्यकारणभावेन प्रवहत सुविवेकतया तदुपहितो जीव सुविवेक इति ॥ वा भा ३-२-९, पा ७०५

[अत्र सुषुप्तिप्रबोधयो कार्यकारणभावोऽविद्यातद्वासनयो कार्यकारणभावादित्युक्तम् । कार्यकारणयो कालाधारापेक्षणात्, सुषुप्तौ च सर्वथा कालाभावात्, कथमेतद् घटते इति तु न कुत्रापि विवेचित प्रस्थानेऽत्र ॥ ]

(५) अथ तु परमात्मैव नाडीपुरीतत्सृतिद्वारा सुषुप्तिस्थानम्, ततो विपरीतज्ञाननिवृत्तेरस्तिमात्रया परमात्मभाव उपयोग । तथा हि तावदेष जीवस्तदवस्थानो भवति केवलम् । तत्त्वज्ञानाभावेन समूलकाषम् अविद्याया अकाषात् जाग्रत्स्वप्नलक्षण जीवस्य व्युत्थान भवति ॥ वा भा पा ६९६
[सत्यप्यविद्याव्यवधाने कथमात्मैव सुप्तिस्थानम् – इति तु न विवेचितमत्र ॥]

**(६) तस्मात् सुषुप्तमोहावस्थयोर्ब्रह्मणा सपत्तावपि सुषुप्ते यादृशी सपत्ति , न तादृशी मोहे इत्यर्धसंपत्तिरुक्ता ॥ वा भा पा ७०७**

[अत्र न सपत्तौ कश्चिद्विशेष । अनुभवे विशेषाभावात् । 'न ब्रूमो मुग्धेऽर्धसपत्तिर्जीवस्य ब्रह्मणा भवतीति ' इति भाष्यविरोधश्चार्धसपत्ति स्वीकारपक्षस्य । सुषुप्ते कृत्स्नसपत्तिरेव तथा मोहेऽपीति खलु पूर्व पक्ष , तच्चानुमतमेव भाष्ये । तदिह प्रस्थाने सुषुप्ते मात्रया परमात्मभाव , मुग्धेऽर्ध सपत्तिरिति च विनाकारण तारतम्य स्वीकृतमनया ॥ ]

इदमत्रावधेयम् । देहेन्द्रियादिष्वहममाभिमानयुक्तानाम् अविविक्त मिव स्वात्मनो ज्योति स्वरूपमिति तद्विवेकायावस्थात्रयपरीक्षणे प्रवृत्ता श्रुतय क्वचित् पूर्वपक्षेण तत्र तत्र दोषमुद्भाव्य तद्विवेकार्थमवस्थान्तर मुपन्यस्य पर्यन्ते सर्वावस्थातीत परमात्मस्वरूप दर्शयन्ति । यथा **दहरविद्यायाम्** 'अन्धो भवति', 'घ्नन्ति त्वेवैनम् रोदितीव '[1], 'नाह खल्वयमेव सप्रत्यात्मान जानाति ' इति दोषमुद्भाव्य शरीरादिभ्यो विविक्त निरवस्थ स्वरूप दर्शितम् 'अस्माच्छरीरात् समुत्थाय परंज्योतिरुपसपद्य स्वेन रूपेणाभिनिष्पद्यते ' (छा ८–१२–३) इति । क्वचिच्च तत्तदवस्थोपहितात्मान तत्तत्समष्ट्युपाधिपरिच्छिन्नमिव दर्शयित्वा जीवत्वनिरसनेन वैश्वानरहिरण्यगर्भाव्याकृतात्मरूपमापाद्य पर्यवसाने सर्वावस्थासपर्कविधुर निरुपाधिक तुरीयरूप दर्शयन्ति । यथा **माण्डूक्ये** पादचतुष्टयकल्पनेन पर्यन्ते 'नान्त प्रज्ञम्' इत्यादिना 'चतुर्थं मन्यन्ते स आत्मा ' (मा ७) इति निरवस्थ स्वरूप दर्शितम् । क्वचित् पुन सुषुप्ताव-स्थायामेवाविद्याकामकर्मरहित परिशुद्ध स्वरूप दर्शयन्ति यथा छान्दोग्ये सद्विद्यायाम् 'सता सोम्य तदा सपन्नो भवति स्वमपीतो भवति तस्मादेन स्वपितीत्याचक्षते स्व ह्यपीतो भवति ' (छा ६–८–१) इति, यथा वा

---

1 भामत्या तु व्युत्क्रमेण व्याख्यातमिदम् । 'अन्धो भवती'ति स्वप्नावस्था दर्शिता, बाह्येन्द्रियव्यापाराभावात्, 'रोदितीव' इति जाग्रदवस्था, दु खशोकव्याप्तत्वात् (वा भा पा १००६) – इति । लेखकप्रमादोऽयमिति श्रुत्यनुक्रमदर्शनेनावगम्यते ॥

बृहदारण्यके 'तद् वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभय रूपम् । प्राज्ञेनात्मना सपरिष्वक्तो न बाह्य किञ्चन वेद नान्तरम्' (बृ ४-३-२१) इति । तत्राविद्याशक्ति [illegible] मिथा यदि मिथ्याज्ञानबाधनेनैव बाधितामेव मन्यन्ते भामतीकारा, तर्हि न कोऽपि विरोधो भाष्यभामती-प्रस्थानयो । अविद्याशक्तेर्मिथ्याज्ञान[illegible]ज्ञानप्रमित[illegible]भ्युपगमात् उभयोरपि । तथा ह्याहुर्भामतीकारा –

(६) मिथ्याज्ञानविभागशक्तिप्रतिनियमेन मुक्ताना पुनरुत्पत्तिप्रसङ्ग प्रत्युक्त । कारणाभावे कार्याभावस्य प्रतिनियमात्, तत्त्वज्ञानेन च सशक्तिक[1] मिथ्याज्ञानस्य समूलघात निहतत्वात् ॥ वा भा पा ४४७ ४४८

इति । अवस्थापरीक्षया नावस्थावत्त्व विवक्षितमित्यप्युभयो सममेव । तथा हि 'न वुद्धान्तादवस्थोपन्यासेनावस्थावत्त्व ससारित्व वा विवक्षति, किं तर्हि अवस्थारहितत्वम् अससारित्व च' (सू भा १-३-४२) इति भाष्यम्, तट्टीका च –

(७) नानेनावस्थावत्त्व विवक्ष्यते, अपि तु, अवस्थानाम् उपजनापायादिधर्मकत्वेन तदतिरिक्तमवस्थारहित परमात्मान विवक्षति । उपरितनवाक्यसदर्भालोचनादिति ॥ वा भा पा ३६९, ३७०

[न केवलमन्योन्यव्यभिचारात्, किं तु स्वरूपव्यभिचाराच्च सुषुप्ते स्वप्न जागरयोर्मिथ्यात्वम्–इत्यपि वार्तिके स्फुटतरमेतद् विज्ञापितम् ॥ ]

## मोक्षस्य स्वरूपावस्थानलक्षणत्वान्नित्यत्वम् –

२०० 'मोक्षाख्यमशरीरत्व नित्यम्' (सू भा १-१-४) इति भाष्यव्याख्यानम् –

(१) यत् किल स्वाभाविक तन्नित्यम्, यथा चैतन्यम् । स्वाभाविक चेदम्, तस्मान्नित्यम् ॥ वा भा पा ११६, ११७

(२) साध्य हि साधनविशेषाद् विशेषवद् भवति । न च मुक्तिर्ब्रह्मणो नित्यस्वरूपावस्थानलक्षणा नित्या सती साध्या भवितुमर्हति ॥ वा भा पा १२६

1 'स्वशक्तितो' इति पाठान्तरम् ॥

(३) यद्यपि मुक्तिरदृष्टचरी, तथापि सवासनाविद्योच्छेदेनात्मन स्वरूपावस्थानलक्षणास्त्येव। श्रुतिसिद्धत्वात् ॥ वा भा पा ९२९

(४) क्षणिक ज्ञानमात्मेति बौद्धा । तथा च विशुद्धविज्ञानोत्पादो मोक्ष इति निर्वर्त्यो मोक्ष । अन्येषा तु ससाररूपावस्थाम् अपहाय या कैवल्यावस्थावाप्तिरात्मन स मोक्ष इति विकार्यो मोक्ष । तदेतयो पक्षयोरनित्यता मोक्षस्य कार्यत्वात् दधिघटादिवत् । नाविद्या ब्रह्माश्रया, किं तु जीवे , सा त्वनिर्वचनीयेत्युक्तम् । तेन नित्यशुद्धमेव ब्रह्म । अभ्युपेत्य त्वशुद्धिं क्रियासस्कार्यत्वं दूष्यते ॥ वा भा पा १२६

## जीवन्मुक्तिः –

२०१ यथैव मण्डनमिश्र जीवन्मुक्तिमनुमन्यते (ब्र सि 132), एवमेव वाचस्पतिरप्यनुमन्यते । अत एव भास्करोक्तजीवन्मुक्तिनिराकरणमनादृत्य भाष्यानुसारेणार्चिरादिमार्गेण ब्रह्मप्राप्तिरपरब्रह्मविद एव न ज्ञानिन इति व्यवस्थापयति –

(१) कार्यमप्राप्तपूर्वत्वादप्राप्तप्रापणी गति ।
प्रापयेद् ब्रह्म न पर प्राप्तत्वाज्जगदात्मकम् ॥

—विदुषोऽपि देहपातात् पूर्वं स्थितप्रज्ञस्य यथाभासमात्रेण सासारिकधर्मानुवृत्तिरभ्युपेयते, एवम् आ लिङ्गशरीरपाताद् विदुषस्तद्धर्मानुवृत्ति । तथा च प्राप्तप्राप्तिर्गत्युपपत्ति । तद्देशप्राप्तौ च लिङ्गदेहनिवृत्तेर्मुक्ति श्रुतिप्रामाण्यात् इति चेत् । न । परविद्यावत उत्क्रान्तिप्रतिषेधात् ॥ वा भा पा ९९४

(२) न खलु 'ब्रह्मैवेद विश्वम्', अह ब्रह्मास्मि' – इति परिभावनाभुवा जीवात्मनो ब्रह्मभावसाक्षात्कारेणोन्मूलितायाम् अनवयवेनाविद्यायाम् अस्ति गन्तव्यगन्तृविभागो विदुष , तदभावे कथमयम् अर्चिरादिमार्गे प्रवर्तेत ? न च अर्चिरादिमार्गभावनाया परब्रह्मप्राप्त्यर्थम् अविदुष प्रत्युपदेश , तथा च कर्मान्तरेष्विव नित्यादिषु तत्रापि स्यात् तस्य प्रवृत्तिरिति साम्प्रतम् । विकल्पासहत्वात् । किमिय परविद्यानपेक्षा परब्रह्मप्राप्तिसाधनम्, तदपेक्षा वा ? न तावदनपेक्षा , 'तमेव विदित्वातिमृत्युमेति नान्य पन्था विद्यतेऽयनाय ' इति परब्रह्मविज्ञानादन्यस्याध्वन साक्षात् प्रतिषेधात् । परविद्यापेक्षत्वे तु मार्गभावनाया किमिय विद्याकार्ये मार्गभावना

साहायकम् आचरति, अथ विद्योत्पादे ? न तावद विद्याकार्ये, तया सह तस्या द्वैताद्वैतगोचरतया मिथो विरोधेन सहासम्भवात् । नापि यज्ञादिवद् विद्योत्पादे, साक्षाद् ब्रह्मप्राप्त्युपायत्वश्रवणात् 'एतान ब्रह्म गमयति' इति । यज्ञादेस्तु विविदिषासंयोगेन श्रवणाद् विद्योत्पादाङ्गत्वम् । तस्मात्, उपन्यस्तबहुश्रुत्यनुरोधादुपपत्तेश्च ब्रह्मशब्दोऽसम्भवन्मुख्यवृत्ति, ब्रह्म सामीप्यादपरब्रह्मणि लक्षणया नेतव्य ॥ वा भा पा ९९४, ९९५

[ अत्र मुक्तिहेतो परब्रह्मणोऽर्चिरादिमार्गेण प्राप्यत्व प्रत्याख्यातम् ॥ ]

(३) यद्यप्यद्वैतब्रह्मतत्त्वसाक्षात्कारोऽनाद्यविद्योपदर्शितप्रपञ्चमात्र विरोधितया तन्मध्यपतितसकलकर्मविरोधी, तथाप्यनारब्धविपाक कर्मजात द्रागित्येव समुच्छिनत्ति न तु आरब्धविपाक सपादितजात्यायुर्विततपूर्वा परीभूतसुखदु खोपभोगप्रवाह कर्मजातम् । तद् हि समुदाचरद्वृत्तितया इतरेभ्य प्रसुप्तवृत्तिभ्यो बलवत् । अ यथा देवर्षीणा हिरण्यगर्भमुद्दालक प्रभृतीना विगलितनिखिलक्लेशजालावरणतया परित प्रद्योतमानबुद्धिसत्त्वाना न ज्योग्जीविता भवेत् । श्रूयते चैषा श्रुतिस्मृतीतिहासपुराणेषु तत्त्वज्ञता च महाकल्पकल्पमन्वन्तरादिजीविता च । न चैते महाधियो न ब्रह्मविद्, अब्रह्मविदश्चाल्पपुण्यमेधसो मनुष्या इति श्रद्धेयम् । तस्मात्, आगमानु-सारतोऽस्ति प्रारब्धविपाकाना कर्मणा प्रक्षयाय तदीयसमस्तफलोपभोग-प्रतीक्षा सत्यपि तत्त्वसाक्षात्कारे ॥ वा भा पा ९५७–९५८

(४) 'तावदेव चिरम्' इति न चिरता विधीयते अपि तु श्रुत्यन्तर सिद्धा चिरताम् अनूद्य देहपातावधिमात्रविधानम् ॥ वा भा पा ९५८

[अयमपि पक्षो मण्डनाभ्युपगत एव । तावदेव चिरम् इति क्षैप्र्यमाह (ब्र सि 130) इति । सद्योमुक्तिपक्षस्तु तदुक्तोऽत्र नाद्रियते इति भाति ॥ ]

(५) यदा लोकेऽपि विरोधिनो कश्चित् काल सहानुवृत्तिरुपलब्धा, तदा इहागमबलाद् दीर्घकालमपि भवतीति न शक्या निवारयितुम् । प्रमाण-सिद्धस्य नियोगपर्यनुयोगानुपपत्ते ॥ वा भा पा ९५८, ९५९

[अत्र विरोध एव कथमिति नोपपादितम् । न ह्यकर्त्रात्मबोधस्य मिथ्या ज्ञानाभासानुवृत्त्या विरोधिता, अपि तु मिथ्याज्ञानेन । तत्तु मिथ्याज्ञान विद्योत्पत्तिसमकालमेव बाधितमिति को विरोधो नामेति ॥ ]

(६) स्थितप्रज्ञश्च न साधकः । तस्योत्तरोत्तरध्यानोत्कर्षेण पूर्वप्रत्ययानवस्थितत्वात् । निरतिशयस्तु स्थितप्रज्ञः । स च सिद्ध एव ॥

वा भा पा ९५९

[श्रुतिस्मृत्युक्तेन [illegible] जीवन्मुक्तिः सिध्यतीति भाष्याभिप्रायं विवरीतुमेतदुक्तम् । मण्डनस्तु 'स्थितप्रज्ञस्तावन्न विगलितनिखिलाविद्यः सिद्धः, किं तु साधक एवावस्थाविशेषं प्राप्तः स्यात्' (ब्र सि 130) इत्याह । तदपीह प्रतिक्षिप्तम् । अत्र साधकस्य ध्यानोत्कर्षेण तारतम्यम्, स्थितप्रज्ञस्य च [illegible] न भाष्यानुगुणम् । न हि भाष्यकारः साधनोत्कर्षेण साधकस्य स्थितप्रज्ञत्वमाप्यत इत्यनुमन्यते, किं तु [illegible] लक्षणविवेचनेन । तथा हि गीताभाष्ये 'स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य स स्थितप्रज्ञो विद्वान्' (गी भा २-५५) इति ॥]

(७) न च ज्ञानकार्यौ भयकम्पादयः । ज्ञानमात्रादनुत्पादात् । सर्पावच्छेदो हि तस्य भयकम्पादिहेतुः । स चासन्, अनिर्वचनीय इति कुतो वस्तुसतः कार्यस्योत्पादः ? न च कार्यमपि भयकम्पादि वस्तुसत् । तस्यापि विचारासहत्वेनानिर्वाच्यत्वात् । अनिर्वाच्याच्चानिर्वाच्योत्पत्तौ नानुपपत्तिः । यादृशो हि यक्षस्तादृशो बलिरिति सर्वमवदातम् ॥

वा भा पा ९५९

अत्र '[illegible] हि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति । बाधितमपि तु मिथ्याज्ञानं द्विचन्द्रज्ञानवत् संस्कारवशात् कञ्चित् कालमनुवर्तत एव । अपि च नैवात्र विवदितव्यं ब्रह्मविदा कञ्चित् कालं शरीरं ध्रियते न वा इति ।' इत्यादिभाष्याशयसमालोचनेनेदमवगम्यते यन्मिथ्याज्ञानकृतत्वात् कर्तृत्वभोक्तृत्वयोः सर्वाण्येव कर्माणि तत्कारकफलानि च विदुषो दृष्ट्या सर्वथा बाधितान्येव भवन्तीति । यदुक्तं त्रयोदशसूत्रभाष्ये – 'त्रिष्वपि कालेष्वकर्तृत्वभोक्तृत्वस्वरूपं ब्रह्माहमस्मि, नेतः पूर्वमपि कर्ता भोक्ता वा अहमासम्, नेदानीम्, नापि भविष्यत्काले– इति ब्रह्मविदवगच्छति' (सू भा ४–१–१३) इति, स एव सिद्धान्तः । 'सशरीर एव सन् साधको साधनानुगुणमेव ज्ञानमवाप्य मोक्षमवाप्नोति' इति संव्यवहारदृष्टिमवलम्ब्येदं सूत्रं प्रवृत्ते 'अनारब्धकार्ये एव तु ’

(वे सू ४-१-१५) इति, भाष्य च 'स्वहृदयप्रत्यय ब्रह्मवेदन देह-धारण च' इतीति वेदितव्यम्। अन्यथा हि 'शरीरे पतिते अशरीरत्व स्यात्, न जीवत -इति चेत्। न। सशरीरत्वस्य मिथ्याज्ञाननिमित्त त्वात्' (सू भा १-१-४) इति परमसिद्धान्तदृष्ट्या प्रागुपन्यस्तौ चोद्यपरिहारौ निरवकाशीक्रियेयातामिति। भामतीप्रक्रियानुसारेण ज्ञान भयकम्पादीनामनिर्वचनीयत्वेन चोद्यसमाधान तु मण्डनप्रक्रियानुसरण-व्यसनितयेति ब्रह्मसिद्धिस्थसमानप्रकरणग्रन्थ(ब्र सि 131)समालोचकाना स्फुट भवति ॥

**मोक्षसाधनविचारः –**

२०२ मुक्तिसाधनसोपानमित्थ वर्णित भामत्याम् –

**(१) नित्यकर्मानुष्ठानाद् धर्मोत्पाद, तत पाप्मा निवर्तते। स हि अनित्याशुचिदु खरूपे ससारे नित्यशुचिसुखख्यातिलक्षणेन विपर्यासेन चित्तसत्त्व मलिनयति। अत पापनिवृत्तौ प्रत्यक्षोपपत्तिद्वारापावरणे सति प्रत्यक्षोपपत्तिभ्या ससारस्य अनित्याशुचिदु खरूपताम् अप्रत्यूहम् अवबुध्यते। ततोऽस्य अस्मिन् अनभिरतिसञ्ज्ञ वैराग्यम् उपजायते। ततस्तज्जिहासा उपावर्तते। ततो हानोपायं पर्येषते। पर्येषमाणश्चात्मतत्त्व-ज्ञानम् अस्योपाय इत्युपश्रुत्य तज्जिज्ञासते। तत श्रवणादिक्रमेण तज्जानाति -इत्यारादुपकारकत्व तत्त्वज्ञानोत्पाद प्रति चित्तसत्त्वशुद्धया कर्मणा युक्तम्॥**

**वा भा पा ६२-६३**

**(२) विविदिषु खलु युक्त एकाग्रतया श्रवणमनने कर्तुमुत्सहते। ततोऽस्य 'तत्त्वमसि' इति वाक्यान्निर्विचिकित्सज्ञानमुत्पद्यते। न चानि-र्विचिकित्स तत्त्वमसीति वाक्यार्थमवधारयत कर्मण्यधिकारोऽस्ति, येन भावनाया वा भावनाकार्ये वा साक्षात्कारे कर्मणामुपयोग। एतेन वृत्तिरूपसाक्षात्कारकार्ये अपवर्गे कर्मणाम् उपयोगो दूरनिरस्तो वेदितव्य। तस्मात्, यथैव शमदमादयो यावज्जीवमनुवर्तन्ते, एवम् आश्रमकर्मापि' (भा सू पा २०७) इत्यसमीक्षिताभिधानम्॥ वा भा पा ८९९**

[अत्र वाक्याज्ज्ञानोत्पत्तावपि बलवत्संस्कारसामर्थ्यान्मिथ्यावभासानु-वृत्तिर्भवति। तन्निवृत्तयेऽस्ति ज्ञानाभ्यास यज्ञाद्यनुष्ठानापेक्षा – इति ब्रह्मसिद्धि (पा 35)पक्षम् उपेक्ष्य समुच्चयवादो निराकृत। भास्कराचार्यपक्षस्तु कण्ठरवेणैव निरस्त ॥]

(३) अन्त करणवृत्तौ ब्रह्मसाक्षात्कारे जनयितव्येऽस्ति तदुपासनाया कर्मापेक्षा इति चेत् । न तस्या कर्मानुष्ठानेन सहभावाभावेन तत्सहकारित्वानुपपत्ते ॥ वा भा पा ५८

(४) यद्युच्येत निश्चितेऽपि तत्त्वे विपर्यासनिबन्धनो व्यवहारोऽनुवर्तमानो दृश्यते तस्मादविद्यासस्कारानुवृत्त्या कर्मानुष्ठानम् । तेन च विद्यासहकारिणा तत्समुच्छेद उपपत्स्यते । न च कर्माविद्यात्मक कथमविद्यामुच्छिनत्ति, कर्मणो वा तदुच्छेदकस्य कुत उच्छेद इति वाच्यम् । सजातीयस्वपरविरोधिना भावाना बहुलमुपलब्धे । अत्रोच्यते – सत्यम् ' सदेव सोम्येदम् ' इत्युपक्रमात् ' तत् त्वमसि ' इत्यन्तात् शब्दात् ब्रह्ममीमांसोपकरणात्, असकृदभ्यस्तात् निर्विचिकित्सेऽनाद्यविद्योपादानदेहाद्यतिरिक्तप्रत्यगात्मतत्त्वावबोधे जातेऽपि अविद्यासस्कारानुवृत्तौ अनुवर्तन्ते सासारिका प्रत्यया , तद्व्यवहाराश्च , तथापि तानप्यय व्यवहारप्रत्ययान् मिथ्येति मन्यमानो विद्वान् न श्रद्धत्ते पित्तोपहतेन्द्रिय इव गुड थूत्कृत्य त्यजन्नपि तस्य तिक्तताम् । तथा चाय क्रियाकर्तृकरणेतिकर्तव्यताफलप्रपञ्चम् अतात्त्विक विनिश्चिन्वन् कथमधिकृतो नाम ? विदुषो ह्यधिकार । । न खल्वय सर्वथा मनुष्याभिमानरहित , किं त्वविद्यासस्कारानुवृत्त्याऽस्य मात्रया तदभिमानोऽनुवर्तते । तथा च सासारिक इव श्रद्धावगतब्रह्मतत्त्वोऽपि निषेधमतिक्रम्य प्रवर्तमान प्रत्यवैतीति न भिन्नकर्मदर्शनाभ्युपगम । तस्मान्नोपासनाया कार्ये कर्मापेक्षा । अत एव नोपासनोत्पत्तावपि । निर्विचिकित्सशब्दज्ञानोत्पत्त्युत्तरकालमनधिकार कर्मणीत्युक्तम् । तथा च श्रुति – ' न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु । ' तत्किमिदानीम् अनुपयोग एव सर्वथेह कर्मणाम् ? तथा च ' विविदिषन्ति यज्ञेन ' इत्याद्या श्रुतयो विरुध्येरन् । न । आरादुपकारकत्वात् कर्मणा यज्ञादीनाम् ॥ वा भा पा ५८–६१

[अत्र मण्डनवाचस्पत्यो , उभयोरपि यद्यपि समानैव शाब्दज्ञानाभ्यासापेक्षा, तथापि उपासनाकर्मसमुच्चयविषये नास्ति सप्रतिपत्तिरिति स्फुटम् । शाब्दज्ञानोत्पत्त्यनन्तर विहितकर्मणि नाधिकार इति वाचस्पतिमत शाङ्करमतानुसारीति च ॥]

(५) न ब्रह्मज्ञानमात्र सासारिकधर्मनिवृत्तिकारणम् , अपि तु साक्षात्कारपर्यन्तम । ब्रह्मसाक्षात्कारश्च अन्त करणवृत्तिभेद श्रवणमननादिजनित-

संस्कारसचिवमनोजन्मा षड्जादिभेदसाक्षात्कार इव गान्धर्वशास्त्रश्रवणाभ्याससंस्कृतमनोयोनिः। स च निखिलप्रपञ्चमहेन्द्रजालसाक्षात्कारः समूलमुन्मूलयन् आत्मानमपि प्रपञ्चत्वाविशेषात् उन्मूलयतीत्युपपादितमधस्तात्। तस्मात्, रज्जुस्वरूपकथनतुल्यतैवात्रेति सिद्धम्। अत्र च वेदप्रमाणमूलतया वेदप्रमाणजनितेत्युक्तम्॥ वा भा पा १५०

[ 'नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुम्। वेदप्रमाणजनितब्रह्मात्मभावविरोधात्।' (सू भा १-१-४, पा २१) इति वस्तुमात्रकथनेनापि प्रयोजनसद्भावविषये पूर्वपक्ष्युत्थापितशङ्कानिवृत्त्यर्थं भाष्यम्। तद्व्याख्यानत्वेनोक्तमिदं भामत्या न भाष्यानुसारीति स्पष्टम्। न हि भाष्ये वेदप्रमाणजनितब्रह्मात्मभावः, वेदप्रमाणज्ञानाभ्यासनिर्वृत्तसाक्षात्कारफलम् इत्युक्तमस्ति। ब्रह्मसिद्धिमतस्यैव (ब्र सि 86, 87) त्वनुसरणमिदम्॥]

(६) स्यादेतत् – अतिनिरूढनिबिडवासनानुविद्धा अविद्या विद्यया अपबाधितापि स्ववासनावशात् पुनरुद्भविष्यति। प्रवर्तयिष्यति च वासनादिकार्यं स्वोचितम् इति। अत आह – तत्रैवं सति, एवंभूतवस्तुतत्त्वावधारणे सति, यत्र यदध्यासः तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न संबध्यते। एतदुक्तं भवति – तत्त्वावधारणाभ्यासस्य हि स्वभावः एव स तादृशः, यदनादिमपि निरूढनिबिडवासनमपि मिथ्याप्रत्ययमपनयति। तत्त्वपक्षपातो हि स्वभावो धियाम्॥ वा भा पा ४०

[अत्र भाष्ये अविवेकादतद्रूपाध्यासोऽविद्या, विवेकेन वस्तुस्वरूपनिर्धारणं विद्या – इत्येतावदुक्तम्। न तु विवेकज्ञानेन निर्धारणे सति तदभ्यासः करणीय इत्यपीति स्पष्टम्। मण्डनपक्षपातितया (ब्र सि 35) तु संस्कारानुवृत्तिं ज्ञानाभ्यासं च भाष्यकारीयत्वेन व्याख्याति भामतीकारः–इत्यत्र न संशयलेशोऽपि। एवं (वा भा पा ४५, ५८, ७८, ८९, १०७, इत्यादिषु स्थलेषु) पदे पदे वासनाशब्दापरपर्यायः संस्कारः, तत्त्वज्ञानाभ्यासजनितसाक्षात्कारनिवर्त्य इत्युच्यते भामत्याम्। बृहदारण्यकभाष्ये तु (बृ भा १-४-७, पा ६७८) एतन्मतं कण्ठरवेण निरस्तम्॥]

(७) तस्मात् निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम्। न चायमनुभवो ब्रह्मस्वभावः, येन न जन्येत, अपि तु अन्तःकरणस्यैव वृत्तिभेदो ब्रह्मविषयः। न चैतावता ब्रह्मणोऽपराधीनप्रकाशता।

न हि शब्दज्ञानप्रकाश्य ब्रह्म स्वयप्रकाश न भवति । सर्वोपाधिरहित हि स्वयज्योतिरिति गीयते, न तूपहितमपि । यथाह स भगवान् भाष्यकार 'नायमेकान्तेनाविषय ' इति । न चान्त करणवृत्तावपि अस्य साक्षात्कारे सर्वोपाधिविनिर्मोक , तस्यैव तदुपाधेर्विनश्यद्वस्थस्य स्वपरोपाधिविरोधिनो विद्यमानत्वात् । अन्यथा चैतन्यच्छायापत्ति विना अन्त करणवृत्ते स्वय-मचेतनाया स्वप्रकाशत्वानुपपत्तौ साक्षात्कारत्वायोगात् । न चानुमित-भावितवह्निसाक्षात्कारवत् प्रतिभात्वेन अस्याप्रामाण्यम् , तत्र वह्निस्वलक्षणस्य परोक्षत्वात्, इह तु ब्रह्मरूपस्योपाधिकलुषितस्य जीवस्य प्रागप्यपरोक्षत्वात् । न हि शुद्धबुद्धत्वादयो वस्तुनस्ततोऽतिरिच्यन्ते , जीव एव तु तत्तदुपाधि रहित शुद्धबुद्धादिस्वभावो ब्रह्मेति गीयते । न च तत्तदुपाधिविरहोऽपि ततोऽतिरिच्यते । तस्मात् , यथा गान्धर्वशास्त्रार्थज्ञानाभ्यासादितसस्कार-सचिवश्रोत्रेन्द्रियेण षड्जादिस्वरग्राममूर्छनाभेदम् अध्यक्षमनुभवति, एव वेदान्तार्थज्ञानाभ्यासाहितसस्कारो जीवस्य ब्रह्मभावमन्त करणेनेति ॥

वा भा पा ५७–५८

अत्र मण्डनमिश्रसमता साक्षात्करणप्रक्रिया वितानितास्ति सर्व परिकरोपेता । अत्रेमे उपदेशा भाष्यानुगुणा न वेति समालोचनीय सुधीभि –

(१) 'अन्त करणवृत्तिभेद साक्षात्कारशब्दितो ब्रह्मविषयक इति ' ॥

नैतादृशाभिप्रायक वचन प्रस्थानत्रयभाष्येषूपलभ्यत इत्यसन्मति । माण्डूक्ये मनोनिग्रहशब्दवाच्य उपाय उपदिष्टोऽस्ति कारिकासु । तत्र चित्तस्य ब्रह्मरूपेण निष्पत्तिरुपदिष्टा भाष्ये, न तु साक्षात्कारस्य ब्रह्म-विषयकत्वम् । तदपि मध्यमाधिकारिणा कृते समुपदिष्टम् आत्मसत्यानु-बोधरहितानामेव ॥

(अ) 'येषा पुनर्ब्रह्मस्वरूपव्यतिरेकेण रज्जुसर्पवत् कल्पितमेव मन इन्द्रियादि च न परमार्थतो विद्यते, तेषा ब्रह्मस्वरूपाणामभय मोक्षाख्या चाक्षया शान्ति स्वभावत एव सिद्धा नान्यायत्ता ॥'

गौ का भा ३–४०, पा २२५

इति मनोनिग्रहानपेक्षयापि पुरुषार्थसिद्धि स्पष्टमेवोद्घुष्टा तत्र ॥

(२) 'जीवस्य प्रागपरोक्षत्वेऽपि ब्रह्मस्वरूपभावाय, अविद्यासंस्कार विनाशाय च–गान्धर्वशास्त्रोदितषड्जादिसाक्षात्कारवत् – ज्ञानाभ्यासोऽपेक्ष्यते ब्रह्मभावानुभवार्थमिति वर्णनम्, नाध्यारोपापवादप्रक्रियानुगुणमिति स्पष्टमेव । न ह्यध्यासभाष्ये वस्तुस्वरूपविवेचनातिरिक्तं किञ्चिदत्यवश्य-कर्तव्यत्वेनोपदिष्टम् । न चाध्यस्तविवेचनातिरिक्तं किञ्चित्कर्तव्यमवशिष्टं मन्यन्ते लौकिका अध्यासास्पदस्वरूपनिर्धारणार्थम् । षड्जादिस्वरसाक्षा-त्कारस्तु विषयविषयः, करणव्यापारजन्य इति तत्र संस्कारजननार्थमभ्यासो-ऽपेक्ष्यत इति विषम उपन्यासः । न हि प्रागप्यपरोक्षमेव सत् आत्मचैतन्यम् अनुभवम् अपरमपेक्षते स्वविवरणायेति युक्तिमत् । तथा हि भाष्यवचनम्–

> (आ) प्रत्यक्षं हि देहे छिद्यमाने दह्यमाने वा 'अहं छिद्ये, दह्ये' इति च मिथ्याभिमानो दृष्टः, तथा बाह्यतरेष्वपि पुत्रमित्रादिषु संतप्यमानेषु 'अहमेव संतप्ये' इत्यध्यारोपो दृष्टः । तथा दुःखित्वाद्यभिमानोऽपि स्यात् । देहादिवदेव चैतन्यात् बहिरुपलभ्यमानत्वात्, दुःखित्वादीनां सुषुप्तादिषु चाननुवृत्तेः । चैतन्यस्य तु सुषुप्तेऽप्यनुवृत्तिम् आमनन्ति 'यद् वै तन्न पश्यति पश्यन् वै तन्न पश्यति' इत्यादिना । तस्मात् 'सर्वदुःख विनिर्मुक्तैकचैतन्यात्मकोऽहम्' इत्येष आत्मानुभवः । न चैवम् आत्मानम् अनुभवतः किञ्चिदन्यत् कर्तव्यमवशिष्यते ॥ सू भा ४-१-२, पा ४६३

इति । एवं मनोवृत्तेरप्यात्मचैतन्यविषयत्वेनैव बहिरुपलभ्यमानत्वात्, सुषुप्तादिष्वनुवृत्तेश्च नास्ति चैतन्यापरोक्षानुभवार्थं वृत्त्यपेक्षा–इति सिद्धम् । अतद्रूपाध्यारोपनिवृत्तिरेवात्मज्ञानमिति गीताभाष्येऽपि स्पष्टमुक्तम्

> (इ) तस्मात् अविद्याध्यारोपितनिराकरणमात्रं ब्रह्मणि कर्तव्यम् । न तु ब्रह्मविज्ञाने यत्नः, अत्यन्तसुप्रसिद्धत्वात् ॥ गी भा १८ ५०, पा २८०

इति । तथा सूत्रभाष्येऽपि –

> (ई) ब्रह्मैवाऽविद्याध्यस्तप्रपञ्चप्रत्याख्यानेन आवेदयितव्यम् 'एक मेवाद्वितीयं ब्रह्म । तत् सत्यं स आत्मा तत् त्वमसि' इति, तस्मिन् आवेदिते विद्या स्वयमेवोत्पद्यते तया चाविद्या बाध्यते । ततश्चाविद्याध्यस्तः सकलोऽयं नामरूपप्रपञ्चः स्वप्नप्रपञ्चवत् प्रविलीयते ॥ सू भा ३ २-२१

इति । अतः प्रस्थानान्तरमेवेदमध्यारोपापवादप्रक्रियात इति युक्तमुत्पश्याम ॥

फलमिति नियमार्थतैव ' इत्यत्र । दहरवाक्य उपासनविषयम्, तदुत्तरखण्ड वाक्य तु ज्ञानविषयम् । अथ चात्र दहरवाक्ये एव श्रवणादीना विनियोगो दर्शित इत्यवधेयमेतत् । भावनाया न मन्तव्यतावसर – इति वार्तिककारैरुक्त मप्यत्रानुसधेयम् – ' वस्तुतत्त्वविवक्षेह मन्तव्य इति शासनात । योषिदग्न्यादिदृष्टौ हि नैव मन्तव्यताविधि ॥ ' बृ वा २-४-२१५, पा १०६८ ]

(४) तदनेन श्रवणमननध्यानाभ्यासाद विवेकविज्ञानमुक्त्वा तस्य विवेकविज्ञानस्य फल केवलात्मरूपसाक्षात्कार स्वरूपेणाभिनिष्पत्ति, स च साक्षात्कारो वृत्तिरूप प्रपञ्चमात्र प्रविलापयन् स्वयमपि प्रपञ्चरूपत्वात् कतकफलवत् प्रलीयते । तथा च निर्मृष्टनिखिलप्रपञ्चजालमनुपसर्गम्, अपराधीनप्रकाशम् आत्मज्योति सिद्ध भवति । तदिदमुक्त ' पर ज्योति-रुपसपद्य ' इति ॥ वा भा पा ३०४

[ किमात्मक शरीरात् समुत्थानम्, किमात्मिका वा स्वरूपेणाभिनिष्पत्ति ? – इति प्रश्नमुत्थाप्य स्फटिकदृष्टान्तेन ' प्रमाणजनितविवेकग्रहणात्तु पराचीन स्फटिक स्वाच्छ्येन शौक्ल्येन च स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते प्रागपि तथैव सन् ' (सू भा १-३-१९) इति भाष्ये ' श्रुतिकृत विवेकविज्ञान शरीरात् समुत्थानम् विवेकविज्ञानफल स्वरूपेणाभिनिष्पत्ति ' इति स्पष्टतरमुक्तम् । विवेकमात्रेण स्वरूपेणाभिनिष्पत्ति – इति ग्रन्थेऽपि ध्यानाभ्यासतत्फलसाक्षात्कारौ बलादानीय प्रवेश्येते मण्डनाश्रयणव्यसनितया–इतीद न पृथग् वक्तव्यम् ॥ ]

(५) आत्यन्तिके हि जीवपरमात्मनोरभेदे तात्त्विकेऽनाद्यविद्योपाधि-कल्पितो भेद 'तत्त्वमसि' इति जीवात्मनोर्ब्रह्मभावतत्त्वोपदेशश्रवणमनन-निदिध्यासनप्रकर्षपर्यन्तजन्मना साक्षात्कारेण विद्यया शक्य समूलकाष कषितुम् । रज्ज्वामहिविभ्रम इव रज्जुतत्त्वसाक्षात्कारेण ॥

वा भा पा ४१७

[ परमात्मन एवानेनापि जीवात्मना अवस्थानादुपपन्नमिदमभेदेनोप-क्रमणम्–इति काशकृत्स्नीयमतस्य प्रतिपिपादयिषार्थानुसारित्वात्, तदेव श्रुत्यनु-सारीति भाष्यकाराभिप्रायवर्णनावसरे किमिति निदिध्यासनप्रकर्षपर्यन्तप्रयत्न जन्मसाक्षात्कार आनीयते ? – इति तु न ज्ञायते । स्वोदाहृतरज्जुसर्प दृष्टान्तेऽपि न हि नियतो निदिध्यासनप्रकर्षपर्यन्तज एव रज्जुसतत्त्वसाक्षात्कार इति । रज्जुरियमित्याप्तोपदेशश्रुतिमात्रेणापि कस्यचिद्रज्जुतत्त्वज्ञानोदयो हि न दण्डवारित इति ॥ ]

(६) समाधिरिति संयममुपलक्षयति । धारणाध्यानसमाधयो हि संयमपदेनेदनीया । यथाहु 'त्रयमेकत्र संयम ' इति । अत्र 'श्रोतव्यो मन्तव्य' इति धारणोपदेश 'निदिध्यासितव्य' इति ध्यानोपदेश , 'द्रष्टव्य' इति समाधेरुपदेश । यथाहु 'तदेव ध्यानमर्थमात्रनिर्भास स्वरूपशून्यमिव समाधि ' इति ॥ वा भा पा ६१५

[ 'समाध्यभावाच्च ' इत्यत्र 'आत्मा वा अरे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्य ', 'सोऽन्वेष्टव्य स विजिज्ञासितव्य ' इति, 'ओमित्येव ध्यायत आत्मानम् ' इत्येवलक्षण समाधिरुपदिष्टो वेदान्तेषु – इति भाष्यकारै र्निदिध्यासन – विजिज्ञासन – ध्यानशब्दै वस्तुतत्त्वैकचिन्तन निदिध्यासनापर-पर्याय विवक्षितमिति स्पष्टम् । निदिध्यासनेन परमात्मा द्रष्टव्य इति विधान जीवस्य कर्तृव्यापारेणानुपपन्नम् – इत्येतावति पर्यवसन्न सूत्रम् । तत्र योग शास्त्रस्यैव कृत्स्नस्य प्रक्रिया संयमेन समाधिप्राप्त्युपदेशिनी किमित्यस्थाने आनीयते इति न विज्ञायते । न हि 'द्रष्टव्य' इति समाध्युपदेश इति कथञ्चिदपि संभवि । श्रवणादिफलस्यैव [illegible] परामर्शादिति ॥ ]

## प्रतिपत्तिविधिनिरासः, साक्षात्कारवादश्च –

२०४ वाचस्पत्येऽपि प्रस्थाने मण्डनप्रस्थाने इवैव प्रतिपत्ति विधिनिरास क्रियते, प्रतिपादनशैली चाक्षरशस्तदनुकारिणी –

**(१) अपि च चतस्र प्रतिपत्तयो ब्रह्मणि । प्रथमा तावत्, उप निषद्वाक्यश्रवणमात्राद् भवति, या किलाचक्षते 'श्रवणम्' इति । द्वितीया मीमांसासहितात् तस्मादेवोपनिषद्वाक्यात्, यामाचक्षते 'मननम्' इति । तृतीया चिन्तासन्ततिमयी, याम् आचक्षते 'निदिध्यासनम्' इति। चतुर्थी साक्षात्कारवती वृत्तिरूपा । नान्तरीयक हि तस्या कैवल्यमिति ॥**

वा भा पा ८९८

[ 'सर्वापेक्षाधिकरणे यथोक्तप्रतिपत्तिचतुष्टये एकतमस्यापि कर्मापेक्षा नास्तीति शङ्काम् उद्भाव्य 'उत्पत्तौ ज्ञानस्य कर्मापेक्षा विद्यते विविदिषोत्पादद्वारा' इति समाहितम् । अयमेव ह्येको मण्डनप्रस्थानाद् भेदोऽत्र प्रस्थाने । अत्र मनन लक्षण पूर्वोदाहृतवाक्याद् किञ्चिद् विलक्षणम् । निदिध्यासनस्वरूप तु तथैव स्थितम् ॥ ]

(२) न तावद् ब्रह्मसाक्षात्कारे पुरुषो नियोक्तव्य । तस्य ब्रह्म-स्वाभाव्येन नित्यत्वादकार्यत्वात् । नाप्युपासनायाम्, तस्या अपि ज्ञानप्रकर्षे हेतुभावस्य अन्वयव्यतिरेकसिद्धतया प्राप्तत्वेन अविधेयत्वात् । नापि शाब्द बोधे । तस्याप्यधीतवेदस्य पुरुषस्य विदितपदतदर्थस्य समधिगतशाब्द न्यायतत्त्वस्य अप्रत्यूहमुत्पत्ते । अपि च आत्मज्ञानविधिपरेषु वेदान्तेषु नात्मतत्त्वविनिश्चय शाब्द स्यात् । न हि तदा आत्मतत्त्वपरास्ते, किं तु तज्ज्ञानविधिपरा । यत्पराश्च ते त एव तेषामर्था । न च बोधस्य बोध्य निष्ठत्वादपेक्षितत्वात्, अन्यपरेभ्योऽपि बोधतत्त्वनिश्चय । समारोपेणापि तदुपपत्ते । तस्मान्न बोधविधिपरा वेदान्ता इति सिद्धम् ॥

वा भा पा ७१

अत्रोदाहरणद्वयेऽपि ब्रह्मसिद्धिगतनियोगकाण्डार्थ सक्षेपतोऽनूदित । 'कार्यमर्थमवगमयन्ती चोदनैव भूतादिकमप्यर्थमवगमयतीति ये मन्यन्ते तत्प्रतिबोधनाय प्रयत्यते । तिस्रश्च प्रतिपत्तयो ब्रह्मणि भवन्ति । प्रथमा तावच्छब्दात्, अन्या शब्दात् प्रतिपद्य तत्सन्तानवती ध्यानभावनोपास नादिशब्दवाच्या, अन्या ततो लब्धनिष्पत्ति, विगलितनिखिलविकल्पा साक्षात्करणरूपा' (ब्र सि 74) इत्यनुक्रम्य सर्वत्रापि चोदनापेक्षत्व विस्तरेण निराकृतम् **ब्रह्मसिद्धौ** ॥

भाष्ये पुन –

'या हि चोदना धर्मस्य लक्षणम्, सा स्वविषये नियुञ्जानैव पुरुषमव-बोधयति । ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम्, अवबोधस्य चोदनाजन्यत्वात् न पुरुषोऽवबोधे नियुज्यते । यथा अक्षार्थसंनिकर्षेणार्थाव बोधे, तद्वत् । '॥ सू भा १-१-१, पा ५

इति यथाप्रमाण यथाविषय च वेदान्तवाक्यात् ब्रह्मज्ञान समुपजायते प्रत्यक्षादिविषयेष्विव, न तत्र चोदनाया प्रवर्तकत्वमस्ति । प्रमाणव्यापार-मात्रेणान्यनिरपेक्ष जायमानत्वात् ज्ञानस्य-इत्युच्यते । प्रस्थानान्तराकृष्टचित्त-तया तु भामत्या शाब्दबोधे, उपासनाया, तज्जन्यसाक्षात्कारे च नियोगा-नपेक्षा–इति वृथा व्याख्यानायास समाहृत इति स्पष्टम् । किञ्चान्यत्,

'आत्मज्ञानविधिपरेषु वेदान्तेषु नात्मतत्त्वविनिश्चय शाब्द स्यात्' इत्युपालम्भरूपोऽत्र विसृष्टो बाणो मृत्यन्तरेण लब्धवेगो विस्रष्टारमपि विध्येदिति न पर्यालोचितम् । 'वेदप्रमाणमूलतया' साक्षात्काररूप ज्ञान वेदप्रमाणजनितम् (वा भा पा १५०) इत्यङ्गीकुर्वाणस्य न साक्षात्कार शाब्द स्यात् – इति प्रत्युपालम्भसभवात् ॥

(२) त्वयाप्युपासनाविधिपरत्व वेदान्तानाम् अभ्युपगच्छता नित्यशुद्धबुद्धत्वादिरूपब्रह्मात्मता जीवस्य स्वाभाविकी वेदान्तगम्या आस्थीयते । सा चोपासनाविषयस्य विधेर्न फलम् , नित्यत्वादकार्यत्वात् । नाप्यनाद्यविद्यापिधानापनय , तस्य स्वविरोधिविद्योदयादेव भावात् । नापि विद्योदय , तस्यापि श्रवणमननपूर्वकोपासनाजनितसस्कारसचिवादेव चेतसो भावात् । उपासनासस्कारवत् , उपासनापूर्वमपि चेत सहकारी इति चेत् – दृष्ट च खलु नैयोगिक फलम् ऐहिकमपि, यथा चित्राकारीर्यादिनियोगानाम् अनियतनियतफलानाम् । न । गान्धर्वशास्त्रोपासनावासनाया इवापूर्वानपेक्षाया षड्जादिसाक्षात्कारे वेदान्तार्थोपासनावासनाया जीवब्रह्मभावसाक्षात्कारेऽनपेक्षाया एव सामर्थ्यात्' ॥ वा भा पा ११४

एवमादिस्थलेषु मण्डनप्रस्थानोदितसाक्षात्कारप्रक्रियाप्रलोभितत्वमेव कारणम् अनवसरेऽपि तदानयने । प्रकृत हि कर्मब्रह्मविद्याफलयोर्वैलक्षण्यप्रदर्शन भाष्ये –

'तदेतदशरीरत्व मोक्षाख्यम्' इति । पारमार्थिकत्वकूटस्थनित्यत्व–सर्वव्यापित्व–सर्वविक्रियारहितत्व–नित्यतृप्तत्व–निरवयवत्व–स्वयज्योतिष्ट्वलक्षणलक्षितम् , न तत्कर्तव्यशेषत्वेनोपदेशार्हमिति वदद्भिराचार्यै 'श्रुतयो ब्रह्मविद्यानन्तर मोक्ष दर्शयन्त्यो मध्ये कार्यान्तर वारयन्ति, मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फल दर्शयन्ति' इति च ब्रुवाणै कथङ्कार श्रुतिप्रमाणजनितस्यापि ज्ञानस्य पुनरपि मननभावनातत्प्रकर्षापेक्षत्वमुच्यतेति ॥

(४) ‘ न हि यस्यै देवतायै हविर्गृहीत स्यात् ता ध्यायेद् वषट्करिष्यन् । ’ इत्यस्माद् विधे प्राग् देवताध्यान प्राप्तम् । प्राप्त तु अधीतवेदान्तस्य विदितपदतदर्थसबन्धस्याधिगतशब्दन्यायतत्त्वस्य ‘सदेव सोम्येदम्’ इत्यादे ‘तत् त्वमसि’ इत्यन्तात् सदर्भात् ब्रह्मात्मभावज्ञान शब्दप्रमाण सामर्थ्यात् । इन्द्रियार्थसनिकर्षसामर्थ्यादिव प्रणिहितमनस स्फीतालोक मध्यवर्तिकुम्भानुभव । न ह्यसौ स्वसामग्रीबललब्धजन्मा सन्, मनुजेच्छया अन्यथाकर्तुम् अकर्तु वा शक्यो देवताध्यानवत् । येनार्थवान् अत्र विधि स्यात् । न चोपासना वा, अनुभवपर्यन्तता वा अस्य विधेर्गोचर । तयोरन्वयव्यतिरेकावधृतसामर्थ्ययो साक्षात्कारे वा, अविद्यापनये वा विधिमन्तरेण प्राप्तत्वेन पुरुषेच्छया अन्यथाकर्तुम् अकर्तु वा अशक्यत्वात् । तस्मात्, ब्रह्मज्ञान मानसी क्रियापि न विधिगोचर ॥

वा भा पा १२८-१२९

[अत्र ‘ ज्ञान तु प्रमाणजन्यम् ’ इति फलरूपत्वस्य भाष्ये स्पष्टमुद्घोषितत्वेऽपि क्रियात्व कि कारणमुररीक्रियत इति न ज्ञायते । शब्दाज्जनितस्य ज्ञानस्य सतानकरणरूपा उपासना मण्डनप्रस्थानादत्रानीय बलात् प्रवेशिता, तस्य नियमेन उपासनाजनितसाक्षात्काररूपानुभवापेक्षिता चेति स्पष्टमेव । ‘अन्वयव्यतिरेकसिद्धे उपासनातदनुभवपर्यन्तते’ इत्यपि मण्डनानुसरण प्रसङ्ख्यानमतस्यैव रूपान्तरेण दिष्टहतव्याघ्रस्य सजीवनमन्त्रोच्चारणेनेवोज्जीवनम् । अङ्गीकृत चेद मत मण्डनेन – “ अथ तु वाक्यान्तरात् तत्त्वनिष्ठात् अधिगते तद्विषयप्रत्यय प्रवाहविधानमिष्यते । भवतु न कश्चिद्विरोध । तथा च ‘विज्ञाय प्रज्ञां कुर्वीत’ इत्यात्मतत्त्वविज्ञानस्य सिद्धता दर्शयति ” (ब्र सि 154) इति । परमतसाङ्कर्यभीत्या तु पुनरप्युक्त तेन ‘ तदपि वा व्यर्थमेव । प्राप्तार्थत्वात् ’ (ब्र सि 154) इत्यादि, तत्र त्वशब्दत्व स्यात् साक्षात्कारविज्ञानस्येत्युक्तम् ॥ ]

(५) यद्यपि मुक्तिरदृष्टचरी, तथापि सवासनाविद्योच्छेदेनात्मन स्वरूपावस्थानलक्षणायास्तस्या श्रुतिसिद्धत्वात्, अविद्यायाश्च विद्योत्पाद विरोधितया विद्योत्पादेन समुच्छेदस्य अहिविभ्रमस्येव रज्जुतत्त्वसाक्षात्कारेण समुच्छेदस्योपपत्तिसिद्धत्वात्, अन्वयव्यतिरेकाभ्या च श्रवणमनननिदिध्यासनाभ्यासस्यैव स्वगोचरसाक्षात्कारफलत्वेन लोकसिद्धत्वात् । ‘ सकलदु खविनिर्मुक्तैकचैतन्यात्मकोऽहम् ’ इत्यपरोक्षरूपानुभवस्यापि श्रवणाद्यभ्याससाधनत्वेनानुमानात्, तदर्थानि श्रवणादीनि दृष्टार्थानि भवन्ति ।

न च दृष्टार्थत्वे सति अदृष्टार्थत्व युक्तम् । न चैतानि असकृदनावृत्तानि सत्कारदीर्घकालनैरन्तर्येण साक्षात्कारवते तादृशानुभवाय कल्पन्ते । न चा साक्षात्कारवद् विज्ञान साक्षात्कारवतीम् अविद्याम् उच्छेत्तुमर्हति । न खलु पित्तोपहतेन्द्रियस्य गुडे तिक्ततासाक्षात्कारोऽन्तरेण माधुर्यसाक्षात्कार सहस्रे णाप्युपपत्तिभिर्निवर्तितुमर्हति । अतद्वतो नरान्तरवचासि वा उपपत्ति-सहस्राणि परामृशतोऽपि थूत्कृत्य गुडत्यागात् । तदेव दृष्टार्थत्वात्, ध्यानो-पासनयोश्चान्तर्णीतावृत्तिकत्वेन लोकत प्रतीतेरावृत्तिरेवेति सिद्धम् ॥

वा भा पा ९२९-९३०

अनेन प्रत्युपस्थापितो मण्डनप्रस्थानसारसग्रह । अत्रेमे विषया परिभावनीया –

(1) अत्र 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादि शास्त्रावगताना श्रवणादीना कि सकृत् प्रत्यय कर्तव्य, आहोस्वित् आवृत्त्या कर्तव्य ? – इति सशय । सकृत् कर्तव्य, तावतैव शास्त्रस्य चरितार्थत्वादिति पूर्व पक्ष । आवृत्त्या कर्तव्य, असकृदुपदेशात्, दृष्टार्थत्वाच्च इति सिद्धान्त । किमत्र 'दर्शनपर्यवसायित्वात्' (सू, भा पा ४६०) इति भाष्ये रज्ज्वादिसाक्षात्कारदृष्टान्तबलेन श्रवणाद्यनुष्ठानस्य साक्षात्कारफलवत्त्वस्य लोकसिद्धत्वात्, आत्मानुभवस्यापि श्रवणादिफलत्वेन अनुमानमभिप्रेत्य दृष्टार्थत्वमुक्त भाष्यकारेण यथाहुर्भामतीकारा, उत श्रुतिसिद्धत्वादेवेति ? वय तु मन्यामहे 'द्रष्टव्य श्रोतव्य' इत्यादि श्रुतिवाक्येषु दर्शनप्रज्ञाविज्ञानादिशब्दितात्मानुभवमनूद्यैव श्रवणादि विधानात्, नात्रानुमानेन किञ्चित् कर्तव्यमस्ति । अवगते तु श्रुत्या तेषा दर्शनपर्यवसायित्वे अवहन्त्यादिष्विव सकृदुपदेशेऽप्यावृत्तिसिद्धि । दृष्ट तण्डुलनिष्पत्त्यर्थत्वात् अवघातविधेरिति दृष्टान्तादानमिति । सिद्धे हि दर्शनार्थत्वे श्रवणादीना यावद्दर्शन न भवति तावदावृत्ति कर्तव्येति शास्त्रबलादेव सिध्यति ॥

(2) एव रज्जुसर्पादिदृष्टान्तानयन भाष्ये कि रज्जुतत्त्व साक्षात्कारादहिविभ्रमस्य समुच्छेदवत्, आत्मसाक्षात्कारेणाविद्यासमुच्छेद

इत्यंश सारूप्येण विवक्षितः, यथाह भामती, उताहो सर्पादिभ्रान्त्यप नयनेन रज्जुतत्त्वज्ञानसिद्धिवत्, आत्मन्य नारोपितानात्माशापनयनेनात्म- ज्ञानसिद्धिरिति ?

वय तु पश्याम । आत्मनो नित्यापरोक्षत्वात्, अविद्यामात्र व्यवहितत्वाच्च आप्तोक्त्या समारोपितसर्पापह्नवे सति रज्जुतत्त्वविनिश्चय इव वेदान्तोक्त्या समारोपितानात्मापह्नवे सति आत्मविनिश्चय एव विवक्षितोऽश –इति । न हि रज्जुरिवात्मापि विषय, येन तत्साक्षा त्कारोऽपि काङ्क्षणीय स्यादिति ॥

(३) 'दर्शनपर्यवसानानि हि श्रवणादीनि आवर्त्यमानानि दृष्टार्थानि भवन्ति' इति भाष्यकारै 'किम् असाक्षात्कारवद्विज्ञान साक्षात्कार वतीमविद्या नोच्छेत्तुमर्हति' इत्यभिप्रायेणोच्यते, यथाह भामती, कि वा 'द्रष्टव्य' इति दर्शनार्थत्वेन विधानात् तेषाम्, यावद्दर्शन भवति तावदवश्यमावर्तनीयानि भवन्तीत्येतद्विवक्षया ? अत्रापि वयमुत्पश्याम –

अविद्या साक्षात्कारवती आत्मसाक्षात्कार न तिक्ततासाक्षात्कृतिरिव माधुर्यसाक्षात्कारम् अभिभूय विजृम्भते, येन केवलाप्तवचनेन युक्तिसहितेन वा नात्मज्ञान प्रादुर्भवेत्, अपि तु साक्षाद्भवन्नप्यात्मा असाक्षात्कृत इव भवत्यविद्यया । अविद्या चात्मन्यविद्यमानानात्माध्यारोपमात्रलक्षणा । तेन श्रुत्याचार्योपदेशात् समारोपितानात्मापह्नवमात्रेणात्मस्वरूपस्मरणेन च आत्मा साक्षात्कृत इव भवतीति वैषम्य दृष्टान्तदार्ष्टान्तिकयो । आहुर्हि भाष्यकारा. –

(अ) अविद्यावतोऽविद्यानिवृत्त्यनिवृत्तिकृतो विशेष आत्मन स्यात् इति चेत् । न । अविद्याकल्पनाविषयत्वाभ्युपगमात् रज्जूषरशुक्तिका गगनाना सर्पोदकरजतमलिनत्वादिवद्दोष इत्यवोचाम । तिमिरातिमिर- दृष्टिवद् अविद्याकर्तृत्वाकर्तृत्वकृत आत्मनो विशेष स्यात् इति चेत् । न । 'ध्यायतीव लेलायतीव' इति स्वतोऽविद्याकर्तृत्वस्य प्रतिषिद्धत्वात् । अनेक व्यापारसनिपातजनितत्वाच्चाविद्याभ्रमस्य । विषयत्वोपपत्तेश्च । यस्य चाविद्या

भ्रमो घटादिवद् विविक्तो गृह्यते, स नाविद्याभ्रमवान्। अह न जाने मुग्धोऽस्मीति प्रत्ययदर्शनात् अविद्याभ्रमवत्त्वमेव - इति चेत्। न। तस्यापि विवेकग्रहणात्॥ बृ भा ४-४-६, पा ९१९

[अनेन तिक्तनामाधुर्यानुभववैधर्म्यं स्फुटितम्। तत्र तिक्तानुभवेन सवथा अभिभूत त न माधुर्यानुभवस्य, इह पुनरविद्यावत्त्वतद्विषयत्वकालेऽपि तत्साक्षितया तद्विविक्तत्वात्, तज्ज्ञापनमात्रेणात्मानुभवोपपत्ते, न तत्साक्षात्करणाय यत्नान्तरापेक्षेति॥]

(आ) परमार्थतो ब्रह्मरूपस्यापि सतोऽस्य जीवस्य भूतमात्राकृत बाह्यपरिच्छिन्नान्नमयाद्यात्मदर्शिन, तदासक्तचेतस, प्रकृतसङ्ख्यापूरणस्यात्मनोऽव्यवहितस्यापि बाह्यसङ्ख्येयविषयासक्तचित्ततया स्वरूपाभावदर्शनवत् परमार्थब्रह्मस्वरूपाभाव(दर्शन ?)लक्षणया अविद्यया अन्नमयादीन् बाह्याननात्मन आत्मत्वेन प्रतिपन्नत्वात् अन्नमयाद्यनात्मभ्यो नान्योऽहमस्मि इत्यभिमन्यते। एवमविद्यया आत्मभूतमपि ब्रह्मानाप्त स्यात्। तस्यैवम् अविद्यया अनाप्तब्रह्मस्वरूपस्य प्रकृतसङ्ख्यापूरणस्यात्मनोऽविद्यया अनाप्तस्य सत केनचित् स्मारितस्य पुनस्तस्यैव विद्यया आप्तिर्यथा, तथा श्रुत्युपदिष्टस्य सर्वात्मब्रह्मण आत्मत्वदर्शनेन विद्यया तदाप्तिरुपपद्यत एव॥

तै भा २-१, पा २८१-२८२

[अत्रापि । त । । । ज्ञ त प्रा य त गद्वा निवर्तिता भवति। न ह्यात्मा गुडरसवत् केनचिद् व्यवहित, येन तद्व्यवधानापोहनेन साक्षात्कर्तव्यो भवेत्, किं तु प्रकृतदशसंख्यापूरणस्येव स्वस्यात्मभूत एव सन् अविद्यया विस्मृत इति॥]

## वाक्यश्रवणमात्रान्न साक्षात्कार इति प्रस्थानम् –

२०५ निरुपाधिकब्रह्मविषये आवृत्तिर्निरर्थिका इति पूर्वपक्षेणाक्षिप्य समाहितमस्ति भाष्ये, तद्व्याख्यानावसरे भामती प्रस्थानान्तरमेवादृतवतीति प्रतिभाति न। तत्र पूर्वपक्षयुक्तय इमा –

(१) यदि हि 'तत्त्वमसि' इत्येवञ्जातीयक वाक्य सकृच्छ्रूयमाण ब्रह्मात्मत्वप्रतीति नोत्पादयेत्, ततस्तदेव आवर्त्यमान उत्पादयिष्यतीति का प्रमा ? (२) अथ युक्त्यपेक्षमेव वाक्य ब्रह्मात्मत्वमनुभावयिष्यतीति,

सापि हि युक्ति सकृत्प्रवृत्तैव स्वमर्थमनुभावयिष्यति, किमावृत्त्या ' (३) अथापि स्यात्, युक्त्या वाक्येन च सामान्यविषयमेव विज्ञानं क्रियते, विशेषानुभवश्चाविद्याया निवर्तक इति तदर्था आवृत्तिरिति । न । असकृदपि तावन्मात्रे क्रियमाणे विशेषानुभवोत्पत्त्यसंभवात् । (४) न च सकृत्प्रयुक्ते शास्त्रयुक्ती कस्यचिदप्यनुभवं नोत्पादयत-इति शक्यं नियन्तुम्, विचित्रप्रज्ञत्वात् प्रतिपत्तॄणाम् । (५) अपि चानेकांऽशोपेते पदार्थे, एकेनावधानेन एकमंशमवधारयति, अपरेणापरम् इति स्यादावृत्त्युपयोगः, न तु निर्विशेषे ब्रह्मणि - इति ॥

तत्र भाष्यकृत समाधानम् भामतीव्याख्यासहितम् अनुक्रम्यते प्रस्थानभेदस्फुटनार्थम् ॥

भाष्यम् -

**(१) ' भवेदानर्थक्यं तं प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्व मनुभवितुं शक्नुयात्, यस्तु न शक्नोति तं प्रत्युपयुज्यत एवावृत्तिः ' ॥**

[इदं पूर्वपक्षक्रमेण प्रथमस्य चतुर्थस्य चाक्षेपस्य समाधानम् । अत्र सकृत्प्रयुक्तमपि वाक्यं ब्रह्मात्मत्वप्रतीतिम् उत्पादयेदित्यङ्गीकृतम् ॥ ]

भामती -

**(१) सकृदुक्तमेवेति । श्रुत्वा मत्वा क्षणमवधाय प्रागभवीयाभ्यास जातसंस्कारात् - इत्यर्थः ॥ वा भा पा ९३३**

[सकृदुक्तमात्रात् प्रतीतिर्न भवेदिति कृत्वा मनननिदिध्यासनप्राग्भवीया-भ्याससंस्कारा सहकारित्वेन स्वीकृता । प्रसङ्ख्यानमतानुसरणमिदम् । द्रष्टव्यम्- ' सकृदुक्तं न गृह्णाति ' (उप १८-१०), ' यदि वा दृश्यते कश्चिद्वाक्यार्थ-श्रुतिमात्रतः । निर्दु रोऽतीतदेहेषु कृतभावोऽनुमीयते ॥ (उप १८-१५ १६)]

भाष्यम् -

**(२) " अपि च 'तत् त्वमसि' इत्येतद् वाक्यं त्वंपदार्थस्य तत्पदार्थ-भावमाचष्टे । तत्र येषाम् एतौ पदार्थौ अज्ञानसंशयविपर्ययप्रतिबद्धौ तेषां ' तत् त्वमसि ' इत्येतद् वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति । अतस्तान् प्रत्येष्टव्यः पदार्थविवेकप्रयोजनः शास्त्रयुक्त्यभ्यासः " ॥**

[पदार्थविषयकाज्ञानमेव प्रतिबन्धकं वाक्यार्थज्ञानोत्पत्तौ इत्युक्तमत्र ॥]

भामती –

(२) तदेव वाक्यमात्रस्यार्थेऽपि न द्रागित्येव प्रत्यय इत्युक्तम् । 'तत् त्वमसि' इति तु वाक्यम् अत्यन्तदुर्ग्रहपदार्थं न पदार्थज्ञानपूर्वके स्वार्थज्ञाने द्रागित्येव प्रवर्तते, किं तु विलम्बिततमपदार्थज्ञानमिति विलम्बेनेत्याह[1]॥

वा भा पा ९३३-९३४

[लौकिकवाक्यस्याप्यर्थो न द्रागिति जायते । तत्त्वमसीत्यस्य तु विलम्बिततरमेव जायते इत्यत्रोक्तम् ॥ ]

भाष्यम् –

(३) 'यद्यपि च प्रतिपत्तव्य आत्मा निरंश, तथाप्यध्यारोपित तस्मिन् बह्वंशत्व देहेन्द्रियमनोबुद्धिविषयवेदनादिलक्षणम् । तत्रैकेनाव-धानेन एकमंशम् अपोहति, अपरेणापरम् इति युज्यते तत्र क्रमवती प्रतिपत्ति ॥

[इद पञ्चमाक्षेपस्य समाधानम् । वास्तविकांशाभावेऽप्यध्यरोपिता अंशा भवन्त्यात्मनीति ॥ ]

भामती –

(३) निरंशोऽप्यद्व(य?)मपरोक्षोऽप्यात्मा तत्तद्देहाद्यारोपव्युदासाभ्याम् अशवानिव, अत्यन्तपरोक्ष इव । ततश्च वाक्यार्थतया क्रमवत्प्रत्यय उपपद्यते ॥

वा भा पा ९३५

[भाष्यानुसारीद व्याख्यानम् । 'वाक्यार्थतया' इति त्वधिकावाप ॥ ]

भाष्यम् –

(४) 'तत्तु पूर्वरूपमेवात्मप्रतिपत्ते ' ॥

[बह्वंशत्वम् आत्मप्रतिपत्ते पूर्वरूपमेव । अध्यारोपितबह्वंशत्वदर्शिना क्रमवती प्रतिपत्तिरिष्यत एवेत्यर्थ ॥ ]

भामती –

(४) तत्किम् इयमेव वाक्यजनिता प्रतीतिरात्मनि, तथा च न साक्षात्प्रतीतिरात्मनि ? अवगतफलत्वादस्या इत्यत आह – तत्तु पूर्वरूप मेवात्मप्रतिपत्ते साक्षात्कारवत्या । एतदुक्त भवति – वाक्यार्थश्रवण

---

[1] भामतीद्वितीयसस्करणगतोऽय पाठ । 'स्वार्थे जाते', 'विलम्बिततम पदार्थज्ञानम् अतिविलम्बेन ' इति तु प्रथमसस्करणे । उभयथापि सदिग्धो वाक्यार्थ ॥

मननोत्तरकाला विशेषणत्रयवती भावना ब्रह्मसाक्षात्कारायावकल्पत इति वाक्यार्थप्रतीति साक्षात्कारस्य पूर्वरूपम् – इति ॥ वा भा पा ९३५

[नायमक्षरार्थो भाष्यस्य । न हि तत्र वाक्यार्थप्रतीतेरूर्ध्वं साक्षात्कारार्थं यत्न उपदिष्ट उपलभ्यत इति ॥ ]

अत्र भाष्ये सकृच्छ्रुतवाक्यानामपि निपुणमतीना ब्रह्मात्मत्वानुभवो भवेत् , यस्तु न शक्नोति सकृच्छ्रवणेनैव वाक्यार्थमनुभवितुम्, त प्रत्येव शास्त्रावृत्तिर्युक्त्यावृत्तिर्वा इति स्पष्टमुक्तम् । 'तत्तु पूर्वरूपमेवात्मप्रतिपत्ते इति तु बह्वशत्वमात्मनो वाक्यार्थप्रतिपत्ते पूर्वरूपम्, अप्रतिपन्नवाक्यार्थ-विषय एव हि क्रमवत्प्रतिपत्त्यभ्युपगम इत्यभिप्रायक । वाक्यशेषादप्ये-तदेवमिति गम्यते –

(अ) येषा पुनर्निपुणमतीना नाज्ञानसशयविपर्ययलक्षण पदार्थ-विषय प्रतिबन्धोऽस्ति, ते शक्नुवन्ति सकृदुक्तमेव तत्त्वमसिवाक्यार्थमनु-भवितुम् इति तान् प्रत्यावृत्त्यानर्थक्यम् इष्टमेवेति ॥ सू भा पा ४६२

इति खलु पदार्थाज्ञानवत एवावृत्त्यभ्युपगम । न च वाक्यार्थज्ञानादन्यत् ज्ञानसाक्षात्कारसज्ञक परामृष्टमस्त्यत्र ॥

(आ) यस्तु स्वयमेव मन्दमति, अप्रतिभानात् त वाक्यार्थं जिज्ञासेत्, तस्य एतस्मिन्नेव वाक्यार्थे स्थिरीकार आवृत्त्यादिवाचोयुक्त्या अभ्युपेयते ॥ सू भा पा ४६३

इति च पदार्थशोधन वाक्यार्थे स्थिरीकारार्थमेव, एषैव चावृत्त्याख्या न तु जातवाक्यार्थज्ञानस्यापि साक्षादनुभवाख्यापरज्ञानार्थं वाक्यार्थभावना–इति विस्पष्टमुद्घुष्टम् । **भामती** त्वत्राश्रुत ज्ञानाभ्यासमानयति –

(५) यत्र परोक्षप्रतिभासिनि वाक्यार्थेऽपि व्यक्ताव्यक्तत्वतारतम्य तत्र मननोत्तरकालध्यानाभ्यासनिकर्षप्रकर्षक्रमजन्मनि प्रत्ययप्रवाहे साक्षा त्कारावधौ वृत्तितारतम्य प्रति कैव कथा ? – इति भाव ॥

वा भा पा ९३३

तदेतत् सर्वं मण्डनभुजावलम्बनाभिरुचिफलमित्यत्र न काचन सशीति । स एष साक्षात्कारवाद प्रसङ्ख्यानवादस्यैव वेषान्तरम् । न त्वध्यारोपापवादप्रक्रियानुसारिणा वेदान्ताना तात्पर्यानुगतमित्येतत् भगवत्पादीयाया **उपदेशसाहस्र्या** अष्टादशप्रकरणावलोकिना स्पष्ट भवेत् । वाक्यार्थज्ञानमात्रेण तु कृतकृत्यता मुमुक्षूणामिति भाष्यवाक्यान्तरेष्वपि सुस्पष्टमुक्तम् –

(इ) यथा विधिविषये कर्त्राद्यनेककारकोपसहारद्वारेण वाक्यार्थज्ञान कालादन्यत्र अनुष्ठेयोऽर्थोऽस्ति, अग्निहोत्रादिलक्षण , न तथेह परविद्याविषये, वाक्यार्थज्ञानसमकाल एव तु पर्यवसितो भवति ॥ मु भा पा १४५

(ई) "अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालम् अग्निहोत्रादिकर्मानेक साधनोपसहारपूर्वकमनुष्ठेय 'कर्ताहम्, मम कर्तव्यम्' इत्येवप्रकारक विज्ञानवतो यथानुष्ठेय भवति, न तु तथा 'न जायते' इत्याद्यात्मस्वरूप विध्यर्थज्ञानोत्तरकालमपि किञ्चिदनुष्ठेय भवति । किं तु 'नाह कर्ता नाह भोक्ता' इत्याद्यात्मैकत्वाकर्तृत्वादिविषयज्ञानादन्यन्नोत्पद्यते" ॥

गी भा २-२१, पा १९

(उ) आत्मस्वरूपसमर्पकैरेव वाक्यै 'तत् त्वमसि' इत्यादिभि श्रवणकाल एव तद्दर्शनस्य कृतत्वात् द्रष्टव्यविधेर्नानुष्ठानान्तर कर्तव्यम् ॥

बृ भा १-४-७, पा ६६२

## उपसहारः –

२०६. भामतीटीकाप्रादुर्भावानन्तर भास्करसमत भेदाभेदमत शिथिलता गतम् । पञ्चपादिकया भामतीटीकाया क्वचित् यत्किञ्चित्प्रतिपादनरीतिसाम्येऽपि मण्डनप्रस्थानस्यैवावान्तरप्रक्रिया, बहुशोऽत्रानीय भाष्यार्थत्वेन प्रत्युपस्थापिता । मण्डनोक्तसाक्षात्कारवादस्य योगदर्शनोपदेशैरुपबृहणेनात्रासकृत् साभिनिवेश समेलनात् केवलवाक्यार्थविचारणेन मननसहितेनापि न कस्यचिदप्यात्मानुभव उदीयादित्यभिप्रायो वेदान्तजिज्ञासूना हृदये रूढमूलो बभूव । युक्त्या द्वैतस्यानिर्वचनीयत्वसाधनम्

अद्वैतरक्षणे परमोपाय इति च । अविद्यास्वरूपाश्रयविषयगता विचाराश्च प्राधान्यमत्र नीता । अनेनाध्यारोपापवादप्रक्रियाचन्द्रिकाया कियत्यप्यंशे राहुग्रासप्रयुक्ताभिभूतिरिवाभवत् । इत पर वेदान्तविचारस्रोतस प्रवृत्ति- र्यथा दिगन्तरानुसारिणी बभूव तथा आगामिप्रस्थानान्तरविमर्शेन स्फुटी- भविष्यतीत्यलमधिकप्रपञ्चेन भामतीप्रस्थानपरीक्षाया इति शम् ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिचयावाप्त- वेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्यसच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीताया वेदान्तप्रक्रियाप्रत्यभिज्ञाया

**भामतीप्रस्थानपरीक्षा नाम दशम काण्ड**

---

# १०. इष्टसिद्धिप्रक्रियापरीक्षा

## मूलाविद्यावादोज्जीवनपूर्वकं भामतीप्रस्थाननिराकरणम् –

२०७ मण्डनाचार्यप्रक्रिया कैश्चित् किञ्चिद्विपरिणमिता यावता कालेन भाष्यप्रस्थानमभिन्ना भामतीप्रक्रियारूपं भेजे, तावता अविद्योपादानवादिपञ्चपादिकानुयायिना प्रतिक्रिया नान्तरीयकी अभवत् । अध्यासमेवाविद्यात्वेन स्वीकुर्वाणस्यापि यदा अविद्याशक्तिरवश्याङ्गीकार्या अभूत्, तदा प्रपञ्चस्याविद्याशक्त्युपादानकत्वमेवालम् अद्वैतसिद्धान्तस्थापनायेति भामतीकारेणाप्यनुमतमेव भवति । तत्किं नवीनप्रक्रियान्तराह्वानविडम्बनया ? –इति **विमुक्तात्माचार्या** मेनिरे । भास्कराचार्येणाद्वैतप्रक्रियायामासञ्जितकतिपयदोषोद्धारपूर्वकं भेदाभेदमते बहवो दुरुद्धरा दोषा उद्भाविता बभूवुर्भामतीग्रन्थे । विमुक्तात्माचार्यास्तु न केवलं भेदाभेदवादे, किं तु मण्डनवाचस्पत्युभयादृताद्वैतप्रक्रियाभेदेऽप्यनुपपत्तिग्रासो दुर्निवारण इति स्वनिबद्धायाम् इष्टसिद्धौ मूलाविद्यावादोपबृंहणपूर्वकं दिदर्शयिषन्ति ॥

## इष्टसिद्धिकर्तृविमुक्तात्मसंस्तवः –

२०८ इष्टसिद्धिकर्तारो विमुक्तात्माचार्याः **'अव्ययात्मशिष्याः'** इति प्रत्यध्यायान्तपुष्पिकातोऽवगम्यते, **प्रमाणवृत्ताख्यप्रकरणान्तरनिबन्धार** इति च, **ग्रन्थशरीरे** (पा ३७) एव तयोल्लिखितत्वात् । **आनन्दबोधविरचितायां प्रमाणमालायां** 'गुरुभिः' इति परामृष्टा (प्र मा पा ४) इत्यत इमे आनन्दबोधगुरव आसन् इति सभाव्यते । इष्टसिद्धिरपि ब्रह्मसिद्धिवदेव कञ्चित् कालमज्ञातवासमनुभूय बरोडाप्रान्तीयप्राच्यकोशशोधकालये (ई 1933) प्राकाश्यं नीता **त्रिंशतो वत्सरेभ्यः प्राक्** । ब्रह्मसिद्धिवदेव श्लोकतद्विवरणोभयरूपेण **निबद्धमस्तीदं प्रकरणम्** ॥

## अनिर्वचनीयाविद्यासिद्धिप्राधान्य ग्रन्थस्य –

२०९ नेह ब्रह्मसिद्धाविव सर्वेऽपि शारीरमीमासाविषया यथानुक्रम परिशीलिता, कि तु मङ्गलश्लोके सर्वं सिद्धान्तसार सगृह्य तद्विवरणे मतान्तरनिरासे च ग्रन्थो विनियुक्त । 'समस्तवेदान्तार्थ-सारसग्रहभूतमिद प्रकरणम्' – इति 'विवरणे' (इ सि पु ३७) यद्यप्युक्तम्, तथापि प्राधान्येनानिर्वाच्याविद्यासतत्त्वनिरूपणमेव प्रकरण कर्तुर्हृदये स्थितमित्यवगम्यते ॥

सदसत् किमनिर्वाच्य तदनात्मन्युतात्मनि ।
इति तत्र नयाढ्यत्वादन्त्य पक्षमतिष्ठिपम् ॥ इ सि ८–१५

प्रत्यक्षादिप्रमाणाना कर्मविज्ञानकाण्डयो ।
प्रामाण्यमविरोधश्च नर्तेऽविद्या यथोदिताम् ॥
धर्मार्थकाममोक्षाख्याश्चत्वार इतरेऽपि च ।
इष्टानिष्टा प्रसिध्यन्ति सवतीथदृशा तथा ॥
दर्शनानि विरुद्धानि जगद्वैचित्र्यमेव च ।
तस्मात् सर्वस्य सिद्ध्यर्थं विचार्य निरधारि मा ॥
इ सि ८–२२ प्रभृति २४ पर्यन्तम् ।

सर्वेष्ट परमानन्दो वेदान्तात्मप्रमाणत ।
इत्येषोऽर्थो विशेषेण मयेष्टो वेदविन्मत ॥
अर्थश्चायमनिर्वाच्या यद्यविद्या प्रसिध्यति ।
व्यचीचरमविद्या तामत इष्टार्थसिद्धये ॥ इ सि ८–८–२७, २८

इति ग्रन्थोपसहारे सर्वसिद्धिरनिर्वचनीयाविद्याप्रसिद्ध्या इत्यतस्तत्तत्त्व निर्धारणायात्र प्रयतितमिति कण्ठरवेणाविद्याप्राधान्य ग्रन्थस्य प्रोक्तम् ॥

## ग्रन्थविषयविभागः –

२१० अष्टाध्यायात्मकोऽय ग्रन्थ । तत्र प्रथमेऽध्याये प्रायश सर्वेऽपि ग्रन्थप्रतिपाद्यविषया समासेनोदिता । तेन कृत्स्नस्य ग्रन्थस्य

अर्धादप्यधिको भागोऽनेनैवा यायेन समाक्रान्त । जगत् सर्वमनिर्वचनीयाविद्याकार्यमित्येतच्छुक्तिरजतदृष्टान्तेन वितत्य व्याख्यातमत्र । अत ऊर्ध्वं ख्यात्यन्तरवादिभिरप्यकामैरवश्यम् अ॥नगीचा सा – इत्यध्यायचतुष्टयेन प्रतिपादितम् । अविद्याया जीवाश्रयत्व षष्ठे निरस्तम् । आत्मानात्म विभागादिव्यवस्था अविद्याभ्युपगन्तुरेव सिध्येत् नान्यस्येति सप्तमे प्रतिपादितम् । अविद्यानिवृत्तिविषये शङ्का अष्टमे समाहिता । तदेव ग्रन्थविभागसमालोचनेन ग्रन्थस्य 'अनिर्वचनीयाविद्यासिद्धि' इति नामकरणमपि निबन्द्धृणा नानभीष्टमिति विज्ञायते ॥

**ग्रन्थार्थसग्राहकः श्लोकः –**

२११ अयमत्राद्यो मङ्गलश्लोक –

**याऽनुभूतिरजामेयानन्तात्मानन्दविग्रहा ।**
**महदादिजगन्मायाचित्रभित्ति नमामि ताम् ॥ इ सि १-१**

श्लोकस्यास्य व्याख्यानम् ईषदूनाष्टात्रिंशत्पत्रपार्श्वं यावत् विस्तृतम् । व्याख्यानसारस्तु –

अनुभूतिस्तावत् स्वत सिद्धा । अनुभूतेरनुभाव्यत्वे घटादिव दननुभूतित्वप्रसङ्गात् । अत एव सा जन्मादिभावविकाररहिता । चेत्याना चिद्धर्मत्वाभावादमेया सा । अत एव च देशत कालतो वस्तुतश्चानन्ता । देशादीना मेयत्वेनातद्धर्मत्वात् (इ सि पा १–२) । अतोऽनन्तत्वात् सैव परमात्मा (इ सि पा २५) । अत एवानन्दविग्रहा । ज्ञानानन्दयोर्भेदाभावात्, अपर्यायशब्दत्वेऽपि ज्ञानानन्दलक्षणयोरर्थभेदस्यानुमातुमशक्यत्वात् । अनुमानस्यागमविरुद्धत्वाच्च (इ सि पा २५–२६) । 'तस्माद्वा एतस्मादात्मन आकाश सभूत' इति सूत्रवाक्यनिर्दिष्ट ब्रह्म-परामृश्य, तत्रैव चात्मशब्द प्रयुज्य, ब्रह्मात्मनोर्जगत्प्रकृतिता प्रदर्श्य, 'आनन्दो ब्रह्मेति व्यजानात्' इति ब्रह्मानन्दयोरेकतामुक्त्वा, 'आनन्दा-

द्ध्येव खल्विमानि भूतानि' इति ब्रह्मानन्दस्य जगत्प्रकृतितादर्शनात् ब्रह्मात्मानन्दानामेकतैव निश्चीयते (इ सि पा २७)। एषैव चानुभूति स्वाविद्यामायाव्यपाश्रयेण समस्तजगदुत्पत्त्यादिहेतु । न चाद्वैतविरोध । माया ह्यनुभूते पृथक्त्वापृथक्त्वाभ्यामनिर्वचनीयेति (इ सि पा ३२-३६) इति ॥

## तर्कस्य प्राधान्यम् –

२१२ मङ्गलश्लोके 'या' इति स्वत सिद्धता द्योतयति इत्यभ्युप गम्य स्वत सिद्धतामपि, तथानङ्गीकर्तुरनिष्टप्रसञ्जनरूपेण तर्केण साधयितु प्रववृते इष्टसिद्धि । स्वत सिद्धे सशय एव कथम्? तत्रापि सशयान प्रति तर्केण वा कथ तत्त्व शक्यसाधनमिति नालोचितमत्र । न ह्यनुभूते पर किञ्चिदस्ति यद्बलात् सा, तद्धर्मा वा साध्येरन् । न च तर्केण तत्सिद्धि राशसनीया, तर्कस्याप्यनुभवाश्रयेण स्वात्मधारणात् । उक्त हि **नैष्कर्म्य-सिद्धौ** वार्तिककारै – 'अनुभवमात्रशरणत्वात् सर्वतार्किकप्रस्थानानाम्' – इति प्रतिज्ञाय

> इम प्राश्निकमुद्दिश्य तर्कज्वरभृशातुरा ।
> त्वाच्छिरस्कवचोजालैर्मोहयन्तीतरेतरम् ॥ नै सि २-५९

इति । 'अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गात्' इत्ययमपि हि तर्क, कञ्चिदनुभवमाश्रित्यैवास्थेय । अन्यथा वादिप्रतिवादिनोरन्योन्य भावानवबोधे कथाया एवानारभ्यत्वप्रसङ्ग इति । न च वेदान्ते अनुभवा नङ्गस्यानुभवनिरपेक्षस्य वा तर्कस्याप्यवकाश स्वसिद्धान्तसाधने । यथोक्त भाष्ये –

> 'नानेन मिषेण शुष्कतर्कस्यात्रात्मलाभ सभवति । श्रुत्यनुगृहीत एव ह्यत्र तर्कोऽनुभवाङ्गत्वेनाश्रीयते' ॥ सू भा २-१-६

इति ॥

**दृग्दृश्यभेदनिरासः –**

२१३ अनुभूतेरानन्त्यम् आक्षिपन् प्रतिवादी प्राह – ननु इद तया चेत्य भाति, अनिदतयैव तु चित्। अतस्तयोर्भेद प्रसिद्धतरो लोके, इतरेतराभावश्च। तस्मात्, चिच्चेत्ययोर्भेदोऽभ्युपेय प्रसिद्धेरिति (इ सि पा २)। भेदसद्भावात्, वस्तुकृतपरिच्छेदे सति अनुभू ानन् ्न्सिद्धमिति तस्य हृदयम् ॥

अत्र इष्टसिद्धिर्दृग्दृश्यसम्बन्धपरीक्षामारभते यथोक्ताक्षेपनिरासार्थम्। तस्या एतस्या परीक्षाया अतिविस्तृतत्वात् (इ सि पा २–२४) तत्सार सगृह्यते ग्रन्थकर्तृविचारसरणिप्रस्तावनार्थम् –

(१) यद्यपि दृग्दृश्ययोर्भेददृष्टि समस्ति, तथापि न सा दृग्दृश्ययो सभवेत्। दृशोऽदृश्यत्वात्। न ह्यदृष्टस्य दृष्टात्, दृष्टस्य वा अदृष्टात्, भेदो द्रष्टु शक्य धर्मिप्रतियोग्यपेक्षत्वाद् भेददृष्टे। अपि च कोऽय भेदो नाम? भेदिन स्वरूप चेत्, भेददृष्टे प्रतियोग्यपेक्षा न स्यात्। न हि स्वरूपदृष्टि प्रतियोग्यपेक्षा। अन्यथा प्रतियोगिनोऽपि प्रतियोग्यपेक्षत्वात् भेददृष्टेरनवस्था, अन्योन्याश्रयता वा स्यात्। अथ भेदिनोर्धर्मो भेद, सोऽपि तस्माच्च भिन्न। उक्तदोषप्राप्ते। अतो भिन्नो ज्ञानान्तरज्ञेय एष्टव्य। अन्यथा इतरेतर भावप्रसङ्गात्। ज्ञानान्तरेणापि वस्तुस्वरूपाद् भिन्नो भेदो न प्रतीयते। भेद भेदिनोर्भिन्नत्वे अनवस्थाप्रसक्तिश्च दुर्वारा। एवमन्योन्याभावोऽपि न सभवति, यदि स भेदादनन्य। तस्य भेदादन्यत्वपक्षे तु भेदपक्षोक्तयुक्तयस्तत्रापि सचारयितव्या। एव च दृग्दृश्ययोर्न भेद, नाप्यन्योन्याभाव। किञ्च, दृश्यत्वे भेदाभावयोर्न दृग्धर्मत्वम्। दृश्यान्तरवत्। अदृश्यत्वे तु तयोरसिद्धि। स्वयप्रभत्वे दृशोस्तयोर्न भेद स्यात्। तस्मान्न दृशो भेदाभावौ धर्मौ, नापि स्वरूपम्। न चैकस्यैव द्वे रूपे। न च तयोरपि भेद ॥

इ सि पा २–१०

[अत्रत्यभेदनिरासप्रकारो ब्रह्मसिद्धितर्ककाण्डस्थप्रकारेण तुलयितव्य ॥]

(२) न चैव दृग्दृश्ययोरभेद, इतरेतरभावश्च प्रसज्येयाताम् इति शङ्क्यम्। यतो न तावदभेदो भाति। भेदप्रसिद्धिस्तु सार्वत्रिकी। न च सहोपलम्भनियमात् दृग्दृश्ययोरभेद। न हि सहोपलभ्यत्वमस्ति तयो,

दृशोऽनुपलभ्यत्वात् । न च सहैव भान तयो । दृशो नित्यत्वात्, स्वय प्रभत्वाच्च । दृश्यस्य विद्युदादेरतथात्वात् । ननु तयोर्भेदज्ञानासभवस्त्वयैवोक्त, अतोऽभेद प्राप्त । न प्राप्त । अभेदज्ञानासभवस्यापि मयैवोक्तत्वात् । तस्मात् दृग्दृश्ययोरभेदो न प्रतीतित, तदभावात् । नापि न्यायत । तम प्रकाशवद्विरुद्धस्वभावत्वात् ॥ इ सि पा १०-१८

(३) यद्यपि दृग्दृश्ययो स्वात्मना न भेद, तथापि ब्रह्मात्मना तयोरभेदोऽप्यस्ति इत्यपि न युक्तम् । न ह्येकस्मात् ब्रह्मणोऽनन्यत्वे तयोर्मिथो भेदो न्याय्य । स्वेन रूपेण भिन्ने, रूपान्तरेणाभिन्ने ब्रह्मण इति चेत् । ते रूपे तयोरभिन्ने चेत् ब्रह्मणोऽपि पूर्ववद् भेद, तयोर्वा भेदो न स्यात् । भिन्ने चेत् तयो रूपयोर्नाभेदोऽस्तीति नाभेदो दृग्दृश्ययो । न चानयो रूपद्वय समस्ति । न हि दृशो दृश्य रूपम्, नापि दृश्यस्य दृक् । न च तृतीय रूपमस्ति । तस्मात् न दृशो रूपद्वयम्, नापि दृश्यस्य – इति तयोर्भेद, अभेद एव वा अन्योन्यम्, न भेदाभेदौ, रूपद्वयाभावात् । न चैकरूप एव भेदाभेदज्ञाने, ऐकार्थ्यप्रसङ्गात् । एक द्विरूपमिति च विप्रतिषिद्धम् । एकस्यैव रूपद्वयवत्त्वे हि किं रूपिण एकस्मादभिन्नान्येव रूपाणि, उत भिन्नान्येव, अथवा भिन्नाभिन्नानि ?–इति विकल्पा भवन्ति । सर्वथापि तु दुर्निरूपमेव भवत्येकस्य द्विरूपत्वम् । तस्मात्, 'ब्रह्मात्मना अभेद, स्वरूपेण तु भेद' इति भेदाभेदपक्षोऽपि न निर्दूषण ॥

इ सि पा १८-२२

## ग्रन्थकारस्य तर्कसरणिः –

२१४ अत्यन्तसक्षेपत प्रदर्शितो दृग्दृश्ययो सबन्धविषयकविचारग्रन्थ· प्रदर्शनार्थम् इष्टसिद्धिसमादृतविषयनिरूपणरीते, तर्कशैल्याश्च । तत्र तत्र किमिद सत्, असत्, सदसद्वा, किञ्चेदममुकापेक्षया भिन्नम्, अभिन्नम्, भिन्नाभिन्न वा ?–इत्येव विकल्पनम्, प्रतिविकल्प दोषोद्घाटन चेति निरूपणक्रमो बहुशो विजृम्भतेऽत्र । अत्रापर ग्रन्थभागम् उदाहरामो वाचकानाम् अत्रत्यविचारक्रमो यथा हृदयमागच्छेत् –

अतो भेदाद्यभावात् जन्मादिदोषगन्धोऽपि दृश न ढौकत इति स्थितम् । किञ्च दृश्येऽप्येते दोषा प्रमाणतो निरूप्यमाणा न सभावयितु शक्यन्ते, कुतस्तत्सबन्धाद् दृशि स्यु ? तथा हि – अन्यत्वे अनन्यत्वे च

न धर्मधर्मिभाव । अन्यानन्यत्व च निरस्तम् । अतोऽधर्मकत्वात् गुणान प्यसस्पृशद् वस्तु कथ दोषान् सस्पृशेत् ? किञ्च, भेदस्य वस्तुनो भेदे, भेदाभेदे च तस्य तस्य भेदाद् वस्तुनश्च अन्योऽन्यो भेद -इत्यनवस्थानात न कश्चिद् भेदो वस्तु सस्पृशेत् । अभेदे तु एकमेव । तच्च वस्त्वेव , न तु भेद एव । वस्त्वभावे तस्याप्यभावात् । तदेव वस्तु-इति चेत् । अस्तु । तथाप्येकमेव वस्तु । तच्च न दृश्यम् । तस्य सापेक्षत्वादद्वितीयतासिद्धे । अतो दृगेव । तस्या स्वतस्सिद्धेरेकत्वोपपत्ते । न चास्या एकत्व धर्म । उक्तदोषप्रसङ्गात् । अतो निर्भेदम् । अधर्मक वस्तु एकशब्देन विवक्ष्यते । भेदधर्माभाव इतरे धर्मा प्रत्युक्ता । तदधीनत्वात् तेषाम् । भिन्नयोर्हि इतरेतराभाव । अतो भेदाभावे स न स्यात् । अतश्च वस्त्वसकरासिद्धेरेक वस्तु स्यात् । भावाभावानाम् इतरेतराभावाभ्युपगमे अनवस्था, अनभ्युपगमे वस्त्वसकरासिद्धि । न चाभाव विना जन्मादिसिद्धि । न ह्यज्ञाते प्रागभावे कस्यचिज्जन्मनिश्चय स्यात् । न ह्यदृष्टस्य दृष्टिमात्र जन्म साधयेत् । न चा दर्शने असिद्धे अदृष्टदृष्टि सिध्येत् । अत प्रागभावाभावे दृश्यस्य दर्शनस्य च जन्माभाव । जन्माभावे नान्येऽपि भावविकारा स्यु । जन्मपूर्वकत्वात् तेषाम् । अत कूटस्थ सदैकरूप वस्तु स्वत सिद्धम्, असिद्धमेव वा । द्वैरूप्यायोगाच्च । असिद्धमेव चेत् असत्कल्पम् । सिद्धमेव चेत्, दृगेव वस्तु, नान्यत् । अतो जन्म नाम न किञ्चित् कस्यचिदुपपन्न पश्याम । एव नाशादयोऽपि निरूप्यमाणा नावतिष्ठन्ते । तस्मात् सुष्ठूक्त दृश्येऽपि नैते दोषा निरूप्यमाणा सभवन्ति, कुतस्तत्सबन्धाद् दृशि स्युरिति । तस्मादनन्तैवानुभूतिरिति स्थितम् ॥ इ सि पा २३-२४

अत्र तैत्तिरीयभाष्ये ब्रह्मण आनन्त्यनिरूपणग्रन्थेन एतावत्पर्यन्तोऽत्रत्यग्रन्थस्तुलनीय , येनानुभवानुसारियुक्त्यपेक्षया स्वतन्त्रतर्कस्य प्राचुर्य प्रकरणेऽस्मिन् कियदिति विशदतया विस्फुरेत् । अलातशन्तिप्रकरणे श्रीगौडपादादृतावीतन्यायतर्काद् वैलक्षण्यमपीष्टसिद्धीष्टतर्कस्य विस्पष्ट भवेत् ॥

## जगतोऽनिर्वाच्यत्वान्नाद्वैतहानिः –

२१५ यद्येव दृश्य न वस्तु नावस्तु, न ब्रह्मणो भिन्न नाप्य भिन्नम् न वा भिन्नाभिन्नमपि, का तर्हि द्वैतप्रपञ्चस्य गति ? न च प्रपञ्चो

नास्त्येव, तथा हि प्रत्यक्षादेर्निर्विषयत्वप्रसङ्ग, कर्मज्ञानकाण्डयोराश्रया सिद्धिश्च स्याताम् । अथास्ति प्रपञ्च इत्यभ्युपेयते, तदा ब्रह्मणो भिन्न, अभिन्न, भिन्नाभिन्नो वा स्यात, नान्यथा । तत्र प्रकारत्रयेऽपि यथोक्त ब्रह्म न सिध्येत् इत्याशङ्क्य विमुक्तात्माचार्या प्राहु –

(१) 'नैकोऽपि दोषोऽस्मत्पक्षे । प्रपञ्चस्य मायानिर्मितत्वाभ्युप गमात् । मायाया सकार्याया अपि वस्तुत्वावस्तुत्वाभ्यामनिर्वचनीयत्वात्, वस्त्ववस्तुपक्षद्वयाश्रया दोषा नास्मत्पक्ष कटाक्षेणापि वीक्षन्ते ॥

इ सि पा ३२

न चानिर्वचनीयत्वे प्रत्यक्षादिप्रामाण्याभावप्रसङ्ग –

(२) 'यथा स्वप्नप्रपञ्चस्य अनिर्वचनीयत्वेऽपि आ बोधात् तदाश्रय सर्वो लौकिकवैदिकक्रियाकारकप्रमाणप्रमेयादिव्यवहारोऽप्रतिहतो वर्तते, स्वाप्नैरेव निमित्तैस्तत्प्रपञ्चनुत् सत्यार्थबोधो जायते, एव जाग्रत्यपि सर्व-मविरुद्ध द्रष्टव्यम्' ॥ इ सि पा ३४

(३) तस्मात्, यथोक्तलक्षणत्वेऽप्यनुभूते, स्वाविद्यामायाव्यपाश्रयेण समस्तजगदुत्पत्त्यादिहेतुत्वेन महदाद्यशेषकार्यविचित्रविग्रहत्वात्, प्रत्यक्षादीना कर्मोपासनादिवाक्याना च विषयत्वोपपत्ते, न विरोधगन्धोऽप्याशङ्कनीय ॥

इ सि पा ३५

भामतीकारेण सर्वस्याप्यस्य जगतोऽनिर्वचनीयत्वाभ्युपगमेन सकल-दोषनिवारण येन प्रकारेण, तेन समान इष्टसिद्ध्यादृतप्रकारोऽपि । तस्यैव त्वय प्रपञ्च – इत्यपि वक्तु शक्यते ॥

## जगतोऽनिर्वचनीयाविद्यामायाकार्यत्वे प्रमाणम् –

२१६ कथ मायानिर्मितत्व जगत ? –

(१) मायानिर्मितत्व जगत 'माया तु प्रकृति विद्यात्', 'इन्द्रो मायाभि पुरुरूप ईयते', 'माया ह्येषा मया सृष्टा' इत्यादिशास्त्रेभ्योऽव गम्यते ॥ इ सि पा ३६

(२) मायेति सदसत्त्वाभ्याम् अनिर्वचनीया अविद्या उच्यते । ननु 'उच्यते अनिर्वचनीया' इति च विप्रतिषिद्धम् । नाय दोष । 'सदसत्त्वा भ्याम्' इति विशेषणात् । सा हि युक्त्या निरूप्यमाणा न 'अस्ति' इति

निश्चित्य वक्तु शक्या । नापि नास्तीति । सदसद्विलक्षणत्वेन तद्वचनानर्हत्वात् । तेन अनिर्वचनीया न पुनरवाच्येति । सदसत्त्वाभ्यामिति विशेषणश्रुतवतोऽपि ईदृक् चोद्य तवैव शोभते ॥ इ सि पा ३५

[ 'सत्त्वासत्त्वाभ्यामनिर्वचनीया इति चेत् । अनिष्टोत्तरमेतत ' (भा सू पा ९५) इति भास्करोक्तव्यपोद्धरयत्न एष ॥ ]

(३) ननु सदसत्त्वाभ्याम् अनिर्वचनीयाविद्याकार्यम् अनिर्वचनीय नाम किञ्चित् प्रसिद्ध नैव लोकेऽस्ति । यदि स्यात्, तद्वत् जगदपि अनिर्वचनीयमिति प्रतिज्ञायेत । न त्वस्ति । नैष दोष । उक्तलक्षणस्य शुक्तिरजतादे प्रसिद्धत्वात् ॥ इ सि पा ३८–३९

अत्र प्रस्थाने अविद्यामाययोरैक्यमिष्टम् । 'स्वाविद्यामायाव्यपाश्रयेण समस्तजगदुत्पत्त्यादिहेतुत्वेन महदाद्यशेषकार्यविचित्रविग्रह ब्रह्म (इ सि ३५) इति निष्पचरितैक्यप्रतिपादनात् । भाष्यप्रस्थाने तु –

(अ) अविद्याकल्पिते नामरूपे सर्वज्ञस्येश्वरस्य माया शक्ति , प्रकृतिरिति – इति च श्रुतिस्मृत्योरभिलप्येते ॥ सू भा २ १–१४

(आ) अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्ति ॥ सू भा १–४–३

इति चाविद्याकल्पितत्वेनैव नामरूपमाया निर्दिष्टा । युक्त च तत् । विद्याविद्ययोरैकाधिकरण्याय अविद्याया अन्त करणावच्छिन्नात्माश्रयत्वेनैव स्वीकर्तुमुचितत्वात् 'नामरूपे व्याकरवाणि' (छा ६–३–२) इत्यादिश्रुतिभ्यो व्याकरणविषयत्वेनाभिमताया नामरूपमायायाश्च विषयकुक्षावेव निवेशयितव्यत्वाच्च –

(४) तदेकम् अनेकम्, वस्तु नो वा, भिन्नमभिन्न वा सावयव निरवयवम् – इत्यादिप्रकारैश्च निश्चित्य वक्तुमशक्यत्वाच्च ॥ इ सि पा ६३

इद त्विह प्रस्थाने वक्तव्य कथ मायाया अनिर्वचनीयत्वमिति । शुक्तिरजतस्य हि शुक्तिवदस्तित्व नास्ति, न च नृशृङ्गादिविकल्पवन्नास्तित्वमपि तस्येत्यनिर्वचनीयत्व भवेदपि । न हि मायाव्यतिरिक्तमसन्नाम किञ्चिदपि सभाव्यते येन तस्य सदसद्विलक्षणत्व भवेदिति । सर्वस्यापि मायाकार्यत्वात् तदतिरिक्तत्वानुपपत्ते ॥

**ब्रह्ममायाजगतां संबन्धः –**

२१७ ‘मङ्गलश्लोके महदादिजगन्मायाचित्रभित्ति नमामि’ इति ब्रह्म वर्णितम् इत्यवोचाम। तस्य विवरणमिदम् –

(१) मायया निर्मित चित्रम् मायाचित्रम्। चित्रमिव चित्रम्। तस्य भित्तिरिव भित्ति, आश्रयो या अनुभूति, सा महदादिजगन्माया चित्रभित्ति। चित्र चायनीयम् दर्शनीयम्। दृश्यमित्यर्थ। दृश्यम् अनुभूत्याश्रयमिति तस्य दौस्थ्य प्रकटयति, ‘सहस्रकिरणाश्रय तम’ ‘अङ्ग्याश्रय शैत्यम्’ इतिवत्। अथवा चित्र विचित्रम्। नानारूपम् इत्यर्थ। तस्य एकरूपा अनुभूतिराश्रय -इत्युक्त्या तदेव दौस्थ्य द्रढयति। ‘आकाशाश्रया स्पर्शरूपरसगन्धा’, ‘रज्ज्वाश्रयाश्च सर्पधाराभूच्छिद्र दण्डबलीवर्दमूत्रितत्वादय’ इतिवत्। यथा चित्रम् अत्यन्तसमायामपि भित्तौ अविद्यमाननिम्नोन्नतादिभ्रमान् जनयति, एवम् एकरूपायामपि अनुभूतौ विक्रियाविषयत्वभेदानात्मत्वासुखित्वपूर्णशरीरान्तर्बहिर्भावादिदिग्वि भागात्युच्चातिनीचादिभ्रमान् जनयतीति जगत् चित्रमिव चित्रम्। यथा च चित्र भित्ति मुक्त्वा पृथगात्मान न लभते, तत्रैव चोत्पत्तिस्थितिनाशाननुभवति, एव जगदपीति तत् चित्रम्। चित्रस्यापृथक्त्वेऽपि चित्रोपादानद्रव्य भित्त पृथक् आत्मवत्, नैव जगच्चित्रोपादानम् इत्याह–मायाचित्रमिति। माया ह्यनुभूते पृथक्त्वापृथक्त्वाभ्याम् अनिर्वचनीया। मायानिर्मितत्व जगत ‘माया तु प्रकृति विद्यात्’ इत्यादिशास्त्रेभ्योऽवगम्यते। यथा ‘सत्य ज्ञानमनन्त ब्रह्म’ इत्यादिशास्त्रेभ्यो यथोक्तलक्षण ब्रह्म अवगतम्, एव तस्य मायाव्यपाश्रयमेव जगत्स्रष्टृत्व बहुरूपत्व चावगन्तव्यम्। शास्त्र बलात्। अन्यथा अद्वैतविरोधाच्च॥ इ सि २५-२६

अत्र चित्ररज्जुसर्पादिनिदर्शनाद् दृश्यमात्मन्यध्यस्तमेवेति गम्यते। तत्र न्यायप्राप्तम् अध्यासविचारमनादृत्य जगत्कारणपरिशीलनमेव कुतोऽभ्यर्हिततया प्रथममानीतमिति शङ्कायाम् अस्य प्रस्थानस्याविद्या-मायोपादानकभेदवादप्रभेदत्वादित्येव समाधान प्रतिभाति॥

**कार्यकारणप्रक्रिया –**

२१८ यद्यप्यध्यास विना न कश्चिदपि व्यवहार आत्मान लभत इति स एव प्रप्रथम विचारणीय, तथाप्यध्यासस्यापि कारणत्वेनात्र

प्रस्थाने स्वीकृताया मायाया एवाश्रयत्वमुचितमिति कृत्वा सैवात्र निरूप्यते –

(१) माया, अविद्या, तम कारणम्, लय, शक्ति, सुप्ति, महासुप्ति निद्रा अक्षरम्, आकाशम् – इत्यादिशब्दैः 'मायां तु प्रकृतिं विद्यात्' इत्यादिश्रुतिस्मृतीतिहासपुराणादिवाक्येषु उक्ता या माया, सैव महदादेः समस्तस्य जगत प्रकृतिरिति यदुक्तमाद्यश्लोके तदुपपन्नमेव। यतो लोकेऽपि शुक्तिरूप्यादिभ्रमा सविषया मायामया प्रदर्शिता। तस्मात् रूप्यादिभ्रमवत् आत्मनोऽब्रह्मताभ्रमस्यापि ज्ञानमात्रापनोद्यत्वं सिद्धम्॥
इ सि १-३४, पा १४४

अत्रेदमवधेयम् –

(१) 'माया अविद्यादिशब्दैरुच्यते' इत्युक्तमत्र पञ्चपादिका-प्रक्रियाम् (पा २०) अवष्टभ्यैव। परमियान् विशेष। तत्र भाष्यानुसारेणाध्यासविचारमेव प्रस्तुत्य अविद्याशक्तिर्मायादिशब्दैः श्रुत्यादिषु व्यपदिश्यत इत्युक्तम्। इहपुनर्दृग्दृश्यविवेकं प्रस्तुत्य दृश्यस्य दृश सकाशाद् भिन्नत्वम् अभिन्नत्वं भिन्नाभिन्नत्वं वा नोपपन्नमित्यनिर्वचनीयत्वमेव परिशिष्यत इति प्रतिपाद्य, मायाया एव दृश्यभ्रमबीजत्वमुक्तम्, तस्यैव चाविद्यादिशब्दैर्व्यपदेश्यत्वं प्रतिज्ञायत इति च। उभयत्रापि तु मायाविद्ययो पर्यायत्वं प्रकृतिशब्दवाच्यत्वं च श्रुत्यन्तेषु कुत्राप्यदृष्टमेव स्वीक्रियत इत्यश्रुतप्रक्रिया समाना, भाष्यविगानं च॥

(२) ननु मायाशब्द प्रज्ञानामस्वपि पठ्यते। अतो जगत्प्रकृतेर्मायाया अनिर्वचनीयतैवेति कुत सिद्धम्? – इति चेत्, तन्न। तत्कार्यस्य द्वैतप्रपञ्चस्य तज्ज्ञानस्य च श्रुतिमुखादेवानिर्वचनीयतावगमात्। तथा हि यथा 'इह घटो नास्ति' इति, अन्यत्र सिद्धो घटोऽन्यत्र निषिध्यते, न तथा 'नेह नानास्ति किञ्चन' 'मृत्यो स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादिवाक्यैर् यत्र सिद्धं द्वैतं तद्दर्शनं वा अन्यत्र निषिध्यते। किं तु तत्रैवाविद्योपस्थापितं 'नेदं रजतम्' इतिवत्। अतो रूप्यवत् द्वैततद्दृष्ट्यो श्रुत्यैवानिर्वचनीयत्वनिश्चयात्, तत्कारणमपि तादृगेव श्रुत्युक्तम् इति निश्चीयते। कार्यानुरूपत्वात्, कारणस्य। न च वस्तुन कार्यकारणभावो

युक्तिमान् इत्युक्तम्, वक्ष्यते च । अज्ञानामत्वेऽपि मायाशब्दस्य न ब्रह्म नामत्वम् । इतरेषा नाम्नाम् अब्रह्मनामत्वात् । मायिन तु महेश्वरम्' इति ब्रह्मण पृथक्कृतत्वात् । तस्य च कूटस्थस्य बोधमात्रवपुष साक्षाज्जगत्प्रकृतित्वायोगात् । अतो बुद्धिनाम स्यात् । बुद्धेश्च न कारणत्वम् । अनित्यत्वात्, स्वय कार्यत्वात्, कार्यस्य च कारणत्वस्य प्रत्युक्तत्वात् । बुद्धिकार्यत्वे चाकाशादेस्तदनन्यत्वादनित्यत्व तद्बोध्यत्व च प्रसज्येत । न हि बुद्धेर्बुद्धिबोध्यत्वमित्युक्तम् वक्ष्यते च । न च बुद्धिकार्य जगदिति वेदवादिनामिष्टम् । अतो जगत्प्रकृतिर्माया अनिर्वाच्या अविद्यैवेति सिद्धम् ॥

इ सि १-३५, पा १४४ १४५

अत्र बहुपरिशीलयितव्यमस्ति । अतो यथोदाहृतग्रन्थभाग विभज्य विमक्ष्याम --

(१) यत्तावदुच्यते जगत्प्रकृतिर्माया अनिर्वाच्या अविद्यैवेति । तद्वेदान्तमर्यादाविरुद्धम् । 'यतो वा इमानि भूतानि जायन्ते ।' (तै ३-१), 'ऊर्ध्वमूलोऽवाक्शाख' (का ६-१), 'अक्षरात् सभवतीह विश्वम्' (मु १-१-७), 'आत्मन एष प्राणो जायते' (प्र ३-३), 'एष सर्वेश्वर प्रभवाप्ययौ हि भूतानाम्' (मा ६), 'स इमाल्लोकानसृजत' (ऐ १-२), 'तत्तेजोऽसृजत' (छा ६-२-३), 'अस्मादात्मन सर्वाणि भूतानि व्युच्चरन्ति' (बृ २-१-२०)– इति सर्वेष्वपि वेदान्तेषु ब्रह्मण एव प्रकृतित्वावगमात् । 'अहमादिश्च मध्य च भूतानामन्त एव च' (गी १०-२०) इति भगवद्वचनात् । 'जन्माद्यस्य यत' (वे सू १-१-२), 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (वे सू १-४-२३) इति बादरायणीयसूत्राच्च ॥

(२) यत्तूच्यते 'नेह नानास्ति किञ्चन' इत्यादिश्रुतिभिर्ब्रह्मण्येवाविद्योपस्थापित निषिध्यते 'नेद रजतम्' इतिवदिति । तत्रोमिति ब्रूम । जगतो ब्रह्मात्मत्वज्ञापनार्थमेव हि तत्कारणकत्व श्रुत्या बोध्यते । अतस्तन्निषेध, तदात्मत्वप्रतिपादन च युज्यत एव । 'अथात आदेशो नेति नेति' (बृ २-३-६), 'ब्रह्मैवेद विश्वम्' (मु २-२-१२) इति च ॥

(३) यत्पुनरुच्यते रूप्यवद् द्वैतदृष्टे श्रुत्यैवानिर्वचनीयत्वनिश्चयात् तत्कारणमपि तादृगेव श्रुत्युक्तमिति निश्चीयत इति । तन्नानुमन्यामहे । न हि रूप्यवदनिर्वचनीयत्वोक्तिरनिर्वचनीयकारणसूचनार्था, किं तर्हि सत एव ब्रह्मणो जगद्रूपेण भावोऽविद्यया शुक्त्यादेरिव रूप्यादिरूपेणेति निदर्शनार्था । यथाहुरभियुक्ता –

(अ) प्रभवः सर्वभावानां सतामिति विनिश्चयः ॥ गौ. का. १-६

(आ) अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता ।
सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः ॥ गौ. का. २-१७

इति च ॥

(४) यत्तु कार्यानुरूपत्वं कारणस्य । न च वस्तुनः कार्यकारणभाव इति च, तत्र ब्रूमः । न तावत् कार्यकारणभावे आनुरूप्यं तन्त्रम् । अत एव हि 'न विलक्षणत्वात्' (वे. सू. २-१-४) इत्यनेन जगद् ब्रह्मप्रकृतिकमिति नोपपद्यते, तस्य विलक्षणत्वाद् ब्रह्मणः – इति साङ्ख्येन चोदिते भगवान् बादरायणः प्रत्याह 'दृश्यते तु' (वे. सू. २-१-६) इति । वस्तुनः कार्यकारणभावो नेति तु अभिसत्यम् । यतो कारणात्मना विद्यमानस्यैव मायया कार्यात्मना जन्म, विद्यमानादेव च कारणात् कार्यस्य मायया जन्म – इत्याहुरभियुक्ताः ।

(अ) सतो हि मायया जन्म युज्यते न तु तत्त्वतः ॥ गौ. का. ३-२७

इत्यादिवचनदर्शनात् । न च 'मायया जन्म' इत्युक्त्या मायाप्रकृतिकत्वमेवोक्तं भवतीति प्रत्युत्थातव्यम् । न हि 'मायया जन्म' इति कारणप्रतिपादनार्थं वचनम्, किं तु तात्त्विकजन्मप्रतिषेधार्थमेवेति प्रकरणादेवावगम्यते । उक्तं चैतदन्यत्रापि –

(आ) प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ गौ. का. १-१७

इति । किमर्थं तर्हि शुक्तिरूप्यादिवचनमिति चेत्, पुरस्तात् ख्यातिबाधवादपरीक्षायां तद्वक्ष्यामः ॥

(५) एतेन 'कूटस्थस्य बोधमात्रवपुष साक्षाज्जगत्प्रकृतित्वायोगात्' – इत्यपि व्याख्यातम् । न हि वेदान्तिनो ब्रह्मण साक्षात्कारणत्व प्रतिपादयितु प्रवृत्ता, अपि तु सर्वस्यापि जगतो ब्रह्मात्मनैव सत्त्वम् । कथ तर्हि ब्रह्मणो जगद्रूपेण परिणाम ब्रूते श्रुतिरिति चेत् । अत्र भाष्यकारा –

> (उ) अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्व प्रतिपद्यते । पारमार्थिकेन च रूपेण सर्वव्यवहारातीतम् अपरिणतमवतिष्ठते ॥ सू भा २ १-२७, पा २१३

इति । नन्विष्टसिद्ध्याप्येतदेवोक्त मायैव कारण न ब्रह्मेति ब्रुवत्या । न । कार्यकारणभाव मृषैवात्मनि विभाव्यते, तच्च विभावनम् अविद्याकल्पितनामरूपलक्षणोपाधिवशात्, न स्वत , ते च नामरूपे व्याकृते अव्याकृते वा अविद्याकल्पिते एवेति न परमार्थत कार्यकारणभाववानात्मा – इति **भाष्यकारीया प्रक्रिया । इष्टसिद्धौ तु** जगत् अनिर्वचयीयमिति श्रुतियुक्तिभ्या निर्धार्यते , अनिर्वचनीयस्य अनिर्वचनीयमेव कारणमिति युक्तम् इत्यत , अनिर्वचनीयैव माया अविद्यापराभिधाना कारणम्, तादृशमायारचितजगच्चित्रभित्तित्वमात्मन इति प्रक्रियान्तरम् इति वैषम्यात् ॥

(६) यदप्युच्यते प्रज्ञानामत्वेऽपि न ब्रह्मनाम स्यात् मायेति, 'मायिन तु महेश्वरम्' इति ब्रह्मण पृथक्कृतत्वात् इति–तत्तथैवास्तु , त्वदिष्टा प्रकृतिरविद्याशब्दिता इति तु न तत सेत्स्यति । तत्कथम् ? न हि माया नाम लोकत सिद्ध किञ्चिद् वस्तु, येन तदनूद्य तस्या प्रकृतित्व विधीयेत । जगत प्रकृति कि वास्तवी उत नेति विशये, ता मायां विद्यात् इत्युच्यते । अविद्याकल्पिता मिथ्याप्रतीतिमात्रलक्षणा विद्यात् इत्यर्थ । 'मायिन तु महेश्वरम्' इति वाक्यशेषादप्येष एवार्थ इत्यवसीयते । न हि कश्चिन्मायिनमुद्दिश्य तस्य महेश्वरत्व विधीयत

इति शक्य वक्तु तत्र । यथैव मायाऽधीना माया, एव परमेश्वराधीना प्रकृति, सा च मायासरूपा इति खलु ऋज्वी व्याख्या वाक्यस्येति । 'इन्द्रो मायाभि पुरुरूप ईयते' इत्यादिस्थलेषु 'मायाभि' इति प्रज्ञावाचक एव मायाशब्द । तत्राप्यवास्तवत्वमेव गम्यते बहुरूपत्वस्य । तथा ह्यभियुक्ता –

(ऊ) नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ।
अजायमानो बहुधा मायया जायते तु स ॥ गौ का ३-२४

इति । भाष्य च –

(ए) ननु प्रज्ञावचनो मायाशब्द । सत्यम् । इन्द्रियप्रज्ञाया अविद्यामयत्वेन मायात्वाभ्युपगमात् अदोष । मायाभि इन्द्रियप्रज्ञाभि, अविद्यारूपाभि -इत्यर्थ ॥ गौ का भा ३-२४, पा २१८

## प्रातिभासिकार्थस्य कारणमज्ञानम् –

२१९ अविद्याज्ञानादिशब्दा मायावाचका (इ सि पा १४४) अज्ञानम् इति ज्ञानविरोधात्, ज्ञानपर्युदासेन वा उच्यते, तदेवानिर्वच नीय जडात्मक मायादिशब्दैरपर्युदासेनाप्युच्यते (इ सि पा ६९) । अज्ञानकार्य जगदित्यत्र च शुक्तिरजतादिरेव दृष्टान्त (इ सि पा ३९) इति विमुक्तात्मदर्शनम् । तत्रैतद्दृष्टान्ताधारेणैव इष्टसिद्धे प्रक्रिया प्रायशो वितानितेत्यत, तत्परीक्षा इदानी कर्तव्यत्वेन प्राप्ता ॥

(१) सत्त्वे न भ्रान्तिबाधौ स्ता नासत्त्वे ख्यातिबाधकौ ।
सदसद्भ्यामनिर्वाच्याविद्या वेद्यै सह भ्रमा ॥ इ सि १-९

इति सग्रहश्लोक । अस्य विवरणम् –

सत्त्वे शुक्तिरूप्यस्य तद्धीर्न भ्रान्ति स्यात् । सत्यरूप्यधीरिव । तद्वदेव च नास्या बाध । असत्त्वे तु नृशृङ्गवत् तस्य न ख्याति । अतो न भ्रान्तिबाधौ स्याताम् । ननु रूप्यस्य सत्त्वेऽसत्त्वे च न भ्रान्तिबाधौ सस्त इत्यवोच , न च सदसत्त्वे विरोधात् । न च प्रकारान्तरमस्ति ।

अतस्तत्प्रसिद्धिर्निर्मूला इति चेत् । तन्न । सदसत्त्वाभ्यामनिर्वचनीयाविद्या त्मकत्वाभ्युपगमात् रूप्यतज्ज्ञानयो ॥ इ सि १-९, पा ४७

(२) न हि ज्ञेयस्य निर्वाच्यत्वे तज्ज्ञानस्य निर्वचनीयत्व न्याय्यम् । तज्ज्ञानत्वहानात्, ज्ञानान्तरवत् । ज्ञानस्य च निर्वाच्यत्वे ज्ञेयस्यापि तथात्व स्यात् । अन्यज्ञानज्ञेयवत् । अतस्तयोरनिर्वचनीयत्व सिद्धम् ॥

इ सि पा ४८

(३) कादाचित्कत्वाच्च तयो कारण मृग्यम् । न च निमित्तकारण मात्रात् कार्यसिद्धि । अत उपादान च मृग्यम् । न चामत्यस्य साक्षात् सत्यमुपादान दृष्टम् । सत्योपादानत्वे च घटादिवत् सत्यत्व मानगम्यत्व च स्यात् । तच्च नेष्टम् । अत, तदनुरूपम् अनिर्वचनीयमेवोपादानम् एष्टव्यम् । तच्च नान्यदज्ञानात् अनादि समस्ति । न च सादेरुपादानता । अनन्वयात्, अनवस्थानाच्च ॥ इ सि १-९, पा ४८

इद त्विह वक्तव्यम् सत्त्वासत्त्वाभ्यामनिर्वचनीयत्वात्, शुक्तिरूप्या दीना कि स्वरूपेण मिथ्यात्वमात्र विवक्षितम्, आहोस्वित् अनिर्वचनीया नाम ये केचित् पदार्थास्तत्स्वरूपत्वम् ? इति । आद्ये न विवाद । द्वितीये तु न सर्ववादिसप्रतिपन्नास्ते, न च लोकसिद्धा । न च तेषा स्वरूप निर्धार णार्हम् । निष्फलत्वात् तद्विचारणस्य । न हि ते विद्यमाना पदार्था, येन तन्निर्धारणप्रयास सार्थको भवेत् । शुक्त्यादिरूपेणैव तेषा निर्धारण तु सप्रयोजनम्, रागद्वेषभयादिदूरीकरणात् । यथोक्तमभियुक्तै –

(अ) भावैरसद्भिरेवायमद्वयेन च कल्पित ।
भावा अप्यद्वयेनैव तस्मादद्वयता शिवा ॥ गौ का २-३३

इति । भाष्यकाराश्चैना कारिकामित्थ व्याचक्रु –

(आ) यथा रज्ज्वाम् असद्भि सर्पधारादिभिरद्वयेन च रज्जुद्रव्येण सता 'अय सर्प, इय धारा' 'दण्डोऽयम्' इति वा रज्जुद्रव्यमेव कल्प्यते, एव प्राणादिभिरनन्तैरसद्भिरेवाविद्यमानै न परमार्थत अद्वयेन च परमार्थसता आत्मना रज्जुवत् सर्वविकल्पास्पदभूतेनाय स्वयमेवात्मा कल्पित, सदा एकस्वभावोऽपि सन् । ते च प्राणादिभावा अपि अद्वयेनैव सता आत्मना विकल्पिता । न हि निरास्पदा काचित् कल्पना उपपद्यते ।

अत सर्वकल्पनास्पदत्वात्, स्वेनात्मना अद्वयस्य अव्यभिचारात् कल्पनावस्थायामपि अद्वयता शिवा । कल्पना एव त्वशिवा । रज्जुसर्पादिवत् त्रासादिकारिण्यो हि ता । अद्वयता अभया, अत सैव शिवा ॥
का भा पा २०७

यत्तूच्यते ज्ञेयस्यानिर्वाच्यत्वे तज्ज्ञानस्याप्यनिर्वचनीयत्व युक्तम् । ज्ञानस्य च निर्वाच्यत्वे ज्ञेयस्यापि तथात्व स्यात् – इति । तत्र विभज्य वदनीयम् । प्रथम तावत् ज्ञानशब्देन कि वृत्तिरुच्यते, कि वा ज्ञेयावगति ? यदि वृत्तिलक्षण ज्ञानम्, शुक्त्यादीना रूप्यादित्वेन ज्ञानम् अतस्मिंस्तद्बुद्धिरूपत्वात् मिथ्याध्यास एवेति सर्वैरप्यङ्गीकर्तव्यम् । 'न हि तत्र रूप्यमासीत् । भ्रान्तेन तु तथा विकल्पित मया' इति बाधकाले ज्ञानस्यापि मिथ्याविकल्पत्वेन निर्धारणात् । अथावगतिर्ज्ञानम् । न तस्या मिथ्यात्वमस्ति । न हि शुक्ति रूप्यत्वेन निश्चिन्वान, रूप्य मिथ्येत्यध्यवस्यन्नपि मिथ्यारूप्यावगतिमपि मिथ्येति मन्यते कश्चित् 'न मया तदानी रूप्यमित्यवगतम्' इति वा । अत एव भाष्यकारा आहु –

(इ) 'यद्यपि स्वप्नदर्शनावस्थस्य सर्पदशनोदकस्नानादिकार्यमनृतम्, तथापि तदवगति सत्यमेव फलम् । प्रतिबुद्धस्याप्यबाध्यमानत्वात् । न हि स्वप्नादुत्थित स्वप्नदृष्ट सर्पदशनोदकस्नानादिकार्यं मिथ्येति मन्यमान, तदवगतिमपि मिथ्येति मन्यते कश्चित् ॥ सू भा २-१-१४, पा १९९

इति । एतेन 'ज्ञानस्य निर्वाच्यत्वे ज्ञेयस्यापि तथात्वम्' इत्यपि व्याख्यातम् । यदि ज्ञान तत्तद्विषयवृत्तिरूप मतम्, तर्हि नास्ति ज्ञानस्य सत्यत्व तद्विषयस्य वा रूप्यादे । अथावगति, न तस्या मिथ्यात्वमस्ति 'यद्यपि रूप्यमित्येवावगत मया, तथापि शुक्तिकैव तथा विकल्पिता तदानीमपि' इति बाधकालीनावगत्यापि सत्यभूतया मिथ्यारूप्यस्य तज्ज्ञानस्य च मिथ्यात्वेनैव विषयीकरणदर्शनात् । न ह्यवगतिरूपस्य ज्ञानस्य बाधकालीनस्य सत्यत्वेऽपि तावता रूप्यस्यापि तथात्व शक्यमास्थातुमिति । वक्ष्यति हीष्टसिद्धिरपि –

(ई) सत्यविषयत्व तदभावश्च प्रामाण्यमप्रामाण्य च, न स्वरूप सत्यत्वम् असत्यत्व च ॥ इ सि १-९, पा ६२

इति । तेन ज्ञानस्य सत्यत्वेऽपि ज्ञेयस्य मिथ्यात्वमक्षतम् । मिथ्याभूतस्य मिथ्यात्वेनैव निश्चये ज्ञानस्य प्रामाण्यम्, सत्यत्वेनावसितौ तु न प्रामाण्य भविष्यतीत्यन्यदेतत् ॥

यत्पुनरुच्यते ‘कादाचित्कत्वाच्च तयो रूप्यतज्ज्ञानयो कारण मृग्यम्’ इति । अत्र ब्रूम । शुक्तिरूप्यादे कादाचित्कत्वेऽपि मिथ्या-विकल्पमात्रत्वात् न तस्य कारण मृग्यम् । तज्ज्ञानस्य च मानसविकल्पना-मात्रत्वात्, विकल्पनायाश्च शुक्त्यादितत्त्वाविवेकनिबन्धनत्वात् तन्निमित्त कारण तावन्निश्चितम्, तदुपादानकारण च मनस्त्वेन निश्चितमेवेति तस्या अपि कारण न मृग्यम् । न हि भ्रान्तिविषया वस्तुसन्त, येन तेषा कारणादिमार्गणमर्थवत् स्यात् । न च मानसविकल्पनाया वस्तुतत्त्व विवेकाभावपूर्वानुभूतवस्त्वन्तरवासनादिव्यतिरेकेण कारणान्तर शक्य कल्पनमिति ॥

## भ्रान्तिसंशयज्ञानाभावादिविलक्षणत्वमज्ञानस्य –

२२० आभासमात्रशरीराणा शुक्तिरजतादीना मनोविकल्पनामात्रत्व मविज्ञाय तेषा जन्मनाशादिकल्पन तत्कारणादिगवेषण च यत् पञ्च-पादिकाया बीजरूपेणोपक्षिप्तम्, तदेव च प्रपञ्चितमिष्टसिद्ध्यादिप्रस्थानेषु । मण्डनादयस्तु भ्रान्तिरेव विपरीतग्रहणलक्षणा अविद्या परमात्मनि जीवत्व-कल्पनाहेतुरिति मन्यन्ते स्म । तन्निराकरणाय भ्रान्तिव्यतिरिक्तमेवाज्ञान-मुपादान प्रातिभासिकविषयस्येति सिषाधयिषतीष्टसिद्धि –

(१) भ्रान्तिरेव भ्रान्त्यन्तरकारणम्, तस्या अप्यन्या तस्या अप्यन्येति अनादित्वाद्भ्रान्तीनामेव – भ्रान्तितत्संस्काराणा वा – बीजाङ्कुरवत् कार्य-कारणतायोगात् नान्यत् कल्प्यम् इति चेत् । तन्न । अनन्वयादिना उक्तोत्तरत्वात् । न हि कार्यस्य कार्यान्तरे अन्वय पिण्डस्येव घटे,

अनन्वित च नोपादानम्, पिण्ड इव घटस्य । या त्वन्विता मृत् सैवोपादान पिण्डादीना न तु तेऽन्योन्यस्य । एव भ्रान्तिसशयतत्सस्काराणामपि कार्यत्वे नान्योन्योपादानता । यत्तु तेष्वागमापायिष्वन्वेति, तदेव तेषामुपादानमज्ञानम् । तस्य भावे तेषा भावात् । अभावे चाभावात् ॥

इ सि १-९, पा ४८

अत्र भ्रान्तिसशयतत्सम्कारेष्वनुगतम् अज्ञानमस्ति तदुपादानम् इति तर्केणोपपादितम् । पर तु मृदिव घटघटिकोदञ्चनादिष्वनुगता किमज्ञानमस्ति सर्वेषामनुभवे ? अस्ति चेत् किमिति वादिविप्रतिपत्तिस्तत्सद्भावे ? किमिति वा अत्र प्रयासस्तत्साधने ? — इति न विचारितम् । एतच्चोत्तरत्राविद्याया अनुभवगम्यत्वपरीक्षावसरे पुनरपि विम्रक्ष्याम ॥

वार्तिककारैश्च 'न जानामीत्यविद्या' (तै वा २-१७६) इति ब्रुवद्भिर्ज्ञानाभाव एवाविद्यात्वेन स्वीकृत । तदिद निराचकारेष्टसिद्धि —

(१) ज्ञानाभावव्यतिरेकेणाज्ञान न जानामीति चेत्, मैव वोच । 'नाज्ञासिष शुक्तिम् इदानी तु जानामि', 'अज्ञान निवृत्तम्, पुनर्न जानामि' इत्यज्ञानतन्निवृत्त्यो प्रसिद्धत्वात् । तदेवाज्ञान ज्ञानाभाव इति चेत् । तन्न । अभावप्रमाणाप्रमेयत्वात् । प्रत्यक्षम् अभावो वा अभावस्य प्रमाणम् । न ताभ्या ज्ञानाभ्या ज्ञायतेऽज्ञानम् । अपरोक्षत्वाच्च नाभावज्ञेयम् । प्रत्यक्षविशेषणश्चाभाव प्रत्यक्षज्ञानगम्य । न चात्मा प्रत्यक्षज्ञानप्रमेय । घटादिवदनात्मत्वप्रसङ्गात् । प्रमेयत्वे एकस्य प्रमातृत्वप्रमेयत्वानुपपत्ते । प्रमात्रन्तराभावाच्च । भावेऽपि तस्यैवात्मत्वात् । अत एवात्मनोऽप्रमेयत्वात् तस्याज्ञान नाभावप्रमाणेनापि प्रमेयम् । न ह्यभावाश्रयमप्रतीत्य अभाव प्रतियन्ति अभाववादिनोऽपि । कथमप्रमाण भातीति चेत् । रूप्यवत् । न हि शुक्तिरूप्य केनचित् प्रमाणेन भाति । अमिथ्यात्वप्रसङ्गात् । तथापि भाति । एवमज्ञानमपि भाति, अनुभवादेव ॥

इ सि १-९, पा ६५-६६

(२) यदि नाज्ञान प्रमाणाभाव, कस्तर्ह्यसौ ? विमृश्यता स यदि कोऽप्यन्य प्रामाणिक समस्ति । नान्योऽपि समस्ति । आत्मनि ज्ञानाभावस्य

अप्रमेयत्वात्, अन्यत्र तस्याभावात् । इतरेतराभावोऽन्यत्राप्यस्ति इति चेत् । सोऽपि ज्ञानस्यात्मसबन्धिनोऽप्रमेयत्वात्, न प्रमेय । तस्मात्, न कश्चिज्ज्ञानाभाव प्रामाणिकोऽस्ति । अतोऽज्ञानमेव ज्ञानाभाव –इति चेत् । अस्तु । एवमपि नाज्ञानस्यानिर्वचनीयत्वहानि । ज्ञानाभावस्य अभाव-प्रमाणागम्यत्वादसत्त्वाप्राप्ते ॥ इ सि पा ६६

अत्राज्ञानसतत्त्व विभज्य विमर्शनीयम् । यदि 'शुक्ति न जानामि इत्ययमज्ञानानुभव, तर्हि शुक्ते प्रत्यक्षप्रमेयत्वात्, किमिति तदज्ञानस्य प्रत्यक्षाप्रमेयता ? 'शुक्ति जानामि, अतोऽज्ञान नास्ति मे' इति शुक्ति-गताज्ञानस्य अभावप्रमाणगम्यत्व वा किमिति न सभवति ? ये हि प्रत्यक्ष गम्यत्व शुक्त्यादे, मानसप्रत्यक्षगम्यत्व वा तज्ज्ञानस्य प्रतिजानते, अवश्य तेऽज्ञानस्यापि प्रत्यक्षगम्यत्वमभावप्रमाणगम्यत्व वा स्वीकुर्युरेव । अथ मनीषा, आत्मन प्रत्यक्षागम्यत्वात् तदज्ञानस्य नास्ति प्रत्यक्षगम्यत्वम् अभावगम्यत्व वा, अभावाश्रयाप्रतीतेरिति, यत्तु भात्यज्ञानम् अनुभवादेव भाति तदिति च । अस्त्वेवम् अभावाज्ञानवादिनोऽपि । न ह्यनात्माभाववत् आत्मज्ञानाभावेनापि प्रमाणगम्येन भाव्यम् इति नियन्तास्ति कश्चित् । न चैवमप्यज्ञानस्यानिर्वचनीयत्वमायातीति बिभीषिका । अनिर्वचनीयमेव खल्वात्माज्ञानम्, अविचारसिद्धत्वात् यथाहुर्नैष्कर्म्यसिद्धिकृतः –

(अ) 'सोऽयमेवमनुदितानस्तमितावगतिमात्रशरीर आत्मापि सन्न विचारितप्रसिद्धाविद्यामात्रव्यवहित एवातथैवेक्ष्यते' ॥ नै ३-११२

इति । न चैव ज्ञानाभाववाचोयुक्तिरयुक्ता भवेत् । अनिर्वचनीयवादिनापि ज्ञाननिषेधस्यावश्याश्रयणीयत्वात्, यथैवानिर्वचनीयम् इति व्यपदेशमात्रम्, एव ज्ञानाभाव इत्यपीति यत्किञ्चिदेतत् ॥

(३) न चाज्ञानमेव सर्वो ज्ञानाभाव इति नियन्तु शक्यम् । इतरेतराभावस्य विषयाश्रयत्वात्, अज्ञानस्य चात्मैकाश्रयत्वात् । प्रध्वसस्य चोत्पत्तेरिष्टत्वात्, 'अज्ञानमुत्पन्न मम' इति प्रतीत्यभावात्, अज्ञानस्य निवृत्तिप्रतीते, प्रध्वसस्य च निवृत्त्यनिष्टे । अथोच्येत – उत्पत्तिमत्त्वात्

प्रध्वसोऽपि विनाशी । न हि भावादन्यस्योत्पत्ति, भावस्य चोत्पन्नस्य घटवन्नाशो न्याय्य । तस्मात्, उत्तरोत्तरो भाव पूर्वस्य पूर्वस्य प्रध्वस, पूर्वं पूर्वं उत्तरोत्तरस्य प्रागभाव इति। तदापि द्वयोरप्यभावयोर्जनिमत्त्वात्, अज्ञानस्य च तदप्रतीते, न तयोरज्ञानता । ननु 'नष्ट ज्ञानम्' इति नाशजन्म भाति । भातु, तथापि नाज्ञानस्य जन्म भाति, तस्य प्रागभावा प्रतीते । ज्ञानस्यैव हि प्रागभावो भाति, न पुनरज्ञानस्यापि । तस्मान्नाज्ञान ज्ञानाभाव ॥ इ सि पा ६७

ज्ञानप्रागभाव एवाज्ञान ज्ञानभावे तन्निवृत्तेरिति चेत्, तन्न । अतत्प्रागभावस्यापि ज्ञानभावे निवृत्त्युपपत्ते । प्रदीपभावेनेव तमस । न हि प्रदीपस्य प्रागभावस्तम । तथापि भवन्नेव स तन्निवर्तयति । तथैव ज्ञानमप्यज्ञानम् अस्वाभावमपि भावमात्रेणैव निवर्तयितुमलम् इति, अज्ञान न ज्ञानाभाव इति सिद्धम् ॥ इ सि पा ६७-६९

अत्र स्वेष्टमज्ञान तार्किकमीमासोभयसमतज्ञानप्रागभावादिलक्षण-ज्ञानाभावाद् विलक्षणमिति तर्केणोपपादितम् । तत्र

(अ) प्रध्वसाभावोऽप्यारभ्यत इति न सभवति । अभावस्य विशेषाभावाद् विकल्पमात्रमेतत् ॥ तै भा अव पा २५९

(आ) यदि पुनरभावस्यापि विशेषोऽभ्युपगम्येत, उत्पलादीनामिव नीलत्वादि, ततो विशेषवत्त्वादेवाभावस्य भावत्वम् उत्पलादिवत् प्रसज्येत ॥ सू भा २-२-२६, पा २४५-२४६

(इ) एकस्याभाव, द्वयोरभाव, सर्वस्याभाव, प्रागभाव, प्रध्वसाभाव, इतरेतराभाव, अत्यन्ताभाव – इति लक्षणतो न केनचित् विशेषो दर्शयितु शक्य ॥ गी भा १८-४८, पा २७७

इति च प्रस्थानत्रयभाष्येष्वपि प्रत्याख्यातत्वादभावे विशेषस्य 'कीदृशोऽभावोऽज्ञानम्?' इति विकल्पनमेवाज्ञानजम् इत्यपि शक्य भणितुम् । अतो ज्ञानाभाव एवाज्ञानम्, तच्चाविचारितसिद्धमात्मनीति युक्तम् । वस्तुतस्तु विचार्यमाणे 'आत्माश्रितमज्ञानम्' इति चिन्तितुमपि न शक्यम्, यतो नात्मनि देशसबन्धोऽस्ति यत्राज्ञानमाश्रय लभेत, नापि कालसबन्धोऽस्ति

येन इदानीमज्ञानमस्ति भविष्यत्काले निवर्तिष्यते' इति बुद्धि समीचीना भवेत् यथा दुर्गातिकरकारा –

(ई) देशकालाद्यसबन्धाद्देशादेर्मोहकार्यत ।
नानुत्पन्नमदग्ध वा ज्ञानमज्ञानमस्त्यत ॥ बृ वा १-४-१४५२

इत्यपि शक्य वक्तुम् । अस्तु वैतद् यथा तथा । भावाभावविलक्षणमज्ञान शुक्तिरजताद्युपादानकारणत्वेनाभिमत कि तत्रान्वित सर्वत्र मृदिव घटादिषु ? – येनोच्यते 'भ्रान्तिसशयज्ञानसंस्काराणामपि कार्यत्वे नान्योन्योपादानता, यत्तु तेष्वागमापायिष्वन्वेति तेषामुपादानमज्ञानम्' (इ सि पा ४८) इति, 'अज्ञानजमपि ब्रह्मज्ञानमज्ञान दन्दहीति' (इ सि पा ६९) इति च ? ओमिति चेत्, 'अज्ञानजमिद रजतम्', 'अज्ञानरूपोपादाननाशान्नष्टमदो रजतम्' इति वा किमिति न प्रतीयत इत्यस्य प्रश्नस्य नोत्तर दृश्यत इष्टसिद्धाविति प्रागुक्त न प्रस्मर्तव्यमत्र ॥

## ख्यातिबाधविचारः –

२२१ शुक्तिरजतादिप्रातिभासिकविषयतज्ज्ञानयोरनिर्वचनीयत्व साधयितु ख्यातिबाधविचार प्रवर्तितोऽत्र –

रजत भाति यद्भ्रान्तौ तत्सदेके परे त्वसत् ।
अन्येऽनिर्वचनीय तदाहुस्तेन विचार्यते ॥
असत ख्यात्ययोगात् सद् बाधायोगादसत् सत ।
अतोऽनिर्वचनीय तदिति पक्षेषु युक्तय ॥
इ सि १-२, ३, पा ३९

इति प्रस्तुत्य (१) असत्ख्याति, (२) अन्यथाख्यातिस्त्रिविधा, (३) अख्याति, (४) आत्मख्यातिश्चेति वादचतुष्टय निराकृत्य स्वाभिमता अनिर्वचनीयख्याति प्रतिष्ठापितात्र । भाष्ये 'कोऽयमध्यासो नाम ?' इत्यध्यासलक्षणप्रणयनसमये 'त केचिदन्यत्रान्यधर्माध्यास इति वदन्ति, केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम इति, अन्ये तु यत्र

यदध्यास , तस्यैव विपरीतधर्मत्वकल्पनाम् आचक्षते ' इति मतान्तरा ण्युपन्यस्य ' सर्वथापि तु, अन्यस्यान्यधर्मावभासता न व्यभिचरति ' इति स्वमतस्य सर्वतन्त्रसमतत्व प्रदर्श्य, तत्र निदर्शनमुपन्यस्तम् " तथा च लोके अनुभव ' शुक्तिका हि रजतवदवभासते ', ' एकश्चन्द्र सद्वितीयवदिति ' " इति । शुक्तिकादे रजताद्यात्मना भानस्य लोकानुभवसिद्धत्वात् न तत्र विवादोऽस्तीति ख्यात्यन्तरपरीक्षाया फल्गुप्रयोजनत्वात् , न तत्र भाष्य कारै प्रयतितम् । **पञ्चपादिकाकारैस्तु** अध्यासस्यानिर्वचनीयाविद्याशक्त्यु पादानत्व स्वीकुर्वद्भि ख्यात्यन्तरपरीक्षा वितानिता, तथा **भामतीकारै-रप्यविद्याया** अध्यासरूपत्वमङ्गीकृत्यापि लयलक्षणाविद्यात्वेनाविद्याशक्ति स्वीकुर्वद्भि । अत्र पुन भावरूपानिर्वचनीयाविद्या शुक्तिरजतदृष्टान्तेनैव हृदय गमयितु महान् प्रयत्न आस्थित ख्यात्यन्तरखण्डने । तत्र यथोदाहृतद्वितीय श्लोकोक्तयुक्त्या असत ख्यात्ययोगात् , सतश्च बाधायोगात् वादान्तरेषु न भ्रान्तिसिद्धि , तस्मात् अनिर्वचनीयमेव रूप्यादीति ग्रन्थकृदभिप्राय ॥

अत्र यद्वक्तव्य तत्प्रागेवोक्तम् – रूप्यादीना यथाप्रतिभास रूपेण विकल्पमात्रत्वात् , न स्वास्पदशुक्त्यादिव्यतिरिक्तरूपसतत्त्व निर्धारण सप्रयोजनमिति । इष्टसिद्धिमते तु अनिर्वचनीयख्यातिसाधन तेन च प्रपञ्चस्यानिर्वचनीयत्वसिद्धि , ततश्च ब्रह्मणोऽद्वितीयत्वसिद्धि । तादृशब्रह्मदर्शनाच्च मोक्षसिद्धिरिति प्रयोजनानि कल्पितानीत्युक्तम् ॥

तत्रानिर्वचनीयख्यातिवादे आक्षेपपरिहारा ग्रन्थकारैरेव प्रदर्शिता

(१) ननु यत् सन्न भवति न तत् ख्याति खपुष्पादि, यच्चासन्न भवति न तद्बाध्यते सत्यरूप्यादि । अतोऽनिर्वचनीयत्वे रूप्यस्य सद सद्विपर्ययात् ख्यातिबाधौ अयुक्तौ स्याताम् । अत ख्यातेर्बाधाच्च अनिर्वच-नीय रूप्यादीत्ययुक्तम् (इ सि १–४२, पा १५०) इति सत्ख्याति वाद्याक्षेपे समाधानम् –

(a) त्वयाप्यसत ख्यातिजाती नेष्टे । न च सत शुद्धस्य बाधनाशौ युक्तौ । शुक्तेर्ब्रह्मणश्च तत्प्रसङ्गात् । अतोऽनिर्वचनीयत्व रूप्यादे सिद्धम् ॥
इ सि पा १५१

(b) जगतोऽपि सत्त्वाविशेषाद् ब्रह्मणोऽनन्यत्वाच्च कारण नास्ति । अस्ति चेत् ब्रह्मणोऽपि तत् स्यात्, तदनन्यत्वात् । स्वतोऽनन्यस्यापि चेत् जगतो ब्रह्म कारण स्यात्, स्वस्यापि स्यात् । न चेत् न जगतोऽपि, अविशेषात् । अन्यत्वेऽपि सच्चेत्, जगदजमकारण च भवेत्, ब्रह्मवत् । अतो न सतो जन्मनाशौ । असतस्तु त्वयापि तौ नेष्टौ । जगतश्च तौ श्रुतौ । अतोऽस्य अनिर्वचनीयत्व श्रुतियुक्तित सिद्धम् ॥ इ सि पा १५२

[अत्र जगतो यद्यसत्त्व नास्ति, सत्त्वेऽपि जन्मनाशौ नोपपद्येते, तावन्मात्रेण अनिर्वचनीयत्व कथम् ? यतो जगतो जन्मनाशौ श्रुतौ इति चेत् । तन्न । 'उपाय सोऽवताराय' (गौ का ३-१५) इत्यभियुक्तै सृष्टिश्रुते प्रयोजनान्तरस्यैव कथनात, 'ब्रह्मैवेद विश्वम्' (मु २-२-११), 'आत्मैवेद सर्वम्' (छा ७-२५-२) इत्यादिसावधारणश्रुते प्रपञ्चस्य परमार्थतो ब्रह्ममात्रत्वावधारणार्थैव श्रुतिरित्यर्थापत्तेरन्यथैव प्रक्षीणत्वात् ॥ ]

(२) 'यद्यसदिव अनिर्वाच्यमपि सत प्रतियोगि प्रसिद्ध स्यात् तदा 'सन्न भवति' इत्युक्ते सदेह स्यात् अनिर्वाच्य नु तत्, असन्नु तदिति । न तु तथा सशेरते जना ' (इ सि पा १६०) इत्यमद्वाद्याक्षेपे समाधानमिदम् –

(अ) किमसन्नाम सतो भेदेन अस्ति, उत नास्ति । अस्ति चेत् न तस्य तुच्छता । सत्त्वादेव । नास्ति चेत् असत् ख्याति – इत्यादिवचोऽयुक्तम् । अतस्तद्भ्रान्तिमूलमेव ॥ इ सि पा १६१

(आ) अख्यातस्वभावस्य च ख्यानासभवात्, अख्यातस्य ख्यातता चेत् क्रियेत अनिर्वाच्यस्यैव सा स्यात् । न क्रियते चेत्, न ख्यातिस्तस्य । स्वतोऽख्याते । अत ख्यातिरप्यनिर्वाच्यस्यैव जनिवत् । स्वय चानिर्वाच्यैव अतोऽभिव्यक्त्यनभिव्यक्ती अपि मयोक्ते मायाकल्पिते एव, न तु सत्ये जनिध्वसवदेव । अतोऽप्यख्यातस्वभावस्य असतो न ख्यातिर्युक्ता । ननु अख्यातस्वभावत्वात् मायाया अपि न ख्यातिर्युक्तिमती । सत्यम्, अत एव सा माया, अन्यथा तत्ख्याते सत्यत्वात् सापि सत्यैवेति न माया स्यात् ॥
इ सि १-११९, पा १९१

(अ) अलाते स्पन्दमाने वै नाभासा अन्यतोभुव ।
न ततोऽन्यत्र निस्पन्दान्नालात प्रविशन्ति ते ॥
न निर्गता अलातात्ते द्रव्यत्वाभावयोगत ।
विज्ञानेऽपि तथैव स्युराभासस्याविशेषत ॥
विज्ञाने स्पन्दमाने वै नाभासा अन्यतोभुव ।
न ततोऽन्यत्र निस्पन्दान्न विज्ञान विशन्ति ते ॥
न निर्गतास्ते विज्ञानाद् द्रव्यत्वाभावयोगत ।
कार्यकारणताभावाद् यतोऽचिन्त्या सदैव ते ॥

गौ का ४-४९ ५२

[अत्र ऋजुवक्राद्याभासानामचिन्त्यस्वभावाना कार्यकारणता नास्ति, अलातमेकमेव त्वस्ति यथा, तथा विज्ञानमेकमेव तथ्य वस्तु न तु द्वैताभास इत्युक्तम् ।]

(आ) तद्धि द्वितीयचन्द्रस्यासत्त्व यदतैमिरिकेण चक्षुष्मता न गृह्यते । नैव न गृह्यत इति चेत् । न । सुप्तसमाहितयोरग्रहणात् ॥

तै भा २-८, पा ३०९

[द्वितीयचन्द्रो नास्त्येव, अदुष्टचक्षुषा अगृह्यमाणत्वात् इत्युक्तमत्र ॥ ]

(इ) येन करणेन ब्रह्मविद् हविरग्नौ अर्पयति तद् ब्रह्मैवेति पश्यति, तस्यात्मव्यतिरेकेणाभाव पश्यति । यथा शुक्तिकाया रजताभाव पश्यति । तदुच्यते ब्रह्मैवार्पणमिति यथा यद्रजत तच्छुक्तिकैवेति ॥

गी भा ४ २४, पा ७३

[अत्र रजतस्य शुक्तिकायामभाव एव, शुक्तिकैव तस्य तत्त्वम्-इत्युक्तम् । न तु अनिर्वचनीय रजतमुत्पन्नमज्ञानादिति । एव हविरपि ब्रह्मविद्दृष्ट्या ब्रह्मैवेत्यवधारितम् ॥ ]

(ई) निश्चितायां यथा रज्ज्वा विकल्पो विनिवर्तते ।
रज्जुरेवेति चाद्वैत तद्वदात्मविनिश्चय ॥ गौ का २-१८

[अत्र तत्त्वनिश्चये सर्पधारादिविकल्पो विनिवर्तते, रज्जुरेव भवतीत्युक्तम् । न तु निश्चये सति सर्पादेरनिर्वचनीयत्वमवतिष्ठत इति ॥ ]

## शुक्त्यज्ञानतत्त्वम् –

२२२ शुक्तिरूप्यकारणमज्ञानम् अनादीति प्रस्थानेऽस्मिन्

स्थापितम्, ब्रह्मविद्याविनाश्यअज्ञानमेव तदिति च। तत्रेमानि वाक्यान्यनुसंधेयानि –

(१) कार्यस्य कारणत्वानुपपत्ते, नित्यमेव कारणमिति कारणभावे कार्यं भवत्येवेति नियमो नास्त्येवेति स्थितम् ॥ इ सि पा ५४

(२) कालयोगिना कार्याणा कालेनैवोत्पत्त्यादिनियमाभ्युपगमेन कार्याणा कालनियम कथम्? – इत्यस्य चोद्यस्य परिहृतत्वात्, अकालयोगिनि तु कार्ये अस्य चोद्यस्यैवानुत्पत्ते, नित्यकारणपक्षे न कश्चिद्दोष इति स्थितम्। अत अनादिकस्यैव शुक्त्यज्ञानस्य शुक्तिरूप्यतज्ज्ञानोपादानता न्याय्या, न त्वन्यस्य कस्यचित् ॥ इ सि पा ५५–५६

अविद्याया अध्यासरूपत्वमङ्गीकृत मण्डनभामत्यादिप्रस्थानेषु, ज्ञानाभावत्वमुररीकृत वार्तिकप्रस्थाने। तदुभय प्रतिक्षिप्य 'अनाद्युपादान लक्षणैव सा इति न्याय्यम्, सर्वत्र कार्येष्वनुगमात्, न चाभावत्वमस्या, अभावस्यानुपलब्धिप्रमाणविषयत्वात्' इत्यादियुक्त्यवष्टम्भादनाद्यज्ञानम् अध्यासादिविलक्षण प्रत्युपस्थापितमत्र। तत्र भ्रान्तिलक्षणाविद्यावादिनस्तावदविद्या न भेदोपादानकारणमाहु, किं तु तत्कल्पिकाम्। कल्पनाधीनो भेद, भेदाश्रया च कल्पना – इतीतरेतराश्रयदोषपरिहाराय तु अविद्या तत्संस्कारयो अविद्याजीवयोश्च बीजाङ्कुरसतात्योरिवानादित्वमातिष्ठन्ते (ब्र सि 10, 33, बा भा पा १७, ३९, ४५, )। तत्रैव सति बीजाङ्कुरन्यायेनाविद्यातत्कार्यसन्तानमनादिमातिष्ठमानानामपि कार्ये कारणस्याननुगमान्नोपादानत्वमिति दूषण न स्थाने, अनुक्तपर्यनुयोगात्, किमु वक्तव्यमध्यासरूपाविद्याया अनादित्वम्, कालादेरपि कार्यत्वम्, तस्याश्च रज्जुसर्पादिवन्मिथ्याविकल्पमात्रत्वमातस्थुषामध्यारोपापवादप्रक्रियासप्रदायाध्वजुषा मते न तद्दूषण प्रसर लभेतेति। अतोऽभियुक्तवाक्यानि कानिचित् सांप्रदायिकप्रक्रियास्मारणार्थमत्रोदाहराम –

(अ) एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूप कर्तृत्वभोक्तृत्वप्रवर्तक सर्वलोकप्रत्यक्ष ॥ अध्या भा पा ३

(आ) तस्यापरमार्थरूपमविद्याकृत रज्जुसर्पादिसममुक्त पादत्रयलक्षण बीजाङ्कुरस्थानीयम् । अथेदानीमबीजात्मक परमार्थस्वरूप रज्जुस्थानीय सर्पादिस्थानीयोक्तस्थानत्रयनिराकरणेनाह ॥ मा भा ७, पा १८६

[अत्र कार्यकारणभावेन सबद्ध स्थानत्रय सर्पादिस्थानीयम् अविद्याकृत मध्यारोपप्रक्रियया उपन्यस्तम् अपह्नुत्य रज्जुस्थानीय तुरीय ज्ञाप्यत इत्याह ॥]

(इ) एतेन दिक्कालमन परमाण्वादीना कार्यत्व व्याख्यातम् ॥
सू भा २-३-७, पा २६८

[अत्राकाशवत कालस्यापि कार्यत्वप्रतिज्ञानात्, कार्यत्व ब्रह्मण्यध्यस्तत्वमेवेति गम्यते । कालयोगिपदार्थानामिवैव कालस्यापि कार्यत्वे कालान्तरापेक्षादोषग्रासप्रसङ्गात ॥ ]

(ई) सवृत्या जायते सर्व शाश्वत नास्ति तेन वै ।
सद्भावेन ह्यज सर्वमुच्छेदस्तेन नास्ति वै ॥ गौ का ४-५७

भाष्यम् – सवरण सवृति, अविद्याविषयो लौकिको व्यवहार । तया सवृत्या जायते सर्वम् । तेनाविद्याविषये शाश्वत नित्य नास्ति वै । अत उत्पत्तिविनाशलक्षण ससार आयत इत्युच्यते । परमार्थसद्भावेन तु अज सर्वम्, आत्मैव ॥ पा २४४

[अत्र कार्य नामाविद्याकल्पितत्वमेवेत्युक्तम् ॥ ]

(उ) तस्मात् क्षीरादीन्येव द्रव्याणि दध्यादिभावेनावतिष्ठमानानि कार्याख्या लभन्ते – इति न कारणादन्यत् कार्य वर्षशतेनापि शक्य निश्चेतुम्, तथा मूलकारणमेवान्त्यात् कार्यात् तेन तेन कार्याकारेण नटवत् सर्वव्यवहारास्पदत्व प्रतिपद्यते ॥ सू भा २-१-१८, पा २०७

[ अत्र 'नटवत्' इति, 'सर्वव्यवहारास्पदत्वम्' इति विकल्पास्पद सूचकशब्दप्रयोगेन च कार्य नाम रज्जुसर्पादिवन्मिथ्याकल्पितमेवेति गम्यते । अतोऽविद्यापरिणामलक्षणकार्यकारणप्रक्रिया न भाष्यकारस्य मनसि स्थितेति च ॥]

(ऊ) 'चेतन ब्रह्मैकमद्वितीय जगत कारणमिति यदुक्त तन्नोपपद्यते'। (सू भा २-१-२४, पा २१०) चेतनमेकमद्वितीय ब्रह्म क्षीरादिवद् देवादिवच्च अनपेक्ष्य बाह्यसाधन स्वय परिणममान जगत कारणमिति स्थितम् ॥ सू भा २-१-२६, पा २१२

[ अत्र सुस्पष्टमुक्तम् अद्वितीयमेव ब्रह्म जगत्कारणमिति । तेनाप्यध्यासलक्षणाविद्यावशेनैव ब्रह्म कारणमिति गम्यते ॥ ]

(७) प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मण सर्वशक्तियोग सभवति इत्येतदपि अविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव ॥

सू भा २-१-३१, पा २१५

[अत्रापि निर्विशेष ब्रह्मैव, अविद्याकल्पितनामरूपलक्षणेन व्याकृताव्याकृतात्मकेन सर्वशक्तियुक्त कारण च भवतीत्युक्तम् ॥ ]

यथोदाहृतवाक्यैर्ब्रह्मैव जगत्कारणम्, जगच्च तस्मिन् अविद्याध्यस्तमिति तत्कार्यमित्युच्यते एवैव च वेदान्ताभियुक्ताभिमता प्रक्रियेति स्पष्ट विज्ञायते । इष्टसिद्धिस्तु अनिर्वचनीयजगत कारणमनिर्वचनीयाज्ञान कूटस्थब्रह्मण साक्षाज्जगत्प्रकृतित्वायोगात् ' (इ सि पा १४५) इति स्वाभीष्टप्रक्रियासिद्ध्यर्थम् शुक्तिरूप्यादिस्थलेऽपि रूप्यादेरनिर्वचनीयमज्ञानम् अविद्यामायापराभिधानम् उपादानकारण प्रसाधयितु प्रयतत इति स्फुटम् । वक्ष्यति हि कण्ठरवेण –

मायाविद्यादिशब्दैर्या श्रुतिषु स्मृतिपूदिता ।
सा जगत्प्रकृतिर्भाग्या यतो मायामया भ्रमा ॥

इ सि १-३४, पा १४४

इति । तद्विवरणे च –

'तस्मात्, रूप्यादिभ्रमवत्, आत्मनोऽब्रह्मताभ्रमास्यापि ज्ञानमात्रापनोद्यत्व सिद्धम् ' इति ॥

(३) ननु शुक्तेरादिमत्या अज्ञान कथमनादि स्यात् ? नाय दोष अशुक्त्याश्रयत्वात् तस्य । ज्ञाश्रय हि तत् । ज्ञश्चानादि ॥ इ सि पा ५६

(४) कथमशुक्त्याश्रयत्वे 'शुक्त्यज्ञानम्' इति शुक्त्या व्यपदेश इति चेत्, शुक्तिज्ञानवत् । न हि शुक्तिज्ञान शुक्त्याश्रयम् । तस्या जडत्वात् । अत शुक्तिविषयत्वात् शुक्तिज्ञान तत् । तथा शुक्त्यज्ञानमपि ॥

(५) न हि शुक्तिरूप्ये कस्यचित् ज्ञानाज्ञाने स्त, सत्यत्वप्रसङ्गात् । सत्यरूप्यवत् । न च तत् सत्यम्, बाधात् । अत शुक्त्यज्ञानजमेव तत् ॥

इ सि पा ५६

(६) ज्ञाश्रयाज्ञानजस्यापि रूप्यस्य शुक्तिसामानाधिकरण्यख्याति, खस्थस्येवार्कस्य कूपे ख्यातिवन्न विरुध्यते । भ्रान्तित्वात् । असञ्चेत् रूप्य

ख्याति, तस्य शुक्तिसामानाधिकरण्यम् असत् किं न ख्यायान् ? विषयाश्रय मज्ञानम् इति चाप्रसिद्धे, 'ममात्राज्ञानम्' इति च ज्ञस्य संवित्ते। विषयाश्रयाज्ञानाभ्युपगमेऽपि ज्ञाश्रयस्याभ्युपेयत्वात्। तेन विना रूप्यज्ञाना सिद्धे तेनैव च रूप्यस्यापि सिद्धे, तदेव च रूप्यतज्ज्ञानाद्युपादानमिति सिद्धम्॥ इ सि पा ५७

यदुक्त पञ्चपादिकायाम् 'अवश्यमेषा अविद्याशक्तिर्बाह्याध्यात्मिकेषु वस्तुषु तत्स्वरूपसत्तामात्रानुबन्धिनी अभ्युपगन्तव्या, (प पा ४) इति, तत्रा मात्रिनामविद्यामङ्गीकृत्य बाह्यशुक्त्याद्याश्रिता सा स्पष्ट निराकृतात्र। तदङ्गीकारे, लोकानुभवाननुरूपत्व गौरव च स्यादिति हेतुरप्युपन्यस्त। ज्ञाश्रया चाविद्या भ्रान्तिरेव, शुक्तिविषयकाज्ञान वा स्यादिति पक्षद्वये भ्रान्तिर्निराकृता, ज्ञानाभावश्चेत्यत, तदुभयविलक्षण भावाज्ञानमेव ज्ञाश्रय शुक्त्यज्ञानम् इत्युक्त भवति॥

(७) ननु शुक्त्यज्ञाने नष्टेऽपि रूप्यादि पुनर्दृश्यते। तन्न। पुनरपि हि सत्येव शुक्त्यज्ञाने रूप्यादि दृश्यते, न तु ज्ञायमानायामेव शुक्तौ। किमनन्तानि शुक्त्यज्ञानानि ? बाढम्, अनन्तान्येव, यद्यनन्तानि शुक्तिज्ञानानि अथ सर्वेष्वेव पदार्थेषु – तत्रापि भिन्नज्ञानज्ञेयेषु शब्दादिषु विषयेषु – सकृत्सकृदज्ञान निवर्तनीयमस्ति, तर्हि, अनन्तान्यज्ञानानि एकस्य पुसो निवर्त्यानि सन्तीति, एकस्मिन्नपि विषये अनेकाज्ञानाभ्युपगमे न कश्चिद्दोष॥ इ सि पा ६३-६४

(८) नन्वज्ञानभावाच्चेन्न भाति, शुक्तिज्ञान उदितेऽपि न भासेत। एकाज्ञानाभावेऽपि अज्ञानान्तराणा तत्र भावात्। अत सा स्वत एव न भाति, जडत्वात्। ज्ञानभावे तु भाति। अभावे स्वत एव न भाति। अतोऽस्या ज्ञान प्रकाशकमेव, नाज्ञान नाम तन्निवर्त्यं तत्र किञ्चिदस्तीति चेत्। तन्न। अज्ञानाभावेऽज्ञाताभावात्, ज्ञानस्याप्यभावप्रसङ्गात्। यद्यपि शुक्ते स्वत एवाभानमिति प्रकाशकमेव तस्या ज्ञानम्, तथापि ज्ञानाभावे तस्या अभानाद् तवापि ज्ञानाभावो ज्ञानेन निवर्त्यत इति निवर्त्यं न नास्ति तवापि॥
इ सि पा ६४-६५

(९) अथोच्येत – ज्ञानस्य भानहेतुत्वात् तद्भावे सा भाति। अभानहेतुत्वाभावात् ज्ञानाभावस्य तदनिवृत्तावपि नाभान तस्या इति। तच्चा

युक्तम् – ज्ञानस्याभावानिवृत्तौ भावायोगात् अथ मतम्, नानिवृत्तेऽपि तस्याभावे ज्ञानस्य भाव, किं तु निवृत्त एव । अत कादाचित्क शुक्तिभान स्यात् । तद्धेतोर्ज्ञानस्य कादाचित्कत्वात् । अन्येषु तु ज्ञानाभावेषु अनिवृत्तेष्वपि शुक्तिभान स्यात् । तेषा शुक्त्यभानाहेतुत्वादिति । तर्हि, अज्ञानेष्वप्येतत् समानम् । शुक्त्यभानाहेतुत्वात् तेषामपि ॥

इ सि पा ६५

अत्र भ्रान्तिव्यतिरेकेण ज्ञाननिवर्त्यमभावरूप भावरूप वा किमस्ति? – इति प्रश्नो नोत्थापित, नाप्युच्चरित । ज्ञानस्योदय एवाज्ञाननिवृत्ति, न तु तद्व्यतिरेकेण निवर्त्यो ज्ञानाभावो नामावशिष्यते – इति ज्ञानाभाव वादिमत नोद्भावित नापि प्रतिविहितम् । न च भाष्यकारीय मत प्रातिभासिकविषयमत्र परीक्षितम् –

(अ) प्रत्येत्येव हि केवल रजतमिति, न तु तत्र रजतमस्ति ॥

सू भा ४-१-५, पा ४६७

(आ) रज्जुरेव सर्पबुद्ध्या सर्प इत्यभिधीयते ॥

छा भा ६-२-३, पा ५१०

(इ) गृह्यमाणाया अपि शुक्तिकाया विपर्ययेण रजताभासाया अग्रहण विपरीतज्ञानव्यवधानमात्रम् ॥ बृ भा १-४-७, पा ६६६

[अत्र हि भाष्यकारा रजताद्युत्पत्तिं तस्योपादानकाङ्क्षा च वारयन्ति ॥]

(ई) यथा मृगतृष्णिकादौ सद्बुद्धिरनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते स तस्या अन्त, तथेमे देहा स्वप्नमायादेहादिवच्चान्तवन्त ॥

गी भा २-१८, पा १६

[मृगतृष्णिकादिषु सद्बुद्ध्यनुवृत्तिविच्छेद एव तेषामन्त – इत्युक्त्या न तेषामज्ञानादुत्पत्ति ज्ञानान्नाशो वा, अविद्यया तेषु सद्बुद्ध्यनुवृत्तिमात्रमेव तु तेषा स्थितिर्नामेति दर्शयति ॥ ]

(उ) भ्रान्तिनिमित्तात् सर्पो भवति यथा रज्जु, पश्चात् कृतप्रकाशा रज्ज्वात्मना स्वेन रूपेणाभिनिष्पद्यते ॥ छा भा ८ १२ ३, पा ६००

[अत्रापि सर्पभावो भ्रान्तिमात्रात् इत्युक्तम्, न त्वज्ञानलक्षणोपादान कारणपरिणामादिति ॥ ]

अथ यथा शुक्तिज्ञान तदज्ञान निवर्तयति, एव ब्रह्मज्ञान तदज्ञान निवर्तयतीति प्रतिपादनार्थं दृष्टन्तादानम्। तत्र पूर्वपक्षिणा, अनेकाज्ञान-पक्षे दोष दृष्ट्वा ब्रह्मज्ञानस्यापि शुक्त्यज्ञानस्येव दग्धस्यापि पुन पुनर्भावा-दनिर्मोक्षप्रसङ्ग – इति चोदिते, इष्टसिद्ध्युत्तरम् –

(८) न हि शुक्त्यज्ञानमपि दग्ध पुनर्भवति – अदग्धन्वप्रसङ्गात् प्रतीतिविरोधाच्च-न चान्यदपूर्वं जायते, कि तु पूर्वमेवानाद्यज्ञान साकल्येना दग्धम् शुक्ते साकल्येनाप्रकाशितत्वात्। न हि शुक्तिरूज्ज्ञानक्षण एवास्ति। उत्तरकालेऽपि भावात् तस्या। न च सर्वकालसबन्धिरूपग्राहि प्रत्यक्षम्। अतोऽनेकज्ञानप्रकाश्यानेकरूपत्वात् शुक्ते, एकैकेन ज्ञानेन कार्त्स्न्येना-प्रकाशितत्वात् तदज्ञानस्यापि कार्त्स्न्येनानिवृत्तिर्युज्यते॥ इ सि पा ७०

(९) नन्वज्ञान चेत् साशम्, घटवत् कार्यं स्यात्, न चेत्, कार्त्स्न्येन निवृत्तिरनिवृत्तिर्वा स्यात्। सत्यम्। अत एव साशत्वा-नशत्वादिभिरनिर्वाच्य तदित्यवादिष्म। तस्मात्, यावज्जड वस्त्वस्ति तावत् नास्याज्ञानमशेष निवर्तते॥ इ सि पा ७०, ७१

शुक्तिविषयकमज्ञान नाना वा, उत एकमेव शुक्त्यादिवस्तु अनेक ज्ञाननिवर्त्यस्वगतानेकरूपविषयकानेकाज्ञानवद् वा–इति द्वेधा कल्पनम्, अज्ञानस्य साशत्वे निरशत्वे च दोषात् साशत्वादिभिरनिर्वाच्यत्वमेवेति कल्पन च वेदान्ताभियुक्तसमतपरिभाषाविरुद्धम् –

(1) क्रियायामिव वस्तुनि विकल्पाभाव। सू भा पा १६४
(2) दृष्टविपरीतकल्पनानुपपत्ति। सू भा पा १६५
(3) न च शब्दार्थव्यवहारमात्रेण कस्यचिदर्थस्य प्रसिद्धिर्भवति। सू भा पा २३४
(4) ज्ञापकं हि शास्त्र न कारकम्। बृ. भा पा ६७१
(5) अविद्यमानार्थकल्पनाया सर्वार्थसिद्धिप्रसङ्ग। सू भा पा २३७

इति ह्यभियुक्ताना परिभाषा। तदिह परिभाषापञ्चकमपि विरुणद्धीद कल्पनम्। अज्ञान नाना वा एकमेव वा इति विकल्पस्य, मिथ्यैव रजतत्वेन

विकल्पिता शुक्तिरिति दृष्टवैपरीत्येन शुक्तिरूप्यकार्यत्वस्य, 'ज्ञान जातम् अज्ञान नष्टम्' इति शब्दार्थव्यवहारमात्रेण लोकसिद्धज्ञानाभावसशय विपर्ययव्यतिरेकेणाज्ञानान्तरसिद्धे, ज्ञानसार्थक्यायाज्ञाननिवर्तकलक्षण कारकत्वस्य, अविद्यमानरजतकारणत्वेनाविद्यमानाज्ञानकल्पनस्य च समाश्रयणात् तर्कमात्रावष्टम्भेनेति ॥

(१०) त्वयाप्येते दोषा परिहर्तव्या एवेति चेत् । न, मायावादित्वात् । वस्तुन्येव हीष्टे कार्ये कारणे च एते दोषा परिहर्तव्या, न तु मायायाम् । मायात्वेनैव परिहृतत्वात् । यथा अनग्नित्वादयो दोषा गृहस्थादिभिरेव परिहार्या न तु भिक्षुणा, भिक्षुत्वादेव । अत उक्तेन न्यायेन कस्यचिदपि पक्षेऽज्ञानस्य वस्तुत्वे निवृत्त्यसभवात् तन्निवृत्तेश्च प्रसिद्धत्वात्, मदुक्तलक्षणमेवाज्ञान तन्निवृत्तिश्च ॥ इ सि पा ९३

इति यत् परवाददूषणपूर्वक स्वपक्षसाधनम्, तदप्यविद्यमानकल्पनमेव तर्कावष्टम्भेनेति न किञ्चित् तत्र वक्तव्यमस्ति । न हि तर्कमात्र-कल्पितस्याज्ञानस्य तन्निवृत्तेर्वा सर्वलोकानुभवसिद्धत्वमस्तीति ॥

## शुक्तिविषयकाज्ञानमपि नास्त्येव वस्तुतः —

२२३ शुक्तिविषयकाज्ञानस्य ज्ञाश्रयत्वेऽपि अज्ञानकार्यस्य रूप्यस्य शुक्तौ ख्यातिर्न विरुद्धा इति यत् प्रागुक्तम् (पा ४९३, इ सि पा ५७) तच्छुक्तिविषयकमज्ञानमङ्गीकृत्य । वस्तुतस्तु नास्त्येव जडविषयकमज्ञानमितीष्टसिद्धिराद्धान्त —

(१) अज्ञानभ्रमसम्यग्ज्ञानानाम् एकाश्रयत्वप्रसिद्धे, जडस्य च वेद्यत्वाद्विद्याभावात् नाविद्यास्ति । न ह्येकस्यैव वेद्यत्व वेदितृत्व च युज्यते ॥ इ सि पा १९३

(२) न च अर्थानर्थौ मुक्तिबन्धौ स्वर्गनरकौ वा जडस्य युक्तौ । अतोऽपि नाविद्या जडस्य न्याय्या । यदि जडस्याविद्या स्यात् । न सा निवर्तेत असत इव तस्य विद्याभावात् ॥ इ सि पा. १९३

(३) 'अज्ञान्यस्मि न जानामि' – इति चाज्ञानानुभवो यथा पुंसो भवति नैव जडस्य स्यात्, अदृक्स्वभावत्वात्। अतो न स्वानुभवसिद्धं जडस्याज्ञानम्। नाप्यस्य प्रमाणसिद्धम् प्रमाणागम्यत्वादज्ञानस्य प्रमाण प्रवृत्ते प्रागेव तत्सिद्धे॥ इ सि पा १९४

(४) अन्त करणादीना चानित्यत्वादनाद्यज्ञानाश्रयत्वानुपपत्ति। अन्यदपि जड विभक्त चेत् कार्यत्वादनित्यमेवेत्यनाद्यज्ञानाश्रयो न स्यात्, अविभक्त च जड न सिध्येत्, स्वतोऽसिद्धे। अजडस्य तु आत्मनो विभाग कुतश्चिदपि न सभवतीत्युक्तम्। अतो स एवानादित्वादनादिनोऽज्ञानस्य आश्रयो युक्त। अज्ञान चानादि उक्तम्, अन्यथा अज्ञानमेव तन्न स्यात्। प्राङ्मुक्ताना बन्धहेत्वज्ञानाभावे पुनरपि तद्भावादनिर्मोक्षप्रसङ्गात्। तस्मात् आत्मन एवाज्ञान युक्तम्, न त्वनात्मनो जडस्य॥

इ सि पा १९५

[अज्ञान ज्ञान वा चेतनस्यैवेति वस्तुस्वभावालोचनेनैव सिद्ध यद्यपि, तथापि इष्टसिद्धिसमत लोकसिद्धाज्ञानविलक्षणमिति तस्य जडाश्रितत्वशङ्कापि भवेत्। उररीकृत च पञ्चपादिकाया बाह्यवस्तुस्वरूपसत्तानुबन्धि समस्त्यज्ञान-मितीत्यतोऽपि अज्ञानस्य जडाश्रितत्वनिषेधो नाप्राप्तस्य॥]

एव भावाज्ञानस्य जडाश्रितत्व नास्तीति प्रसाधितम्। वस्तुतस्तु न जड प्रमाणगम्यम्, अतो न तस्याज्ञानम् तस्मिन्नपि नाज्ञानमितीष्ट सिद्धिराद्धान्त –

(५) ननु जडमज्ञान कथमजडस्यात्मन स्यात्? न हि जडमजडस्य स्वरूपम्, गुण, धर्म, विकारो वा स्यात् तव। रूपादिवत्। सत्यम्। यद्यप्यात्मन स्वरूपादि न भवत्यज्ञानम्, तथापि तत् तस्याज्ञान भवत्येव। यज्जड तदात्मनोऽज्ञान न भवति, अमुकवत् – इति न शक्य वक्तुम्। दृष्टान्ताभावात्। सर्वमेव जडम् आत्माज्ञानम् इति मया इष्टत्वात्। तदुप पादयिषयैव सत्यपि प्रमाणगम्ये जडे अज्ञानातिरिक्ते तस्य क्वचिदज्ञान न सभवतीत्युक्तम्। तेनैव न्यायेन तस्मिन्नपि आत्मनोऽज्ञान न सभवति। जडस्याज्ञानम् इतिवत्, जडेऽज्ञानम् इत्यपि ज्ञातुम् अशक्यत्वात्। अज्ञानस्याप्रमेयत्वात्, जडस्य च प्रमेयत्वात्, तयो सबन्धाप्रतीते॥

इ सि पा १९६

[अत्र नैष्कर्म्यसिद्धितृतीयाध्यायावतरणिका तुलनीयानेन युक्तिसदर्भेण। तत्र आत्मानात्मनोमध्ये अनात्मनोऽध्यस्तरूपत्वात्, आत्मानात्मनो सबन्धोऽज्ञान-

मन्तरेण न सभवति । तच्चाज्ञान नानात्मा , नाप्यनात्मनीति प्रतिपादितम् । तत्र प्रस्थाने अज्ञान ज्ञानाभाव इति तु विशेष ॥ ]

(६) नन्वज्ञान यदि जडे नास्ति, ज्ञानमपि तत्र न स्यात् । अतश्च 'नाज्ञासिष पूर्वं घटम् इदानी त जानामि' इत्यादिव्यवहारो न स्यात् - इति चेत् । नाय दोष , 'पूर्वं द्वितीय चन्द्र नाद्राक्षम् , इदानी त पश्यामि' इतिवत् तदुपपत्ते । इ सि पा १९६

(७) अज्ञाते घटे, 'घटेऽज्ञानम्' इति न शक्य ज्ञातुम् । ज्ञातेऽपि तथा, तदा तदज्ञानाभावात् । ज्ञाते घटे, 'अय पूर्वं न ज्ञात' इति घटे अज्ञान न सिध्यतीति चेत् , तन्न । अज्ञातघटासिद्धे । न ह्यज्ञातरूपो घट प्रमाणात् सिध्यति । प्रमाणप्रवृत्ते प्रागेव तस्येष्टत्वात् । ऊर्ध्वं चेदज्ञातत्व स्यात् । अज्ञातत्वमेव मानात्स्यात् न तु ज्ञातत्वम् । उभयार्थत्वायोगात् मानस्यैकस्यैव । विरोधात् । ज्ञात व तु प्रागेव स्यात् , ऊर्ध्वं तदयोगात् । प्रागपि ज्ञातत्वे तद्धेतुमान च व्यर्थं स्यात् । न च ज्ञातत्व प्रागपि जडस्य, स्वतो ज्ञातत्वासिद्धे मानाच्च तदयोगात् । स्वत सिद्धत्वे जडत्वहानि । तस्मात् मानादज्ञातत्वे न जातु ज्ञातत्व स्यात् , जडस्य । अज्ञातत्वासिद्धौ च ज्ञातत्वासिद्धि अज्ञातस्यैव सतो ज्ञातताया इष्टत्वात् ॥

इ सि पा १९६-१९७

(८) यथा कृष्ण कृष्णात्मनैव बोधयति मानम् , न शुक्लीकरोति । एवम् अज्ञातेऽर्थे स्वल्पमप्यतिशयम् अकुर्वत् यथावस्थिताज्ञातस्वरूपमात्र-पर्यवसाय्येव मान मान भवतीति न तस्य नैष्फल्यम् इति । तर्हि नार्थस्या-ज्ञातत्वसिद्धिर्मानात् , प्रवृत्तेऽपि मानेऽर्थे अतिशयाभावस्य इष्टत्वात् । अतो यथा मानात् प्राङ् नाज्ञातत्व सिद्धम् । तथा ऊर्ध्वमपि न सिध्येत् । अन्यथा प्रागपि सिध्येत् , विशेषाभावात् । न चेत् नोर्ध्वमपि, अविशेषादेव । उभयथापि मान व्यर्थम् । एव चेत् प्रमाणवृत्तम् अन्यत्रापि तदा जड न किञ्चित् सिध्येत् । मानात् प्रागूर्ध्वं च तस्य विशेषाभावात् स्वतश्चासिद्धे ॥

इ सि पा १९९

(९) ननु न मान वस्तुविकारकृत् तवापि । सत्यम् , अत एव न जडस्य मानात् सिद्धि कस्यचित् कदाचिदपीत्यवोच जडे मानस्य नैष्फल्यम् । नन्वजडस्यापि मानात् प्रागूर्ध्वं च विशेषाभावात् स्वत सिद्धत्वाच्च तन्मानस्यापि तदसाधकत्वाद् वैफल्यम् समानम् इति चेत् । तन्न, अज्ञान निवर्तकत्वान्मानस्य । इ सि पा १९९

[एव च ' जडेषु रूपान्तरावभासहेतुरेवाज्ञानम् ' इति पञ्चपादिकाकार न्मत परित्यक्त भवति ॥ ]

(१०) जडस्य तु अज्ञानाभावात्, न तन्निवर्तनेनापि तन्मानस्य साफल्यम् । निवर्तितेऽप्यज्ञाने जडस्य स्वतोऽसिद्धेर्मानाच्च विशेषाभावात् तस्यासिद्धिरेव । अथ मनुषे अन्यविशेषाभावेऽपि मानात् जडस्य ज्ञातत्व भवत्येव अन्यथा जडासिद्धेस्तन्मानवैफल्याच्चेति । तर्हि यावत् किञ्चि न्मानस्पृष्ट तत् सर्वं ज्ञातमेवेति नाज्ञातजडसिद्धिर्मानात् । अथ मानस्पृष्टमपि किञ्चिज्जडमज्ञात भवेत्, तर्हि सर्व जड तथैवेति न किञ्चिज्जड सिध्येत् । अनेनापि न्यायेन अज्ञानस्य मानगम्यत्व प्रत्युक्तम् । तस्यापि जडत्वात्, मानस्यापि तथा । अतो जड वस्त्वस्ति तदज्ञात सत् मानाज्ज्ञायत इत्याद्या प्रसिद्धिरज्ञानमूलैव ॥ इ सि पा १९९-२००

(११) प्रयोजनाभावादपि शून्यजडयोर्नाविद्या कल्पनीया । न तावत् तयोर्भ्रम प्रयोजनम् । न हि ते भ्रमत । अज्ञत्वात् । यस्याज्ञान समस्ति तस्यैव भ्रमोऽपीत्युक्तत्वात् । न च तयोरविद्यया द्रष्टुर्भ्रम । अतिप्रसङ्गात् । अन्यस्याविद्यया चेदन्यो भ्रमेदपि सर्व सर्वदा भ्रमेत् । शून्यजडयो रविद्यया चेद् द्रष्टुर्भ्रम स्यात्, न स द्रष्टुर्विद्यया निवर्तेत । न च तयोर्विद्या अस्ति ॥ इ सि पा २००-२०१

(१२) यद्यपि द्रष्टृविद्ययैव रूप्यादिज्ञान सिध्येत्, तथापि दृश्यबाह्य दूरस्थशुक्त्यर्कमण्डलादिस्थतया स्फुरतो रूप्यसुषिरादेर्दृश्यरूपस्य दृश्यस्याविद्या विना न सिद्धि स्यात् । द्रष्टृविद्याजश्चेत् तदाश्रयो भासेत रूप्यादि, तज्ज्ञानादिवत्, न तु शुक्त्याद्याश्रय । अतदविद्याजत्वात् । सर्पोदकपुरुषादिवत् इति चेत् । तन्न । स्वप्नेऽप्यस्य यथोक्तस्य रूप्यादेर्यथोक्तशुक्त्यादि तत्स्थाविद्याभावेऽपि दर्शनात् ॥ इ सि पा २०१

[शुक्त्यादिविषयक तदाश्रित वा अज्ञान नास्त्येवेति ग्रन्थकृन्मतम् ॥ ]

(१३) कथ शुक्त्याद्यज्ञानजा रूप्यादिभ्रान्तय इति प्रसिद्धिरिति चेत् ? शृणु । शुक्त्यादीदमशावस्थापर्यन्त विकसितात् आत्ममोहाज्जाता रूप्यादिभ्रमा शुक्त्यादिमोहजा कथ्यन्ते । शुक्त्यादीनामपि रूप्यादिवदज्ञान जत्वाविशेषात् तेषामप्यज्ञानाभावात् रूप्यादिवत् । यथा स्वप्ने । यथा

चाकाशादिक्रमेण मृदवस्थान्त परिणतादात्मनो जातो घटो मृज्ज इत्युच्यते । कार्यस्य कारणत्वायोगात्, मूलकारणस्यैव आ चरमकार्यात् कारणत्वात् ॥

इ सि पा २०४

[रूप्यादेरिव शुक्त्यादेरज्ञानजत्वमपि तर्केणैव सिद्धम्, यथा अज्ञानस्य स्वाभिमतस्यैव कारणत्वमिति स्मर्तव्यमत्र ॥ ]

(१४) यत आत्मन एव स्वतो ज्ञातत्व ज्ञत्व च युक्तम्, अज्ञेयत्वात् । न तु जडशून्ययो, तयोर्ज्ञेयत्वस्य इष्टत्वात् । ज्ञेयस्य च स्वतो ज्ञातत्व ज्ञत्वायोगात् । अज्ञेयत्वे च तयोरसिद्धे, स्वयप्रकाशस्याप्यात्मनोऽन्यस्या सिद्धे, अत एव आत्मैवाविद्यया जडादिरूपेण भाति नान्यत्किञ्चि दित्युक्त युक्तमेव ॥ इ सि पा २०६

(१५) स्वतो ज्ञातत्व चात्मन परज्ञेयत्वव्युदासेन स्वयज्योतिष्ट्व मेवोच्यते न त्वेकस्यैव ज्ञातृज्ञेयत्वे । तदसभवात् । ज्ञेयस्य च घटादेरज्ञत्व प्रसिद्धे । अतो नात्मा अहप्रत्ययादिवेद्य ।

ज्ञेयज्ञात्रो ज्ञातृत्वज्ञेयत्वयो -प्रकाश्यप्रकाशकयोरिव प्रकाशताप्रकाश्य त्वयो -असभवात्, जडशून्ययोश्च स्वतो ज्ञातत्वज्ञत्वाभ्युपगमे अज्ञेयत्वा त्मत्वप्राप्ति, तयोरज्ञातत्वाज्ञत्वाथमपि स्वाश्रयाविद्या नाथनीया । स्वत सिद्ध-त्वात् तयोरज्ञातत्वाज्ञत्वयो । अत एव नात्माविद्यापि तत्राथवतीति न तयो प्रमाणगम्यत्वम् । तत्राज्ञानाभावात् । अतो नात्माज्ञानातिरेकेण जड नाम सिध्येत् । नतरा शून्यम् । अत आत्मन एव स्वात्मन्येव अविद्ययैव सर्व व्यवहारास्पदत्वम्, न त्वन्यस्य कस्यचित्, स्वरूपेण अविद्यया वा इति सिद्धम् ॥ इ सि पा २०६-२०७

(१६) नन्वविद्या स्वयज्योतिरात्मान ढौकते कथम् ।
कूटस्थमद्वितीय च सहस्राशु यथा तम ॥ १-१३६

इति चोदिते तत्रोत्तरमाह –

प्रसिद्धत्वादविद्याया सापह्नोतु न शक्यते ।
अनात्मनो न सा युक्ता तयानात्मा विना न हि ॥ १३७

अतोऽविद्याया स्वातन्त्र्यजडाश्रयत्वापह्नवानामसभवात् पुमानेवाविद्या श्रयोऽभ्युपेय । 'न वेद्मि, अविद्वान्, मूढोऽस्मि' इति च पुसोऽविद्या-श्रयत्वप्रसिद्धेश्च ॥ इ सि पा २०७-२०८

(१७) यादृश्यविद्या तद्वृत्ताप्यस्य तादृश्यथ स्वत ।
अविद्यात्वक्षतिस्तस्या निवृत्तिश्च न बोधवत् ॥ १३९

यथा अविद्या न पुस स्वरूप नाप्यन्या अन्यानन्या वा। न च सा सती, नासती, नापि सदसती, किं त्वनिर्वचनीयैव स्वत एव नाविद्यान्तरात् । एव पुसोऽविद्यासबन्धोऽपि द्रष्टव्य । अविद्यासबन्धत्वादेव । अतोऽविद्यैव सर्वे सबन्ध इति न सबन्धान्तर तस्य मृग्यम् ॥

इ सि पा २०८-२०९

अत्राय सक्षेप –

अज्ञानसशयमिथ्याज्ञानान्यतमलक्षणा, अविद्या ज्ञातुरेव न ज्ञेयस्य, आत्मनोऽप्यज्ञानाश्रयत्वमज्ञानादेव नान्यथेत्येतत् भाष्यवार्तिकयो स्पष्टम् । अज्ञानादित्रयव्यतिरिक्ता त्वविद्या वादिविप्रतिपन्ना शुक्तिरजतादिकारणाज्ञानवत् जगत्कारणलक्षणेत्येतदभिनिवेशमात्रादत्र स्वीक्रियत इति विशेष । अतो विप्रतिपत्तिस्थानाविद्याविषयेऽत्र रचिता सर्वापि प्रक्रिया यथा प्रसिद्धायामेव सचारयितव्या । शून्याश्रया तद्विषया वा अविद्या शून्यवादिभिरपि नैवाभ्युपेयत इति तत्र जडाश्रयविषयकाविद्यानिरासप्रकारातिदेशन व्यर्थप्रयासमात्रमिति न प्रतिभाति ॥

यद्यपि च सिद्धान्ते आत्मव्यतिरिक्त सर्वमप्यविद्याकृतमिति जडविषयतत्प्रमाणादेरपि तथात्वमेवेति युक्तम्, तथापि यावज्जडचेतनविभाग स्वीक्रियते, तावत् जडविषयकमज्ञानम्, तन्निवर्तकत्व च प्रमाणादीनाम् आ तत्त्वबोधात् किमिति नाङ्गीक्रियत इति न विज्ञायते । किञ्च शुक्तिरज्ज्वाद्याच्छादकतमोनिवर्तनेन यथा दीपादीना तत्प्रकाशकत्वम्, तथा प्रमाणानामपि प्रमितिरूपापन्नाना जडविषयप्रकाशकत्वमपीति लोकानुभवानुसारेणाङ्गीकर्तव्यमेव । तथा हि भाष्यकारा –

(अ) अविद्यातमोनिवर्तकस्य ज्ञानस्य दृष्ट कैवल्यफलावसानत्वम् । रज्ज्वादिविषये सर्पाद्यज्ञानतमोनिवर्तकप्रदीपप्रकाशफलवत् । विनिवृत्तसर्पादिविकल्परज्जुकैवल्यावसान हि प्रकाशफलम्, तथा ज्ञानम् ॥

गी भा १८-६६, पा २८९

(आ) यदा पुनर्घटतमसोर्विवेककरणे प्रवृत्त प्रमाणम् अनुपादित्सित तमोनिवृत्तिफलावसानम् – छिदिरिव छेद्यावयवसबन्धविवेककरणे प्रवृत्ता तदवयवद्वैधीभावफलावसाना – तदा नान्तरीयक घटविज्ञानम्, न तत् प्रमाणफलम् ॥ मा भा ७, पा १८७

अत्र प्रथमोदाहरणे दीपादिना यथा घटो व्याप्यते स्वप्रकाशेन तथा रज्ज्वादिजडवस्त्वपि प्रमाणप्रकाशेन व्याप्यते इत्युक्तम्, अज्ञात ज्ञापक प्रमाणम् इति लोकसिद्धमङ्गीकृत्य। द्वितीयोदाहरणे तु यथा घटप्रकाशप्रतिबन्धकतमोनिवृत्तिव्यतिरेकेण घटज्ञानस्य कृत्यान्तर नास्ति, तथा आत्मज्ञानस्याप्यज्ञाननिवृत्तिव्यतिरेकेण कृत्यान्तर नास्तीत्युक्तम्, ज्ञानोदयमात्रेणाज्ञानविनाश, तन्नान्तरीयकश्च ज्ञेयप्रकाश – इत्येतत् स्फुटयितुम् । उभयथापि जडविषयक प्रमाणमङ्गीकृतमेवेति बोध्यम् ॥

## प्रमाणव्यवहारः कथम् ? –

२२४ यदि जडवस्तु नास्त्येव शुक्त्यादिरूपम्, नापि तद्विषयक ज्ञानम्, कथ तर्हि प्रत्यक्षादीना प्रामाण्यव्यवहार, भ्रान्तिबाधव्यवहारो वा ?–इत्यत्र इष्टसिद्धेरुत्तरमिदम् –

(१) अत परमार्थसत्य आत्मैव स्वाविद्यामायया सर्वस्य लौकिक वैदिकव्यवहारस्य आ प्रबोधात् मायावीव स्वमायया गिरिनदीसमुद्रादि व्यवहारस्यास्पद भवति – इत्यभ्युपेयम् न्यायमनुसरद्भि सर्वैरेव। अस्यै वार्थस्य प्रदिदर्शयिषया लोकव्यवहारसिद्धसत्यत्वशुक्त्याद्यज्ञानजरूप्या दयोऽसत्या इति दर्शितम् । अतो न विरोध आशङ्कनीय, दृष्टान्ताभावो वा। लोकप्रसिद्धदृष्टान्तोपादानात् ॥ इ सि पा २००

[लोकव्यवहारसिद्धाश्रयेण चेत् दृष्टान्तादानम्, यथा लोकव्यवहार दृष्ट च तर्हि दृष्टान्ताश उपादेय, न तु दृष्टान्त एव विचारास्पदीकर्तव्य । अज्ञान चेत् देवदत्तादिचेतननिष्ठ शुक्त्यादिजडविषय चेति दृष्टम्, तथैव तद् गृह्यताम् । ज्ञान च तस्यैवेति । तथा आत्मा चेत् सर्वव्यवहारासद तर्हि देवदत्तादिनिष्ठा ज्ञानमेव तद्विषयकमिति गृह्यताम्, किमित्यात्मन्येव केवले अदृष्टमनिर्वचनीय मज्ञान कल्प्यते ? तदेतदुत्तरत्र विमृष्टव्यमित्यास्ता तावत् ॥ ]

(२) अ) यथा स्वप्नप्रपञ्चस्य अनिर्वचनीयत्वेऽपि आ बोधात् तदाश्रय सर्वो व्यवहारोऽप्रतिहतो वर्तते, स्वाप्नैरेव निमित्तैस्तत्प्रपञ्चनुत्पत्त्यार्थबोधो जायते, एव जाग्रत्यपि सर्वमविरुद्ध द्रष्टव्यम् ॥ इ सि पा ३४

आ) मायात्मकत्वेऽपि सर्वस्य स्वप्नवत् प्राक् प्रबोधान्मम नियमो युज्यते ॥ इ सि पा १५३

इ) दृश्य जडम्, अजडमिश्र शुद्धमेव वा शुक्तिस्थानीय स्वप्नावस्थाया मपि यद्यपि सभवति, तथापि तत्र प्रतिभासमानरूपादिमन्नानाविधप्रपञ्चानु रूपस्य तदाश्रयस्य रूप्याश्रयशुक्तिवत् चक्षुरादिसप्रयुक्तदृश्यस्यासभवात् दृश्याविद्याजत्वे च बाधाद्यसभवात्, न दृश्याविद्याज स्वप्नप्रपञ्च ॥

इ सि पा २०३

ई) अनात्मस्वविद्याभावेऽपि स्वप्नादिदृश्येष्विव मानमेयफलादि व्यवहार आत्मविद्ययैव समस्तीत्यसकृन्मया उक्तम् ॥ इ सि पा २१४

उ) शब्दाद्यनात्मवस्तुतदज्ञानतज्ज्ञानतज्ज्ञात्रादेरा बोधात् स्वप्न इवाविद्ययैव सिद्धे ॥ इ सि पा २१६

ऊ) कर्मोपासनादिवाक्याना चाविद्यावत्कल्पितेष्टानिष्टप्राप्तिपरिहारो पायज्ञापकानाम् अविद्यावस्थायामेव प्रत्यक्षादीनामिव आ बोधात् स्वप्ना वस्थायामिव प्रामाण्यम् ॥ इ सि पा २१७

उपर्युदाहृतजातीयकानि स्वप्नोदाहरणानि पदे पदे समानीतानि दृश्यन्ते इष्टसिद्धौ । अज्ञान च शुक्तिरजतादिदृष्टान्तबलेन (इ सि पा ३९) तर्कसिद्धमत्र । 'मूढोऽहम्' इत्याद्यनुभवोपन्यासस्तु चेतनाश्रयत्वे-नोपलभ्यतेऽज्ञानमिति प्रदर्शनमात्रपर, न तु शुद्धाद्वितीयात्मसमाश्रय-मज्ञानमित्यपि प्रसाधितुमलम् ॥

'प्रपञ्चस्य मायानिर्मितत्वाभ्युपगमात्' (इ सि पा ३२) 'सदसत्त्वाभ्यामनिर्वचनीयाविद्यात्मकत्वाभ्युपगमात् रूप्यतज्ज्ञानयो' (इ सि पा ४७), 'तदनुरूपमनिर्वचनीयमेवोपादानमेष्टव्यम्, तच्च नान्यदज्ञानात् अनादि समस्ति' (इ सि पा. ४८) 'न च वय

भावाभावप्रमाणागम्यतया अज्ञानस्यानिर्वाच्यता ब्रूम, अपि तु ज्ञानमात्रापनोद्यत्वात्' (इ सि पा ६३) इत्यादिस्थलेषु स्वाभीष्टाविद्यायास्तर्कसिद्धत्वमेव प्रदर्श्यते । तस्याश्चात्माश्रयत्व तद्विषयत्व च शुक्त्यादिजडाश्रयत्वतद्विषयत्वनिराकरणलक्षणतर्केणैव प्रसाध्यते । तर्हि प्रमाणाप्रमाणव्यवहार कथमित्याशङ्क्य स्वप्नदृष्टान्तबलेनैव सोऽप्युप पाद्यते । न क्वचिदपि अविद्या सर्वसप्रतिपन्नानुभवसमाश्रयणेन प्रत्याय्यते – नापि स्वप्नव्यवहार इव जागरितव्यवहारोऽप्यविद्यावस्थामात्र प्रतिबद्ध इत्यनुभवमारोप्यते । भाष्यकारप्रस्थाने तु अविद्यातत्प्रयुक्तव्यवहारबाधयोरुपपादनमन्यथैव तद्यथा –

**(क) कथ पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ? उच्यते – देहेन्द्रियादिषु अहममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्ते ॥ अ भा**

[अत्र विषयलक्षणैर्देहेन्द्रियादिभिरध्यास मुक्त्वा न कोऽप्यन्य सबन्ध समस्तीत्यत, प्रमाणप्रमेयव्यवहारोऽविद्यापुर सर इत्येतत् सार्वत्रिकानुभव सिद्धमिति दर्शितम् ॥ ]

**(ख) न च देहाद्यात्मप्रत्ययभ्रान्तिसन्तानविच्छेदेषु सुषुप्तिसमाध्यादिषु कर्तृत्वभोक्तृत्वाद्यनर्थं उपलभ्यते । तस्मात्, भ्रान्तिप्रत्ययनिमित्त एवाय ससारभ्रमो, न तु परमार्थ इति सम्यग्दर्शनादत्यन्तमेवोपरम इति सिद्धम् ॥ गी भा १८–६६, पा २९६**

[अत्र अविद्याया देहादितादात्म्याभिमानस्य भ्रान्तिलक्षणाविद्यानिमित्तत्व सार्वत्रिकसुषुप्त्याद्यनुभवेनैव सिध्यतीत्युपपादितम् । सुषुप्त्यनुभवदर्शनबलाद् देहाद्यात्मभावप्रदर्शको जाग्रदनुभवो भ्रान्तिमात्रमिति दृढीकृतम् ॥ ]

**(ग) अपि च न कदाचित् जीवस्य ब्रह्मणा सपत्तिर्नास्ति स्वरूपस्य अनपायित्वात् । स्वप्नजागरितयोस्तु उपाधिसपर्कवशात् पररूपापत्तिमिव अपेक्ष्य तदुपशमात् सुषुप्ते स्वरूपापत्तिर्विवक्ष्यते ॥**

**सू भा ३–२–७, पा ३५१**

[अत्र सुषुप्ते सत्सपत्ति. श्रूयमाणा न तदवस्थामात्रपरिच्छिन्ना विवक्षिता 'स्व ह्यपीतो भवति' इति स्वरूपसपत्तिश्रवणात्, स्वरूपस्य च स्वाभाविक-

त्वात् । जाग्रत्स्वप्नयोस्तु परिच्छिन्नजीवभाव प्रतीयमान आभासमात्रम् उपाध्यध्यासनिमित्तम्, तत्रापि वस्तुतो देहादिविलक्षणस्वरूपस्य साक्षिलक्षणस्य सर्वानुभवसिद्धत्वात्-इति प्रतिपादितम् ॥ ]

(घ) **सर्वव्यवहाराणामेव प्राग् ब्रह्मात्मताविज्ञानाद् स त्यत्वोपपत्ते । स्वप्नव्यवहारस्येव प्राक् प्रबोधात् ॥ सू भा २-१-१४**

[अत्राध्यासलक्षणाविद्याप्रत्यये यद प्रत्युत्पन्नत्वमिति निर्दिश्यते, तावत् प्रत्यक्षादिप्रमाणप्रमेयव्यवहार सत्यो भातीत्युक्तम् । स्वप्नदृष्टान्तेऽपि प्रबोधे यथा स्वप्नव्यवहारो बाध्यते तन्मिथ्यात्वाध्यवसायात्, एव प्रत्यक्षादिबुद्धिरपि देहादितादात्म्याध्यासबाधे सति मिथ्येत्यध्यवसीयते इत्युक्तम् । न तु केवल स्वप्नदृष्टान्तबलेन प्रमाणव्यवहारस्य मिथ्यात्वमनुमानेनास्थितम् ॥ ]

(ङ) **'न बुद्धान्ताद्यवस्थोपन्यासेन अवस्थावत्त्व ससारित्व वा प्रतिपाद्यते, किं तर्हि अवस्थारहितत्वम् असंसारित्व च'** (सू भा १-३-४२, पा १४४) **'स्वप्नान्तबुद्धान्तयोरुभयोरितरेतरव्यभिचारात् आत्मनोऽनन्वागतत्वम् सप्रसादे च प्रपञ्चपरित्यागेन सदात्मना सपत्तेर्निष्प्रपञ्चसदात्मत्वम्'** ॥ सू भा २-१-६, पा १८९

[अत्र आत्मनोऽवस्थात्रयोपलभ्यमानदोषादूषितत्व निष्प्रपञ्चत्व चानुभवानुसारितर्केण प्रतिपाद्यते, न तु प्रपञ्चस्य अनिर्वचनीयत्व तर्केण प्रमाप्य, तत्कारणत्वेनानिर्वचनीयमज्ञानमपि तर्केणैव वादग्रस्तेनोपस्थाप्यते ॥ ]

(च) **तथा च लोकेऽनुभव । 'शुक्तिका हि रजतवदवभासते', 'एकश्चन्द्र सद्वितीयवत्' इति ॥ अध्या भा**

[अत्र अन्यथावभासस्य ज्ञानबाध्यत्व लोकानुभवमाश्रित्यैव निदर्श्यते । न तु तत्र शुक्तिरजतादीनामुत्पत्त्यादिचिन्तामारभ्य दृष्टान्तोऽपि विवादपदम् अध्यारोप्यते यथेष्टसिद्धौ ॥ ]

## अज्ञाननिवृत्तिः –

२२५ यथा शुक्त्यज्ञान शुक्तिज्ञानेन निवर्त्यते, एव ब्रह्माज्ञान ब्रह्मज्ञानेन निवर्त्यते इति सदृष्टान्त वेदान्ताभियुक्तै प्रतिपादितम् । सा च निवृत्तिर्न कारकनिष्पाद्यक्रियालक्षणा, कि तु ज्ञेयेऽध्यारोपिता

64

तद्धर्मबुद्धिविलक्षणैव इति हृदयमागमयितु दृष्टान्तप्रणयनम् 'अस्थूल मनणु', 'नेति नेति' इत्यादिश्रुत्यवष्टम्भात् । तत्रैव स्थिते, अत्र प्रस्थाने दृष्टान्तस्य विवक्षितांशसाम्यप्रदर्शनमार्गं प्रविहाय दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि वादिविवादपदाध्यासीनत्व तर्कबलात् क्रियत इति चित्रमेतत् । तत्र दृष्टान्तभूतशुक्तिरूप्यस्य अनिर्वचनीयाज्ञानकार्यत्वमुररीकृत्य ख्यात्यन्तर परीक्षणक्षेत्र यथा तर्कावलम्बनेन विस्तारितम्, एवमज्ञाननिवृत्तिरपि तर्कभूयिष्ठक्षेत्रे समानीय प्रदर्श्यते । यथा चैतत्तथा दिङ्मात्रमिह प्रदर्श्यते ॥

(१) तत्र 'ज्ञानम्'इत्यजडो बोध, तदाभासा वा चित्तवृत्ति सत्यार्था यथायोगम् आश्रयणीया । उभयत्र ज्ञानशब्दप्रयोगात्, एको अमुख्योऽर्थ अपरो वाच्य इति। तत्र 'शुक्तिज्ञान जायमान तदज्ञान निवर्तयति' इत्यत्र बुद्धिवृत्तिर्ज्ञानम्, अज्ञान च रूप्यादिकारण तन्निवर्त्यम् । 'ब्रह्मज्ञानम्' इत्यत्रापि बुद्धिवृत्तिरेव ब्रह्माभासा सती ज्ञानमुच्यते, ब्रह्माज्ञानम् इति सर्वजडोपादानभूता जडात्मिका अविद्याशक्तिरुच्यते । अज्ञानशरीरत्वेऽपि ब्रह्मज्ञानस्य सत्यार्थत्वात् ब्रह्मैकाभासत्वाच्च ज्ञानत्वम्, तदज्ञाननिवर्तकत्व चेष्यते। सत्यार्थत्वात् प्रामाण्य न स्वरूपसत्यत्वात् ज्ञानस्य इति ह्युक्तम् ॥

इ सि पा ६९

[ब्रह्मज्ञानम्, शुक्तिज्ञानवद् वृत्तिरेव चिदाभासा इति सम्यक् । भूतवस्तुविषयकस्य ज्ञानस्य प्रमाणजन्यत्व हि लोकानुभवसिद्धमिति । दृष्टान्ते अज्ञान रूप्यादिकारणमिति, दार्ष्टान्तिके जडोपादानभूता जडात्मिका अविद्याशक्तिरिति तु विवादपदारूढम् । तादृशाविद्याशक्ते सर्वसप्रतिपन्नाज्ञानविलक्षणाया अलोकवेद-सिद्धत्वात्, अज्ञानपदार्थस्यान्यथैवाभियुक्तैर्दर्शितत्वाच्च ॥ ]

(२) यथा वेणुजोऽप्यग्नि, त समूल दहति स्वय च शाम्यति । एवम् अज्ञानजमपि ब्रह्मज्ञानम् अज्ञान दन्दहीति, तदात्मकत्वात् स्वय च शाम्यति । ब्रह्मैव वा अजडबोधरूप तन्मात्राभासबुद्धिवृत्त्युपेत स्वाज्ञान दहत् तत्कार्यमन्यत्, ता च वृत्ति दग्ध्वा एकमवशिष्यते । यथा राजा एक चोर लब्ध्वा असाध्यानप्यन्यान् सर्वांश्चोरान् निघ्नन् त च चोर हत्वा स्वस्थो भवति, यथा वर्त्यादियोगात् केवलमदाह्यमपि तैलघृतादि

दहन् वह्निर्वेत्यादिप दहति, एत केवलम् अदाह्यमप्यज्ञान विशिष्टबुद्धिवृत्ति युक्त ब्रह्म दहेत् ॥ इ सि पा ६९–७०

अत्राज्ञान नाम जडोपादानभूता जडात्मिका शक्ति – इत्यभ्युपगम्य ज्ञानस्य तन्निवर्तकत्वे, वेणुजाग्नेर्वेणुदाहकत्वस्वयशाम्यत्वे इव ब्रह्मज्ञानस्याज्ञानदाहकत्वस्वयशाम्यते – इत्युपपत्तिप्रदर्शन ज्ञानस्य कारकत्व प्रापयतीति स्पष्टम् । तथा च दृष्टविरोध, अभियुक्तसमताध्यारोपापवादप्रक्रियाविरोधश्च । न हि प्रपञ्चस्य, तत्कारणस्याज्ञानस्य वा, विद्यमानस्य ज्ञानेन निवृत्तिमिच्छन्ति वेदान्ताभियुक्ता, विकल्पमात्रस्य तु बाधम् । न च बाधो नाम तात्त्विकी निवृत्ति, येन वेणुजाग्न्यादिनिदर्शन स्थाने स्यात् । समारोपितस्यासत्यत्वात् तन्निह्नवेन स्वास्पदानन्यत्वज्ञापनमात्र हि बाध इति । तथा हि सप्रदायविदा वचनम् –

(१) प्रपञ्चो यदि विद्येत निवर्तेत न सशय ।
मायामात्रमिद द्वैतमद्वैत परमार्थत ॥
विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादय वादो ज्ञाते द्वैत न विद्यते ॥
गौ का १–१७, १८

इति । भाष्यवचन च –

(१) सत्यम् एव स्यात्, प्रपञ्चो यदि विद्येत । रज्ज्वा सर्प इव कल्पितत्वात् । न तु स विद्यते । विद्यमानश्चेन्निवर्तेत, न सशय । न हि रज्ज्वा भ्रान्तिबुद्ध्या कल्पित सर्पो विद्यमान सन् विवेकतो निवृत्त ॥
गौ का, भा १–१७, पा १९०

[अत्र प्रपञ्चस्य कल्पितत्वोक्त्या अध्यासप्रत्युपस्थापितत्वमात्रमुक्तम् । न तु अनिर्वचनीयाज्ञानोपादानकत्वम् । तथा दृष्टान्ते सर्पस्यापि भ्रान्तिबुद्धि कल्पितत्वोक्त्या अनिवचनीयाज्ञानोपादानकत्व वारितम् ॥ ]

(२) यथाय प्रपञ्चो माया रज्जुसर्पवत्, तथाय शिष्यादिभेद विकल्पोऽपि प्राक् प्रतिबोधादेव उपदेशनिमित्त, अत उपदेशादय वाद, 'शिष्य, शास्ता, शास्त्रम्' इति । उपदेशकार्ये तु ज्ञाने निर्वृत्ते ज्ञाते परमार्थतत्त्वे द्वैत न विद्यते ॥ गौ का भा १–१८, पा १९१

(३) अन्त प्रज्ञत्वादिनिवृत्तिसमकालमेव प्रमातृत्वादिभेदनिवृत्ते । तथा च वक्ष्यति 'ज्ञाते द्वैत न विद्यते' इति । ज्ञानस्य द्वैतनिवृत्तिक्षण व्यतिरेकेण क्षणान्तरानवस्थानात् । अवस्थाने चानवस्थाप्रसङ्गाद् द्वैता निवृत्ति । तस्मात् प्रतिषेधविज्ञानप्रमाणव्यापारसमकालैव आत्मन्यध्या रोपितान्त प्रज्ञत्वाद्यनर्थनिवृत्तिरिति सिद्धम् ॥ मा भा ७, पा १८७

अत्र अन्त प्रज्ञत्वादेरध्यारोपितत्वम्, तस्य च प्रतिषेधविज्ञानसमकालमेव निवृत्ति, गुरुशिष्यबोधादिविकल्पस्यापि विकल्पत्वादेव ज्ञानसमकालमेव निवृत्ति, ज्ञानस्यापि द्वैतकुक्षिनिक्षिप्तत्वाविशेषात् अन्त प्रज्ञत्वादिनिवृत्ति समसमयमेव निवृत्ति – इति सर्वम् अध्यारोपापवादप्रक्रियाया एवोप ष्टम्भकम् । अतो वेणुजाग्न्यादे स्वपरविनिवर्तकत्वनिदर्शन प्रस्थानान्तर मातस्थुषा 'पय पयोन्तर जरयति स्वय च जीर्यति' (ब्र सि 13) इत्यादिदृष्टान्तानाहरता मण्डनादीनामनुकरणमेवेति निश्चीयते ॥

(४) एवमन्यत्रापि बुद्धियुक्तो बोध एवाज्ञानतत्कार्ये दहति । बुद्धयादेस्तु तत्र सत्यत्वेनादाह्यत्वान्न तु त दहति । यथा वायुयुतोऽग्नि, तृणादि दहति न वायुम्, अदाह्यत्वात् तस्य । अतो बुद्धिर्वा बोधदीप्ता, बोधो वा बुद्धीद्ध, अज्ञान दहतीत्यज्ञानतत्कार्यदाहस्सिद्धो ज्ञानविभावसो ॥ इ सि पा ७०

दृष्टान्तभूतशुक्त्यज्ञानादिदाहो नाम यदि नाश, न तर्हि बोधस्य केवलस्य बुद्धियुक्तस्य वा तत्कर्तृत्वमुपपद्यते । बोधे विकारा सभवात्, अथ बाध एव विकल्पास्पदस्वरूपज्ञापनेन रजतादेर्मिथ्यात्व बोधनम्, न तर्हि विषयवैलक्षण्येन ज्ञापनविधौ कश्चिद् विशेष, शुक्ति सत्यत्वेन रजत च मिथ्यात्वेन बोधयद् हि ज्ञान स्वाश्रय बुद्धिमपि सत्य-त्वेनैव बोधयति, न तु क्वचिदपि किञ्चिदपि नाशयति निवर्तयति वेति । 'मुधैवामुह रजतमिति, न तु तत्र रजतमासीत्' इति खलु सम्यग्ज्ञान रूपम् । तेन मोहापसरणमेव ज्ञानकृत्य न तु तदतिरिक्ताज्ञाननिवर्तन मपीति । तत्रापि 'रजत प्रत्येति' इति प्रत्ययजन्म बुद्धिवृत्तिविकार-लक्षणम्, तद्गतचिदाभासकृत्य तु स्वगोचराभासनमेव । 'तथा इदानीं

शुक्ति शुक्तिरित्येव प्रत्येति इत्यत्रापि वृत्तिजन्म तद्गताभासकृत्य च विवेचनीयम् । उभयत्रापि अवगतिलक्षणो बोध स्वरूपेणैवोदासीनोऽवतिष्ठते । यथाहु –

> सम्यक्संशयमिथ्योक्ता प्रत्यया व्यभिचारिण ।
> एकैवावगतिस्तेषु भेदस्तु प्रत्ययार्पित ॥ उप सा १८ १२१

इति । अतोऽत्राप्यज्ञाननिवृत्त्यानयन बुद्धिबोधयोस्तत्कर्तृत्वे विकल्पन च नापेक्षितमिति भाति ॥

## अनिर्वचनीयाज्ञाननिवृत्तिः किंलक्षणा ? –

२२६ 'अज्ञाननिवृत्तिरेव भ्रमनिवृत्ति, तच्छरीरत्वात् तस्य' – इति चेत्, कासौ अज्ञाननिवृत्ति ? तस्या सत्त्वे, असत्त्वे, सदसत्त्वे, अनिर्वचनीयत्वे वा दोषादनिस्तारात्, तुच्छत्वानङ्गीकाराच्च नास्त्येवाज्ञाननिवृत्ति –इति विस्तरश पूर्वपक्ष प्रदर्श्य 'अतोऽनिर्वचनीयस्य निवृत्त्यसभवात्, अज्ञाननिवृत्तेश्च प्रसिद्धत्वात्, नानिर्वचनीयमज्ञानम्' इत्याक्षिप्ते इष्टसिद्धिकृत परिहारोऽयम् –

> (१) सदसत्सदसदनिर्वचनीयप्रकारेभ्यो ह्यन्यप्रकारैवाज्ञानस्य निवृत्ति र्युक्ता । अनिर्वचनीयत्वात् तस्य, उक्तप्रकाराणा त्वयैव निरस्तत्वात् । निर्वाच्यानामेव हि ते निवृत्तिप्रकारा अनिर्वचनीयान्ता । अनिर्वचनीयापि निवृत्ति सत एव, आत्माकाशादे । अतोऽन्यप्रकारैवाज्ञानस्यानिर्वाच्यस्यनिवृत्तिरनुरूपा । यक्षानुरूपो हि बलि ॥ इ सि पा ८५-८६

> (२) उच्यते यादृगज्ञानभावोऽभावोऽपि तादृश ।
> मिथ्याभावेन भूत किं मिथ्यानाशान्न नङ्क्ष्यति ॥
> इ सि ८-२, पा ३६४

प्रस्तवाज्ञाननाश, स सत्यो मिथ्या वा ? – इति विकल्प्याक्षेपे परिहार –

> (३) किं त्वया नाशस्य सत्यत्व मिथ्यात्व च विवक्षितमिति, याभ्या द्वैतसत्यताज्ञानसद्भावौ स्याताम् ? (१) यथात्माज्ञानाभ्याम् अन्यवस्तुत्व

सत्यत्वम्, तन्मया नेष्टम्। अज्ञानभावेऽपि नात्मनोऽन्यद् वस्त्वस्ति। किं पुनस्तदभावे। (२) अथ अमायात्मकत्वेन आत्मनाशवदबाध्यत्वम्, तत्तु इष्टम्। (३) अतो मिथ्यात्वमपि मायात्मत्व चेत्, नेष्टम्। अथ नाशिनोऽवस्तुत्वात् नाशस्य अवस्त्वन्तरजन्मत्व मिथ्यात्वम्, तदिच्छामि। अतो नोक्तदोषो मत्पक्षे॥ इ सि पा २६४-२६५

अज्ञाननिवृत्तिर्नाम किञ्चिदज्ञानव्यतिरिक्तमिति कृत्वा आक्षेप, तस्यानुरूपोऽय परिहार इति स्पष्टम्। तथाजातीयक एवान्योऽपि –

(४) यथा अनिर्वचनीयम् अप्रसिद्धमपि अनात्मविदा न्यायबलादभ्युपेतम्। एव तन्निवृत्तिप्रकारोऽपि न्यायबलादेवाप्रसिद्धोऽप्यभ्युपेय॥
इ सि पा ८६

[अज्ञानतन्निवृत्ती प्रसिद्धिबलादभ्युपेये। 'यस्य स्वरूपेऽपि नास्ति प्रमाणम्, तस्य निवृत्तौ क प्रमाण मृगयते ?' इतीष्टसिद्धयुक्तिर्यद्यपीष्टा सर्वेषामज्ञानवादिनाम्, तथापि ग्रन्थकृदभिमतमेव तदज्ञानमित्यत्र तु विप्रतिपत्तिरपरिहार्या॥]

'अज्ञानदाहस्य स्वरूप ब्रूहि तन्मान च' इत्यस्य प्रतिवचनम् –

(५) ज्ञातोऽर्थ, तज्ज्ञप्तिर्वा तदज्ञानहानि॥ इ सि पा ३६९

अपरोक्षस्वभावस्याप्यात्मन, अनादिजडानिर्वाच्याज्ञानाच्छन्नतया स्फुरणम् अज्ञातत्वम्। तस्य च वेदान्तजन्मनोऽपूर्वादिलक्षणौपनिषदपुरुषाकारतयैव समासज्ञानात् या अपरोक्षता सा तस्य ज्ञातता। सा चाविद्यानिवृत्तिरेव। अविद्या चानादित्वान्निर्हेतु। अतो नष्टा सा नोद्भवेत्। हेत्वभावात्। प्रागसतो हेतु विना अनुद्भवाच्च। अजनिमत्त्वाच्चास्या। न च जनिमतोऽविद्यात्वम्, तद्धेतुत्वात्तस्या। न च ता विना अन्यस्यापि जन्म। अतो निवृत्तेर्न सा अन्यद्वा किञ्चित् जायते। अकार्यत्वादेवास्या निवृत्तिर्न कस्यचिज्जन्म। नापि कारणभाव। कार्याणामेव तथा दृष्टत्वात्, इष्टत्वाच्च महाप्रलयादौ। अतो अज्ञाननिवृत्तिरात्मन श्रुतिजज्ञानादपरोक्षब्रह्मात्मनोऽपरोक्षानुभव एव, स यद्यपि नात्मनोऽन्य। तथापि न ज्ञानोदयात् प्रागिति न सदा अज्ञाननिवृत्त्यादिदोषप्रसङ्ग॥ इ सि पा ३७१-३७२

(६) वस्तुज्ञप्तिरेव तदज्ञानादिनाशो लोके, तथा वेदेऽपीति चेत्, अस्त्वेवम्। उक्त च 'ज्ञप्तिर्वा अज्ञाननाश' इति। एवमात्मन एवाजडस्य

फलत्वात् तस्यैव सत्यता इति न द्वैतसत्यत्वाशङ्का । आत्मैव अजडत्वात् कूटस्थोऽपि मानमेयसबन्धात् फलायत इत्युक्तम् । तस्य नित्यत्वेऽपि फलात्मनैवाज्ञाननाशत्वम् । मानोदये च फलात्मता इति न सदा अज्ञान नाशप्रसङ्गदोष ॥ इ सि पा ३७३

अत्र सर्वत्रापि ज्ञानेनाज्ञानबाध एव न वस्तुवृत्तेन निवृत्ति – इत्यनुसधाने सति नास्त्येव कश्चिच्छङ्कातङ्क । अनाद्यध्यासस्यैवाज्ञानत्व-स्वीकारे न तस्य तर्केण साधनापेक्षा यथा, तथा तद्बाधस्यात्मज्ञानत्व-स्वीकारेऽपीति च । तथैव हि भाष्याकारा –

(१) कस्य पुनरयमप्रबोध इति चेत्, यस्त्व पृच्छसि तस्य ते-इति वदाम । नन्वहमीश्वर एवोक्त श्रुत्या । यद्येव प्रतिबुद्धोऽसि, नास्ति कस्यचिदप्रबोध । योऽपि दोषश्चोद्यते कैश्चित्, अविद्यया किलात्मन सद्वितीयत्वात् अद्वैतानुपपत्तिरिति । सोऽप्येतेन प्रत्युक्त ॥
सू भा ४-१-३

इति आत्मनोऽद्वितीयत्व प्रत्याययितुमेव सर्वोऽय विद्याविद्याविभाग, विद्याविद्ययोर्बाध्यबाधकविभागश्च । वस्तुतस्तु 'ज्ञाते द्वैत न विद्यते' इत्यभियुक्तोक्तिरेव सर्वतर्कज्वरनिवारिणीत्यनवद्यम् ॥

## ब्रह्माज्ञानं क्रमेणैव निवर्त्यत इति प्रक्रिया –

२२७ यथा शुक्तिविषयकमज्ञान नैकेनैव ज्ञानेन कार्त्स्न्येन निवर्त्यते, (इ सि पा ७०), एव ब्रह्माज्ञानमपीति प्रत्याययितु स्वय-प्रकाशस्य ब्रह्मण प्रमाणप्रकाश्यत्वमेव कथमित्याशङ्क्य तत्सिद्ध्यर्थं ब्रह्मणोऽज्ञानविषयत्वमेव तावदुपपादयितुमाह –

(१) स्वयप्रकाशापि सती सविित्तिर्नास्ति न प्रकाशते च केषाञ्चित्, तथैव ते वदन्ति श्रेयोऽर्थिनोऽपि । न च सा नास्ति, न च न प्रकाशते । तथैव ब्रह्मापि स्वयप्रकाश सच्च नास्ति न प्रकाशते चाज्ञानाम् । अत प्रमाण तत्रार्थवत् । यथासवित्ते स्वात्मप्रकाशकत्वप्रतिपादनम् अर्थवत् । सवित्तेरसत्त्वादिवचनं भ्रान्तिमूलम् इति चेत् । भ्रान्तिरप्यज्ञानमूलैवेति सा तेषा न प्रकाशत एव । अतस्तद्वचोऽर्थवत् । तस्मात्

**स्वयप्रकाशमपि प्रमाणप्रकाश्यमेव । तस्य च अप्रकाशनम्, अज्ञानमेवेति तन्निवर्तनमेव तत्प्रकाशकत्व प्रमाणस्य । यथा मूर्तद्रव्यापनयनमेव कूपाकाशादिकरणम् ॥ इ सि पा ७१-७२**

[अत्राध्यासलक्षणानाद्यविद्याव्यतिरेकेण ब्रह्माकारकमज्ञानान्तरमङ्गीकर्तव्यमित्याग्रहात् स्वयप्रकाशस्यापि तादृशाज्ञानावृतत्व युक्त्या प्रसाध्यते । तत्र ब्रह्मण प्रमाणविषयत्वमनिष्टमापद्येतेति कूपाकाशकरणदृष्टान्तानयनम् । तत्र पर मृच्छिलादिप्रतिबन्धो दृष्टोऽस्ति, ब्रह्मणस्तु सर्वप्रकाशकत्वात् सर्वस्यात्मत्वादेव च न केनचित् प्रतिबद्धत्व शक्यकल्पनमिति वैषम्यम् ॥ ]

**(२) तस्मात् प्रकाशकमेव प्रमाणम् इत्यस्मिन्नपि पक्षे अज्ञाननिवर्तकत्व सिद्ध तस्य प्रकाशकत्वायैव । यदा तु निवर्तकमेव, अर्थात् प्रकाशनमिति स्थिति, तदा सुतरा निवर्तकत्व सिध्येत् । 'सिद्ध तु निवर्तकत्वात्' इति चोक्त वाक्यकारै ॥ इ सि पा ७२**

'प्रकाशक प्रमाणम्' इति प्रमेयविषये यद्यपि लोकदृष्ट्या सम्यगेव, ब्रह्म तु वेदितुरात्मैव स्वयप्रकाशम् इति न तत्र प्रमाणव्यापारावसर । शास्त्र तु प्रमात्रादिभेदभ्रान्तिनिषेधकृत् । यथोक्त बृहदारण्यकभाष्ये –

**(अ) ननु विरुद्धमिदमुच्यते अप्रमेयम्, ज्ञायत इति च । नैष दोष । अन्यवस्तुवत् अनागमप्रमाणप्रमेयत्वप्रतिषेधार्थत्वात् ॥**

**(आ) प्रमातृप्रमाणादिव्यापारप्रतिषेधेनैव आगमोऽपि विज्ञापयति न त्वभिधानाभिधेयलक्षणवाक्यधर्माङ्गीकरणेन । प्रतिपादयित्रात्मभूत हि तत् । प्रतिपादयितु प्रतिपादनस्य प्रतिपाद्यविषयत्वात् । भेदे हि सति तद्भवति ॥ बृ भा ४-४-२०, पा ९२८**

यदापि निवर्तकमेव प्रमाणम्, तदापि न मूर्तद्रव्यापनयनतुल्या निवृत्ति, कि त्वविद्याप्रत्ययस्य बाधनमेवेत्युक्तम् । रज्जुसर्पादिवत् द्वैतस्याध्यस्तत्वात्, तद्बाध एव कर्तव्यो न तु वास्तव किञ्चिन्निवर्तनमपीति वेदान्तसिद्धान्त । तथा हि माण्डूक्यभाष्यम् –

**(इ) कथ पुन स्वरूपे व्यापाराभावे शास्त्रस्य द्वैतविज्ञाननिवर्तकत्वम्? नैष दोष । रज्ज्वा सर्पादिवदात्मनि द्वैतस्याविद्याध्यस्तत्वात् ।**

यतोऽविद्याध्यारोपितसुखित्वादिविशेषप्रतिबन्धादेरा मन स्वरूपेणानव स्थानम्, स्वरूपावस्थान च श्रेय - इति सुखित्वादिनिवर्तक शास्त्रम् आत्मन्यसुखित्वादिप्रत्ययकरणेन नेति नेत्यस्थूलादिवाक्यै । आत्मस्वरूपवत् असुखित्वाद्यपि सुखित्वादिभेदेषु नानुवृत्तोऽस्ति धर्म ॥

गौ का भा २-३२, पा २०५

यदप्युच्यते निवर्तकत्वपक्षेऽपि अज्ञाननिवर्तकत्वमिति, तत्राध्याम एवाज्ञान चेत्, ओमिति ब्रूम । अध्यासस्य भ्रान्तिप्रत्ययत्वज्ञापनमेव हि तन्निवृत्तिरिति । अथ प्राप्तस्यैव कस्यचित् निवृत्तिरज्ञाननिवृत्तिरिष्यते, न तत्र ज्ञानव्यापार । मोक्षोऽनित्यश्च भवेत् प्राप्तापनयनपक्षे । यत्तूदाहरण 'सिद्ध तु निवर्तकत्वात्' इति तस्याप्यध्यासबाधने तात्पर्यम्, भाष्यकारैरेव तथोक्तत्वात् । क्रमेणात्र सर्वसप्रतिपन्नप्रमाणवाक्यान्युदाह्रियन्ते -

(ई) आत्मनीह यथाऽध्यास प्रतिषेधस्तथैव च ।
मलाध्यासनिषेधौ खे क्रियेते च यथाऽबुधै ॥
प्राप्तश्चेत् प्रतिषिध्येत मोक्षोऽनित्यो भवेद् ध्रुवम् ।
अतोऽप्राप्तनिषेधोऽय दिव्यग्निचयनादिवत् ॥

उप १८-२२, २३

(उ) न हि क्वचित् साक्षाद्वस्तुधर्मस्य अपोढ्री दृष्टा कर्त्री वा विद्या । अविद्यायास्तु सर्वत्रैव निवर्तिका दृश्यते ॥ बृ भा १-४-१०, पा ६६९

(ऊ) तस्मान्निर्विशेष एवात्मानि सुखित्वादयो विशेषा कल्पिता । यत्तु असुखित्वादिशास्त्रम् आत्मन, तत्सुखित्वादिविशेषनिवृत्त्यर्थमेव इति तु सिद्धम् । 'सिद्ध तु निवर्तकत्वात्' इत्यागमविदा सूत्रम् ॥

मा का भा २-३२, पा २०५

[निषेधशास्त्र निषेधप्रतियोगिनिह्नवार्थमेव न त्वात्मवस्तुनि विशेषाधानार्थम् । विद्यमानधर्मापनयनार्थं वेत्यर्थ । एतदुपष्टम्भकत्वेन 'सिद्ध तु' वाक्योदाहरणात्, अध्यासनिषेधार्थं शास्त्रम् इति सूत्रार्थोऽवसीयते । इद च सूत्र द्रविडाचार्याणाम् । ते च छान्दोग्यभाष्यकृत - इति गम्यते तद्भाष्यटीकात , इह तु वाक्यकारोक्तित्वेनोदाहृतम् । कतरन्न्याय्यमित्यत्र पुरातत्त्वान्वेषका एव शरणम् ॥]

(३) यथोक्तपरिपूर्णलक्षणब्रह्मात्मभाव साक्षादनुभवतोऽपि पूर्ववत् पुनरपि जन्मान्तरादिहेत्वज्ञानावशेषसद्भावे प्रमाणाभावात् न पुनस्तस्य संसार

सम्भवेत् । प्राक्तु यथोक्तब्रह्मात्मानुभवात् स्वयप्रकाशे स्वात्मभूते ब्रह्मण्य ज्ञाननिवृत्ति क्रमेणैवेष्यते । अत एवास्तित्वोपक्रमम् आत्मनोऽशनायाद्यती ताद्वितीयब्रह्मात्मत्वान्त रूप श्रावयित्वा, तदसम्भावनाविपरीतभावनानिवृत्त्यर्थं युक्तीश्चाह वेदस्तत्र तत्र । तथा 'तत्त्वमसि' 'तत्त्वमसि' इति त त श्रम नुदन् नवकृत्व ऊचिवान् । सर्वाज्ञाननिवृत्तौ ' तद्धास्य विजिज्ञौ ' इति च । श्रवणमनननिदिध्यासनानि दर्शनसाधनानि जगौ । शमदमादीनि च सर्व कर्मसन्यासान्तानि विधत्ते(स्म) । यज्ञादीनि च सत्त्वशुद्धिद्वारेण दर्शनार्थानि विदधौ । यद्येतै साधनैर्विना सकृच्छ्रवणमात्रेणैव ब्रह्मात्मानुभवो भवेत् एतान्यनर्थकानि स्यु ॥ इ सि पा ७२

अत्र वाक्य विभज्य प्रक्रियाया सारासारता विमृक्ष्याम । तत्र तत्र प्रमाणमप्युपन्यसिष्याम ॥

१ यत्तावदुच्यते ब्रह्मात्मभावम् अनुभवतो न पूर्ववत् अज्ञान शेषसद्भावे हेतुरस्तीति तदङ्गीकरणीयमेव । ज्ञानमेव हि तत्र भवेत् यद ज्ञानम् अत्यन्त न विनाशयति । तथा चोक्त बृहदारण्यकभाष्ये –

(1) आत्मविषय विज्ञान यत्कालम्, तत्काल एव तद्विषयाज्ञान तिरोभाव स्यात् किञ्च न च विपरीतप्रत्ययो विद्यावत उपपद्यते । निर्विषयत्वात् ॥ बृ भा १-४-१०, पा ६७६

इति ॥

२ यत्तूच्यते प्रागनुभवात् अज्ञाननिवृत्ति क्रमेणैव भवतीति तत्राज्ञान यद्य यत्मानिरिक्त र्, तत्र यद्वक्तव्य तत् प्रागेवोक्तम्, न तादृशाज्ञानस्य निवृत्तिरस्तीति । अथाध्यास एवाविद्या, तर्हि भवत्यपि कस्यचिदेवम्, न तु सर्वस्येति व्यवस्थितविकल्प । तथा हि भाष्यकारा –

(2) यद्यपि च प्रतिपत्तव्य आत्मा निरश, तथापि अध्यारोपित तस्मिन् बहुशत्व देहेन्द्रियमनोबुद्धिविषयवेदनादिलक्षणम्, तत्रैकेनावधानेन एकमशमपोहति, अपरेणापरमिति युज्यते तत्र क्रमवती प्रतिपत्ति । तत्तु पूर्वरूपमेवात्मप्रतिपत्ते ॥ सू भा ४-१-२, पा ४६२

(3) येषां पुनर्निपुणमतीनां नाज्ञानसंशयविपर्ययलक्षणः पदार्थविषयः प्रतिबन्धोऽस्ति, ते शक्नुवन्ति सकृदुक्तमेव तत्त्वमसिवाक्यार्थमनुभवितुमिति तान् प्रत्यावृत्त्यानर्थक्यमिष्टमेव ॥ सू भा पा ४६२

३ यत्तु अस्तित्वोपक्रमम् [illegible] रूपं श्रावयित्वा तदसंभावनाविपरीतभावनानिवृत्त्यर्थं युक्तीश्चाह वेद इति, तत्र यद्ययमभिप्रायः, अस्तित्वं प्रथमं श्राव्यते, [illegible]त्मस्वरूपमिति अस्त्वेवम्, 'अस्तीत्येके नायमस्तीति चैके, (का १–१–२०) इत्यादिस्थलेषु परोक्षत्वात् प्रेतस्यास्तित्वनास्तित्वसंशयावकाशात् तत्परिहाराय युक्तिरपीति। यत्र पुनः अस्तीत्येवोपलब्धव्यः' (का २–३–१३) इत्यादिश्रावणम्, तत्र दृष्टफलत्वात् श्रवणस्य नैवास्तित्वे संशयः। न च तत्परिहाराय युक्तय उच्यन्त इति विशेषः। अशनायाद्यतीततत्त्वश्रवणानन्तरं तु नास्त्येव संशयः, न वा युक्तिः श्राव्यते इति स्पष्टम् ॥

(4) सर्वविशेषरहितोऽपि 'जगतो मूलम्' इत्यवगतत्वात् अस्त्येव। कार्यप्रविलापनस्य अस्तित्वनिष्ठत्वात्। तथा हीदं कार्यं सूक्ष्मतारतम्यपारम्पर्येणानुगम्यमानं सद्बुद्धिनिष्ठामेवावगमयति। यदापि विषयप्रविलापनेन प्रविलाप्यमाना बुद्धिः, तदापि सा सत्प्रत्ययगर्भैव विलीयते। बुद्धिर्हि नः प्रमाणं सदसतोर्याथात्म्यावगमे। मूलं चेत् जगतो न स्यात्, असदन्वितमेवेदं कार्यम् असत् असत् इत्येव गृह्येत, न त्वेतदस्ति, सत् सत् इत्येव तु गृह्यते, यथा मृदादिकार्यं घटादि मृदाद्यन्वितम्। तस्मात्, जगतो मूलम् आत्मा अस्तीत्येवोपलब्धव्यः ॥ का भा २ ३–१२, पा १०२

['अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते इत्यस्य भाष्यम् ॥]

(5) तस्मात् अपोह्य असद्वादिपक्षम् आसुरम् अस्तीत्येवात्मा उपलब्धव्यः, सत्कार्यबुद्ध्याद्युपाधिभिः। यदा तु तद्रहितोऽविक्रिय आत्मा कार्यं च कारणव्यतिरेकेण नास्ति 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतेः, तदा तस्य निरुपाधिकस्य अलिङ्गस्य सदसदादिप्रत्ययविषयत्ववर्जितस्यात्मनस्तत्त्वभावो भवति तेन च रूपेण आत्मा उपलब्धव्यः ॥ का भा २–३–१३, पा १०२

[ 'अस्तीत्येवोपलब्धस्य तत्त्वभाव प्रसीदति' इत्यस्य भाष्यमिदम् । अत्रास्तित्वमपरोक्षम् । तस्यासम्भावनापरिहारार्थं न युक्ति प्रदर्श्यते श्रुत्या, किं तर्हि अस्तित्वोपाधिं पूर्वमधिगमय्य, पश्चात् तस्याप्यपवादेन निरुपाधिक रूप समर्पयितु प्रयत्यत इत्युक्तम् ॥ ]

(6) कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोक मोह जरा मृत्युमत्येति । एत वै तमात्मान विदित्वा ब्राह्मणा पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ॥ बृ ३ ५ १

[अत्राशनायाद्यतीतत्व श्रावयित्वा तत्रासभावनादिनिवारणाय न काचन युक्तिरुच्यते, साक्षादपरोक्षाद् ब्रह्मण एव सर्वान्तरात्मत्वेन समर्पणात् । तत ऊर्ध्वं कर्तव्याभावद्योतनाय हि एषणात्रयाद् व्युत्थान श्राव्यत इति ॥ ]

४ यत्तु 'तत्त्वमसि', 'तत्त्वमसि' इति त त भ्रम नुदन् नवकृत्व ऊचिवान् इति, तत्सत्यमेव । 'भूय एव मा भगवान् विज्ञापयतु (छा ६–८–७) इति पुन पुन शङ्कान्तरप्रत्युपस्थापनात् । यत पुन सर्वाज्ञाननिवृत्तौ तद्धास्य विजज्ञौ इत्याह – इति, तदपि सत्यमेव यदि श्वेतकेतो तत्तदुपदेशानन्तर जाततत्तच्छङ्कानिवारणेन परमार्थसत्यार्थ ज्ञानमभूत् – इत्यभिप्राय । एव हि तत्र भाष्यम् –

(7) अथेदानीं पित्रा प्रतिबोधित तत्त्वमसीति दृष्टान्तैर्हेतुभिश्च तत् पितुरस्य ह किलोक्त सदेवाहमस्मीति विजज्ञौ विज्ञातवान् ॥

छा भा ६–१६–३, पा ५३९

[अत्र तत्तच्छङ्कानिवारणार्थमेव हेतुदृष्टान्तोपन्यास इति, सर्वशङ्कानिवारणे सति सद्ब्रह्माहमस्मीति बोधजन्म – इति चोक्तम् ॥ ]

(8) किं तु पुनरत्र षष्ठे वाक्यप्रमाणेन जनित फलमात्मनि ? कर्तृत्वभोक्तृत्वयोरधिकृतत्वविज्ञाननिवृत्ति तस्य फल वयमवोचाम ॥

छा भा पा ५३९

[अत्र वाक्यप्रमाणजनित फल कर्तृत्वभोक्तृत्वभ्रमनिवृत्तिरेवेति स्पष्ट-मुक्तम्, न तु 'तत्तदुत्तरेण तत्तदज्ञानाशनाशे सति वाक्यज्ञानात् निरवशेषम् अज्ञानबाध ' इति ॥ ]

५ यदप्युच्यते श्रवणमनननिदिध्यासनानि दर्शनसाधनानि जगौ – इति, तदप्युक्तरीत्यैव सगमनीयम् । न हि श्रवणेन अज्ञानस्यै कोऽश, मननेनापरोऽश, निदिध्यासनेन चान्योऽशो विनाश्यत इति श्रुत्यभिप्राय ॥

(9) ननु श्रुतब्रह्मणोऽपि यथापूर्वं ससारित्वदर्शनात्, न रज्जु-स्वरूपकथनवदर्थवत्त्वमित्युक्तम् । अत्रोच्यते । नावगतब्रह्मात्मभावस्य यथापूर्वं ससारित्व शक्य दर्शयितुम्, वेदप्रमाणजनितब्रह्मात्मभावविरोधात् ॥

सू भा १-१-४, पा २१

(10) यत् पुनरुक्त श्रवणात् पराचीनयोर्मनननिदिध्यासनयोर्दर्शनाद् विधिशेषत्व ब्रह्मण, न स्वरूपपर्यवसायित्वमिति । न । अवगत्यर्थत्वान्मनन निदिध्यासनयो । यदि ह्यवगत ब्रह्मान्यत्र विनियुज्येत, भवेत् तदा विधिशेषत्वम् ॥ सू भा १-१-४, पा २३

[वाक्यद्वयेन श्रवणादीनाम् अवगत्यर्थत्वमुक्त भाष्ये । श्रवणेनैव चेदव-गतिर्जाता, नास्ति कृत्य मनननिदिध्यासनयोरिति च । न त्वेव जातुचिदुक्त श्रवणेनैकोंऽशोऽज्ञानस्य नाश्यते, मननेनापर – इत्यादि ॥ ]

६ यत्तु साधनविधानान्यथानुपपत्त्या साधनैर्विना श्रवणमात्रेण नानुभवप्राप्तिरित्यवसीयत इति । तत्रेद तु वक्तव्य यत् ज्ञानसाधनविधि-र्नैकान्तेन समुच्चयमेव साधनाना सर्वत्रापि सर्वेषामपेक्षते । उक्त हि बृहदारण्यकभाष्ये –

(11) लोके हि नैमित्तिकाना कार्याणा निमित्तभेदोऽनेकधा विकल्प्यते । तथा निमित्तसमुच्चय । तेषा च विकल्पितानां समुच्चितानां च पुनर्गुणवद्गुणवत्त्वकृतो भेदो भवति । एवमेव आत्मैकत्वज्ञानेऽपि क्वचिज्जन्मान्तरकृत कर्म निमित्त भवति । यथा प्रजापते । क्वचित् तपो-निमित्तम् । क्वचित् 'आचार्यवान् पुरुषो वेद', 'श्रद्धावाँल्लभते ज्ञानम्', 'तद्विद्धि प्रणिपातेन', 'आचार्याद्धैव', 'द्रष्टव्य श्रोतव्य' इत्यादि-श्रुतिस्मृतिभ्य एकान्तज्ञानलाभनिमित्तत्वम् ॥ बृ भा १-४-२, पा ६४९

इति । न च सर्वेषामपि साधनानाम् अज्ञाननिवर्तकत्वमेव साक्षादिति नियोक्ता कश्चिदस्ति । यत –

(12) श्रद्धाप्रभृतीनाम् अधर्मादिनिमित्तवियोगहेतुत्वात्, वेदान्तश्रवणमनननिदिध्यासनाना च साक्षाज्ज्ञेयविषयत्वात् । पापादिप्रतिबन्धक्षये चात्ममनसोर्भूतार्थज्ञाननिमित्तस्वाभाव्यात् ॥ बृ भा पा ६४९

तस्मात्, क्वचिद् दुरितक्षयद्वारेण, क्वचित् प्रत्यक्प्रावण्यसमासादनेन, क्वचिच्चैकाग्र्यसपादकत्वेन क्वचित् पुन साक्षादात्मविषयकानात्माध्यारोपनिवर्तनेन च साफल्यम् साधनस्येति न विविधसाधनविधानान्यथानुपपत्त्या अज्ञानस्य साशत्व क्रमेणैव निवारण च कल्पनीयम् । न च साशत्वानशत्वाभ्यामनिर्वचनीयस्य साशत्व सभवति युक्त्यापि । तस्मात्, अनेकरूपत्वाच्छुक्त्यादेर्जडस्य, एकैकेन ज्ञानेन कार्त्स्न्येनाप्रकाशित्वात् तदज्ञानस्यापि न कार्त्स्न्येन निवृत्तिरिति न युक्त कल्पनम् । तथा च नैकान्येवाज्ञानानीति कल्पान्तरमिष्टसिद्धावप्युक्तमनादेयम् । तत्रापि, अग्रहणसशयविपरीतग्रहणान्येव आत्मनस्तत्तद्रूपप्रकाशनेन निवर्त्यत्वेन कल्पितान्यल तत्त्वज्ञानसार्थक्यायेति न तदर्थमज्ञानान्तरगवेषणा भवेदिति दूषण स्थितमेवेति द्रष्टव्यम् ॥

## ब्रह्मज्ञानस्य तदज्ञाननिवृत्तिद्वारा साक्षात्कारहेतुत्वम् –

२२८ न केवल श्रवणादीनि, किं तु दर्शनमप्यपेक्षित कार्त्स्न्येनाज्ञाननिवृत्तये, तच्च महावाक्याद् भवतीतीष्टसिद्धिप्रक्रिया ॥

(१) श्रवणादिभिर्निश्चितेऽप्यात्मतत्त्वे अनुमानादिनिश्चित इव चन्द्रादौ भेदप्रतिभासानिवृत्ते, दर्शननिवर्त्यमप्यज्ञानमस्ति ॥ इ सि ७४

(२) न चैकत्वादिज्ञान विना द्विचन्द्रादिज्ञानाना भ्रान्तित्व ज्ञातु शक्यम् 'न च द्वौ चन्द्रौ', 'नेय प्राची दिक्' – इत्येतावदेव आप्तवाक्य यद्यपि भवेत्, तथापि पूर्वोक्तव्युत्पत्तिबलादनिर्वाच्यतैव चन्द्रद्वित्वादे प्रतीयते न स्वभाव । 'नेह नानास्ति' इत्यागमवाक्यस्याप्येवमेवार्थो ग्राह्य । तस्मात्, द्विचन्द्रादिभ्रमस्य अपरोक्षत्वात् अपरोक्षज्ञानेनैव निवृत्ति । एवम् आत्मनोऽब्रह्मत्वभ्रमस्यापरोक्षत्वात् अपरोक्षज्ञानमेव श्रौत तन्निवर्तयति ॥ इ सि पा १२२

(३) न च परोक्ष वस्तु परोक्षज्ञानैरेवाभ्यस्यमानैरपरोक्षीभवेत् । अनुमेयादि वदर्शनात् ॥ इ सि पा ७४

शाब्दी चेन्मानजा न मोहनुत्, नतरामन्या । सा हि अमानज त्वात् भ्रान्तिर्भावनादिर्वा न तु विद्या । न ह्यक्षजादि अस्या मान तेऽपीष्टम् । शब्दजा चेत्, शाब्द्येव नान्या । सा चेत् आत्मस्वरूपम्, तच्चेन्मोहनुत्, सदा नुदेत्, अत शाब्द्येव मोहनुत् । न चेत्, सा व्यर्था ॥

इ सि पा ३३४

[ अत्र मण्डनादिसम्मतो ज्ञानाभ्यासजसाक्षात्कारो निरस्त, शाब्द एव साक्षात्कार इत्युक्तम् ॥ ]

(४) शाब्दमपि ज्ञानम् अपरोक्षार्थं भवति, अपरोक्षात्मविषयत्वात्, यथा आत्मन स्वयप्रकाशताव्युत्पादक पौरुषेय वाक्यम् ॥ पा १२२

(५) न हीच्छामि रूप्यादिज्ञान बोधकम् । तस्यापि सत्त्वप्राप्ते । रूप्यादिवत् तज्ज्ञानमपि अज्ञानविलसितमित्युक्तम् । तदुभय यदज्ञान विलसित तज्ज्ञानमेव तदज्ञाननिवर्तक बाधकमुच्यते । नान्यदज्ञाननिवतक मपि । यथा, अन्नमेवादन् अन्नाद उच्यते, न तु मृदमपि, एव सविलास मेवाज्ञान निवर्तयज्ज्ञान बाधकम्, न त्वज्ञानमात्रम् । बाधकादेव सविलासा ज्ञाननिवृत्तौ 'नेद रजतम्' इत्यादिपरामर्शज्ञानम्, न तु रजताद्यभाव बोधकम् । परामर्शकाभावे तु तदपि नास्त्येव ॥ इ सि पा ९४

(६) ज्ञान ह्यज्ञानमेव निवर्तयितु क्षमते न तु वस्तु अण्वपि । तथा दृष्टत्वात् । अन्यथा अतिप्रसङ्गाच्च । न च बोधनमेव बाधनम्, सर्व ज्ञानाना स्वार्थबाधकत्वप्रसिद्ध्यभावात् । निवर्तकत्व तु स्वोत्पत्त्यैव ज्ञानस्य । तच्च प्रसिद्धम् । सभावित च तत् ॥ इ सि पा ९४

(७) स्वयप्रकाशमपि प्रमाणप्रकाश्यमेव । तस्य चाप्रकाशनमज्ञानमेव इति तन्निवर्तनमेव तत्प्रकाशकत्व प्रमाणस्य । अत एव न तद्विषयी करोति जडमिव प्रमाण बोधयदपि ॥ इ सि पा ७२

(८) यथा अनुमानादिभिश्चन्द्रैकत्वे निश्चिते चन्द्रभेददर्शनस्य प्रत्यक्षाभिमतस्यापि भ्रान्तित्व ज्ञायते प्रागप्यपरोक्षबोधात्, न च प्रत्यक्ष-विरोधाशङ्का, अत्राप्येव द्रष्टव्यम् । 'नेह नानास्ति', 'इन्द्रो मायाभि', 'मृत्यो स मृत्युम्' इत्यादिवाक्यै, अनिर्वचनीयत्वव्याप्तैराद्यन्तवत्त्वादिभि-

हेतुभिश्च जगतो मायामायत्वमवगम्यते इत्युक्तम् । अतोऽस्मत्पक्षेऽज्ञानजत्वात् भ्रमस्य ज्ञानान्निवृत्तिर्युक्ता ॥ इ सि पा १२२

अत्र बहुविचिन्त्यमस्ति

(1) 'माया', 'अविद्या', 'आकाशम्' इत्यादिशब्दैर्व्यपदेश्य महदादे प्रकृतिरिति प्रतिज्ञातमत्र । (पा १४४)[1], अतो जगदुपादान कारणमविद्या-इति गम्यते । तथा भ्रान्तिसम्यग्ज्ञानसंस्कारगणामपि कार्यत्वात्, नान्योन्योपादानत्वम्' । यत्तु तेष्वागमापायिष्वन्वेति तदेव तेषामुपादान-मज्ञानम् (पा ४८) इत्यप्युक्तम् । तेन ज्ञानपक्षस्याप्यज्ञानमिदमित्युक्त भवति । किञ्च शुक्तिविषयकमेवाज्ञानम् – इत्यभ्युपगमवादेन आत्माश्रित मेवाज्ञान शुक्तिरूप्यस्योपादानम् (पा ६३) इत्युक्तम्, वस्तुतस्तु जड विषयकमज्ञान नास्त्येव, यतो न तत्प्रमाणगम्यम्, अत आत्माश्रयाज्ञान मेव सर्वमपि जड नाम (पा १९६) इत्युपसहृतम् । एव चाज्ञानविलसित मेव सर्व व्याकृताऽव्याकृतरूप जगत् ज्ञानज्ञेयरूप च इत्युक्त भवति । यद्यपि भाष्यकारीयप्रस्थानेऽपि सर्वं जगदज्ञानकार्यमेव, तथापि तत्राज्ञान नामानादिभ्रान्तिरध्यास, इह पुनर्जडशक्तिरिति (पा ६९) विशेष ॥

(2) प्रपञ्चभ्रमस्य जीवत्वभ्रमस्य च अपरोक्षत्वात्, अपरोक्ष-ज्ञानेनैव तस्य निवृत्तिर्युक्ता इत्युक्तम् (पा १२२) प्राक्तु तादृशज्ञानोत्पत्ते 'नेह नानास्ति किञ्चन' इत्यादिश्रुतिभिश्च आद्यन्तवत्त्वादिहेतुभिश्चा-निर्वाच्यत्वेन मायामयत्व जगतोऽवगम्यत इति चोक्तम् । तत्र श्रुतिभिर्हेतु भिर्वा कि नामापरोक्ष्यमिति न विचार्य निर्धारितम् । 'नेह नानास्ति किञ्चन' (का २-१-११) इति श्रुतिस्तावत् ब्रह्मात्मैवेद सर्वं नान्य-दस्तीति आचार्यागमसस्कृतेन मनसैव ज्ञायते इत्याह । एव 'मृत्यो स मृत्यु गच्छति' इति वाक्यशेषोऽपि अविद्यया नानेव पश्यत्यज्ञ –इत्याह

1 अत्र दत्ता सर्वत्रेष्टसिद्धिपुटसङ्ख्या एव ।

न पुनरनिर्वचनीयमिदमिति। तथा 'आदावन्तेऽपि यन्नास्ति' इति युक्तिरपि 'वर्तमानेऽपि तत्तथा' इति मिथ्यात्व जाग्रत्स्वप्नयोरेकत्वमिद्ध समर्पयति, तया जगतोऽनिर्वचनीयाज्ञानकार्यत्व ज्ञाप्यत इति तु इष्टसिद्धिकृत्प्रस्थानम् ॥

(3) श्रवणादिभि प्रत्येक तत्तदज्ञान तदशो वा निरस्यते, न त्वज्ञानहानिस्तावता कात्स्न्र्येन, दर्शनेन तु, अपरोक्षज्ञानाख्येन, कृत्स्नाज्ञाननिवृत्ति –इत्युक्तमत्र (पा ७४)। शाब्दज्ञानमेवापरोक्षज्ञानमपरोक्षभ्रमनुत् (पा १२२) इति च। तथा निवर्तकत्व तु ज्ञानस्य स्वोत्पत्त्यैव इत्यप्युक्तम्। तत्र सकृच्छ्रूयमाणवाक्यजन्यज्ञानेनैव ब्रह्मात्मत्वदर्शनमपि कस्यचिद् भवेदेवेति भाष्यकारैरावृत्त्यधिकरणे यदुक्तम्, तत् किं न श्रवणमात्रजन्यमपरोक्षज्ञानम् ?–इत्यस्य, तथा 'प्रकृतसङ्ख्यापूरणस्यात्मनोऽविद्यया अनाप्तस्य सत केनचित् स्मारितस्य पुनस्तस्यैव विद्यया आप्तिर्यथा तथा श्रुत्युपदिष्टस्य सर्वात्मब्रह्मण आत्मत्वदर्शनेन विद्यया तदाप्तिरुपपद्यत एव' (तै भा २–१) इत्यादिस्थलेषु दशमज्ञानदृष्टान्तेन ब्रह्मात्मदर्शन भाष्ये यदुक्तम्। तत्र दृष्टान्ते किमस्ति दशमस्यावरण द्विचन्द्रादिवदनिर्वचनीयदर्शन वा, यद्दर्शनेन निवर्त्यते ?' इत्यस्य वा प्रश्नस्योत्तर न स्पष्ट प्रदर्शितमत्र। दशमवाक्यश्रवणादिव तत्त्वमसिवाक्यश्रवणाज्जातमेव ज्ञान किं न प्रभवत्यज्ञाननिवर्तनाय, अपरोक्षानुभवजननाय च ? इत्यपि न विमृष्टमत्र ॥

(4) यत्तूच्यते 'ज्ञानं ह्यज्ञानमेव निवर्तयितु क्षमते, न तु वस्तु अण्वपि, तथा दृष्टत्वात्' इति, तत्र ज्ञानाभावसंशयविपर्ययज्ञानानामेव ज्ञाननिवर्त्यत्व लोकदृष्ट प्रविहाय तद्विलक्षण भावरूपाज्ञान तर्केण ज्ञाननिवर्त्यतया प्रसाध्यते, तच्च निवर्त्यत्व लोकदृष्टत्वेन समुदाह्रियते ब्रह्माज्ञाननिवर्त्यत्वसाधनार्थम्–इति प्रस्थानेऽस्मिन् विशेष ॥

अपरोक्षज्ञानिनोऽप्यविद्यालेशः –

२२९ विदुषो जन्मान्तरहेत्वज्ञानानवशेषेऽपि यावच्छरीरपातमज्ञानलेशोऽनुवर्तत एवेति स्वीक्रियतेऽस्मिन् प्रस्थाने –

(१) अज्ञानलेशोऽस्त्येव, विदुषोऽपि कञ्चित् काल शरीरस्थितेरिष्टत्वात् । तस्याश्च अज्ञानमूलभेददर्शनादिसापेक्षाशनपानाद्यपेक्षत्वात् ॥
इ सि पा ७४

(२) इतश्च, आचार्याद् विद्याप्राप्ति , स च विद्वान् जीवश्च । विद्वानप्यदृष्टतत्त्व स इति चेत्, तन्न । 'उपदेक्ष्यन्ति ते ज्ञान ज्ञानिनस्तत्त्वदर्शिन ' इति तत्त्वदर्शिभिरेवोपदिष्ट ज्ञान पुमर्थसाधनमिति यत ईश्वरोऽनुशशास । दृष्टतत्त्वस्य चेत् तदैव शरीर पतेत्, तदा आचार्याभावात् विद्यालाभान्मोक्षाभाव ॥ इ सि पा ७५

(३) प्रारब्धकर्मान्तरफलाविरोधेनैव कर्माणि स्वफल प्रयच्छन्ति । यतोऽश्वमेधादीनि बलवत्तराण्यपि कर्माणि प्रारब्धभोगक्षय प्रतीक्षन्ते स्वफलदानाय, अत कर्मान्तरारब्धभोगायतनशरीर एव स्वफल दातु समर्थानि विद्योदयफलानि कर्माणि तदविरोधेनैव स्वफल दातुमर्हन्तीति न्याय्य विद्याप्रारब्धभोगयोरविरोधित्वम् तस्मात्, विदुषोऽपि कञ्चित् काल शरीरस्थितेरभ्युपेयत्वात् तावन्मात्रहेतुरविद्याशेषगन्धोऽभ्युपेय ॥
इ सि पा ७५–७६

[यद्यपीमानि त्रीणि पूर्वपक्षिण एव, तथापि 'साधीयानय प्रतिभास ' इत्यादिना (पा ७७) सवादात् सिद्धान्तिनोऽपि समतमिद मतमिति गम्यते ॥]

(४) सस्कारादेव अविद्या विनापि देहादिस्थितिर्विदुष सभवति सर्पभ्रान्तिनिमित्तभयकम्पपलायनादय इव तत्सस्काराद् रज्जुज्ञानेऽपीति चेत् , तन्न । अविद्याभावे सस्काराभावात् । अविद्याशरीरत्वात् सस्कार तद्गतो । भयकम्पादयस्तु न रज्ज्वज्ञानशरीरा इति न दृष्टान्त । यस्तु रज्ज्वज्ञानशरीर सर्पभ्रम , सोऽज्ञानाभावे पुनर्न भवत्येव । भवतु वा सस्कारादेव भ्रमोऽपि कम्पादिरिव लोके, तत्र सस्कारतद्गतोर्भावात् , इह तु तदभावान्न सस्कारात् किञ्चित् सभवेत् । अतोऽज्ञानलेशादेव तद्विद् शरीराद्याभास एष्टव्य । सावशेषोऽप्यज्ञानदाह आत्मन्यपि सभवतीति हि उक्तम् ॥ इ सि पा ७६

[अविद्यासस्कारान् कम्पादिरिव देहाहङ्कारादेरनुवृत्ति पञ्चपादिकाब्रह्मसिद्धि [illegible] (प पा ४०, ब्र सि 133, वा भा ९५९), तन्निराकरणेनात्राज्ञानलेशसद्भाव एव साधित इति स्पष्टम् । अज्ञानलेशोऽज्ञानमेव । तत्र ज्ञानोदयेऽप्यज्ञानलेशावशेष कथमिति तु नालोचितम् ॥ ]

**(५) साधीयानय प्रतिभास । अहमपीच्छाम्येवेत्थम् । देहान्तरादि ससारबीजमेव त्वज्ञानशेष विदुषो नेच्छामि । स तु त्वयापि निरस्त । एव च सति ' विमुक्तश्च विमुच्यते ' इत्यादीनि जीवन्मुक्तिवचनानि स्थितप्रज्ञ गुणातीतलक्षणवचनानि चोपपन्नार्थानि भवन्ति ॥ इ सि पा ७७**

अविद्यालेशस्य तत्सस्कारस्य वा जीवन्मुक्तेऽङ्गीकर्तृभि सर्वैरप्य-द्वैतिभिर्व्यवहारदृष्ट्यैव तदभ्युपगम्यन इति स्पष्टम् । तत्र सस्कारपक्ष एव ज्यायानिति श्लिष्यते । अन्यथा ह्यज्ञान ज्ञानेन बाध्यमेव ज्ञानेनैव च तद् बाध्यमिति सर्वसप्रतिपन्नो नियमो भज्येत । जीवन्मुक्ते ज्ञानेन सहा-प्यज्ञानानुवृत्त्यङ्गीकारात्, स्वयमेव विनाशाङ्गीकारप्रसङ्गाच्चाज्ञानस्य । वाक्यप्रामाण्याच्छ्रद्धामात्रगम्यश्च स्यात् आत्यन्तिकाविद्यामोक्ष आशरीर-धारणमज्ञानलेशानुवृत्त्यभ्युपगमात् इति च स्फुटम् । अत एव भाष्य कारैरुक्तम् –

**(१) बाधितमपि मिथ्याज्ञान द्विचन्द्रज्ञानवत् सस्कारवशाद् कञ्चि त्कालमनुवर्तत एव । अपि च नैवात्र विवदितव्य ब्रह्मविदा कञ्चित्काल शरीर ध्रियते न वा ध्रियत इति । कथ ह्येकस्य स्वहृदयप्रत्यय ब्रह्मवेदन देहधारण चापरेण प्रतिक्षेप्तु शक्येत ? ॥ सू भा ४-१-१५, पा ४७५**

[ अत्र मिथ्याज्ञान बाधितम् इति वचनात्, न मिथ्याज्ञानशेष , समर्थ-क्रियाकारिमिथ्याज्ञानसस्कारशेषो वा अभ्युपगम्यते तत्रभवता आचार्येण, कि तु तदाभासानुवृत्तिरेव निश्चितशुक्तितत्त्वस्यापि रजतावभासानुवृत्तिवत् । बाधितप्रतीत्यनुवृत्त्या हि प्रत्येतुर्न कश्चिदुपकारोऽपकारो वेति । एव शरीरधारण मपि बाधित एवेति गम्यते । एतच्चाध्यारोपापवादप्रक्रियानुगुणम् । तदाभासानु-वृत्तिरेवेति मिथ्याज्ञानानुवृत्तिमध्यारोप्य शरीरधारणादिप्रतीते प्रारब्धकर्माभास प्रयुक्तत्वोपपादनात्, तात्त्विकशरीरानुवृत्त्याद्यपवादात् । तस्य बाधितत्वोक्त्या मिथ्याज्ञानानुवृत्तेरप्यपवादाच्च । इष्टसिद्ध्यादिपक्षान्तरे तु अव्याकृतलक्षणमज्ञान-

मभ्युपगम्य तस्य च देहादेश्च कार्यकारणभाव एवाभ्युपगम्यते । जीवन्मुक्तौ तच्छेषसंस्काराद्यनुवृत्तिश्चेति विशेष ॥]

(२) न च विपरीतप्रत्ययो विद्यावत उपपद्यते । निर्विषयत्वात् । क्वचित् विद्याया पूर्वोत्पन्नविपरीतप्रत्ययजनितसंस्कारेभ्यो विपरीतप्रत्ययाव भासा स्मृतयो जायमाना विपरीतप्रत्ययभ्रान्तिम् अकस्मात् कुर्वन्ति । यथा विज्ञातदिग्विभागस्यापि अकस्मात् दिग्विपर्ययविभ्रम । सम्यग्ज्ञान-वतोऽपि चेत् पूर्ववद् विपरीतप्रत्यय उत्पद्यते सम्यग्ज्ञानेऽप्यविस्रम्भात् शास्त्रार्थविज्ञानादौ प्रवृत्तिरसमञ्जसा स्यात् ॥ बृ भा १–४–१०, पा ६७८

[अत्रापि बाधितविभ्रमानुवृत्तिरेव विवक्ष्यते इति स्पष्टम् ॥]

(३) विद्वांस्तु पुनर्विद्यया अविद्याया निवृत्ताया शक्नोत्येवाशेषत कर्म परित्यक्तुम् । अविद्याध्यारोपितस्य शेषानुपपत्ते । न हि तैमिरिक दृष्ट्याध्यारोपितस्य द्विचन्द्रादे तिमिरापगमे शेषोऽवतिष्ठते ॥

गी भा १८–४८, पा २७८

[अतोऽविद्यापगमेऽपि या तदनुवृत्तिरिव सा बाधितानुवृत्तिरेवेत्युक्त भवति ॥]

(४) तस्मात्, मिथ्याप्रत्ययनिमित्तत्वात् सशरीरत्वस्य सिद्ध जीवतोऽपि विदुषोऽशरीरत्वम् । तथा च ब्रह्मविद्विषया श्रुति – 'तद्यथाहि निर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेद शरीर शेते । अथाय मशरीरोऽमृत प्राणो ब्रह्मैव तेज एव' (बृ ४–४–७) इति । 'सचक्षु रचक्षुरिव ' इति च । स्मृतिरपि च 'स्थितप्रज्ञस्य का भाषा ' (गी २–५४) इत्याद्या स्थितप्रज्ञलक्षणान्याचक्षाणा विदुष सर्वप्रवृत्त्य-सबन्ध दर्शयति ॥ सू भा १–१–४, पा २३

[अत्र सशरीरत्वस्य मिथ्यात्वात् सर्वप्रवृत्त्यभावो निवृत्तमिथ्याज्ञानस्य विदुष –इत्युपपादितम् । विद्यमानामपि बाधितानुवृत्तिमकिञ्चित्करी गृहीत्वा । तत्र च श्रुतिस्मृतय प्रमाणत्वेनोदाहृता । इष्टसिद्धौ तु विदुषो मिथ्याप्रत्यय-कारणस्य अज्ञानस्य शेषसद्भावस्तान्य एव श्रुतिस्मृतिभ्य साधित –इति स्फुट प्रस्थानवैलक्षण्यम् ॥]

## मण्डनादिप्रक्रियाखण्डनम् –

२३० ब्रह्मैवाविद्याश्रय इति पक्षे एकमुक्तौ सर्वमुक्तिप्रसङ्ग – इत्यतो जीवाश्रितैवाविद्या स्वीकार्या इति (ब्र. सि. 10, व्रा भा १२६)

इति मण्डनमिश्रवाचस्पतिमिश्रौ मेनाते । तन्मतमत्र विस्तरेणखण्डितम् । तत्रार्थसंग्राहकश्लोकाविमौ –

जाड्यान्न कल्पितस्येष्टाविद्या प्रागुक्तहेतुभिः ।
नाजडः कल्प्यते सिद्धेर्नात एव जडाजडे ॥ इ सि ६-४
न स्याद् ब्रह्मण्यविद्या सा नेष्टा चेद् ब्रह्मणस्तदा ।
न ब्रह्मधीर्न सा मुक्त्यै तन्मोहान्न हि संसृतिः ॥ इ सि ६-५

(१) ब्रह्म चेन्नाज्ञं तर्हि नाज्ञातं स्यात्, तद्व्यतिरिक्तस्य च चेतनस्याभावात् अहं ब्रह्मास्मीति श्रौती ब्रह्मधीर्न स्यात् । ब्रह्माज्ञानाभावाच्च न तज्जः संसारः । अज्ञानाभावे ब्रह्मधीनाश्यमेव न स्यात् । तथा च ज्ञानान्मुक्तिरिति श्रुतेर्बाधः । जीवानां कल्पितत्वात् तेषां जडत्वापत्त्या नाविद्याश्रयत्वोपपत्तिः । तेषु कल्पिते ह्यज्ञानाश्रयत्वे अज्ञानकल्पितेऽज्ञानमिति स्यात् । तथा चात्माश्रयता, अन्योन्याश्रयता, अनवस्था वा स्यात् । न च ब्रह्मणि विद्यात्मकेऽविद्यानुपपत्तिरिति मण्डनवाचस्पत्युद्भावितो दोषोऽस्ति । न हि वेदजन्यविद्यात्मकत्वं ब्रह्मणः, किं तु चिदात्मत्वमिति । न च सादेर्भ्रमस्यानादिब्रह्माश्रयत्वम् । न च भ्रमप्रवाहोऽप्युक्तदोषापनोदकः, प्रवाहस्य भ्रमत्वे कार्यत्वात्, अभ्रमत्वे अकल्पकत्वाच्च । अतो न कल्पितजीवोऽज्ञानी । अविद्यावतोऽन्यविषयकमज्ञानमिति न संभवति । तस्मिन्नज्ञाते ज्ञाते च तदसंभवात् । अज्ञस्य अविद्यादेहत्वे न विद्या हन्त्यविद्याम् । अज्ञबाधप्रसङ्गात्, ज्ञानेनाज्ञबाधे च नाचार्यः, न चाज्ञात् शिष्याणां विद्याप्राप्तिः । न चाज्ञानकल्पितभेदस्यैवाविद्या इति युक्तम्, तदापि हि कल्पितस्य भेदस्य नाविद्येति जीवस्यैवाविद्येति स्यात् । कल्पितभेदस्यैव भेदः कल्प्यते इति चेत् अनवस्था । अज्ञस्याविद्याकल्पितत्वे तर्हि स्वाप्नविद्येव सा नाविद्यानिवर्तिका स्यात् – इति मण्डनखण्डनसारः । इ सि पा ३२४-३३१

(२) सर्वजीवभेदकल्पनाहेतुरेकैव चेदविद्या एकस्य धिया एकमुक्तौ सर्वमुक्तिः स्यात्, अस्मत्पक्षे तु एकमुक्तौ एकमुक्तिरेव, अनेकाभावादित्यतः परोक्तदोषः परस्यैव स्यात् । तेषु एकस्मिन् मूढेऽन्यस्य विदुषोऽप्यमुक्तिश्चेति द्रष्टव्यम् । प्रत्येकमेका अविद्या इति वाचस्पतिपक्षे बहुकल्पना । मुक्तामुक्तादिभेदव्यवस्थासिद्ध्यर्थमनेका अविद्या कल्प्यन्ते इति न दोष इति चेत् । व्यवस्था चेत् पारमार्थिकी न तत्सिद्ध्यर्थमविद्यापेक्षा; कल्पिता चेत् नाविद्याभेदः कल्प्यः, एकयापि सिद्धेः । अन्यथा हि एकस्यापि जीवस्य कल्पितानन्तभावभानात्, अनन्ताविद्याकल्पनाप्रसङ्गः । अनेकजीवा भान्तीति

यथासगृहीतनानाविद्यावादखण्डनेन, इष्टसिद्धिनिर्माणकाले मण्डन-वाचस्पतिप्रस्थान बहुशाखोपशाखाभि प्रवृद्धमासीदिति गम्यते । तर्कप्रधाने प्रस्थाने कस्यापि सिद्धान्तस्य न प्रतिष्ठेत्यपि स्फुट भवति ॥

अविद्या कस्य ? – इति प्रश्नो भाष्येऽपि तत्र तत्रोत्थाप्य प्रत्युक्त । जीवस्य वा ब्रह्मणो वा अविद्यादिससार ? – इत्याकारेण तु प्रश्नो नोपन्यस्त इति विशेष । न ह्यद्वैतवेदान्तिसमये शङ्करानुसारिणि जीवब्रह्मणोर्भेद उपगम्यते । पर पूर्वपक्षिभि प्रश्नोऽय तत्र तत्रोपन्यस्यते 'कस्याय ससार ?' 'कस्यायमप्रबोध ?' – इत्यादि । तत्र ब्रह्मणो नित्य शुद्धबुद्धमुक्तत्वाभ्युपगमात्, तस्य ससारित्वाद्यभावे कस्यान्यस्य स्यात्तत् ? भवत्सिद्धान्ते ब्रह्मणोऽन्यस्य चेतनस्यानभ्युपगमात्, न कस्यापि ससार इति प्राप्नोतीत्यनिष्टापत्तिदर्शनार्थमेवायमपि क्लेश इति तत्र तत्र परिहार वचनादवगम्यते । तत्र कतिचिदुदाहरणान्यत्र वाचकाना परिशीलनाय प्रदर्श्यन्ते –

**(अ) यदप्येकत्वात् ब्रह्मण आत्मान्तराभावात् शारीरस्य भोगेन ब्रह्मणो भोगप्रसङ्ग इति । अत्र वदाम – इद तावद्देवानाप्रिय प्रष्टव्य । कथमय त्वया आत्मान्तराभावोऽध्यवसित इति । 'तत्त्वमसि', 'अह ब्रह्मास्मि', 'नान्योऽतोऽस्ति विज्ञाता' इत्यादिशास्त्रेभ्य इति चेत्, यथा शास्त्र तर्हि शास्त्रीयोऽर्थ प्रतिपत्तव्य, न तत्रार्धजरतीय लभ्यम् । शास्त्र च 'तत्त्वमसि' इति अपहतपाप्मत्वादिविशेषण ब्रह्म शारीरस्यात्मत्वेनोपदिशत् शारीरस्यैव तावत् उपभोक्तृत्व वारयति । कुतस्तदुपभोगेन ब्रह्मण उपभोग प्रसङ्ग ? अथागृहीत शारीरस्य ब्रह्मणा एकत्वम्, तदा मिथ्याज्ञाननिमित्त शारीरस्योपभोग, न तेन परमार्थरूपस्य ब्रह्मण सस्पर्श ॥**

**सू भा १-२-८, पा ६९**

[परमार्थाद्वैतदृष्ट्या न कस्याप्यविद्यादिसंसार इत्युक्त भवति ॥]

**(आ) कस्य पुनरयमप्रबोध इति चेत्, 'यस्त्व पृच्छसि तस्य ते' इति वदाम । नन्वहम् ईश्वर एवोक्त श्रुत्या, यद्येव प्रतिबुद्धोऽसि, नास्ति कस्यचिदप्रबोध ॥ सू भा ४-१-३, पा ४६५**

(इ) क पुनरसौ श्वेतकेतुस्त्वशब्दार्थ ? योऽह श्वेतकेतु , उद्दालकस्य पुत्र –इति वेद, आत्मानमादेश श्रुत्वा मत्वा विज्ञाय च, अश्रुतममतमविज्ञात विज्ञातु पितर पप्रच्छ 'कथ नु भगव स आदेशो भवति ?' इति । स एषोऽधिकृत श्रोता मन्ता विज्ञाता तेजोबन्नमय कार्यकरणसघात प्रविष्टा परैव देवता नामरूपव्याकरणाय आदर्शे इव पुरुष सूर्यादिरिव जलादौ प्रतिबिम्बरूपेण । स आत्मान कार्यकरणेभ्य प्रविभक्त सद्रूप सर्वात्मान प्राक् पितु श्रवणान्न विजज्ञौ । अथेदानीं पित्रा प्रतिबोधित तत्त्वमसीति दृष्टान्तैर्हेतुभिश्च तत्पितुरस्य ह किल उक्त सदेवाहमस्मीति विजज्ञौ ॥

छा भा ६–१६–३, प्र पा ५३९

[अज्ञानदशायामेव ज्ञानाज्ञानव्यवहार इत्युक्त भवति ॥]

(ई) अत्राह – सा अविद्या कस्येति ? यस्य दृश्यते तस्यैव । कस्य दृश्यत इति ? अत्रोच्यते – अविद्या कस्य दृश्यत इति प्रश्नो निरर्थक । कथम् ? दृश्यते चेदविद्या, तद्वन्तमपि पश्यसि । अप्रत्यक्षेण अविद्यावता अविद्यासबन्धे ज्ञाते किं तव स्यात् ? अविद्याया अनर्थहेतुत्वात् परिहतव्या स्यात् । यस्याविद्या स ता परिहरिष्यति । ननु ममैवाविद्या । जानासि तर्हि अविद्या तद्वन्त चात्मानम् ॥ गी भा १३–२, पा १९५, १९६

(ए) यदि पुनरविद्या ज्ञेया अन्यद्वाज्ञेयम्, ज्ञेयमेव , तथा ज्ञातापि ज्ञातैव, न ज्ञेय भवति । यदा चैवम् अविद्यादु खित्वाद्यै ज्ञातु क्षेत्रज्ञस्य न किञ्चिद् दुष्यति ॥ गी भा १३–२, पा १९६

यथोदाहृतैर्वाक्यैरिदमवगम्यते यदविचारदशायाम् अविद्या जीवस्यैव, यो मन्यते 'नाह परमात्मान वेद' इति । विचारात् पर तु सर्वस्यापि स्वात्मनो नित्यशुद्धबुद्धमुक्तत्वावगमात् नाविद्यावत्त्वमस्ति कस्यचिदपीति । यत्रापि क्वचिद्ब्रह्मण एवाविद्येति भणन्तीव वाक्यानि दृश्यन्ते, तत्रापि जीवाश्रिताविद्यावाद एवेष्ट इत्यवसीयते । तद्यथा –

(ओ) न ब्रूम शुक्तिकायामिव ब्रह्मण्यतद्धर्माध्यारोपणा नास्तीति, किं तर्हि न ब्रह्म स्वात्मन्यतद्धर्माध्यारोपनिमित्तम् अविद्याकर्तृ चेति । भवत्वेव नाविद्याकर्तृ भ्रान्त च ब्रह्म । किं तु नैवाब्रह्म अविद्याकर्ता चेतनो भ्रान्तोऽन्य इष्यते ॥ बृ भा १–४–१०, पा ६७०

(औ) ब्रह्मणि साधकत्वकल्पना अस्मदादिष्विव अपेशला तदात्मान-मेवावेत् तस्मात् तत्सर्वमभवत् – इति, इति चेत् । न । शास्त्रोपालम्भात् । न ह्यसत्कल्पनेयम् । शास्त्रकृता तु ॥ बृ भा १-४-१०, पा ६७२

(क) न चैतावत्येव अक्षमा युक्ता भवत । सर्वं हि नानात्व ब्रह्मणि कल्पितमेव ॥ बृ भा १-४-१०, पा ६७२

(ख) इद शरीरस्थ यद् गृह्यते अग्रे प्राक् प्रतिबोधादपि ब्रह्मैवासीत्, सर्वं चेदम् । किं तु अप्रतिबोधात् 'अब्रह्मास्मि', 'असर्वं च' – इत्यात्मन्यध्यारोपात् 'कर्ताहं, क्रियावान्, फलाना च भोक्ता, सुखी, दुःखी ससारी' इति चाध्यारोपयति । परमार्थतस्तु ब्रह्मैव तद्विलक्षण सर्वं च । तत् कथञ्चित् आचार्येण दयालुना प्रतिबोधित नास्मि ससारीति, आत्मानमेवावेत् स्वाभाविकम् । अविद्याध्यारोपितविशेषवर्जितम् इति एवशब्दस्यार्थ ॥

बृ भा १-४-१०, पा ६७२

अत्र सर्वत्रापि अविद्यादशाया तदपगमदशाया च निर्विशेष निरविद्यमेव ब्रह्म नित्यशुद्धम्, तस्य चाविद्यादशायामविद्याश्रयत्वमिव भवति, विद्यया तदपगमे तु नित्यशुद्धबुद्धमुक्तस्वभाव एवाहमिति विज्ञायते – इत्येवार्थोऽवसीयते । अविद्या च नित्यनिर्विशेषे नैसर्गिक सविशेषत्वाध्यारोपणमेव भ्रान्त्यपराभिधानम्, न तु भ्रान्तेरस्या क्वचित् कार्यत्व स्वविलक्षणानिर्वचनीयाज्ञानोपादानकत्व ब्रह्माश्रितत्व वा श्रूयते विवक्ष्यते वा भाष्ये–इति स्पष्टम् ॥

## शब्दब्रह्माद्वैतनिरासः –

२३१ असद्वादनिरासप्रकरणे 'नाभिन्नेऽसति वा वाच्ये वाच्यवाचकते यत' (इ सि १-७२) इति वाच्याभावे वाचकोऽपि न स्यात् । वाच्यवाचकयोरप्यबोधे तथा, न हि वक्त्रैव उच्यते – इति दोष उद्घाटित । तत्र प्रसङ्गेन शब्द स्वयमेव वाच्यो वक्ता च – इति वादिना वैयाकरणाना शब्दाद्वैतवादो निराकृत इष्टसिद्धौ ॥

(१) यदा हि स वक्ता स्यात् तदा वक्तृत्वेनैव समाप्तत्वात् तस्य शब्दस्य न तद्वाच्यत्वम् । यदापि वाच्य , तदापि वाच्यत्वेनैव समाप्तत्वात् न तस्य तद्वक्तृता । अतो नोभय युगपत् क्रमेण वा एकस्यैव सभवेत् । ध्वनेरेकोऽशो वक्ता, अन्यो वाच्य – इति चेत्, तदापि वक्त्रशस्य न वाच्यता स्यात्, वाच्याशस्य च न वक्तृता ॥ इ सि पा १७०

(२) ननु 'शब्द', 'ध्वनि', 'अभिधा', 'वाचक' इत्यादय शब्दा स्वात्मानमपि वदन्तीति चेत्, तथाप्यन्य वदन्त एव स्वात्मानमपि वदन्तीति शब्दवाच्या अपि ते नात्यन्तमभिन्नार्था । अर्थवाच्यास्तु घटादि शब्दा नात्मान स्पृशन्ति । अतो वक्तृवाच्ययो शब्दार्थयोर्भेदसिद्धे शब्द एव स्वय वाच्य इत्यप्ययुक्तम् ॥ इ सि पा १७०

(३) अतो न शब्दाद्वैतसिद्धि, शब्दार्थराश्योर्वाचकतद्वाच्ययो र्भेदात् । अभेदेऽपि तयो सर्वार्थाना तत्तच्छब्देभ्योऽभेदात्, तेषामपि तद्वाचकाच्छब्दशब्दादभेद स्यात् । अतश्च इन्द्रियमनोबुद्ध्यात्मार्थाना तच्छब्दाना च शब्दशब्दादनन्यत्वात् तस्य च जडत्वात् न किञ्चित् प्रकाशेत । अजडात्माभेदात् आत्मशब्दोऽप्यजड एवेति चेत्, तर्हि शब्दार्थ योरभेदात् शब्दस्यार्थभाव न पुनरर्थस्य शब्दभाव ॥

इ सि पा १७०-१७१

[अनेन 'वाग्रूपाधीनमेव चितश्चितित्वम् । वाक्शक्तिरेव वा चिति' (ब्र सि 19) इति मण्डनमत तुलयितव्यम् ॥ ]

(४) असच्छब्दे असत् कल्पितमिति तत्रैवासद्व्यवहार इति चेत्, तर्हि नाभिन्न शब्दात् । असदभेदे शब्दस्यापि कल्पितत्वम्, असतोऽप्य कल्पितत्व वा स्यात्, अतश्च द्वयोरपि कल्पितत्वमकल्पितत्व वा इति शब्दे असत् कल्पितमित्ययुक्तम् । अर्थ एव कल्पित , न शब्द इति चेत् । तर्हि तयोरभेदो न युक्त कल्पिताकल्पितयो ॥ इ सि पा १७१

(५) यद्यपि वाच्यवाचकौ मिथो भिन्नावेव कल्पितौ, तथापि तयो शब्दब्रह्मविवर्तत्वात् । तदभेदात् तयो शब्दत्वोपपत्ते शब्द एव वाच्यो वाचकश्चेति नायुक्तम् इति चेत्, मैव मस्था । कल्पिताकल्पितयो रभेदायोगात्, ब्रह्मणश्च शब्दत्वे प्रमाणाभावात् ॥ इ सि पा १७२

(६) न च शब्दो ब्रह्मेति श्रुतिरस्ति । यदि नामास्ति तथापि सा अन्यपरा । 'यद्वाचानभ्युदित येन वागभ्युद्यते', 'यच्छ्रोत्रेण न

शृणोति', 'अशब्दमस्पर्शम्' इत्यादेर्न शब्दो ब्रह्म, नापि शब्दवदिति श्रुतम्। अतो ब्रह्मविवर्तत्वेऽपि जगतोऽशब्दविवर्तत्वात् 'ब्रह्मैवेदम्', 'आत्मैवेदम्' इतिवत् शब्द एव वाच्यो वाचकश्चेत्ययुक्त वक्तुम्। अतो न शब्दाद्वैतसिद्धि ॥ इ सि पा १७४

साध्वेवेद शब्दब्रह्मवादखण्डनम्। पर 'नामरूपे व्याकरवाणि' इति श्रुते शब्दार्थयोरुभयोरपि आत्मचैतन्यविषयत्वेन अनुभूयमानत्वात्, न तयोरन्यतरस्यापि स्वेन रूपेण ब्रह्मत्वम्। अत एव उभयोरपि ब्रह्मणि कल्पितत्वान् शब्दार्थरूपेण प्रतिभासमात्र ब्रह्मणो व्यवहारे, तयोस्तत्त्व तु तदुभयविलक्षण ब्रह्मेति भाष्यकारा –

(1) न च ब्रह्मणोऽन्यत् नामरूपाभ्यामर्थान्तर सभवति, सर्वस्य विकारजातस्य नामरूपाभ्यामेव व्याकृतत्वात् ॥

सू भा १–३–४१, पा १४२

(2) सदेव तु सर्वमभिधानम् अभिधीयते च यदन्यबुद्धया। यथा रज्जुरेव सर्पबुद्धया सर्प इत्यभिधीयते यथा वा पिण्डघटादि मृदोऽन्यबुद्धया पिण्डघटादिशब्देनाभिधीयते लोके। रज्जुविवेकदर्शिना तु सर्पाभिधानबुद्धी निवर्तेते, यथा च मृद्विवेकदर्शिना घटादिशब्दबुद्धी। तद्वत् सद्विवेकदर्शिनाम् अन्यविकारशब्दबुद्धी निवर्तेते ॥ छा भा ६–२–३, पा ५१०

(3) अभिधानाभिधेययोरेकत्वेऽपि अभिधानप्राधान्येन निर्देश कृत, 'ओमित्येतदक्षरमिद सर्वम्' इत्यादि। अभिधानप्राधान्येन निर्दिष्टस्य पुनरभिधेयप्राधान्येन निर्देशो अभिधानाभिधेययोरेकत्वप्रतिपत्त्यर्थ। एकत्वप्रतिपत्तेश्च प्रयोजनम् अभिधानाभिधेययोरेकेनैव प्रयत्नेन युगपत् प्रविलापयन् तद्विलक्षण ब्रह्म प्रतिपद्येतेति ॥ मा भा अव २, पा १७८

## भावाद्वैतवादस्वीकारः –

२३२ भावाद्वैतवाद इष्टसिद्धेरिष्ट इति भाति। यत आह –

(१) ननु मयोक्त 'सच्च, असच्च', न तु सदेव सर्वम् इति। मैव वोच। असति द्वितीये तत्समुच्चयार्थस्य चकारस्यानुपपत्ते। असतश्च अवाच्यत्वात्, तत्र शब्दाप्रवृत्तेरुक्तत्वात् ॥ इ सि पा १६८

(२) यदि असदपि सतो द्वितीय स्यात्, सद् वा असत, तदा तृतीय चतुर्थं परार्धसख्यापूरक च स्यात्। तद्विशेषाभावात्। असतो भेदाभावात् न तृतीयादिभाव इति चेत्, न द्वितीयभावोऽप्यत एव। न ह्यभिन्न द्वितीय स्यात्। सतोऽसत् द्वितीय स्यात्, न त्वसत इति चेत्, न। अविशेषात्॥ इ सि पा १६९

(३) सोऽन्याभाव आत्मैव चेत्, उक्तो दोष । अन्यश्चेत् अद्वैत-हानि – इति चेत्, किं तदद्वैत यदन्याभावविरोधि ? आत्मैव चेत्, सोऽज्ञानतत्कार्यैश्चाविरुद्ध, सुतरा तदभावेन । अस्यैव द्वैतरहितत्वम् अद्वैतम् इति चेत् । तदप्यात्मैव चेत् तन्न जातु विरुद्धम्, अन्यथा न जातु बन्ध । ज्ञानदग्धाविद्यातज्जद्वैतत्वम् अद्वैतम् इति चेत्। तद्दाहोऽपि आत्मैव चेत् उक्तो दोष, अन्यश्चेत् तत्राप्यद्वैतविरोध । उक्तदोषप्रसङ्गात् नात्मैव तद्दाह इति तत्रान्यत्ववाचोयुक्ति, न पुनरन्यत्वविवक्षया सर्वान्यदाहस्यान्यत्वायोगादिति चेत् । तर्हि सर्वान्यभावेनापि नाद्वैतविरोध ॥ इ सि पा २६६

मण्डनोऽपि भावाद्वैतमनुमन्यते इव (ब्र सि 4) । पर तदेव स्वमतमिति स्वीकृतवान् इति तु विप्रतिपत्तिस्थानम् इत्युक्त प्राक् (ख १०२, पा २०८)। इष्टसिद्धया तु स्पष्टमेवाभावेन नाद्वैतविरोध इत्युक्तमत्र। तत्र यद्ययमेव परमसिद्धान्त, अभावो नाद्वैत विहन्तीति भावाद्वैतमेव मतमिति च, तर्हि निर्विशेषत्वमद्वितीयत्व चोपचरितमेव स्यात्। अद्वैताविघातकाभावेनापि सविशेषत्वस्य यस्यकस्यचिदभ्युपगन्तव्यत्वात्। अथ ज्ञानदग्धाविद्यातज्जद्वैतत्वमद्वैतमिति चेत्, तर्हि न निरुपचरितमद्वैतत्व स्यात् । न हि व्यावहारिकाविद्यातत्कार्यादिव्यतिरेकेण अद्वैतविघातकृदन्यत् समस्ति वेदान्तनये। उपदेशार्थमेव हि विद्याविद्याविभाग क्रियते वेदान्तेष्विति । आत्मैव चेत् अज्ञानहानि, सा सदा अस्तीति बन्धाभाव सदैव स्यादिति बिभीषिका त्वकिञ्चित्करी । यस्मात् अज्ञानतद्धानी आत्मैव, सदापि बन्धाभाव एव इति विनिश्चय एव खल्वज्ञानहानिर्नाम नापरेति। अत्रानुसधेयमिद भाष्यवाक्यम् –

(१) नन्वहमीश्वर (?)वोक्त श्रुत्या । यद्येव प्रतिबुद्धोऽसि नास्ति कस्य चिदप्रबोध । योऽपि दोषश्चोद्यते कैश्चित् अविद्यया किलात्मन सद्वितीयत्वाद् अद्वैतानुपपत्तिरिति सोऽप्येतेन प्रत्युक्त ॥ सू भा ४-१-३

यथा ब्रह्मण एव सतोऽप्रबुद्धत्व न दोषाय, अप्रबोधकल्पितत्वात् अप्रबुद्धतस्य, एवमेव अविद्यया सद्वितीयत्वमपि न दोषाय, अविद्याकल्पितत्वादेवाविद्यावत्त्वस्येत्यर्थ । एतद्दृष्ट्या न भावो न चाभावोऽस्ति अद्वैतविरोधी । अविद्याकल्पितत्वादेव भावाभावयो, वस्तुनश्च नित्यनिरस्तभावाभावविभागत्वादद्वैतात्मन इति द्रष्टव्यम् ॥

## परमतोत्थापिताक्षेपपरिहारः-

२३३ अन्यथाख्यातिरपि माया विना न सिध्यतीति प्रतिज्ञाय 'अन्यस्यान्यथाभावो युज्यते न वा[?]' इत्येतद् विमर्शयितु पूर्वपक्ष उद्भाव्य निरस्त इष्टसिद्धौ –

ननु यद्यन्यथाभावो नास्ति शास्त्रमनर्थकम् ।
कर्मणा विद्यया वा कि तदवस्थ पुमान् यदि ॥ इ सि २-६४
देवो भूत्वा ब्रह्म वेद ब्रह्मैव भवतीत्यपि ।
श्रुतोऽन्यस्यान्यथाभावो य य वापीति च स्मृति ॥ २-६५

इति पूर्व पक्ष ।

उच्यतेऽविद्यया सिद्धमन्यथाभावमिच्छताम् ।
व्यनक्ति साधन शास्त्र तयो सत्ता व्यनक्ति न ॥ २-६६

इति सिद्धान्त । कूटस्थस्य कर्तृत्वाद्यन्यथाभाव कथमित्याशङ्क्य परिहार –

स्थाणोरप्यन्यथाभाव पुसो भ्रान्त्यैव सभवेत् ।
देहाद्भिन्नोऽपि जन्मादीनात्मीयान् मन्यते यथा ॥ २-६७
यदि पुसोऽन्यथाभाव कर्मणा विद्ययापि च ।
पुसस्ताभ्या फल कि स्यान्नात्मनाशोद्भवौ फलम् ॥ २-६८

इति । अध्यारोपदृष्ट्यैव क्रियाकारकफलभेदबुद्धि, तामनुसृत्यैव कर्मोपासनादिविधानम् इति वेदान्ताभियुक्तप्रक्रियानुसार्येवाय परिहार इति न किञ्चिदत्र वक्तव्यमस्ति ॥

एव ब्रह्म जीवेभ्यो जगतश्च भिन्नाभिन्नम् इति **भास्करमत**मप्यत्र निराकृतम् , भाट्टसमतभेदाभेदवाद , भावान्तरमेवाभावो नामेति वादश्च तत्र तत्र खण्डित । (इ सि पा २४१, २५९, २२२–३१६, ५२, ६०, २९५, ३६७, २४२–२४३, २४८–२४९, ३५९) ग्रन्थविस्तरभिया नात्र तद्युक्तय प्रदर्श्यन्ते। प्रकृतप्रक्रियया अविरुद्धत्वात् भेदाभेदखण्डनस्य, वेदान्ताद्वैतप्रक्रियानिर्धारणे केवलयुक्तिपरीक्षणस्यानुपयोगाच्चेति ज्ञेयम् ॥

एव द्वैतशङ्कापरिहारग्रन्थोऽपि न विस्तरेण विचार्यते उक्तहेतोरेव –

तस्मादयुक्तमैकात्म्य ज्ञानाज्ञानाव्यवस्थिते ।
गुरुशिष्याव्यवस्थानान्मुक्तामुक्ताव्यवस्थिते ॥
अत पुभेद एष्टव्यो द्वैत च परमार्थसत् ।
तद्भावे गुरुशिष्यादिव्यवस्था युज्यते यत ॥ इ सि ७–१०, ११

इति शङ्कायाम् ।

उच्यते दोषतो नास्मान्मुक्ति पुसु बहुष्वपि ।
इष्टेष्वैकात्म्यमेवातो न्याय्यत्वादभ्युपेयताम् ॥

इति (इ सि ७–१२) परिहार ॥

एव चार्वाकाक्षेपपरिहारोऽपि नात्र परीक्ष्यते । उक्तहेतोरेव ॥

## उपसंहारः –

२३४ अयमत्र सक्षेप । अनुभूति स्वत सिद्धेति प्रतिज्ञया तदनुभाव्यजगतोऽनिर्वाच्यत्वसाधनेनैवाद्वैतसिद्धान्तस्तर्केण प्रतिपिपादयिषितोऽस्मिन् ग्रन्थे। तर्करसिकता च तावदातता अस्मिन् प्रकरणे यावता स्वत सिद्धतामपि हेतूपन्यसेनैव साधयितु प्रयत्यते 'अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गात्' इति परवाद्यनिष्टप्रसञ्जकतर्काहरणेन। ब्रह्माश्रिताविद्यामायाकार्यं जगत्, शास्त्रजन्यब्रह्मात्मस्वरूपज्ञानान्मोक्ष इति च

ग्रन्थकृदभिमता प्रक्रिया-। यद्यप्यविद्योपादानकप्रपञ्चवाद पञ्चपादिका कारेणैवोपस्थापित, तथापि जडाश्रिताविद्यानिरास, शुक्तिरजतदृष्टान्तेनै वानिर्वचनीयाविद्यासाधनम्, माययैव सर्वविधभेदविभागव्यवस्थापनम्, प्रमाणप्रमेयव्यवहारस्य स्वप्नदृष्टान्तेनोपपादनम्, यत्र यत्र युक्तिविरोध, तत्र तत्र सर्वत्रापि 'मायिकत्वान्न दोष ' इति युक्तिब्रह्मास्त्रप्रयोग –इत्येते विशेषा इष्टसिद्धावेव सुस्फुट वैशद्येन दृश्यन्ते प्रप्रथमम्। प्रतिवादि वाक्स्तम्भने यथा तथा स्वसिद्धान्तमण्डनेऽपि केवलतर्कस्यैवानुभवा नपेक्षयैव भूरिश आदानमत्र प्रस्थाने दृश्यते । अद्वैतज्ञानस्यापरोक्षरूपस्य शास्त्रजन्यत्वादरणेन यद्यपि मण्डनाद्यादृतज्ञानाभ्यासवादो दूरीकृत, तथापि जीवन्मुक्तेऽपि अविद्यालेशाभ्युपगमेन, विदेहमुक्तिरेवात्यन्तिकी सर्वथा अविद्याविरहिता–इत्यत्र विचारपर्यवसानात् ज्ञानफलमद्वैतात्मप्राप्तिरित्येतत् शास्त्रगम्यमेव–इत्यर्थात् स्वीकृत भवत्यत्र । एव च अध्यारोपापवाद प्रक्रियामभिभूय कार्यकारणवादप्रक्रियैव अनिर्वचनीयवादसमर्थनमिषेणात्र विजयते इत्यकामैरप्यद्वैतिभिरभ्युपेय सपन्नमित्यहो मायाविलास !॥

इति श्रीमत्परमहसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिचयावाप्त वेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्यसच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीताया वेदान्तप्रक्रियाप्रत्यभिज्ञाया

**इष्टसिद्धिप्रक्रियापरीक्षा नाम एकादश काण्ड**

---

# १२. विवरणप्रस्थानपरीक्षा

ग्रन्थसंबन्धः–

२३५ इष्टसिद्धौ अविद्योपादानवाद, ख्यातिबाधानिरूपण चेति द्वयमेव प्राधान्येन विचिन्तितम् । प्रकाशात्मविरचिते पञ्चपादिका-व्याख्यानेऽस्मिन् तदुक्तानुक्तदुरुक्तचिन्तन विस्तरेण कृतमिति 'पञ्चपादिका-वार्तिकम्' इत्यपि नामान्वर्थं भवेदस्य ग्रन्थस्य । तथापि इष्टसिद्ध्यादृतयुक्ती सक्षिप्य नवीनयुक्त्युपबृहणपूर्वक पञ्चपादिकादृतवेदान्तप्रक्रियासर्वस्व समर्पणेन, ग्रन्थप्रणयनकाल यावत् प्रचलितसर्वाद्वैतप्रक्रियाणा समाहरणात् अनिर्वचनीयाविद्याप्रक्रियानुगुणविविधयानां स्वोपज्ञाना सविस्तरम् उपन्यासाच्च ग्रन्थकारा '**विवरणाचार्या**' इत्येव प्रथा गता । एतैर्ग्रन्थकर्तृभि **शारीरकन्यायसंग्रहशब्दनिर्णयादयोऽन्येऽपि निबन्धा** विरचिता इति श्रूयते । परमत्र पञ्चपादिकाव्याख्याने दृश्यमाना एव वादा विवरणप्रस्थानीयत्वेन परिभाष्यन्ते इति बोध्य पाठकै ॥

**मिथ्याज्ञानोपादनकोऽध्यासः –**

२२६ पञ्चपादिकाव्याख्याने प्रवृत्तोऽप्यय ग्रन्थो बहुत्र संगृह्णातीष्टसिद्धिसमादृतविचारसरणिमिति तत्र तत्रोभयग्रन्थपत्रपार्श्वपरामर्शपूर्वक प्रदर्शयिष्याम ॥

'मिथ्याज्ञाननिमित्त ' (अध्यास ) इति भाष्यवाक्य ' मिथ्या च तदज्ञान च मिथ्याज्ञानम्' – इति विगृह्य 'मिथ्येति अनिर्वचनीयता उच्यते, अज्ञानम् इति जडात्मिका अविद्याशक्ति ' (प पा ४) इति लिखित टीकायाम् । विवरणे तु –

(१) तत्र 'अज्ञानम्' इत्युक्ते ज्ञानाभावमात्रमुक्तं स्यात्, मिथ्या इत्युक्ते भ्रान्तिज्ञानमुक्तं स्यात् । तदुभयव्यावृत्त्यर्थं निरुच्य पदं योगं दर्शयति । 'मिथ्या च तदज्ञानं च' इत्यादिना ॥ प वि १ १

[अत्र टीकया मिथ्यापदमनिर्वचनीयवक्तृ, अज्ञानपदं च जडोक्ति प्राचम्म् इत्युक्तम् । विवरणे तु इष्टसिद्धिमनुसृत्य (इ सि पा ४८, ६७) भ्रान्तिज्ञानाभावनिरासार्थे द्वे पदे इति व्याख्यातम् । उभयत्रापि च मिथ्याज्ञान स्याध्यासकारणस्यैव प्रकृतस्य वाक्यशेषे चाक्षेपपरिहारास्य निर्णेष्यमाणस्य हानम्, अप्रकृतस्य भाष्ये क्वचिदप्यश्रुतचरस्य प्रक्रिया चेति दोषौ अपरिहार्यौ ॥ ]

(२) ननु कथं मिथ्याज्ञानम् अध्यासस्योपादानम् ? तस्मिन् सति अध्यासस्योदयात् असति चानुदयात्-इति ब्रूमः । नन्वध्यासस्य प्रतिबन्धकं तत्त्वज्ञानं तदभावश्चाज्ञानमिति प्रतिबन्धकाभावविषयतया अज्ञानस्याध्यासे नान्वयव्यतिरेकौ अन्यथासिद्धौ । नैतत् सारम् । पुष्कलकारणे हि सति कार्योत्पादविरोधि प्रतिबन्धकम् । न च अध्यासपुष्कलकारणे सति तत्त्वज्ञानं कार्यप्रतिबन्धकतया ज्ञायते । किं तु असत्येवाध्यासकारणे तत्त्वज्ञानोदयः । तस्मात्, नाज्ञानान्वयव्यतिरेकौ प्रतिबन्धकाभावविषयौ । तथापि विरोधि संसर्गाभाव इति चेत्, न । कार्यस्य कारणापेक्षा हि प्रथमम् उपद्यते, न विरोधिसंसर्गाभावापेक्षा । तस्मात् प्रथमापेक्षितकारणक्लृप्तिमेवान्वय व्यतिरेकौ न्यायसहितौ कुर्वाते ॥ प वि पा ११

[अत्राज्ञानान्वयव्यतिरेकेणाध्यासान्वयव्यतिरेकसिद्धिस्तु इष्टसिद्धेः (इ सि पा ४८), अज्ञानस्याभावत्वनिरासश्च (इ सि पा ५५-५७) तस्य प्रतिबन्धकाभावत्वेन शङ्का तु स्वोपज्ञा ॥ ]

(३) ननु क्लृप्तं विषयेन्द्रियादिदोषं कारणमिति । सत्यम् । निमित्तं तु तत् । उपादानापेक्षायाम् अज्ञानमनुप्रविशति । सर्वं च कार्यं सोपादानम् । भावकार्यत्वात्, घटादिवत्-इत्यनुमानात् ॥

प वि पा ११-१२

[इदमपि इष्टसिद्ध्यनुसार्येव (इ सि ६८) दोषसापेक्षतावचनं तु टीकोक्तम् ॥ ]

(४) मिथ्यार्थतज्ज्ञानात्मकं मिथ्याभूतमध्यासमुपादानकारणसापेक्षं प्रति अनाश्रयस्थानतया काचादिनिमित्तकारणेषु भिद्यमानेषु मिथ्याभूतस्यैव

1 अत्र सर्वत्र विवरणपुटसङ्ख्या एव निर्दिष्टा 'प वि' इति ॥

सर्वकार्यस्वभावानुकूलस्य सर्वत्रानुगमात्, अज्ञानस्यात्माश्रयतया भ्रान्ति ज्ञानाश्रयकोटिनिक्षिप्तत्वाच्च मिथ्याज्ञानमेवाध्यासोपादान नान्तःकरण-काचादिदोषा इति सूक्तम् ॥ प वि १२, इ सि ५६

## अविद्यास्वरूपसिद्धिः –

२३७ पञ्चपादिकोक्त एवाविद्याशक्तिसिद्धिप्रकार आदृतोऽत्र। तत्र 'अवश्यमेषा अविद्याशक्तिर्बाह्याध्यात्मिकेषु वस्तुषु तत्स्वरूपसत्ता मात्रानुबन्धिनी अभ्युपगन्तव्या, अन्यथा मिथ्यार्थावभासानुपपत्ते' (प पा ४) इति, विद्यत एवात्रापि अग्रहणाविद्यात्मको दोष (प पा १४) इति च टीकायाम् श्रुत्यर्थापत्तिदृष्टार्थापत्ती एव प्र ने। विवरणे तु, 'अवश्यम्' इत्यनुमानम्, 'एषा' इति प्रत्यक्ष प्रमाण सूचितमित्यधिकावाप कृत –

(१) प्रत्यक्ष तावद् 'अहमज्ञ', 'मामन्य च न जानामि' इत्यपरोक्षावभासदर्शनात्। ननु ज्ञानाभावविषयोऽयम् अवभास। न। अपरोक्षावभासत्वात् 'अह सुखी' इतिवत्। अभावस्य च षष्ठप्रमाणगोचरत्वात्। प्रत्यक्षाभाववादिनोऽपि नात्मनि विज्ञानाभावावगम सभवति। 'मयि ज्ञान नास्ति' इति प्रतिपत्तौ आत्मनि धर्मिणि प्रतियोगिनि चार्थे अवगते तत्र ज्ञानसद्भावाद् ज्ञानाभावप्रतिपत्त्ययोगात्, अनवगतेऽपि धर्म्यादौ सुतराम् अभावानवगमात्। षष्ठप्रमाणगोचरे फललिङ्गाभावानुमेयेऽपि ज्ञानाभावे आत्मादौ अवगतेऽनवगतेऽपि आत्मनि ज्ञानाभावप्रतिपत्त्ययोगात्। इह च 'त्वदुक्तमर्थं सङ्ख्या वा शास्त्रार्थं वा न जानामि'-इति विषयव्यावृत्तमज्ञानम् अनुभूय तच्छ्रवणादौ प्रवर्तते ॥ प वि १२, इ सि २८८, ३०५

[इष्टसिद्ध्याशयोऽत्र युक्त्या समुपष्टम्भित ॥]

(२) भावरूपाज्ञानप्रत्यक्षवादे तु सत्यप्याश्रयप्रतियोगिज्ञाने ज्ञानाभावस्येव भावान्तरस्यापि नानुपपत्तिर्नियन्तु शक्यते। न चाश्रयप्रतियोगिज्ञानभूतमपि साक्षिचैतन्य भावान्तरस्याज्ञानस्य निवर्तकम्। तस्याज्ञानविषय-प्रतिभासत्वात्। न हि स्वज्ञानेनैव स्वय निवर्तते। ननु अज्ञानस्य व्यावर्तको विषय कथ साक्षिचैतन्येनावभास्यते ? प्रमाणायत्तत्वाद् विषयसिद्धेरिति। उच्यते। सर्वं वस्तु ज्ञाततया वा अज्ञाततया वा साक्षिचैतन्यस्य विषय एव। तत्र ज्ञाततया विषय प्रमाणव्यवधानम् अपेक्षते, अन्यस्तु सामान्याकारेण

विशेषाकारेण वा अज्ञानव्यावर्तकतया सदा भासते इत्युपपत्तिसहितम् अज्ञानप्रत्यक्ष भावरूपमेवात्मनि अज्ञान गमयतीति सिद्धम् ॥

प वि १२-१३

[ इय स्वोपज्ञा स्वोत्प्रेक्षिताक्षेपप्रतिक्षेपिका च परिहृति । अज्ञानस्य प्रत्यक्षसिद्धत्व कथ वादग्रस्तमभूदिति नोक्तमत्र ॥ ]

(३) अनुमानमपि विवादगोचरापन्न प्रमाणज्ञान स्वप्रागभावव्यतिरिक्त स्वविषयावरणस्वनिव र्यस्वदेशगतवस्त्वन्तरपूर्वक भवितुमर्हति । अप्रकाशितार्थप्रकाशकत्वात् । अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्-इति । ततश्च ज्ञानेन समानाश्रयविषय भावरूपम् अज्ञान सिद्धम् ॥ प वि १३

(४) विशुद्धब्रह्मात्मनि शुक्तिकाया च अहङ्काररजताध्यासस्य अध्यासात्मकस्य मिथ्याभूतस्य मिथ्याभूतमेव किञ्चिद् उपादानम् अन्वेषणीयम् । सत्योपादानत्वे कार्यस्य कारणस्वभावतया अध्यासस्यापि सत्यत्वप्रसङ्गात्, तस्यापि मिथ्योपादानस्य सादित्वे तथाविधोपादानान्तरकल्पनाप्रसङ्गात्, अनाद्येव तन्मिथ्योपादानम् इति कल्पनीयम् । यच्चानादि स्वय मिथ्या मिथ्योपादानम् आत्मसबन्धि च तदज्ञानमिति मिथ्याध्यास एव तथाविधाज्ञानोपादान कारणमन्तरेणानुपपद्यमान , तत्कल्पयतीत्युक्तम् ॥

प वि १३ , इ सि ४७, १८

(५) न तावत् सुषुप्तादौ स्वयप्रकाशब्रह्मस्वरूपानवभास , पुरुषान्तर सवेदनवद् द्रष्टुर्भिन्नत्वादिति शक्य वक्तुम् । एकत्वश्रुते । नापि मिथ्याज्ञान प्रतिबन्धात् । तत्र तस्याभावात् । नापि तत्सस्कारप्रतिबन्धात् । भ्रान्ति सस्काराणा तत्त्वावभासप्रतिबन्धकत्वाभावात् , सत्स्वपि रजतभ्रमसस्कारेषु शुक्तिकावबोधदर्शनात् । नाप्यग्रहणप्रतिबन्धात् । स्वरूपग्रहणस्य नित्यत्वात् । स्वयप्रकाशमाने सवेदने तद्विषयकादाचित्काग्रहणस्याप्रतिबन्धकत्वात् । नापि कर्मणा स्वरूपावभासविरोधिता । सर्वदा अणुमात्रस्यापि चैतन्यस्य अनवभासप्रसङ्गात् । अज्ञानेऽपि तुल्यम् इति चेत् । न । तस्य स्वविषय चैतन्यावभास प्रति अप्रतिबन्धकत्वात् । तस्मात् सुषुप्तादौ स्वरूपानवभासव्यवहारोऽग्रहणमिथ्याज्ञानतत्सस्कारकर्मभ्योऽन्यदेव किञ्चित् प्रतिबन्धकम् अज्ञान कल्पयति ॥ प वि १६

[ सस्कारशेष तिष्ठत्यज्ञान सुषुप्तादौ – इति टीका (प पा ५) यथाश्रुता सस्कारस्यैवाज्ञानत्व प्रसञ्जयेत् इति भीत्या ‘ सस्कारशेष तिष्ठति, न सस्कारादय एवाज्ञानम् ’ (प वि १६) इति विवरणे व्याख्यातम् । सुषुप्तादौ स्वयप्रकाश-

ब्रह्मस्वरूपानवभासव्यवहारो यत्र जागरित, यत्न यासप्रतिबन्धात्, सोऽ याम न्नत्र विद्यत एव । सुषुप्ते तु सत्यपि स्वरूपप्रतिष्ठत्वे ज्ञानसामग्र्याद्यभावादेव तन्नामिति तुतो न स्यादित्याक्षेपरतु ऽत्र नालोचित ॥ ]

(६) सुषुप्ते मिथ्याज्ञानाभावाद् तत्संस्कारस्य चाप्रतिबन्धकत्वात् काराविरुकग्रहणाभावस्य च स्वत सिद्ध्ग्रहणविरोधित्वाभावात् स्वरूपचैतन्येन ब्रह्मस्वरूपावभासे प्राप्ते तदवभासप्रतिबन्धनिमित्तमनृत दर्शयति 'अनृतेन हि प्रत्यूढा', 'त इमे सत्या कामा अनृतापिधाना' इति । एतच्च मिथ्याज्ञानतत्संस्कारावरणकर्मभ्यो व्यतिरिक्तम् अनाभासनिमित्तद् अनृत मिथ्यावस्तु सिद्धम् ॥ प वि ४२

[अत्र सर्वदा स्वरूपप्रतिष्ठे एवात्मनि, 'तस्मात् पराङ् पश्यति नान्तरात्मन्' इत्यादिश्रुत्युक्तत्तो । इन्द्रियप्रजाया बहिर्मुखत्वस्वाभाव्यात, 'पराच कामा ननुयन्ति बाला' इत्युक्तरात्या स्वरूपे प्रत्यगात्मनेऽप्रवृत्ता न सगुणात्मस बलात बहिरेव विषयापकृष्टचित्ता भवन्त्यविवेकिन इति स्थिते जागरिते त्व तावत प्रत्यगात्मनि तादृशाप्रतिभासोपपत्त्यर्थ नालोकवेदसिद्धमज्ञान कल्पयितव्यम् इति प्रत्यवस्थान सभवति । अद्रत्वनापि अनृतशब्दस्तृष्णातन्निमित्तस्वैरप्रचार परत्वेनैव व्याख्यातो भाष्यकृद्भि, न तु भावाज्ञानपरत्वेन । तस्मात सुषुप्ते स्वाश्रय, स्वरूपप्रतिभासश्च विद्यत एव । तज्ज्ञानसामग्र्यभावान्नैव तु तथा अनिश्चय -इत्यपि श्रुतिरन्यथैव नतु शक्यत ॥ ]

(७) अत्र च साक्षिवेद्यस्याज्ञानस्य प्रमाणैरभावव्यावृत्ति प्रदर्श्यत इति न तस्य प्रमाणवेद्यत्वप्रसङ्ग ॥ प वि ४३, इ सि ६१

[अनुभववेद्य चेदज्ञान न तत्र वादिविप्रतिपत्ति स्यात । भूरिश प्रमाणप्रदर्शनप्रयास केवल भावत्वप्रतिपादनपर -इति च न सम्यगिति भाति । न हि लोको विप्रतिपद्यते स्वमूढत्वादिविषय, तद्गतभावत्वाभावत्वविषये वा । न च वादिन सर्वे सप्रतिपन्ना मोह तन्निरिक्त न न पृ चिन्तनाप्रतिपन्नानुभव इति । 'न जानामि', 'सशये', 'मूढोऽहम्' इति चानुभान्त एव ह्यग्रहणसशयविपरीत ग्रहणलक्षणान् अविद्याभेदान भावाभावत्वेन विभक्तान् लौकिका जना प्रतिवादिन परीक्षकाश्च प्रतिजानते नास्तित्व त्वदभिमतानिर्वचनीयभावरूपाविद्याया । न च भाष्ये यथोक्ताविद्यात्रयातिरिक्ता भावाविद्या क्वचिदप्युक्तिरयोक्ता सूचिता वा - इति समालोचनीयमेतत ॥ ]

विवादपदापन्नस्यैवानिर्वचनीयाज्ञानस्य नर्तानुपपत्तुपपत्तेन स्वीकारात एकासिद्धौ सर्वासिद्धिरिति न्यायस्यावकाशो दत्त इति स्फुटम् ॥ ]

## अविद्याश्रयविषयौ –

२३९ अविद्या नान्त करणाश्रया, नापि तद्विशिष्टचैतन्याश्रया, किं तु स्वरूपमात्राश्रया – इति प्रतिपादितमत्र ॥

(१) ननु 'अहमज्ञ' इति प्रतिभास एव विशिष्टाश्रयत्वे प्रमाणम् । न । 'अहमनुभवामि' इत्यनुभवस्यापि चैतन्यप्रकाशस्य विशिष्टाश्रयत्व-प्रसङ्गात् । ननु यथा 'अयो दहति' इति दग्धृत्वायसोरेकाग्निसबन्धात् परस्परावभास, तथा अनुभवान्त करणयोरेकात्मसबन्धात् तथावभास, नान्त करणस्य अनुभवाश्रयत्वात् इति चेत्, एवम् अज्ञानान्त करणयोरेकात्मसबन्धादहमज्ञ इत्यवभास, नान्त करणस्याज्ञानसबन्धात् इति तुल्यम् । प्रतीतेरन्यथासिद्धौ परस्परसबन्धकल्पनायोगात् । आत्मन्यविद्यासबन्धस्य सुषुप्तेऽपि सप्रतिपन्नत्वाच्च । अथ स्वरूपमात्राश्रयत्वानुपपत्ते, विशिष्टाश्रयत्व कल्प्यत इति चेत् । न विशिष्टेऽपि स्वरूपसबन्धस्य विद्यमानत्वात् । जडस्य चाज्ञानाश्रयत्वे भ्रान्तिसम्यग्ज्ञानयोरपि तदाश्रयत्व प्रसङ्गात् । ननु स्वरूपेऽपि ब्रह्मण्यनुपपत्तिस्तुल्या । सत्यम् । अनुपपन्नद्वयाश्रयत्वकल्पनाद् वर सप्रतिपन्नस्वरूपाश्रयत्वोपादानम् मोक्षावस्थासबन्धिन एव सबन्धाश्रयत्वात् ॥ प वि ४५

[जडस्याविद्या नास्ति । बन्धमुक्तिव्यवस्थार्थं चेतनस्यैव सा कल्प्या, अन्त करणादीना चानित्यत्वात्तदाश्रयत्वानुपपत्ति इत्यादियुक्तय द्रष्टव्या ॥ द सि १९३-१९६ ]

अत्र भाष्यवाक्यमिदमत्रानुसधेयम् –

(क) न विपरीतादिग्रहण तन्निमित्तो वा तैमिरिकत्वादिदोषो ग्रहीतु चक्षुष सस्कारेण तिमिरेऽपनीते ग्रहीतुरदर्शनात् न ग्रहीतुर्धर्मो यथा । तथा सर्वत्रैवाग्रहणविपरीतसशयप्रत्ययास्तन्निमित्ता करणस्यैव कस्यचिद् भवितुमर्हन्ति । न ज्ञातु क्षेत्रज्ञस्य । सवेद्यत्वाच्च तेषा प्रदीपप्रकाशवन्न ज्ञातृधर्मित्वम् । सवेद्यत्वादेव स्वात्मव्यतिरिक्तसवेद्यत्वम् ॥

गी भा १३-२, पा १९२

यत्तु अनुपपन्नद्वयाश्रयत्वकल्पनाद् वरमेकाश्रयत्वमिति, तदयुक्तम् । उभयोरप्यनुपपत्तौ एकस्य सेति कल्पनस्यैवान्याय्यत्वात् । किमर्था तर्हि

अन्त करणाश्रयत्वोक्तिर्भाष्ये इति चेत्, अत्र कर्तृत्वभोक्तृत्ववदविद्याया अप्युभयत्रानुपपत्तौ चेतनस्य निरविद्यत्वेन ब्रह्मस्वभावता वक्तुम्-इति प्रतिपत्तव्यम् । तथा हि भाष्यम् –

(ख) नैष श्रुति , अचेतनस्य सत्त्वस्य भोक्तृत्व वक्ष्यामीति प्रवृत्ता, कि तर्हि चेतनस्य क्षेत्रज्ञस्य अभोक्तृत्व ब्रह्मस्वभावता च वक्ष्यामीति । तदर्थं सुखादिविक्रियावति सत्त्वे भोक्तृत्वमध्यारोपयति । इद हि कर्तृत्व भोक्तृत्व च सत्त्वक्षेत्रज्ञयोरितरेतरस्वभावाविवेककृत कल्प्यते । परमार्थतस्तु नान्यतरस्यापि सभवति । अचेतनत्वात् सत्त्वस्य, अविक्रियत्वाच्च क्षेत्रज्ञस्य । अविद्या प्रत्युपस्थापितस्वभावत्वाच्च सत्त्वस्य सुतरा न सभवति ॥

सू भा १-२-१२, पा ७४

इति । अविद्याया अपि तुल्यन्यायोऽनुसधेय ॥

(२) न तावदज्ञानम् आश्रयविषयभेदापेक्षम्, कि तु एकस्मिन्नेव वस्तुनि आश्रयत्वम् आवरण च इति कृत्यद्वय सपादयति । स्वाश्रयापवरकप्रदेशे कृत्यद्वयसपादितमोवत्, अक्रियात्मकत्वात्, आवरणत्वाच्च । नापि स्वाश्रय चित्प्रकाशेन विरुध्यते अज्ञानम् । स्वावभासकेन सवेदनेन चित्प्रकाशेन अज्ञानस्याविरुद्धत्वात्, साक्षिचैतन्यस्य चाज्ञानावभासकत्वात् अतो न चिदाश्रयत्व विरोध । किं च जन्यज्ञानेन आत्मन्यवस्थात्रये अवभासमाने एव स्वपरविषया ज्ञानाश्रयस्य सर्वैरेवोपगन्तव्यम् इति नावभासमाने अज्ञानाश्रयत्वविरोध । न च प्रकाशमात्रम् अज्ञानविरोधि । स्वज्ञाने अभावात् । न च स्वयप्रकाशमाने अज्ञानससर्गविरोध क्वचिद् दृष्ट । विषयाणां परप्रकाश्यानामेव तत्ससर्गविरोधात् । अथ ब्रह्मण सर्वज्ञत्वविरोधात् ऐक्ये सति नाज्ञानमुपपद्यत इति । न । जीवाश्रयत्वोपगमात् । नन्वैक्यमुक्तम् । सत्यम् । सत्यप्यैक्ये प्रतिबिम्बात्मनि अध्यस्तश्यामत्वादेर्बिम्बेऽदर्शनात् अवदाततायाश्च अविरोधदर्शनात् । एव सर्वज्ञत्वाविद्याश्रयत्वयो सत्यप्यैक्ये अविरोधात् । तस्मान्नैक्यमविद्याश्रयत्वेन विरुध्यते, कि तु अविद्यामेवोपपादयति । ऐक्ये स्वयप्रकाशत्वे सर्वज्ञत्वे च सत्येव अनवभासदर्शनात् आच्छादिका अविद्या कल्प्यते । अन्यथा भेदजाड्यकिञ्चिज्ज्ञत्वे ग्रहणाभावमात्रमेव स्यात्, ततश्च तमोऽनृत नीहाराज्ञानावृतत्वादिशब्दा अनवभासाध्यासनिमित्तभावरूपाज्ञानप्रतिपादका बाध्येरन् इति ॥ प वि ४३

अत्राविद्या ब्रह्मण एव न जीवस्य इति (इ सि पा ३२) इष्टसिद्धिकृताग्रह परित्यक्त । 'अत एवापीन जीवे ब्रह्मस्वरूपप्रकाशाच्छादिका अविद्या कल्प्यते' (प पा १४) इति टीकाभिप्रायश्च । जीवाश्रयत्वोपगमात् अविद्याया । तथा च सर्वज्ञत्वादिम्माम नाधिकरणत्वोपपाद धि चिन्ता अनिवार्या जाता । 'अधिकोपदेशात्तु बादरायणस्य' (वे सू ३ ४ ८) इति सूत्रभाष्योक्तनीत्या 'तथा हि तमविक शारीरादीश्वरमात्मा दर्शयन्ति श्रुतय' (सू भा ३-४-८, पा ४२५) इत्यनिरुक्तपथानुसारेण नैव सर्वज्ञत्वात्मनो सामानाधिकरण्यशङ्का भवति । न च सर्वज्ञस्य स्वयप्रकाशस्य अविद्याश्रयत्वमुपपन्नम् । यावद्धि अविद्याश्रयत्वम्, तावन्न सर्वज्ञत्वस्वयप्रकाशत्वावगम , यदा तु तदवगम नास्त्येव तदा अविद्याश्रयत्व कस्यचिदपीति । यथोक्त भाष्ये –

(ग) यावद् हि अविद्या न निवर्तते तावद धर्मादिगोचरत्व जीवस्य जीवत्व च न निवर्तते । तन्निवृत्तौ तु प्राज्ञ एव 'तत्त्वमसि' इति श्रुत्या प्रत्याय्यते । न चाविद्यावत्त्वे तदपगमे च वस्तुन कश्चिद् विशेषोऽस्ति ॥

सू भा १-४-६, पा १५४

इति । एव ब्रह्माश्रिताविद्यावादिनामेवेय चिन्ता आपतती, नाविद्याया जीवाश्रितत्ववादिनामिति युक्तमुत्पश्याम ॥

(३) ननु 'त्वदुक्तमर्थं न जानामि' इति प्रतिभासमानमेव अज्ञानस्य व्यावर्तकम् अवभासते । ननु तत्र विशेषाकारस्य अनवगतस्य व्यावर्तकता । न । अनवभासमानस्य व्यावर्तकतया प्रतिभासानुपपत्ते । नन्ववभासमानस्यापि तद्व्यावर्तकत्वम् अनुपपन्नमेव । न । अज्ञानसबन्धस्य प्रतिभासनान्तरीयत्वात् अनुपपत्तेरलङ्कारत्वात् । प्रतिभासस्तु विद्यत एव ॥

प वि ४६, इ सि २०७-२१०

[ अत्राध्यासलक्षणाविचारगम्यमपि अविचारसिद्धो जीवाश्रयत्वाभास इति शक्य वक्तुम् – इत्यनुसधेयम् ॥ ]

जीवब्रह्मविभागः –

२४० चैतन्याश्रितैवाविद्या जीवाश्रया इत्यङ्गीकारो जीवब्रह्मविभागमपेक्षते इति स्पष्टम् । कस्तर्हि जीवावच्छेदक उपाधिरिति ? अत्र विवरणकारोत्तरमित्थम् –

(१) आत्मावरणमात्माज्ञानमेव जीवब्रह्मविभागाद्यध्यासोपादानमत, अतो जीवावच्छेदनिमित्तमज्ञानम् इत्यवच्छेदस्यापि प्रातिभासिकाध्यासस्य तदुपादानत्वात् सत्यतो निरवयवस्य द्वैधीभावायोगात् कर्तृत्वभोक्तृत्वदोषसंयोगात्मा बीजाङ्कुरवदनादिप्रवाहत्य दर्शितत्वात् तदुपादानमप्यज्ञानमनादि ॥ प वि ४४

(२) अनादिजीवविभागाध्यासप्रवाहस्य अनाद्यविद्यैव कारण नान्तःकरणादि ॥ प वि ४४

(३) न चान्तःकरणम् अवच्छेदकम् । अथतो विदारणाभावात्, अवच्छेदस्य विभ्रममात्रत्वात् अज्ञानस्यैव तदुपादानत्वात् । अन्तःकरणस्य च सम्यग्ज्ञाननिरस्यतया अविद्याध्यासत्वात् स्वकारणावच्छिन्नस्यैव अवच्छेदकत्व सम्भवात् । सत्यत्वेऽपि सादेरनाद्यवच्छेदोपाधित्वाभावात्, सुषुप्तादौ चान्तःकरणाभावादनवच्छेदप्रसङ्गात् । तदापि सूक्ष्मावस्थमन्तःकरणम् अवच्छेदकम् इति चेत् । कार्यसंस्कारविशिष्टशक्तिमत्कारणावस्थानमेव सूक्ष्मतापत्ति । अतो नान्तःकरणम् अवच्छेदकमस्ति ॥ प वि ४४

(४) जीवस्य ब्रह्मण्यविद्या इत्यविद्यापूर्वमेव विभागमपेक्षत इति चेत् । न । कस्य कस्मादतिरेक इत्यतिरेकस्यापि विभागपुरस्सरत्वप्रतीते । यथा भेदाधीनोऽपि धर्मिप्रतियोगिभावो भेदेनोपरज्यते, 'कस्य कस्मात् भेद' इति, एवम् अतिरेकाधीनोऽपि जीवब्रह्मभावस्तस्मिन् उपरज्यते । जीवाद् ब्रह्मणोऽतिरेक इति (इति) चेत् । अविद्यायामपि तुल्यमेतत् । निरंशत्वात्, नांशांशिभावेन भेद सम्भवति । तस्मादविद्यैव भेदाध्यास निमित्तम् इति ॥ प वि ४४

(५) चित्स्वरूपमात्रसबन्ध्यज्ञान तत्र जीवब्रह्मव्यवहारभेद प्रवर्तयति । कथ पुन स्वरूपमात्रसबन्धिनोऽज्ञानस्य ब्रह्मस्वरूप परिहृत्य जीवविभागैकपक्षपातिता ? दर्पणघटादेर्मुखाकाशभेदे हेतुतया मुखादि

संसर्गिणोऽपि बिम्बाकाशौ परिहृत्य प्रतिबिम्बघटाकाशादिपक्षपातित्ववदिति वदाम ॥ प वि ४५

अत्र सर्वत्र कार्यकारणोपाध्यध्यासव्यतिरेकेणाप्यस्ति किञ्चित् तदुपादानभूतमज्ञानं नामेति कल्पनं भाष्यविरुद्धं कार्यकारणव्यवहारस्याप्यध्यासनिमित्तत्वमुपेक्ष्यैवेति स्पष्टम् । अविद्याकल्पितनामरूपबीजोपाधित्वमीश्वरस्य नामरूपकृतकार्यकारणोपाधित्वं च जीवस्य – इति हि सर्वत्र कारिकासु भाष्ये च जीवब्रह्मविभागदर्शनक्रमः । तत्र तु अध्यारोपापवादप्रक्रियया एकस्यैवात्मनो भेदव्यवहारस्तदपह्नवश्च सिध्यतीति स्पष्टम् ॥

(१) **मरणे संभवे चैव गत्यागमनयोरपि ।**
**स्थितौ सर्वशरीरेषु चाकाशेनाविलक्षणः ॥ गौ का ३–९**

[ 'घटाकाशजन्मनाशगमनागमनस्थितिवत् सर्वशरीरेष्वात्मनो जन्ममरणादि आकाशेनाविलक्षणं प्रत्येतव्यं' इति भाष्यम् । यथा जन्ममरणादिरविद्याकृतोपाधिनिमित्त एवाकाशस्य न वस्तुकृत इति जन्मादिरहित एवाकाशः, एवमात्मन्यपीति आकाशेनाविलक्षणोऽयमात्मा नित्यं जन्ममरणादिरहित एव प्रत्येतव्य इति तदर्थः ॥ पा २१२ ]

(२) **संघाताः स्वप्नवत् सर्वे आत्ममायाविसर्जिताः ।**
**आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥ गौ का ३–१०**

['घटादिस्थानीयास्तु देहादिसंघाताः स्वप्नदृश्यदेहादिवत्, मायाविकृतदेहादिवच्च आत्ममायाविसर्जिताः, आत्मनो माया अविद्या तया प्रत्युपस्थापिता न परमार्थतः सन्तीत्यर्थः' – इति भाष्यम् । आत्मनो माया अविद्या – इति व्याख्यानं लक्षणया मायाशब्दस्याविद्यावाचकत्वं स्वीकृत्य ॥ पा २१२ ]

(३) **अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः ॥ सू भा १–२–२०, पा ८१**

(४) **एवमविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवति । व्योमेव घटकरकाद्युपाध्यनुरोधि । स च स्वात्मभूतानेव घटाकाशस्थानीयान् अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसंघातानुरोधिनो जीवाख्यान् विज्ञानात्मनः प्रति ईष्टे व्यवहारविषये ॥ सू भा २–१–१४, पा २०१**

[अत्राविद्याशब्देनाध्यास उच्यते, न माया । अविद्याया नामरूपशब्दितमायाप्रत्युपस्थापकत्वेन तद्व्यतिरेकेणैव निर्देशात् ॥ ]

## अहङ्काराध्यासः –

२४१ 'अहम् इति तावत् प्रथमोऽध्यास' इति पञ्चपादिका वाक्य व्याख्यास्यद् विवरणम् ।

**(१) निष्कलङ्कचैतन्यैकताने निरशानन्दैकरसे अज्ञानादिसाक्षिणि अनादिसिद्धेऽपि अज्ञानाध्यासे कादाचित्कम् अध्यासमाश्रित्याह-अहमिति तावत् प्रथमोऽध्यास इति ॥ प वि २७**

[अज्ञाना यासस्यानादिसिद्धत्वे अध्यास एव प्रभुर्भवेत् सर्वत्रेत्यज्ञानोपादानकत्व तस्य किमित्यास्थेयम् ? न हि ज्ञानेना यासातिरिक्त किञ्चित् निवर्त्यं सभवतीत्यनालोचितमत्र ॥ ]

**(२) ननु सविकल्पकाध्यासस्य सविकल्पकमेवाधिष्ठान वक्तव्य तथा दर्शनात्, न निर्विकल्पकचिन्मात्रम् । तत्र कथमहङ्काराद्यध्यासेन सविकल्पकेऽहङ्काराध्यास इति चोदयति 'ननु व्यवहारयोग्यस्व' इति । निर्विकल्पेऽपि सविकल्पाध्यासदर्शनात् अज्ञानाध्यासेन सविकल्पे पूर्वाहङ्काराध्यासेन वा सविकल्पके चिदवभासे सभवत्येवोत्तराहङ्काराध्यास इत्याह – नानादित्वेनेति ॥ प वि ६८**

[अज्ञानाध्यासोऽपि वा कथ निर्विकल्पके इति चोद्य रूपान्तरेणात्र पुनरावर्तत एव। 'पूर्वाध्यासेन सविकल्पकेऽध्यास' इत्यपि न समाधानम्, पूर्वापरत्वस्या [illegible], तत्रापि चोद्यस्य लब्धप्रसरत्वात्। तस्मादध्यासो नैसर्गिक – इत्येव परम समाधानम् । अस्मत्प्रत्ययविषयत्वमध्यस्यैवाध्यासान्तर क्रियते व्यवहारे। स्वप्ने इव पूर्वापरत्वरहितेऽपि गोवत्साध्यासदर्शनम् इत्यध्यासस्यानादित्वमेवास्थेयमिति युक्तम् । तादृशसमाधान तु नास्मिन् प्रस्थाने सभवत्यध्यासस्य काचित्कत्वेनोपादानापेक्षाङ्गीकारात ॥ ]

### अहङ्कारस्योपादानाद्युपन्यासकृत्पञ्चपादिकाग्रन्थविवरणम् –

**(३) 'येयम्' इत्याद्युपादानसकीर्तनम् । 'अविद्या[1]कर्मपूर्वप्रज्ञा' इति भ्रान्तिकर्मपूर्वानुभवसस्कारा इत्यर्थ । 'तस्या' इति निमित्तकारणनिर्देश । 'विज्ञानक्रियाशक्तिद्वयाश्रय' इति स्वरूप दर्शयति । 'कर्तृत्वभोक्तृत्व' इति कार्यप्रदर्शनम् । 'कूटस्थचैतन्य' इति प्रमाणोपन्यास । 'यत्सभेदात्'**

1 बृहदारण्यके (बृ ४-४-२) तु 'विद्याकर्मणी पूर्वप्रज्ञा च' इत्यस्ति ॥]

इत्यात्मनि ...न कार्यान्तरमाह । किमिति तर्हि सुप्ते न स्यात् इति, अत आह – 'स च सुप्ते' इति । अज्ञानकार्यलिङ्गशरीर प्रविलयो हि सुषुप्तिरित्यर्थ ॥ प वि ५८

(४) ननु अज्ञानव्यवहितोऽहङ्कार कथमव्यवधानात् इदन्तावभासो भाव स्यात् इत्यत्राह – 'अत एवाह' इति । अनिदन्ताप्रतिभासादेव, अज्ञानमात्रव्यवधानादेव इत्यर्थ ॥ प वि ६१–६२

[ अत्र यद्वक्तव्य तत् पञ्चपादिकापरीक्षणेनैव उक्तप्रायम् ॥ ]

## जीवस्य ब्रह्मप्रतिबिम्बत्वम् –

२४२ अथ कोऽय जीवो नाम ? – इति प्रश्नमुत्थाप्य विवरणे उत्तर दत्तम् – 'ब्रह्मैवाविद्याप्रतिबिम्बितम् इति वदाम ' (प वि २६४) इति । अस्य प्रतिबिम्बवादवैशद्यार्थं पञ्चपादिकोक्त बिम्बप्रतिबिम्ब भाव विवृत्योक्तम् ।

(१) जीव प्रतिबिम्बश्चेत् न बिम्बात्मतामवगन्तुमल प्रतिबिम्बत्वात् अक्षिपात्रगतदेवदत्तप्रतिबिम्बवत् – इत्येतन्निराचष्टे 'देवदत्तस्याचेतनाशस्य' इति । अचेतनत्वप्रयुक्ता तत्रानवगति , न प्रतिबिम्बत्वप्रयुक्ता, घटादिषु तथा दर्शनात् इति भाव ॥ प वि ६४

[ननु चानवगमनमचेतनत्वप्रयुक्तमस्तु जीवस्य प्रतिबिम्बत्वादेवेति प्रति वादिना आक्षिप्ते क परिहार ? न च चेतनत्व दृष्टमित्यचोद्यमेतत् । चेतनत्वस्य दृष्टत्वादेव प्रतिबिम्बत्वमेव न घटत इत्यभ्युपगम्यताम्, न हि प्रतिबिम्बस्य चेतनत्व क्वचिद् दृष्टम् – इति तर्केण प्रत्युत्थान दुष्परिहरमत्रेति भाति ॥ ]

(२) ननु देवदत्तस्यैव बिम्बस्य भ्रमनिवर्तकतत्त्वज्ञानाश्रयत्व दृष्टम् । एव बिम्बत्वात् ब्रह्मण एव भ्रमनिरासितत्त्वज्ञानाश्रयत्व स्यात्, इति । नेत्याह– 'यस्य हि भ्रान्ति ' इति । न बिम्बत्वकृत तत्त्वज्ञानाश्रयत्वम्, कि तु भ्रान्तत्व कृतम्, तदप्यज्ञत्वकृतम्, तदपि जीवत्वनिमित्तमिति भाव ॥ प वि ६५

(३) ननु जीवलक्षणप्रतिबिम्बात्मताम् आत्मनो ब्रह्म जानीयाद् वा न वा ? न चेत् सर्वज्ञताहानि , जानाति चेत् ब्रह्म स्वात्मन्येव ससार पश्येत् इति । नेत्याह – 'यस्तु जानीते देवदत्त ' इति । देवदत्तो हि

स्वाम्यात् अक्षिपात्रे अदृष्टत्वादिगुणम् अवगच्छन्नपि तत्त्वज्ञानप्रतिहतत्वात् नानुशोचति । एवं ब्रह्मापि स्वात्मनि जीवे प्रतिबिम्बे स्वगतं पश्यदपि तत्त्वज्ञानित्वात् नानुशोचति । तत्त्वज्ञानस्मरणे च अवदातश्यामत्वादिवत् नेतरेतरत्र व्यवतिष्ठेते इति भाव ॥ प वि ६५

[इद भामतागं (ना भा पा ४७१)समाधानेन तुलयितव्यम् ॥]

(४) नन्वेकतापगमेऽपि न तत्र विच्छेदविभ्रमो निवर्तते । सत्यम् । न प्रतिबिम्बकृत तत्, किंतु उपाधेरज्ञानजन्यत्वात् ज्ञाननिवर्त्यत्वमुक्तमित्याह – 'नापि ज्ञानमात्रात्' ।। प वि ६२

(५) 'रूप रूप प्रतिरूपो बभूव', 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्', 'अत एव चोपमा सूर्यकादिवत्' इति च श्रुतिस्मृतिसूत्रैर्जीवस्य प्रतिबिम्बभावस्य दर्शितत्वात् । अमूर्तस्य चाकाशस्य साभ्रनक्षत्रस्य जले प्रतिबिम्बवदमूर्तस्य ब्रह्मणोऽपि प्रतिबिम्बसम्भवात् । जानुमात्रप्रमाणेऽपि जले द्रविशालाकाशदर्शनात् जलान्तराकाश एवाभ्रादिबिम्बयुक्तो दृश्यत इति वक्तुमशक्यत्वात् । तत् प्रतिबिम्बत्व चिद्रूपत्व च शास्त्रप्रतिपन्न प्रत्यक्षप्रतिपन्न च न निराकर्तु शक्यत इति भाव ॥ प वि ६५

[अत्राकाशस्याप्रत्यक्षस्यापि प्रतिबिम्बकल्पनम्, तच्च सिद्धवत्कृत्य तद् दृष्टान्तेन ब्रह्मणोऽपि द्रव्यत्वमापाद्य प्रतिबिम्बसभावना चेति स्पष्टम् ॥]

पञ्चपादिकाविवरणप्रस्थाने 'जीवो नाम तथ्यत एवाहङ्कारोपाधौ तत्कारणाविद्योपाधौ च सजातो ब्रह्मप्रतिबिम्ब एव, तस्यैव तु ससारित्व न तु ब्रह्मण' इतीष्टसिद्धिविरुद्धैव प्रक्रिया समादृता – इति यदि य कश्चन तर्कयेत, न तत्र चित्र किञ्चिदिति यथोदाहृताक्षेपपरिहारवचनैर्दृढी-भवति । भाष्ये तु जलसूर्यकादिदृष्टान्त कर्मफलाव्यतिकरोपपादनाय समारस्य च मिथ्यात्वोपपादनाय भवतीत्यध्यारोपापवादप्रक्रियानुगुण –

(अ) आभास एव चैष जीव परस्यात्मनो जलसूर्यकादिवत् प्रतिपत्तव्य, न स एव साक्षात्, नापि वस्त्वन्तरम् ॥

सू भा २-३-५०, पा ३०२

(आ) अतश्च यथा नैकस्मिन् जलसूर्यके कम्पमाने जलसूर्यकान्तर कम्पते। एव नैकस्मिन् जीवे कर्मफलसबन्धिनि जीवान्तरस्य तत्सबन्ध। आभासस्य चाविद्याकृतत्वात् तदाश्रयस्य ससारस्याविद्याकृतत्वोपपत्तिरिति। तद्व्युदासेन च पारमार्थिकस्य ब्रह्मात्मभावस्योपदेशोपपत्ति ॥

सू भा पा ३०२

[अत्र 'जीव' चेतनब्रह्मतदध्यस्ताभासोभयाशयुत पदार्थ। तत्र आभासनिराकरणपूर्वक ब्रह्मात्मतावगमन श्रुत्या क्रियते इत्युक्तम् ॥]

(२) कि पुनरत्र विवक्षित सारूप्यमिति? तदुच्यते – वृद्धिह्रास भाक्त्वम् इति। जलगत हि सूर्यप्रतिबिम्ब जलवृद्धौ वर्धते जलह्रासे ह्रसति, जलचलने चलति। जलभेदे भिद्यत इत्येव जलधर्मानुविधायि भवति। न तु परमार्थत सूर्यस्य तथात्वमस्ति। एव परमार्थतोऽविकृतम् एकरूपमपि सद् ब्रह्म देहाद्युपाध्यन्तर्भावात् भजत इवोपाधिधर्मान् वृद्धिह्रासादीन् ॥

सू भा ३-२-२०, पा ३५९

[अत्र प्रतिबिम्बोदाहरण [illegible], न तु जीव परमार्थत एव प्रतिबिम्ब इत्युच्यते ॥]

## अवच्छेदवादनिराकरणम् –

२४३ न केवल प्रतिबिम्बवादपक्षपातिनो विवरणकारा, कि त्ववच्छेदवादविद्वेषिणश्च। यतस्ते इत्थमाहु –

(१) ननु घटाकाशवदुपाध्यवच्छिन्नो जीव कि न स्यात्? न। सामान्यविशेषाभ्याम् उपाधिभिरण्डान्तर्वर्तिब्रह्मण सर्वात्मना जीवभावेनावच्छिन्नत्वात् अनवच्छिन्नस्य ब्रह्मणोऽण्डाद् बहिरेव सद्भावप्रसङ्गात्। तत्र सर्वगतसर्वनियन्तृत्वादि ब्रह्मणो न स्यात्। अवच्छिन्नप्रदेशेष्वनवच्छिन्नस्य द्विगुणीकृत्य वृत्त्ययोगात्। स्वरूपापेक्षया तत्सर्वं न बहि स्थितब्रह्मापेक्षया इति चेत्, न। 'यो विज्ञाने तिष्ठन्' इत्यादौ जीवव्यतिरिक्तस्यैव ब्रह्मणो जीवसनिधानेन विकारान्तरावस्थानश्रवणात्। प्रतिबिम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनात् एकत्रैव द्विगुणीकृत्य वृत्त्युपपत्ते, जीवावच्छेदेषु ब्रह्मणोऽपि नियन्तृत्वादिरूपेणावस्थानम् उपपद्यत इति प्रतिबिम्बपक्ष एव श्रेयान् इति ॥ प वि ६५-६६

प्रतिबिम्बवादावच्छेदवादयो कतर श्रेयानित्येतद् विवादपदम् अध्यारोपितमासीत् ग्रन्थकर्तृकालात् पूर्वमेवेति गम्यते यथोदाहृतवचनात् । वाचस्पतिमिश्रा प्राचीनवेदान्त्यनुसारेण घटाकाशप्रतिबिम्बदृष्टान्तौ सममेव तत्र तत्र यथोचितमुदाजह्रु –

(अ) सत्यम्, प्रत्यगात्मा स्वयप्रकाशत्वात् अविषयोऽनशश्च । तथापि अनिर्वचनीयानाद्यविद्यापरिकल्पितबुद्धिमन सूक्ष्मस्थूलशरीरेन्द्रियाव च्छेदेन अनवच्छिन्नोऽपि वस्तुतोऽवच्छिन्न इव, अभिन्नोऽपि भिन्न इव । अकर्तापि कर्तेव । अभोक्तापि भोक्तेव, अविषयोऽप्यस्म प्रत्ययविषय इव जीवभावमापन्नोऽवभासते, नभ इव घटमणिकमल्लिकाद्यवच्छेदभेदेन भिन्नमिव अनेकविधधर्मकमिवेति ॥ वा भा १-१-१, पा २८

(आ) तस्मादद्वैते भाविके स्थिते जीवभावस्तस्य ब्रह्मणोऽनाद्यनिर्वच नीयाविद्योपधानभेदात् एकस्येव बिम्बस्य दर्पणाद्युपाधिभेदात् प्रतिबिम्ब भेदा । एव चानुज्ञापरिहारौ लौकिकवैदिकौ सुखदु खमुक्तिससारव्यवस्था चोपपद्यते । न च मोक्षस्य अनर्थबहुलता, यत प्रतिबिम्बानामिव श्यामतावदाततादिर्जीवानामेव नानावेदनाभिसबन्धो ब्रह्मणस्तु बिम्बस्येव न तदभिसबन्ध । यथा च दर्पणापनये तत्प्रतिबिम्ब बिम्बभावे अवतिष्ठते, न कृपाणे प्रतिबिम्बितमपि । एवम् अविद्योपधानविगमे जीवे ब्रह्मभाव इति सिद्धम् ॥ वा भा २-३-४३, पा ६२२-६२३

– इत्यादिस्थलेषु । अत यथैवाविद्याया जीवाश्रितत्व वाचस्पतिप्रस्थाने ब्रह्माश्रितत्व तु विवरणप्रस्थाने इति प्रथा, तथैव अवच्छेदवादो वाचस्पते, प्रतिबिम्बवादस्तु विवरणकारस्य – इति प्रथापि निर्हेतुक्येवाधुनातनेष्वि त्यवगच्छाम । विवरणप्रस्थान तु प्रतिबिम्बवादपक्षपातीत्यत्र नास्ति सशीति ॥

## सुषुप्तेऽविद्या –

२४४ पञ्चपादिकाया 'अतोऽनादिसिद्धाविद्यावच्छिन्नानन्त-जीवनिर्भासास्पदमेकरस ब्रह्म' इत्यविद्याया जीवावच्छेदोपाधित्वमुक्तमेकत्र

(प पा १५), अन्यत्र तु (प पा २३), अहङ्कारस्य । तत् कथमिदं सगच्छतामिति शङ्कापरिहारप्रसङ्गेन अवस्थात्रयप्रक्रिया अवतारिता विवरणे-

> (१) निर्विकल्पकचैतन्यमात्रैकरसम् अविद्यासम्बन्धात् ईषद्विकल्प व्यवहारालम्बनं भवति सुषुप्ते । ततस्तदुपादानान्तःकरणावच्छेदात् तदेव स्थूलतरव्यवहारालम्बनं भवति स्वप्ने । [illegible] रागात् स्थूलतमं भवति जागरणे । न च उपाधिभेदाज्जीवभेदप्रसङ्गः । पूर्वपूर्वोपाध्यवच्छिन्नस्यैवोत्तरोत्तरेणावच्छेदात् । निरपेक्षोपाधिभेदो हि जीवभेदः ॥ प वि ६६

अत्र यद्यप्यविद्याकल्पितोपाध्यैक्यात् जीवैकत्वव्यवहार इति कृत्वा सूत्रकृतोक्तम् –

> (अ) 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' (वे सू ३-२-९) इति,

तथापि सुषुप्तौ अविद्यासद्भावे न किञ्चित् प्रमाणमस्ति । अविद्याया अध्यासरूपाया विशेषज्ञानलक्षणत्वात् । विशेषज्ञानस्य सुषुप्तावभावात्, तदभावे नित्यविज्ञानस्वरूपात्मविभक्तद्वितीयवस्त्वभावस्यैव हेतुत्वेन श्रुत्यैव ग्राह्यमानत्वात्, 'यद् वै तन्न विजानाति विजानन् वै तन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यद् विजानीयात्' (बृ ४-५-३०) इति । अत एव हि भाष्यकृतोक्तम् –

> (आ) तत्र सति सपत्नस्तावदेकत्वान्न विजानातीति युक्तम् । 'तत् केन कं विजानीयात्' इति श्रुतेः ॥ सू भा ३-२-७, पा ३५१

> (इ) इदानीं योऽसौ सर्वात्मभावो मोक्षो विद्याफलं क्रियाकारकफलशून्यम्, स प्रत्यक्षतो निर्दिश्यते यत्र अविद्याकामकर्माणि न सन्ति ॥
> बृ भा ४-३-२१, पा ८९१

इति च । सुषुप्तौ स्वरूपेऽप्यय उपाधिकृतविशेषाभावादिति प्रतिपादनस्थले मनइन्द्रियलक्षणोपाधिद्वयस्यैव नियमेनोक्तेश्चैतदेवमिति निश्चीयते –

(ई) स उपाधिद्वयोपरमे सुषुप्तावस्थायाम् उपाधिकृतविशेषाभावात् स्वात्मनि प्रलीन इवेति 'स्व ह्यपीतो भवति' इत्युच्यते ॥

सू भा १-१-९, पा ३२-३३

(उ) श्रान्त शरण प्रेप्सुरुभयरूपादपि शरीराभिमानात् समुत्थाय सुषुप्तावस्थाया पर ज्योतिराकारशब्दित पर ब्रह्मोपसपद्य विशेषविज्ञानवत्त्व च परित्यज्य स्वेन रूपेणाभिनिष्पद्यते ॥ सू भा १-३-२०, पा ११६

(ऊ) बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य विशेषविज्ञानस्योपाध्युपशमे य उपशम स परमात्मना सबन्ध इत्युपाध्यपेक्षयैव उपचर्यते न परिमितत्वापेक्षया ॥ सू भा ३-२-३४, पा ३७१

[अत्र सर्वोपाध्युपशम एवोच्यते न त्वविद्यालक्षणोपाध्यवशेष इतीद मवधेयम् ॥ ]

सुषुप्तिगता विवरणाभिप्राया कतिचिद् परिशीलनमर्हन्ति –

(२) सुषुप्तादौ चान्त करणाभावादनवच्छेदप्रसङ्गात्, अविद्यैवात्मावच्छेदिका। (पा ४४) सौषुप्तदु खाभाव उत्थितेन स्मर्यत इति पञ्चपादिकोक्त परमतमाश्रित्य (प वि ५७)। अनुभूतमेव सुखमुत्थितस्य अनुस्मर्यमाण तत्र विरोधिदु खाभावम् अर्थापत्त्या गमयति 'अनुभूत चेत् सुखम्, नास्ति दु खम्' इति। अतो दु खाभावो नानुस्मर्यते, कि तु प्रमीयते इति। एवम् उत्थितस्य ज्ञानाभावपरामर्शोऽपि ज्ञानविरोधिनोऽज्ञानस्यानुभूततया स्मर्यमाणस्यानुपपत्त्यैव प्रमीयते नानुस्मर्यते ॥ प वि ५६

[अत्र सुखपरामर्श आत्मसबन्धित्वेनानुस्मर्यत इति युक्तम्। अज्ञान मनुस्मर्यते प्रमीयते वा – इति तु, आग्रहमात्रम्, 'न किञ्चिदवेदिषम्' इति खलु परामर्श ॥ ]

(३) ननु अज्ञानसुखानुभवयो साक्षिचैतन्यस्य चाविनाशिन सस्काराभावे कथमुत्थितस्य त्रयाणामनुस्मरण स्यात्? उच्यते। अज्ञानगत चैतन्याभासजन्मोपाधित्वात् अज्ञानसुखसाक्षिविकल्पानुभवस्य अज्ञानावस्था भेदेन चैतन्याभासाना भिन्नत्वात्, तद्विनाशसस्कारजस्मरणम् अज्ञानसुख साक्षिचैतन्याकारम् अज्ञानविशिष्टात्माश्रयमेव सभाव्यते ॥ प वि ५७

[अज्ञानगतचैतन्याभासजन्मोपाधित्वमनुभवस्येति, अज्ञानावस्थाभेदेन चैतन्याभासाना भिन्नत्वमिति च दुरूहमेतत ॥ ]

अत्र सुषुप्ताविद्यावस्थाया न केवल भावरूपाज्ञानावस्थानम्, कि तर्हि अवस्थाना कार्यकारणभाव, अज्ञानस्यावस्थाभेदा, तत्र चिदाभास त्रयम्, चिदाभासाना नाशसंस्कारस्मरणादयश्चाज्ञानाश्रयेण – इत्येतत् सर्वं [illegible] प्रस्थाने । 'नावेदिषम्' इति न सौषुप्तानुभवस्मरणम्, कि तु विकल्प एव (बृ वा १–४–३००) इति वार्तिकोक्तिमनादृत्य भावरूपाविद्या तद्वृत्तितत्स्थचिदाभासविशेषाभ्युपगमो विवरणप्रस्थाने एव प्रप्रथम दृश्यते ॥

(४) अज्ञानकार्यलिङ्गशरीरप्रविलयो हि सुषुप्तिरित्यथ । ननु सति प्राणे क्रियात्मनि कथमहङ्कारस्य क्रियाशक्ते प्रविलय ? उच्यते । नाहङ्कार मात्रत्व प्राणस्योच्यते, कि तु प्राणस्य पृथक् सत पञ्चधा व्यापारहेतो रहङ्कारस्य क्रियाशक्तिरस्तीत्येतावदुच्यते मनोऽधीनतादर्शनात् प्राणवृत्तेरिति । प्राणलक्षणक्रियाशक्त्यश वा विहाय विज्ञानशक्त्यशस्य लय कल्प्यताम् । साशत्वादन्त करणस्य । स्वप्नादिवद् दृष्टिसृष्टिमाश्रित्य वा सुषुप्तपुरुषदृष्ट्यभिप्रायेण सर्वस्य तत्र लयो दर्शित । सुषुप्तप्राणशरीरादिदर्शनस्य पुरुषान्तरस्य विभ्रमत्वादिति ॥ प वि पा ५८

अत्र वस्तुनि विकल्पाभाव क्रियास्विव – इति नालोचित शङ्का परिहरणव्यग्रै । दृष्टिसृष्टिवादाद्यवान्तरप्रक्रियाभेदा विवरणनिर्माणकालात् पूर्वमेव लब्धप्रचारा आसन्निति च गम्यते यथोदाहृतवाक्येन ॥

दृष्टिसृष्टिशब्देन च कि विवक्ष्यत इति नोक्तम् । स्वप्नदृष्टान्तादानेन तूह्यते यथा स्वप्नप्रपञ्च सुप्तपुरुषदृष्ट्यैव समस्ति, एव सुप्तपुरुष दृष्ट्या किमपि नास्ति सुषुप्तौ इति । एतावाश्चेदभिप्राय, तर्हि समीचीन एव स । अज्ञाने सर्वोपादाने सर्वं विलीन भवतीति चेत्, न समीचीन । श्रुतिभाष्ययुक्त्यनुभवविरोधात् । **श्रुतिस्तावत्** –

(अ) 'यदा सुप्त स्वप्न न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैन वाक् सर्वैर्नामभि सहाप्येति ' (कौ ४–१९), 'एतस्मादात्मन प्राणा यथायतन विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका ' कौ ४–२०

इत्यात्मन्येव प्रभवप्रलयौ प्राह, नाज्ञाने । आत्मस्वरूपप्रतिबुबोधयिषया चैतदेव श्रूयते । तेन विरुध्येत यदि सुषुप्तेऽज्ञाने प्रलयोऽङ्गी क्रियेत । न ह्यज्ञानयुक्ते आत्मनि विवक्षिते गार्ग्याजातशत्रुसंवादप्रकरणं विशुद्धपरमात्मज्ञानविषयकमित्यवकल्पेत । सर्वं चेदं प्रकरणं परमात्म विषयकमिति गम्यते । वाक्यान्वयात् । 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म' इति प्रतिज्ञावाक्यात्, विस्फुलिङ्गदृष्टान्तेन यथोक्तात्मन एव सृष्टेस्तस्मिन्नेव चाप्ययस्य श्रवणात्, 'एवमेवैष प्राज्ञ आत्मेदं शरीरमनुप्रविष्ट' इति सृष्टावनुप्रवेशवचनात्, 'यावद्ध इन्द्र एतमात्मानं न विजज्ञौ तावदेनमसुरा अभिबभूवु स यदा विजज्ञावथ हत्वासुरान् विजित्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति' इति च (कौ ४-२०) फलसंकीर्तनेन संस्तुतत्वाच्चात्मज्ञानस्येति ॥

> **(आ) सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति । परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायत इति वेदान्तमर्यादा ॥ सू भा १-४-१८**

इति भाष्यम् । तेन विरुध्यतेऽयमज्ञानेऽहङ्कारादिप्रलयाभ्युपगमः । न हि जीवत्वविनिर्मुक्तायामवस्थायाम् अविद्याऽभ्युपगमो युक्त इति ॥

**युक्तिरपि**—यदि सुषुप्तौ अज्ञानं स्यात्, तर्हि अज्ञानादेव जगज्जातम् इति निश्चीयेत जनैरस्थितैः । न त्वेतदस्ति, 'सुषुप्ते न किञ्चिच्चेतितं मया यथेदानीम्' इत्येव तु सौषुप्तपरामर्शो लोकस्येति ॥

> **(इ) अपि च न कदाचिज्जीवस्य ब्रह्मणा संपत्तिर्नास्ति, स्वरूपस्यानपायित्वात् । स्वप्नजागरितयोस्तूपाधिसंपर्कवशात् पररूपापत्तिमिवापेक्ष्य तदुपशमात् सुषुप्ते स्वरूपापत्तिर्विवक्ष्यते । अतश्च सुप्तावस्थायां कदाचित् संपद्यते कदाचिन्न संपद्यते इत्ययुक्तम् ॥ सू भा ३-२-७**

इति भाष्यं सुषुप्ते नियमेन स्वरूपभूतपरमात्मसंपत्तिमाह । तेन च विरुध्यतेऽहङ्कारादेरज्ञाने विलय इति वचनम् ॥

अनुभवोऽपि सौषुप्तो विरुध्यतेऽनेनाभ्युपगमेन । न हि सुषुप्ते किञ्चिदप्यनुभूयते लोके । आत्मानुभवस्तु निर्विकल्पोऽस्ति तत्र 'न किञ्चिदवेदिषम्' इत्यनुभूतविषयनिराकरणावधित्वात् परामर्शो आत्मानुभवस्य । यथाहुर्वार्तिककाराः –

न चेदनुभवव्याप्तिः सुषुप्तस्याभ्युपेयते ।
नावेदिष सुषुप्तेऽहमिति धीः किंबलाद् भवेत् ॥
बृ वा ३-४-१०२

तथा अज्ञानाभावमित्याहुस्त एवात्रावस्थायाम् –

तत्तु द्वितीय नेहास्ति तमोऽनर्थस्य कारणम् ।
द्रष्ट्रादिरूपसम्भेदाद् यत्पश्येज्जागरे यथा ॥ बृ वा ३-४-१४१९

इति ॥

## जीवब्रह्मविभागस्य नाविद्योपादानकत्वम् –

२४५ सुषुप्तेऽविद्यैव केवला अवच्छेदिका इत्यङ्गीकारात् जीवब्रह्मविभागस्य तत्राभाव प्रसज्यते । ब्रह्मण एव चाविद्येति । तदेतदाशङ्क्य परिहृत विवरणे –

(१) ब्रह्मण्यविद्यादिसाङ्कर्यपरिहाराय सुषुप्त्यादावपि अस्त्येव जीवब्रह्मविभाग इति कल्प्यते । नन्वर्थगत एव तर्हि विभागो न विभ्रमगत । सत्यम् । सुषुप्त्यादिगतविभागादन्यत्र जीवब्रह्मविभागो विभ्रममात्रतया अविद्योपादान उच्यते । नन्वर्थगतो विभागस्तर्हि नाविद्योपादान , अनादित्वात् अविभ्रमत्वाच्च । सत्यम् । तथाप्यविद्यातन्त्रो विभाग , अनादित्वेऽपीति ब्रूम । यथा हि स्वात्माविद्यासबन्धोऽविद्यातन्त्रो नाविद्योपादान , सबन्धजननात् प्राक् स्वातन्त्र्येणावस्थानानुपपत्ते । अज्ञानस्यानादित्वाच्च आत्माविद्यासबन्धस्य नाविद्योपादानता ॥ प वि ६६, ६७

[ब्रह्मण्यविद्यासाङ्कर्यं स्यादिति भिया जीवब्रह्मविभाग स्वीक्रियते इति न साधु कल्पनम् । न ह्यभिलषितसिद्धिनिबन्धना वस्तुव्यवस्थिति । यदज्ञानमवस्थात्रयेऽप्यनुगतमुपाधित्वेन, तदिह मा भूत्तवाभिलषितस्य ब्रह्मण्यविद्यासाङ्क

र्याभावस्य सिद्धि , न केवल तदर्थं केनाप्यननुभूतचरो विभाग स्पुनाव्यन्मीति कल्पयितु युक्तम् ॥

एतेनासिद्धस्य विभागस्य असिद्धेनाविद्यासबन्धेन साधन तस्य चाविद्या तन्त्रत्व नाविद्योपादानत्वमिति कथन च प्रत्युक्तम् । लोकप्रसिद्धाज्ञानव्यतिरिक्तस्य त्वदभीष्टस्यासिद्धया सर्वस्याप्यस्याभ्युपगमस्याभित्तिचित्रत्वादिति द्रष्टव्यम् ॥

इष्टसिद्धौ 'दुर्घटत्वमविद्याया भूषणम्' (१-१४०) इति कारिका व्याख्याने आत्माविद्यासबन्धोऽविद्याशरीर एव, कल्पित एव सर्वसबन्ध - इत्युक्तम् (इ सि २११)। इह त्वविद्यातन्त्र इति विधान्तरेण तदेवोक्तमिति स्फुटम् ॥ ]

**(२) ननु जीवब्रह्माश्रयो विभाग कथमविद्यातन्त्र स्यात् ? उच्यते- अनाद्यविद्याविशिष्ट चैतन्यम् अनादिजीवभावेन काल्पनिकानादिभेदस्य आश्रय । न स्वरूपेण । तस्यैकत्वात् । अतो विशिष्टाश्रयो विभाग स्वरूपेणाप्युपरज्यमानो विशेषणाविद्यातन्त्रो विशिष्ट इत्यविद्याकृतो विभाग उच्यते । अविद्यातन्त्राणा चानिर्वचनीयत्वम् अनादित्व च अविद्यासबन्धवन्न विरुध्यते। लोके च दर्पणघटादिविशिष्टयोरेव मुखाकाशयोर्मिथ्याभेदाव भासो न स्वरूपेणेति उपाधितन्त्रता भेदस्योच्यते ॥ प वि ६७**

[अत्र यद् वक्तव्य तत्पूर्वोदाहृतवाक्यपरिशीलनेनैवोक्तप्रायम् ॥

'अत्रानाद्यविद्याविशिष्ट चैतन्यम् अनादिजीवभावेन **काल्पनिकानादिभेदस्य** आश्रय' – इत्युक्त परिभावनीयम् । एवमन्यत्र 'अनादि मिथ्याज्ञानसबन्धोऽप्यात्मनि अज्ञानवत् 'काल्पनिकत्वात्' आकाशकार्ष्ण्यवत् आत्मन कूटस्थता न विहन्ति' (प वि १७) इत्युक्तमस्मिन् ग्रन्थे । 'अनादिसिद्धेऽप्यज्ञानाध्यासे कादाचित्कम् अध्यासमाश्रित्याह–अहमिति तावत् प्रथमोऽध्यास इति' (प वि १७) इति चाज्ञानस्याध्यस्तत्व कण्ठरवेणोक्तम् । इत्थ च अविद्याया, तत्सबन्धस्य, सहाविद्यातन्त्र-विभागादिभि काल्पनिकत्वे सिध्येदपि भवद्राद्धान्त । 'परम् अविद्य-मानार्थकल्पनाया सर्वार्थसिद्धिप्रसङ्ग' इत्यभियुक्तोदाहृतन्यायभाजन भवेद् भवान् । अपि च सर्वस्याप्यस्यार्थजातस्य काल्पनिकत्वेऽभ्युपगते सर्वस्याप्यस्याध्यस्तत्वमङ्गीकृतमेव भवति । एव स्थितेऽपि इयमविद्या अध्यासस्योपादानकारणमिति प्रक्रियाया प्राधान्यमास्थाय सर्वकल्पका-ध्यासस्यानादरणे को हेतुरिति तु न स्पष्टीकृतमत्र प्रस्थाने ॥

## प्रमात्रादिव्यवस्थोपपादनम् –

२४६ प्रमातृत्वस्यैवाविद्याकृतत्व भाष्योक्तम् अविगणय्य, प्रमात्रादिव्यवस्थोपपदनार्थम् –

(१) नन्वविकारिचैतन्यैकतानस्य निष्कलङ्कस्वभावानन्दस्य असङ्ग स्यात्मनो न प्रमातृत्वमुपपद्यते । प्रमाणक्रियापरिणामाभावात् । न च प्रमातृत्वहीनस्य कर्तृत्वभोक्तृत्वे सभवत इति प्रमातृप्रमाणप्रमेयकर्तृकर्मकार्य भोक्तृभोगभोक्तव्यससर्गलक्षणस्य व्यवहारस्यात्मन्यसभवात्, अहङ्कारस्य च अचेतनतया तदाश्रयत्वायोगात् उच्छिन्नव्यवहारमिद जगदापद्येतेति प्राप्तम् ॥ प वि ६८

इति चोद्यमुद्भाव्य मतान्तरप्रक्रियापरिशीलनपूर्वकमुपसहृतम् –

(२) तस्मात्, न सर्ववादिना प्रमाणादिव्यवहारसभव इति । सत्यम् । अस्मत्पक्षे तु कथञ्चित् सभव दर्शयिष्यामीत्याह – 'तत्रैवभूत स्याहङ्कर्तु' ॥ प वि ६९-७०

इति ॥

[अत्र पञ्चपादिकाग्रन्थभाग अनुसधेय 'तत्रैवभूतस्याहङ्कर्तु' इत्यादि 'कर्मकारकमपि तस्यैवापरोक्षम्, गन्तृसबन्ध इव ग्रामस्य'(प पा २४) इति पर्यन्तम् । विवरणग्रन्थस्यापि सक्षेप एवात्रोपन्यस्यते ॥ ]

स्वपक्षे व्यवस्थासभावन च प्रकारद्वयमाश्रित्य दर्शितम् –

(३) सर्वत्राविद्यावृततया अनभिव्यक्तस्वभावमपि चैतन्यम् अन्त करण येन येनावस्थाविशेषेण विवर्तते तेन तेनाकारेण व्यज्यते, अय पिण्डेनेव चतुष्कोणत्वाद्यवस्थाविशेषम् आपाद्यमानेन कृशानु – इति, विषय ससृष्टान्त करणावच्छिन्न चैतन्य तदाकारमवभासत इति भाव । ननु प्रमातृरूपावच्छिन्न चैतन्य तद्रूपेण भासताम्, कथ चैतन्यस्य विषयावच्छेद इति ? तदाह – कर्मकारकमपीति । स्वव्यापाराविष्टमिति परिणामससर्गाद् आपन्नजाड्याभिभवलक्षणयोग्यत्वम् उच्यते । अन्त करण हि स्वस्मिन्निव स्वससर्गिण्यपि चैतन्याभिव्यक्तियोग्यताम् आपादयतीति भाव ॥ प वि ७०

(a) नन्ववच्छेदकभेदे चित्प्रकाशभेदात् कथ विषयावच्छिन्नानुभवस्य प्रमातृरूपावभासससर्ग ? अससर्गे वा कथ 'मया इदमवगतम्' इति प्रमातृप्रमेयससर्गावभासिसवेदन स्यात्, अनुभवभेदात्, एकस्मिन् सबन्धावगमे पदार्थयोरवभासायोगादिति ? तत्राह – 'प्रधानक्रियाहित-प्रमात्रवस्थाविशेषावच्छिन्नापरोक्षतैकरूपाम् – इति । एकाम् इत्यर्थ ।

परिणामस्य उभयससर्गात् व्यञ्जकाभेदेन व्यङ्ग्याविच्छेद – इति भाव ॥
प वि ७०

(b) कर्तुर्हि प्रमातृता न कर्मण । तत्रान्त करणस्य कर्तृत्वात् तदवच्छिन्न प्रमातेत्यर्थ ॥ पा ७०

(c) विषयानुभवसशब्दितो विषयस्यापरोक्ष्यैकरस फलम् इत्यन्त करणावच्छिन्नतया प्रमाता विषयावच्छिन्नतया फलम् इति भाव । (पा ७०)

अन्त करणात्मनोरैक्याध्यासेनैकाश्रयत्व चैतन्यस्यापि घटावच्छेदादेक विषयत्वम् (पा ७१)

(d) परिणामससृष्टकर्मोपाधिनियमात् नाससृष्टेपु चैतन्याभिव्यक्ति रिति नैकस्य प्रमातु सर्वविषयावभास (पा ७१)

(e) एतत्प्रमातृचैतन्याभिन्नतयैवाभिव्यक्त तद्विषयचैतन्य न प्रमात्रन्तरचैतन्याभेदेनाभिव्यक्तम्, अतो न सर्वेषामवभास्यत्वम् इत्यर्थ । (पा ७१)

(f) युक्त एवायमुपाधि सर्वगतस्यापि जीवस्यासङ्गितया सर्वेणा सयोगात् । प्रकाशस्य च सयुक्तवस्त्ववभासित्वात् । ब्रह्म तु सर्वोपादानतया स्वात्माभिन्न जगत् आत्मानमिवावभासयति, न तु जीव । अनुपादानत्वात् । (पा ७२) यथा गोत्वादयो जातिविशेषा केसरादिमद्व्यक्त्यन्तरप्रदेश सनिहिता अपि स्वभावविशेषात् अश्वादिव्यक्त्यसङ्गितया तैरनभिव्यक्ता अपि सास्नादिमत्पिण्डसङ्गितया अभिव्यज्यन्ते, यथा वा प्रदीपप्रभावाय्वाकाशरस गन्धादिप्रदेशव्यापिन्यपि स्वभावविशेषात् तानि न प्रकाशयन्ती रूपससर्गितया तदेव प्रकाशयति, एव चैतन्यमपि स्वभावविशेषात् अन्त करणे ससृज्यते नान्यत्रेति युक्तम् । यथा च केवलेन वह्निना न दाह्यमपि तृणादि अय पिण्डसमारूढेन दह्यते तथा अहङ्कारसमारूढेनात्मना केवलेनाप्रकाश्या अपि विषया प्रकाश्यन्त इति युक्तमहङ्कारोपाधिवर्णनम् ॥ प वि ७२

यथावर्णितम् आत्मा **सर्वगत** इति पक्षमाश्रित्य । **परिच्छिन्नपक्षे** तु –

(३) जीवावच्छेदनिर्मित्तान्त करणपरिणामससर्गकृताभिव्यक्तित्वात्, विषयावच्छिन्नचैतन्यस्य जीवचैतन्यता च न विरुध्यते । ब्रह्माकारपरिणतान्त करणससर्गाभावाच्च न नित्यवद् ब्रह्मण प्रकाशप्रसङ्ग । न चान्त करण स्वरूपमात्रससर्गिणोऽभिव्यक्तिरङ्गीकृता । तद्गतधर्मादीनामपि प्रसङ्गात् । जीवाकाराहवृत्तिपरिणतान्त करणेन च जीवोऽभिव्यज्यते । अन्यथा सुषुप्ते [1]।

1 'अन्यथा जीवस्य सुषुप्ते' इति पाठान्तरम् ॥

अत परिच्छिन्नत्वात्, न सर्वविषयावभासिता । अथवा अज्ञानावृत स्वयम् अप्रकाशमानतया विविधविषयान् अनवभासयन् अन्त करणोप रागात् आवरणतिरोधाने तत्रैवाभिव्यक्त, तत्संसृष्टमेव विषयम् अवभासयति । दृष्ट च वृश्चिकवृक्षादिकार्यस्य गोमयमृदादिकारणस्वभावतिरोधायक त्वम् – इति सिद्धैवात्मनि प्रमातृत्वादिव्यवस्था इति ॥ प वि ७३

अत्र वेदान्ते आत्मैकत्वाभ्युपगमादेव प्रमाणप्रमेयादेर्वस्तुतो विद्यमानत्वाभावात्, न तावत् परमार्थदृष्ट्या 'उच्छिन्नव्यवहारमिद जगदापद्येत' इति चोद्यस्यावसरोऽस्ति । इष्टापत्तिर्हि सिद्धान्तिनस्तदा स्यादिति । व्यवहारे तु यत्र यथा दृष्ट प्रमाणादिविभाग, तत्र तथैव स इति न चोदयितव्य परिहर्तव्यो वेति मुधैवात्र खिद्यते व्यवस्थापनार्थमिति स्पष्टम् ॥

यत्तु जीवात्मन सर्वगतत्वे एव व्यवस्था, तस्यान्त करणपरिच्छिन्नत्वपक्षे एव व्यवस्था वदितव्येति, तत्र क्रियायामिव वस्तुनि विकल्पासंभव –इत्यभियुक्तपरिभाषा पृष्ठत क्रियते । न हि 'जीव सर्वगतो वा स्यात्, परिच्छिन्नो वा'–इति विकल्प शक्यते समाश्रयितुम् । तद्गुणसारत्वाधिकरणन्यायेनोपाधिपरिच्छिन्न एव हि जीवोऽभ्युपेयो व्यवहारे । ततश्च यथैव कर्मफलसंबन्धव्यवस्था दर्शिता सूत्रकृता 'असन्ततेश्चाव्यतिकर' (वे सू २–३–४९) इति, तथैव प्रमाणप्रमेयव्यवस्थापि भविष्यति । उपाधितन्त्रत्वात् जीवत्वस्येति ॥

यच्चोच्यते चैतन्यमज्ञानावृतम् जीवाकाराहवृत्त्या परिणतान्त करणेनाभिव्यज्यते, अन्त करणोपरागादावरणाभिभवे तत्रैवाभिव्यज्यते–इत्यादि, तत्रात्मनो निराकारत्वे सति तदाकारवृत्त्यसंभवात्, असिद्धाज्ञानावरणस्याभिभवार्थमसिद्धात्माकारवृत्तिकल्पन वृथाप्रयास इत्यत इदमपि चिन्त्यमेव ।

(४) अन्त करणपरिणामसंसर्गकृतयोग्यत्वापत्त्या विषयस्य चैतन्य प्रति व्यञ्जकत्वम्, तदनुमेयादिष्ववर्तमानत्वसंभवात् तेषु वर्तमानधर्मद्वयो स्पत्त्ययोगात् नापरोक्षता ॥ प वि ८४

[अत्रापि पूर्ववाक्योक्तविमर्शोऽनुसंधेय । व्यवहारे यत्र यथादृष्ट परोक्षत्व मपरोक्षत्व वा तत्र तथैव स. इति नात्रैकात्मवादिभिर्वृथायासस्तदुपपादने आस्थेय इति ॥ ]

अध्याससिद्धिः –

२४७ अत्र प्रस्थाने अध्याससिद्धिरित्थं क्रियते –

(१) व्यवहारत्रितयम् अध्यासोपादानम् – इत्यत्र अर्थापत्तिव्यतिरेक्यनुमानप्रदर्शनाय यत्र यत्राध्यासाभाव सम्प्रतिपन्न, तत्र तत्र व्यवहाराभावो दृष्ट –इति व्यतिरेकव्याप्तिं भाष्यार्थं दर्शयति 'न हि देहेन्द्रियादिषु' इति ॥ प वि ८८

(२) देवदत्तस्य जाग्रत्स्वप्नकालौ तस्यैव कर्तृ करणभूतदेहेन्द्रियादिषु अहममाध्यासपुर स्सरप्रमातृत्वादिव्यवहारवन्तौ, तस्यैव सुषुप्तिकालादन्य कालत्वात् । य कालस्तथाविधव्यवहारवान् न भवति न स तस्यैव सुषुप्ति कालादन्यकाल, यथा तस्यैव सुषुप्तिकाल ॥ प वि ८८

(३) व्यवहारत्रितय वा दर्शिताध्यासोपादानमन्तरेणानुपपन्नम्, अध्यासाभावे व्यवहारादर्शनात् सुषुप्ते इत्यर्थापत्ति ॥ प वि ८८

(४) न चात्मानात्मनो सयोगसमवायौ व्यवहारनिमित्तम्, सुषुप्तेऽपि भावात् । अत परिशेषात् अर्थापत्त्यनुमानाभ्याम् अध्यास एव व्यवहार मूल सिद्ध ॥ प वि ८८ ८९

(५) पदार्थद्वयदर्शने सति प्रत्यक्षानुमानागमैर्भेदाप्रतिपत्तौ अध्यास परिशिष्यते ॥ प वि ९०

(६) न च केवल प्रत्यक्षानुमानार्थापत्तिभिरेवाध्याससिद्धि, किं तु आगमोऽपि विधेर्बोद्धारमधिकारिणं ब्राह्मणादिशब्दैरनुवदन् चेतनाचेतनयो रैक्यावभास दर्शयति ॥ प वि ९२–९३

(७) ननु सर्वशरीरसंनिधानाविशेषे सति, आत्मन कथमस्मिन्नेव शरीरेऽध्यासनियम इति ? अनादिस्तावदविद्याध्यास । तत्परिणामत्वात् लिङ्गशरीरे। तत्कार्यभूतसूक्ष्मशरीरारब्धत्वात्, तत्सश्लेषाद् वा स्थूलशरीरेऽध्यासनियमो न विरुध्यते ॥ प वि ८९

'अध्यास पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ता, सर्वाणि च शास्त्राणि' इति भाष्यप्रतिज्ञाम् अनादृत्य तद्वैपरीत्येन अध्यास एवात्र प्रमाणै प्रसाध्यते। शरीरेन्द्रियाद्यनभ्युपगम्य प्रमाणव्यवहारो नोपपद्यते, अत प्रमाणप्रवृत्तिसिद्धय एव सिद्धवदविचाराभ्युप-

गता शरीरादय इति भाष्यम् अनादृत्य 'कथम् अस्मिन्नेव शरीरेऽध्यासो-त्पत्तिनियम ?' इत्याक्षेपसमुत्थापनमप्यध्यासवृत्तमविगणय्यैवेति स्पष्टम् । सर्वविधव्यवहारस्याप्यध्यासपुरःसरत्वात्, ज्ञानबाध्यत्वमुपपन्नमिति सिद्धान्तसरणिं दूरीकृत्य अध्यासो नाम काचित्क कार्यविशेष – इत्यभ्युपगम्य तस्य निमित्तोपादानादिकारणगवेषणं वेदान्तिभिरवश्यकर्तव्यमिति भावनैव प्रमाणैरध्याससाधने प्रवर्तनी इति स्पष्टम् ॥

## अध्यासदृष्टान्तभूतशुक्तिरजतादिविषये कल्पना –

२४८ अध्यासस्याविद्योपादानकत्वावधारणमत्र विशेषतोऽभिलषितमित्यतो भाष्याक्षराणि तदानुगुण्येनैव व्याख्यायन्तेऽत्र सर्वत्र –

(१) प्रतिपन्नोपाधौ निरस्यमानमर्थम् अविद्यान्वयव्यतिरेकाभ्याम् अविद्या मन्यन्त इत्यर्थः ॥ प वि ८७

'तमेतमेवंलक्षणम् अध्यासं पण्डिता अविद्येति मन्यन्ते' इति 'आत्मानात्मनोरितरेतराध्यासम्' इति वाक्यशेषेण भाष्यकारैरेव सुस्पष्टमनूद्यमानमप्यनादृत्य प्रतिपन्नोपाधौ निरस्यमानोऽर्थ एवाविद्याशब्दार्थ इति व्याख्यातमत्र, तत्र चाविद्याशब्दप्रवृत्तिनिमित्तत्वम् अविद्यान्वयव्यतिरेक – इत्यप्रकृतमविद्योपादानकत्वं साग्रहमानीय दर्शितम् । एवं 'यत्र यदध्यासः तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न सबध्यते' इति अध्यारोपमात्रेण विकल्पकृतगुणदोषासंस्पृष्टत्वं तदास्पदवस्तुनः सुस्पष्टभाषया अभिदधदपि भाष्यं वक्रमार्गेणैव व्याख्यातमत्र –

(२) अविद्याध्यासविषयत्वप्रयुक्तस्तावद् गुणदोषाभाव सिद्ध । अत्राध्यासपरिणामितया आश्रयत्वप्रयुक्तदोषगुणाभाव कथ्यते । कथम् ? अनाद्यविद्याध्यासस्य नित्यचैतन्यावभासत्वात् न तत्राध्यासपरिणाम । कादाचित्काध्यासपरिणामस्य अविद्योपादानत्वात् अविद्यासभेदात् आत्माश्रयत्वादिसिद्धिरिति ॥ प वि ८७

अत्र भाष्याक्षरबाह्यमेव अध्यासपरिणामादिकम्, अनाद्यविद्याध्यासकादाचित्काध्यासविभाग, तत्राक्षेपपरिहारौ च स्वाभिलषितसिद्ध्यर्थमानीता इति सुस्पष्टम् ॥

(३) यदा ज्ञानविशिष्टोऽर्थ एवाध्यास तदा स्मर्यमाणसदृशोऽन्यात्मना अवभास्यमानोऽन्योऽर्थोऽध्यास – इत्येवलक्षणपरतया वाक्य योजितम्, यदा पुनरर्थविशिष्ट ज्ञानमेवाध्यास, तदा स्मृतिसमानोऽन्यस्यान्यात्मना अवभासो अध्यास इत्येवलक्षणपरतयापि तदेव वाक्य योजयितु शक्यत इत्याह – यतोऽर्थादिति ॥ प वि २२

[पञ्चपादिकावाक्यमस्य सूचयतीति तत्रत्यविमर्शोऽत्राप्यन्वेति । सम्यग्ज्ञानेन मिथ्याज्ञानमेव हातव्यमिति प्रसिद्धे, ‘अस्यानर्थहेतो प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त’ इत्युपसहारभाष्यावलोकनाच्च नात्रार्थाध्यासो भाष्यकारमनसि स्थित इति तु न पृथग् वक्तव्यम् ॥]

(४) यथाप्रतिभासमेव मिथ्यारजतस्य उत्तरज्ञानेन निरसनयोग्यस्योपगमात्, लौकिकपरमार्थदृष्टरजतप्रतियोगिकाभावविषयत्वाद् रजते त्रैकाल्याभावज्ञानस्य – इति सविद्द्वयानुरोधेन व्यवस्थासिद्धे, अन्यतरसविदपह्नवायोगात् । तथा च उभयसविद्विषयानुभव, ‘नास्त्यत्र रजतम्, मिथ्यैव रजतमभात्’ इति ॥ प वि २१

[अत्र लौकिकपरमार्थरजतविषया सविदेका, उत्तरज्ञाननिरसनीयरजतविषया अपरा – इति सविद्द्वयमस्ति वा न वा इति परीक्षकै स्वानुभवमनपह्नुत्य वदितव्यम् । कि ‘मिथ्यैवाभात्’ इति प्रतिपत्ति, उत ‘मिथ्यारजतमभात्’ इति ? – इत्यपि विमर्ष्टव्यमेतत् ॥]

“कारणदोष कार्यविशेषे तस्य शक्ति निरन्धन्नेव सस्कारविशेषमप्युद्बोधयति । कार्यगम्यत्वात् कारणदोषशक्ते । अत सस्कारदुष्टकारणसवलिता एका सामग्री । सा च एकमेव ज्ञानम्, एकफल जनयति । तस्य च दोषोत्थापितसस्कारविशेषसहितसामग्रीसमुत्पन्नज्ञानस्य उचितमेव शुक्तिगतमिथ्यारजतम् आलम्बनम् अवभासते । तेन मिथ्यालम्बन ज्ञान मिथ्याज्ञान न स्वतो ज्ञानस्य मिथ्यात्वमस्ति । बाधाभावात्” इति (प पा ९) इति **पञ्चपादिकावाक्यम्** । तत्तु विवरणमन्यथैव व्याचष्टे –

[आत्माज्ञानादेव शुक्तिरजतादिधीरिति इष्टसिद्धि(पा २०२-२०३)रत्र द्रष्टव्या ॥ ]

'तत्र रूपान्तरावभासहेतुरेव केवलम्' (प पा ५) इति मूलमेव व्याख्यानमत्र –

(८) **नन्वत्रापि अनुपपत्ति समाना। कथम्? शुक्तिकाज्ञान हि रूपान्तरावभास निवर्तयत् तदुपादानमज्ञानमपि निवर्तयतीति ते मतम्। तत्र कथ शुक्तिकाज्ञानात् सहाज्ञानेनाध्यासे निवर्त्यमाने पुनरात्मन्यज्ञान दृश्येत? अत प्रतिविषयम् अज्ञानभेद, अध्यासस्याज्ञानानुपादानत्व वा, उपादाननिवृत्तिमन्तरेणाध्यासनिवृत्तिर्वा समाश्रयणीया इति। उच्यते। अस्मिन् पक्षे शुक्तिकादिज्ञाने रजताद्यध्यासाना स्वकारणे प्रविलयमात्र क्रियते, मुसलप्रहारेणेव घटस्य, अथवा मूलाज्ञानस्यैवावस्थाभेदा रजताद्युपादानानि शुक्तिकादिज्ञानै सहाध्यासेन निवर्तन्त इति कल्प्यताम्॥**
**प वि १४**

[कल्पनाराज्ये किं किं न सिध्येत्? इष्टसिद्धौ शुक्तिकाज्ञानेन तदज्ञान साकल्येनादग्धम् – इति कल्प्यते। अत्र तु एकस्या एवाविद्याया प्रविलय, अविद्याया अवस्थाभेदा वा विनाश्यन्ते इति विकल्प्यते। विवरणनिर्माणकालात् प्रागेव प्रातिभासिकरजतोत्प[illegible] इष्टसिद्धिगतकेवल तर्कसरणिमनुसृत्य व्याख्यानवेदान्तिभिरभ्यूहिता आसन् इति गम्यतेऽनेन वाक्येन ॥ ]

(९) **शुक्तिकाद्यवच्छिन्न चैतन्य रजताद्यालम्बनम् इति बाह्यालम्बन रजतादि कथ्यते। सर्वत्र तु चैतन्यमेव साक्षाद् वा अन्यावच्छिन्नतया वा विभ्रमालम्बनम् इति युक्त परत्र परावभास इत्यर्थ ॥ प वि ३४**

[ अत्रापीष्टसिद्धि(पा २०४)रनुसृता ॥ ]

इष्टसिद्धौ अनात्मभूतशुक्तिकादिविषयज्ञानाज्ञाने व्यावहारिकदृष्ट्या स्वीकृते। अनात्मव्यवहारस्तु सर्वोऽपि स्वप्नव्यवहारवद् व्यवतिष्ठत इत्युपपादितम्। इह पुनरात्माज्ञानमेव, तदवस्थाज्ञानविशेषो वा शुक्त्यादिविषयकाज्ञानमित्युक्तम् इति विशेष ॥

## ख्यातिबाधविचारः –

२४९ पञ्चपादिकेष्टसिद्धयो ख्यात्यन्तरखण्डनप्रकारा ये आश्रिता, त एव स्वाभिमतयुक्त्युपबृंहणपूर्वकमत्र स्थापिता –

(१) यस्मात् भ्रान्तित्वव्यवहार मदमज्ज्ञानयोरनुपपन्न , यतश्च पक्षान्तरेषु अनुभवविरोध , यतश्च ज्ञानद्वयपरोक्षस्मृतित्वस्मरणाभिमान प्रमोषतद्धेत्वविवेकतन्निमित्तप्रवृत्तयो जन्मान्तरानुभूतस्मृतिश्च इत्यप्रतिपन्नम् अपूर्वं बहु कल्पनीयम् अख्यातौ अन्यथाख्यातौ च अन्यत्र प्रतिपन्नस्य अन्यत्र सत्त्वम्, इन्द्रियस्य च जन्मान्तरानुभूतदेशकालव्यवहितार्थग्राहित्वम् दोषस्य च तथाविधादृष्टसामर्थ्यम्, ससर्गस्य च शून्यस्य प्रत्यक्षता-इति प्रमाण विरुद्ध बहु कल्पनीयम्, अत सर्वदोषपरिहाराय यथाप्रतिपन्नस्य मिथ्यात्व नामैक स्वभावो 'नास्ति रजतम्, मिथ्यैव रजतमभात्' इत्यनुभवसिद्ध समाश्रयणीय । अविद्योपादानकल्पनायाश्च अन्वयव्यतिरेकसिद्धत्वात् ॥

प वि ३१

[परपक्षद्वये दोषभूयिष्ठे सिद्धे स्वपक्ष परिशुध्यतीत्येष न युक्तोऽवगम । 'शुक्तिका हि मिथ्यैव रजतमित्यभात्' इति सार्वत्रिकानुभवमनुसरद्भि शुक्तिकैव तथा रजतत्वेनाध्यवसिता, नासीदेव तत्र रजतमित्यनुव्यवसायाच्च रजतोत्पत्त्यङ्गीकारोऽनुभवविरुद्ध एवेत्यवसीयते । न च तत्राज्ञानोपादानकत्व मनुगम्यते । अज्ञानपदार्थश्च क्लृप्तविपरीतज्ञानाद्यन्यतम एव-इति यथासभव-मूह्यम्, न तु विप्रतिपत्तिस्थानमज्ञान कल्पनीयम् इत्येव सम्यगिति भाति ॥]

यथैव 'शुक्तिरजतज्ञानस्थले विषय सत्यमिथ्यावस्तुनोरन्योन्यात्म तया एकतामापन्न तेनैकविषयावच्छिन्नफलैकत्वोपाधौ सत्यमिथ्याज्ञान द्वयमपि एकमित्युपचर्यत' (प वि २९) इत्युक्तम् । एवम् आत्मानात्म नोरितरेतराध्यासस्थलेऽपि योजित विवरणे -

(२) एकतराध्यासे अन्यतरस्य सामान्यावभास, अन्यतरस्यैव विशेषावभासश्च स्यात् । अत्र चिज्जडरूपेण द्वयोर्विशेषावभासो द्वयोरितरे-तराध्यास गमयति । अध्यासे विशेषावभासस्य अध्यस्यमानताप्रयुक्तत्वात् । न च द्वयोरपि मिथ्यात्वापात । चेतनस्याचेतने स्वरूपाध्यासाभावात्, ससृष्टतयैवाध्यासात् । न च विशेषावभासात् अधिष्ठानत्वविरोध । अधिष्ठान-धर्मतया विशेषस्याप्रतीते, अधिष्ठानान्तरधर्मतया प्रतीते ॥

प वि ९४-९५

'एवमहप्रत्ययिनम् अशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य त च प्रत्यगात्मान सर्वसाक्षिण तद्विपर्ययेणान्त करणादिष्वध्यसति' इति

भाष्यमेव सविदनुसारीति यथाश्रुतमेवात्र ग्राह्यम्—इत्यस्मदभिप्राय । न हि 'ससृष्टचेतनोऽहम्' इति कस्यचिदपि प्रत्यय । निरुपचरित हि 'अहम्' इति प्रत्यगात्मत्वेन सर्वसाक्षित्वेन चाभिमन्यते सर्वोऽपीति प्रसिद्धमेतत् । न च प्रत्यगात्मन स्वरूपतोऽप्यहमि समारोपितत्वे द्वयोरपि मिथ्यात्वापात । न ह्यध्यस्तरूपेण मिथ्यात्वेऽपि सर्वसाक्षिण साक्षित्वमसङ्गित्व वा अणुमात्रमपि हीयत इति ॥

**(३) ननु तवापि 'अस्ति' इति प्रतिपन्नस्य अनिर्वचनीयत्वे अनुभव विरोध समान । तन्न । इदन्तासंसर्गवद् रजतस्य शुक्तिकासत्तासंसर्गोऽय मवभासते न रजतस्य अपरसत्त्वम् । अथवा त्रिविध सत्त्वम् परमार्थसत्त्व ब्रह्मण, अर्थक्रियासामर्थ्यसत्त्व मायोपाधिकम् आकाशादे, अविद्योपाधिक सत्त्व रजतादे – इति परमार्थसत्त्वापेक्षया अनिर्वचनीयमिति नानुभव-विरोध । यथानुभवम् अर्थसत्त्वाभ्युपगमात् ॥ प वि ३०-३१**

नेद युक्तम् । सत्त्वस्य विशेषाननुभवात् त्रैविध्यानुपपत्ते । 'नासतो विद्यते भावो नाभावो विद्यते सत.' (गी २–१६) इति भगवदुक्तिविरुद्धा हि सत्त्वेनाभिमतस्य शुक्तिशुक्तिरजतादेरभावत्वप्राप्ति । अथ असदेव शुक्तिकादि, तर्हि नास्त्येव तस्य सत्त्वम् । न ह्यसतो भावोऽस्तीति । न चैकजातित्व विद्यते आत्मशुक्तिरजतानाम्, येन प्रातिस्विक सत्स्यात् सत्त्वसमाक्रान्तत्वम् । न च सत्त्वस्य विशेषा सन्ति, येन स्वरूपापेक्षया सत्त्व पररूपापेक्षया चानिर्वचनीयत्व स्यात्, शुक्तिरजतादे । आहुश्च भाष्यकारा –

**(अ) यथा च कारण ब्रह्म त्रिषु कालेषु सत्त्व न व्यभिचरति एव कार्यमपि जगत् त्रिषु कालेषु सत्त्व न व्यभिचरति । एक च पुन सत्त्वम् । अतोऽपि अनन्यत्व कारणात् कार्यस्य ॥ सू भा २-१-१६, पा २०३**

इति । कार्यत्व नाम जगतोऽध्यस्तत्वमेवेति वक्तु खलु शुक्तिरजतोदाहरणम् । ततश्च सिद्धमिद यद् रजतस्य सत्त्व नाम शुक्तिकागतसत्त्वमेव । तच्च वस्तुत आत्मसत्त्वमेवेति । अत एव हि **गीताभाष्ये** लिखितम् –

(आ) यद्विषया बुद्धिर्न व्यभिचरति तत् सत्, यद्विषया व्यभिचरति तदसत्-इति सदसद्विभागे बुद्धितन्त्रे स्थिते, सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते सामानाधिकरण्येन नीलोत्पलवत्, सन् घट, सन् पट, सन् हस्ती इत्येव सर्वत्र। तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति। तथा च दर्शितम्। न तु सद्बुद्धि ॥ गी भा २-१६, पा १४-१५

इति। तत्र ह्यात्मन सर्वत्र सद्बुद्धिगम्यत्वमनात्मनश्चासद्बुद्धिविषयत्व विवक्षितमिति न सत्तात्रयवादस्यावकाश। न च वस्तुनि विकल्पावकाश इति सत्तैकत्ववाद एव ज्यायानिति सिद्धम्। अध्यस्तशुक्त्यादेस्तु सत आत्मनस्तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वम् इति च। आत्मनिश्चयपर्यन्त तु शुक्त्यादौ अध्यस्तात्मसत्त्वमेवावलम्ब्य व्यवहार 'सती शुक्तिका, रजत तु मिथ्या' इतीत्यन्यदेतत् ॥

अथ कोऽय बाधो नाम ? — इति पृच्छायाम् —

(१) अन्यार्थिनोऽन्यत्र प्रवृत्तिनिरोध। (२) अविविक्ततया प्रतिपन्नस्य विवेको बाध, (३) अन्यात्मना प्रतिपन्नस्य इतरेतराभावप्रतिपत्तिर्बाध —

इत्येकदेशिप्रणीतलक्षणानि निराकृत्य बाधलक्षण व्याचष्टे विवरणम् —

(४) अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाध। तथाविधानवबोधनिवृत्तौ बाधप्रसिद्धे ॥ प वि ३४

प्रतिपन्नोपाधौ अभावप्रतियोगित्वमेव मिथ्यात्व नाम। तच्च बाधक ज्ञाने रजत प्रतिपन्नोपाधावभावप्रतियोगितया अवभासत इति प्रत्यक्षम् ॥ प वि ३३

अत्र प्रतिपन्नोपाधौ न केवलमभावप्रतियोगित्वम्, किं तु तादृशोपाधिव्यतिरेकेण सर्वथा सर्वदापि स्वस्य यथाप्रतिभातस्य सत्त्वाभाव, तादृशोपाधिनैवात्मवत्त्व चावगम्यते बाधकाले — इति विवेक्तव्यम्। न तु ज्ञानस्य प्रस्थानविशेषाभिमतस्य सह कार्येण निवृत्तिरवगम्यते तत्त्वनिर्धारण-काले इति नासौ बाधलक्षणकुक्षौ अन्तर्भावनीया। किं तु, अध्यारोपित-तदास्पदयोरितरेतरविवेकेन वस्तुस्वरूपनिर्धारणलक्षणेन सम्यग्ज्ञानेन मिथ्या-ज्ञानापगम एव बाधत्वेनावसेय। तथा हि गीताभाष्यवचनम् —

(इ) इतरेतरतद्धर्माध्यासलक्षण सयोग क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभाव निबन्धन , रज्जुशुक्तिकादीना तद्विवेकज्ञानाभावात् अध्यारोपितसर्परजतादि सयोगवत् । सोऽयमध्यासस्वरूप क्षेत्रक्षेत्रज्ञसयोगो मिथ्याज्ञानलक्षण ।
निरस्तसर्वोपाधिविशेष ज्ञेय ब्रह्म स्वरूपेण य पश्यति, क्षेत्र च माया निर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवत् ' असदेव सदिवावभासते ' इत्येव निश्चितविज्ञानो य , तस्य यथोक्तसम्यग्दर्शनविरोधात् अपगच्छति मिथ्या ज्ञानम् ॥ गी भा १३-२६, पा २१३

इति समारोपितस्य मिथ्यावभासताम् , ततो विविच्य तत्तद्विकल्पास्पदस्य स्वरूपेण सत्यत्वज्ञानस्यैव सम्यग्ज्ञानताम्, तेन च ज्ञानेन मिथ्याज्ञानस्यापगम च सुस्पष्टमाह । एव हि यथा ' शुक्तिकैवेद न रजतम् ' इति सम्यग्ज्ञानाद् रजतस्य शुक्तिकामात्रस्वरूपत्वेन निर्धारण भवति दृष्टान्ते, तथा ' ब्रह्मैवेद विश्वम् ', ' आत्मैवेद सर्वम् ', ' नेह नानास्ति किञ्चन ' – इत्यादिश्रुति जन्यज्ञानात् सर्वस्यापि प्रपञ्चस्य शुक्त्यादौ रजतादिवद् ब्रह्मण्येवाध्यस्तता, प्रतिभातरूपेणानृतता, ब्रह्मणा नित्यमेवात्मवत्ता च निर्धारिता भवतीति समञ्जस भवति यथोक्तबाधलक्षणवर्णनम् । अन्यथा हि ब्रह्मण्यभाव जगत प्रतिबोधयति बाधकज्ञानम्, बाधश्च वादिविशेषपरिभाषिताज्ञाननिवृत्ति – इत्युभयमपि नावकल्पेत । ब्रह्मणि जगतो भावस्य वा अभावस्य वा अप्रसङ्गात् बाधज्ञानकाले, वादिसमताज्ञाननिवृत्तेश्च सार्वत्रिकानु भवानारूढत्वाच्चेति ॥

## अविद्यामाययोरैक्यम् –

२५० पञ्चपादिकायाम् 'अव्याकृतम्, अविद्या, माया, प्रकृतिरग्रहण-मव्यक्तम्' (प पा २०) इत्यादिना अविद्यामाययोरव्याकृतपदार्थेनैकता प्रतिज्ञाता । तत्र मायाविद्ययोर्भेदमुररीकुर्वाणाना मत निराकृत्य तदैक्यमेव द्रढयति स्म विवरणम् –

(१) अध्यासोपादानाविद्याक्लृप्तिवत् कादाचित्कमायोपादानानिर्वच नीयानादिवस्तुकल्पना । तत्र च ' माया तु प्रकृतिम् ' इति श्रुतौ प्रकृतौ

मायाशब्दप्रयोगात् प्रकृतिभूतयोर्मायाविद्ययो तद्विकारयोश्च अध्यास मायायो लक्षणाभेदात् एकत्वमवगम्यते ॥ प वि ३१-३२

[अत्राध्यासस्योपादानतया कल्पिताया अविद्याया सत्त्वादिसप्तनिपत्त्य भावात् न लक्षणत ऐक्यमिति प्रत्यवस्थान सभवति ॥ ]

(२) ननु स्वाश्रयव्यामोहाव्यामोहहेतुत्वाभ्या लक्षणभेदो दर्शित । यद्याश्रयो द्रष्टा, व्यामुह्यत्येव पार्श्वस्थो माया पश्यन् । अथ कर्ता, न तस्य मायावित्वाद् व्यामोहाभाव, किं तु बाधनिश्चयप्रतीकारज्ञानाभ्याम् । अन्यथा पार्श्वस्थवत् कर्तापि व्यामुह्येदेव । अथेच्छया कर्तुं शक्यते माया, न तथा अविद्येति । न तदपि । मन्त्रौषधादौ निमित्तकारणे न्तु स्वातन्त्र्यात्, न मायायाम् । अविद्यायामपि अङ्गुल्यवष्टम्भादिना द्विचन्द्र-केशोण्डूकादिभ्रमा, मन्त्रौषधादिनिषेवणात् स्वप्नभ्रमा, तत्त्वज्ञानेऽप्यनु वृत्तप्रतिभासाश्च कर्तुरिच्छया निष्पाद्यन्ते ॥ प वि ३२

[अत्र व्यामुग्धा एवाविद्यावन्त इति व्यपदिश्यन्ते, व्यामोहकस्य प्रसारक एव मायावीति व्यपदिश्यते । न विपर्ययेण । व्यामोह एव चाविद्या नाम, न तु व्यामोहक दृश्यमिति । युक्त चैतत् । अविद्येति हि विद्यासमानाश्रया कथ्यते । न तु दृश्यविशेषो मायाख्य । तस्यामेव हि आवरणशब्दप्रवृत्तिनिमित्तम् उपलभ्यत इति । यत्तु, अविद्या स्वेच्छया कर्तुं शक्यत इति । तन्न समीचीनम् । यतोऽङ्गुल्यवष्टम्भादिना निष्पादित द्विचन्द्रादिदर्शन न तया निष्पादयितुरविद्या भवति 'एकश्चन्द्र सद्वितीयवद् भासते' इति निष्पादनकाले एवादर्शन स्वाभासमात्रतया निश्चयात् । न ह्यविद्या 'मया निष्पादितेयम्' इति कस्यचिदपि भासत इति ॥ ]

(३) न च शास्त्रव्यवहारान्मायाविद्याभेद । 'तस्याभिध्यानात् योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्ति' इत्यादश्रुतौ सम्यग्ज्ञान निवर्त्याविद्याया मायाशब्दप्रयोगात् । 'तरत्यविद्या वितता हृदि यस्मिन् निवेशिते । योगी मायाममेयाय तस्मै विद्यात्मने नम ॥' इत्यादिस्मृतौ मायाविद्ययो सामानाधिकरण्येन तत्त्वज्ञानेन कर्तव्यत्वाभिधानात् । 'मायामात्र तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इति सूत्रे सूत्रकारेण स्वप्ने मायाशब्दप्रयोगात् । भाष्यकारेण च 'अविद्या माया', 'अविद्यात्मिका मायाशक्ति' इति तत्र तत्र निर्देशात् । टीकाकारेण च 'अविद्या माया अक्षरम्' इत्युक्तत्वात् । ब्रह्मसिद्धिकारेण च 'एवमेवेयम् अविद्या माया मिथ्याप्रत्यय' इत्युक्तत्वात् ॥ प वि ३२

[श्रुतौ तावत् ‘मायामेता तरन्ति ते’ इति स्मृताविव परमात्मदर्शनात अविद्यानिवृत्तौ म [illegible] । **पुराणस्मृतौ** तु ‘योगी मायाम्’ इत्यस्य स्थाने ‘योगमायाम्’ इति पाठान्तरमस्ति । तत्रापि यद्विद्याबलादविद्यानिवृत्तौ मायानिवृत्तिर्भवतीत्युक्तम्, ‘विद्यात्मने नम’ इति विशेषणात । **भाष्यकारस्य** तु ‘अविद्या माया’ इति नास्ति सामानाधिकरण्येन प्रयोग । ‘एक एव परमेश्वर कूटस्थनित्यो विज्ञानधातु, अविद्यया – मायया मायाविवत् अनेकधा विभाव्यते नान्यो विज्ञानधातुरस्ति’ (सू भा १-३-१९) इत्यत्र तु नैव सामानाधिकरण्यम् । दृष्टान्तदार्ष्टान्तिकवाक्यस्थितयो पदयो सामानाधिकरण्याप्रसङ्गात् । ‘अविद्यात्मिका मायाशक्ति’ इत्यपि भाष्यवाक्य नास्ति । ‘अविद्यात्मिका हि बीजशक्ति’ (सू भा १-४-३) इति तु मायाख्य बीजशक्ते, अविद्याकल्पितत्वप्रदर्शनार्थम् । स्थलान्तरे ‘अविद्याकल्पिते नाम रूपे’ (सू भा [illegible]-१-१४) इति प्रक्रम्य ‘अ[illegible] यनुरोधी [illegible] भवति’, ‘[illegible] पेक्षमेव [illegible]म्’ इति चैकार्थत्वेन अविद्याकृताविद्यात्मकशब्दयो अविद्याकल्पितशब्देन समानार्थकत्वेन प्रयोग दर्शनात् । **टीकाकारेण** तु सामानाधिकरण्यप्रयोग साध्यसम । **ब्रह्मसिद्धिकारेण** तु प्रस्थानान्तरत्वात अविद्या अग्रहणम् यदि वा विपरीतग्रहणम्, सदसद्विलक्षणत्वात् अनिर्वचनीयत्वादेव न ब्रह्मण स्वभाव इति दर्शयितुम् । एवमेवेयम् अविद्या माया मिथ्यावभास इत्युच्यत’ (ब्र सि 9) इत्युक्तम् । तत्रापि मिथ्यावभासमानत्वादेव माया न त्वविद्यात्वेनेति विशेष । ‘मिथ्यावभास’ इत्यस्य स्थाने ‘मिथ्याप्रत्यय’ इति धृत त्वपपाठ । न हि प्रत्ययत्वेनेय मायेत्युच्यते किं त्ववभासत्वेनेति । न चाविद्या विवरणप्रस्थाने मिथ्याप्रत्ययमात्रम्, किं तु तदुपादानकारणम् इति यत्किञ्चिदेतदुक्तम् ॥ ]

**(४) तस्मात्, लक्षणैक्यात् वृद्धव्यवहारे चैकत्वावगमात्, एकस्मिन्नपि वस्तुनि विक्षेपप्राधान्येन माया आच्छादनप्राधान्येन अविद्या-इति व्यवहारभेद । इच्छाधीनत्वतद्वैपरीत्येन वा व्यवहारभेद. – इति युक्त ‘मायामयम्’ इति ॥ प वि ३२**

[विषयविषयिस्वभावेन लक्षणभेद स्पष्टोऽऽविद्यामाययोर्लोके । दर्शिता च वृद्धव्यवहारस्यान्यथा गति । यत्तु ‘विक्षेपप्राधान्येन माया’ इति, तत्र विक्षिप्तदृश्यरूपेणेति चेदभिप्राय, ओमिति ब्रूम, ‘आवरणविक्षेपशक्तिद्वयवत्त्वात्’ इति चेद् विवक्षा, न नामरूपलक्षणाव्याकृतस्याच्छादकत्वमस्ति, तस्या अविद्याप्रत्युपस्थापितशरीरत्वात् । अव्याकृतलक्षणजगच्छक्तित्वेन च तस्य स्वयमेव

शक्तिस्वरूपत्व न तु शक्तिमत्त्वमित्यपि मन्तव्यम् । इच्छाधीनत्वतदनधीन त्वाभ्या विवेचन स्वाभ्युपगमविरुद्धमिति च ॥ ]

## अविद्यानिवृत्तिः –

२५१ अनाद्यध्यासस्य निवृत्ति कथम् इत्याक्षिप्य समाधानाव सरे एवमुक्त विवरणे –

**(१) लोके तावदनादि प्रागभावो निवर्तते । सुगताना तत्त्वपरि भावनाप्रकर्षेण अनादिवासनासतानाना निवृत्तिरिष्टा । नैयायिकादीनामपि अनादिर्मिथ्याज्ञानप्रवाह, परमाणुश्यामता च निवर्तते । साङ्ख्यानामपि अविवेको निवर्तते विवेकेन । मीमासकादीनाम् इदानीतनधर्मतत्त्वज्ञान प्रागभावोऽनादिर्निवर्तते ॥ प वि ९६**

[तत्र प्रागभावनिवृत्तिर्न दृष्टान्त, अविद्याया भावरूपत्वात्, भावत्वा भ्युपगमो हि अभाववैलक्षण्यसाधनार्थ । परतन्त्रदोषप्रकटनमात्रेण स्वाभ्युप गमस्य निर्दुष्टत्वासिद्धेश्च । अभियुक्तवचनविरोधश्चास्त्यनादेरन्तवत्त्वमभ्युप गच्छत यस्मात्, ‘ अनादेरन्तवत्त्व च ससारस्य न सेत्स्यति ’ (गौ का ४-३०) ‘ बन्धमुक्तावस्थयो पौर्वापर्यनिरूपणाया बन्धावस्था पूर्व प्रकल्प्या अनादिमती अन्तवती च । तच्च प्रमाणविरुद्धम् ’ (गी भा १३-२) इति ह्यभियुक्ता ॥]

**(२) अनादिभावरूपम् आत्मवन्न निवर्तेत इति चेत्, न । अनिर्वच नीयत्वादज्ञानस्य । अनादिर्न निवर्तेत इति सामान्यव्याप्ति, ज्ञानेनाज्ञान निवृत्तिरिति विशेषव्याप्ति । अत सैव बलवती । ननु स्वोपादानगतोत्तरा वस्थाविनाश, तत्र कथम् अनादेर्निरुपादानस्य विनाश ? न । स्वाश्रय गतोत्तरावस्था – इत्येतावत्त्वात् । अन्यथा अणुश्यामत्वादीनामनिवृत्ति प्रसङ्गात् । अभाववैलक्षण्यात् आत्मवदज्ञानस्यानिवृत्तिरिति चेत्, न । सद्वैलक्षण्यात् प्रागभाववन्निवृत्ति किं न स्यात् ? कस्तर्हि निर्णय ? ज्ञानाज्ञानकृतो विशेषान्वय इत्युक्तम् ॥ प वि ९६**

[ अनाद्यनिर्वचनीयनिवृत्तिविषये इष्टसिद्धि (पा ८६, ३६८) द्रष्टव्या । तत्परीक्षा च प्राक्कृता । मुख्यवृत्त्या तु अज्ञानत्व प्रकृतेर्विप्रति- पन्नमिति, नाज्ञानत्वकृता तस्या निवृत्तिर्भवेत् ॥ ]

**(३) ननु ज्ञानम् अज्ञानस्यैव निवर्तकम्, कथमध्यासस्य निवृत्ति रिति? तत्राह – 'तत कारणनिवृत्तौ' इति ॥ प वि पा ९६**

[ 'तत्त्वमसीत्यादिवाक्याद् ब्रह्मस्वरूपावगाहि ज्ञानान्तरोत्पत्तेरिष्टत्वात्। तद् हि ब्रह्मणोऽवच्छिन्नस्य चैतन्यस्य ब्रह्मरूपत्वप्रच्छादनेन जीवरूपत्वापादिकाम् अनादिसिद्धाम् अविद्याम् अहङ्कारादिविक्षेपहेतुम्, निराकुर्वदेवोत्पद्यते। तत कारणनिवृत्तौ तत्कार्यम् अहमिति जीवे भोक्तृत्वरूपता सपरिकरा निवर्तेत इति युज्यते' (प पा ३७) इति पञ्चपादिकावाक्यव्याख्यानमेतत्। अध्यासमात्र निवर्तकत्व ज्ञानस्य दृष्ट लोके, सशयग्रहणनिवर्तकत्व च। एवमेव त्रिविधम् - [illegible] । [illegible] गीताबृहदारण्यकभाष्ययोरुक्त लोकदृष्ट मनुसृत्य। इहापि स्थलान्तरे लिखितम् –

'तत्त्वावभासविरोधिनोऽग्रहणमिथ्याज्ञानादेस्तत्त्वज्ञानेन निवृत्तिदर्शनात्। इहापि तत्त्वावभासविरोधितयैव भावरूपाज्ञानादे कल्प्यमानत्वात् तस्य ब्रह्म ज्ञानान्निवृत्तेरुपपत्ते' (प वि १५) – इति। तत्र क्लृप्ताग्रहणमिथ्याज्ञान लक्षणाध्यासादेरविद्याशब्दवाच्यस्य लोकदृष्टानुसारेण विनिवर्त्यत्वे सिद्धे, तत् स्वोक्तमपि प्रस्मृत्य किमिति कल्प्यमानतदुपादानलक्षणाविद्यानिवृत्तिद्वारा तस्य निवृत्तिरिहास्थितेति तु न ज्ञायते ॥ ]

**(४) किं तन्नि श्रेयसम्? कर्तृत्वभोक्तृत्वदोषसयोगाध्यासप्रवाहोपादानस्याज्ञानस्य निवृत्ति। न। निवृत्तेऽप्यज्ञाने द्वैतदर्शनस्यानपायात्। न हि पृथिव्यादिप्रपञ्च कर्तृत्वाद्यध्यासनिवृत्तिमात्रान्निवर्तते। उच्यते। सत्स्वपि पृथिव्यादिषु, अन्त करणाध्यासनिवृत्तौ प्रमातृत्वाभावादात्म-चैतन्यस्य स्वतो विषयोपरागाभावाद्, द्वैतदर्शन न प्राप्नोति अनिन्द्रियस्येव रूपादिदर्शनम् ॥ प वि २०३**

**(३) ननु ब्रह्मात्मानुभवद्वैतदर्शनयो कुत साहित्यमुच्यते? न वय साहित्य ब्रूम। कदाचित् असप्रज्ञातात्मैकत्वदर्शन कदाचिदारब्धकर्मोप स्थापितदोषनिमित्तद्वैतदर्शन चेति ॥ प वि २८४**

[अत्र प्रथमे कल्पे प्रमातृत्वनिवृत्तावपि पृथिव्यादिसद्भावे प्रमाणाभाव। तत्सद्भावाङ्गीकारे चाद्वैतमिति श्रुतिकृतविशेषाभावप्रसङ्ग। द्वितीये तु द्वैत-व्यवहाराभावस्य कादाचित्कावस्थाविशेषनिबद्धत्वस्वीकारप्रसङ्गात् सिद्धान्तहानम्। 'तत्त्वमसि' इति ब्रह्मात्मभावस्य अनवस्थाविशेषनिबन्धनत्वोपगमात्। न च वस्तुनि क्रियायामिव विकल्पसभव, येन द्वैतावशेष कृत्स्नद्वैतनिवृत्तिश्चेत्युभय-पक्षस्वीकार उपपद्येत ॥ ]

अविद्याविनिवृत्तेस्तर्कमात्रसिद्धत्वे, कालान्तरेऽनुभूयमानत्वे च स्वीक्रियमाणे 'अत्र ब्रह्म समश्नुते' इत्यादिश्रुतिविरोध स्फुट एव ॥

## अविद्यासंस्कारवादः –

२५२ अविद्यानिवृत्तिविचारेणेद निष्पद्यते यद् विवरणरीत्या न कस्याप्यज्ञान कात्स्न्येन जीवदवस्थाया निवर्तते इति, यतो द्वैतदर्शन सर्वस्यापि जीवतोऽवश्यमनुवर्तते । अत्र च मण्डनादिवत् अविद्यासस्कार पक्षश्च इष्टसिद्धिवादवदविद्यालेशपक्षश्चाश्रित ॥

(१) तत्त्वज्ञानात् अविद्यानिरोधेऽपि पुनरनुवृत्तिर्युज्यत इत्याह–न । सस्कारात् इति ॥ प वि १०५

(२) ननु क्रियाज्ञानयोरेव सस्कार सभवति, नाज्ञानतत्कार्ययो । न । गन्धादिसस्कारदर्शनात् । प्रलयावस्थाया सर्वकार्यसस्कारोपगमात् । सर्वत्र विनाशमात्रप्रयुक्तसस्कारजन्मानुमानात् । अविद्यातत्कार्यस्य भ्रान्ति ज्ञानात्मकत्वात् । अज्ञानादौ च साक्षिचैतन्यावच्छेदकज्ञानाभासोपगमात् सस्कारसिद्धे । ननु सस्कारात् स्मृतिमात्रहेतो कथमपरोक्षद्वैतावभास स्यात् । अविद्यावत्सस्कारस्यापि चैतन्यदोषत्वादिति वदाम । अपरोक्षाव भासकारणगतो दोषोऽपरोक्षभ्रमहेतुरिति सिद्धत्वात् । आत्ममात्रस्यैव अविद्याश्रयत्ववत् सस्काराश्रयत्वोपपत्तेश्च । अविद्यासंस्कारव्यतिरिक्त कार्याणामेव अविद्योपादानत्वात् । आत्मनो मिथ्याभूतसस्कारोपादानत्वा भावेऽपि आश्रयोपाधित्वस्याविद्योपाधित्ववत् अविरोधात् । तत्त्वज्ञानानु-सधानादेव च क्रमेण सस्कारनिवृत्ते, कञ्चित् कालमवस्थायैव विदेहमुक्तिर्न विरुध्यते । अविद्यालेशो वा तमोलेशवत् सस्कारशब्देनाभिधीयत इति निरवद्यम् ॥ प वि १०५–१०६

[अज्ञानस्य तत्त्वेन कल्पनमेव तावद्वादिविप्रतिपत्तिस्थानम् । तस्या सस्कारा भ्युपगम, लेशावशेषाभ्युपगमो वा, तस्या साक्षिचैतन्यावच्छेदकज्ञानाभासोपगमो वा, सस्कारादपरोक्षद्वैतावभास, सस्कारस्याप्यविद्यावद्दोषत्वाभ्युपगम, आत्मन स्तादृशसस्काराश्रयत्वम्, तत्त्वज्ञानादेव सस्कारनिवृत्ति, जीवन्मुक्ते तादृश-सस्काराज्ञानलेशान्यतरानुवृत्ति – इत्येतत् सर्वमपि सुतरा वादिविप्रतिपत्ति स्थानम् । तदुपष्टम्भकश्रुतियुक्त्याद्यभावादिति नैव पृथग्वक्तव्यम् ॥ ]

व्यवहारदृष्ट्या जीवस्य सशरीरत्व कर्माशयापेक्षयैव ज्ञानोत्पत्ति चाश्रित्य, प्रारब्धकर्मानुवृत्तिरुक्ता 'अनारब्धकार्ये एव तु पूर्वे तदवधे' (वे सू ४-१-१५) इति सूत्रे तद्भाष्ये च । यद्यप्यकर्त्रात्मबोधेन सर्वं मिथ्याज्ञान बाधितमेवेति न तत्कार्यस्य कस्यचित् कर्मण सावशेषत्वमवकल्पते, तथापि 'बाधितमपि मिथ्याज्ञान द्विचन्द्रज्ञानवत् सस्कारवशात् कञ्चित् कालमनुवर्तत एव' इति भाष्योक्तिर्व्यवहारदृष्ट्या न दुष्यति। 'शुक्तिका हि रजतवदवभासते' इति लोकानुभवानुसारित्वात् । तदेतद् दृष्ट परित्यज्य मिथ्याज्ञानस्याप्युपादानभूतानिर्वचनीयाज्ञानमदृष्ट परिकल्प्य तस्य लेशसम्कारादिकल्पनम्, विदेहमुक्तेरेव मुख्यत्वापादनेन 'अत्र ब्रह्म समश्नुते', 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुत्यर्थबाधन च किमर्थमाश्रीयतेऽत्रेति न विज्ञायते । आश्रिते च तस्मिन् ज्ञानस्य दृष्टार्थता सर्ववादिसिद्धा बाध्यते, अध्यारोपापवादप्रक्रिया च साप्रदायिकी विना कारण हीयते – इति स्पष्टमेव ॥

शास्त्रकारणत्व ब्रह्मणः –

२५३ वेदस्येश्वरप्रणीतत्वेन प्रामाण्यवर्णन निराकृत्य (प वि २२४–२२७), वेदाप्रामाण्यवादिना सौगतार्हतलोकायताना मत च निरस्य (प वि २२७–२२८), अनादित्वादपौरुषेयत्वाच्च प्रमाण वेद इति साप्रदायिकमतमङ्गीकृत्य (प वि २२९), अनादेरपि वेदस्य ब्रह्म कारणकतात्र समुपन्यस्ता शास्त्रयोनित्वाधिकरणभाष्यप्रथमवर्णकमाधृत्य –

(१) अत्र शास्त्रशब्दोपलक्षितसर्वशब्दाना वर्णानाम् एकपदार्थबुद्ध्यवच्छेदकवर्णनियामकक्रमविशिष्टपदाना वाक्यार्थबुद्ध्यवच्छेदकवाक्य नियामकक्रमविशिष्टवाक्यानाम्, महावाक्यार्थबुद्ध्यवच्छेदकवाक्यनियामक क्रमविशिष्टप्रकरणाना परिपूर्णपुरुषार्थसाधनबुद्ध्यवच्छेदकानेकप्रकरणनियामकक्रमविशिष्टशास्त्राणां च प्रवाहरूपेण ब्रह्मोपादानतया कार्यत्वमस्तीत्याह– 'तत्परतन्त्रत्वात्' इत्यादिना ॥ प वि २३०

वेदाना चानिर्वचनीयत्वमुक्तम् –

(२) विशिष्टार्थतत्प्रत्यययोर्भावाद् विज्ञानव्यतिरेकेणार्थस्यानिर्वचनीयत्वेऽप्यर्थक्रियासमर्थतया तुच्छव्यावृत्तसत्ताभ्युपगमात् अस्त्येवार्थावबोध समर्थो वेद ॥ प वि २३०

शास्त्रकारणत्वाच्च ब्रह्मण सर्वज्ञत्वमित्येतदेवमुपपादितम् –

(३) अस्ति तावद् वर्णाना क्रमसख्यादिभेदभाजा मुख्यलक्षणादि द्वारेण सर्वार्थप्रकाशनसामर्थ्यम् । अव्यपदेश्यस्य वस्तुनोऽभावात् । तत्र कार्यगतमर्थप्रकाशनसामर्थ्यमुपादानकारणधर्म एव भवति । प्रदीपगत प्रकाशनसामर्थ्यस्य वह्निधर्मत्वदर्शनात् , कार्योपादानयो शक्तिद्वयकल्पना योगात् । एव सर्वार्थप्रकाशनसमर्थत्वात् सर्वज्ञ ब्रह्म । तस्मात् सर्वार्थप्रकाशनसमर्थसर्वशब्दोपादानतया सर्वज्ञ ब्रह्म ॥ प वि २३१

वेदस्य सर्वार्थप्रकाशकत्वात्, तदुपादानस्यैवेद प्रकाशनसामर्थ्यं भवितुमर्हति इत्युक्त यद्यपि सम्यगेव, तथापि भाष्ये नि श्वसितश्रुत्युदाहरणेन पाणिन्यादिदृष्टान्तादानेन च लीलान्यायेनोत्पन्नत्वमेव प्राधान्येन विवक्षितमिति गम्यते । उक्त च बृहदारण्यकभाष्ये –

(क) ' पुरुषनि श्वासवदप्रयत्नोत्थितत्वात् प्रमाण वेदो न यथा अन्यो ग्रन्थ ' इति ॥ बृ भा २-४-१०, पा ७६३

एव सर्वकारणत्वेन चैतन्यरूपेण सर्वप्रकाशनसामर्थ्यात् सर्वज्ञ ब्रह्मेत्यपि सम्यगेव । यथोक्त तैत्तिरीयभाष्ये –

(ख) नित्यस्वरूपत्वात्, सर्वभावना च तेनाविभक्तदेशकालत्वात्, कालाकाशादिकारणत्वान्निरतिशयसूक्ष्मत्वाच्च, न तस्य अन्यत् अविज्ञेय सूक्ष्म व्यवहित विप्रकृष्ट भूत भवद् भविष्यद् वा अस्ति ' ॥ तै भा पा २८५

इति , तथापि कैमुतिकन्यायेनात्र अप्रयत्नेनैव सर्वज्ञानाकरस्य वेदस्योत्पाद नात् पाणिन्यादितोऽप्यतिशायिविज्ञानवत्त्वसाधनात्, तत एव हेतो सर्वज्ञत्व सिषाधयिषित भाष्ये इति गम्यते । सर्वार्थप्रकाशनसामर्थ्यलक्षणहेतुस्तु ' जगत्कारणत्वप्रदर्शनेन सर्वज्ञ ब्रह्मेत्युपक्षिप्तम् ' इत्यनेनैव भाष्येण गत इति ॥

## भूतवस्तुत्वेऽपि ब्रह्मणः शास्त्रप्रमाणकत्वम् –

२५४ सर्वोऽपि वेदार्थो पूर्वमीमासाया न विचारित –इत्यतो वस्तुविषयोऽपि विचार्यत्वेनावशिष्यत इति गम्यते , कार्यनिष्ठ एव हि वेदभागस्तत्र विचार्यतया प्रक्रान्तो विचारितश्च न वस्तुनिष्ठ – इत्यतो वस्तुतत्त्वनिष्ठ वेदभाग विचारयितु शारीरकमीमासा प्रारभ्यते (प पा ५१) – इति पञ्चपादिकोक्तमेव व्याख्याय प्राह विवरणकार –

(१) तत्र श्रुतिसूत्रयोर्ब्रह्मशब्दप्रयोगसामर्थ्यादेव जात्यादिव्यतिरिक्त किञ्चिद्वस्तु प्रतिपत्तु शक्यते । वाक्यार्थप्रमितिविवक्षया प्रसिद्धार्थै पदान्तरै सहाप्रसिद्धार्थपदप्रयोगानुपपत्तिरेव प्रतिपाद्येन सबन्धग्रहणानपेक्षया पूर्वपदार्थं पदवाच्यत्वेन प्रतिपादयति । तत्र च निगमनिरुक्त व्याकरणादिक नियामक भवति पदार्थविशेषग्रहणे (१८३)[1] । सत्यज्ञानानन्दप्रत्यगात्माद्वितीयब्रह्मपदार्थे अप्रसिद्धेऽपि बहुत्वमात्रस्य प्रसिद्धत्वात् , तदनुवादन सनिहितपदार्थसंसर्गसामर्थ्याद् विशिष्ट ब्रह्म प्रतिपत्तु शक्यते (२२१)। प्रमाणान्तरगृहीते अर्थे प्रयोगसामर्थ्यादेव अर्थप्रतिपत्तौ अल्प वा महद् वा यथा प्रमाणान्तरेण प्रतिपद्यते तथैव शब्दार्थ प्रतिपत्तव्य । यदा पुन प्रयोगसामर्थ्यमनपेक्ष्य शब्दानयनसामर्थ्यादेवार्थोऽनुगम्यते तदा प्रमाणान्तरोपपदप्रकरणाना सङ्कोचहेतूनामभावात् यथासामर्थ्यं मुख्य एवार्थ प्रतिपत्तव्य (१८५) – इति देशकालवस्तुपरिच्छेदरहितनिरतिशय महद्वस्तु ब्रह्मशब्दार्थ ॥

(२) प्रमाणेन हि प्रमीयमाणस्यार्थस्य प्रमाणान्तरानुत्पादो मिथ्यात्व नावहति । सर्वप्रमाणानामनधिगतार्थगन्तृत्वात् । अन्यथा चक्षुषा गृह्यमाणस्य रूपस्य द्रव्यस्य वा स्पर्शेनाग्रहणात् मिथ्यात्वशङ्का स्यात् । कथञ्चित् सापेक्षप्रमाणस्य पुरुषवचस प्रमाणान्तराभावे मिथ्यात्वाशङ्का स्यात् , न त्वपौरुषेयस्य वेदवचस । अनपेक्षत्वात् ॥ प वि २४०

(३) भूतार्थविषयत्वेन नदीतीरफलसत्तावाक्यवत् प्रमाणान्तरस भिन्नार्थतेति चेत् । न । पौरुषेयवचनप्रयुक्तत्वात् सभेदस्य । भूतार्थप्रयुक्तत्वे

1 अत्र खण्डे सर्वत्र प वि इति सङ्केताक्षरग्रहण कर्तव्य कसान्तर्गतसख्यानिर्देशात् पूर्वम् । अत्र ग्रन्थकर्त्रभिप्राया प्रायेण यथाक्षरमेव सगृहीता ॥

प्रत्यक्षादीनामपि सभेद स्यात् । ननु भूतार्थस्मृतौ सभेदो दृश्यत इति चेत् । तर्हि स्वार्थप्रवृत्तज्ञानान्तरजन्यता सभेदहेतु । कार्यभूतार्थनिष्ठयो लौकिकवचसोस्तथा दर्शनात् । पुरुषो हि प्रमाणान्तरेणार्थमुपलभ्य तन्निमित्त परस्मै शब्द विरचयति । न तु वेदवचस प्रमाणान्तरजन्यता इत्यनपेक्षता । किञ्च । तुच्छव्यावृत्तमात्र प्रमाणान्तरयोग्यम् इति विधिवाक्यानामपि सभिन्नार्थतया सापेक्षता स्यात् । लौकिकविधीना प्रमाणान्तरयोग्यता-दर्शनात् । अयोग्यत्वे वा तत्र सबन्धाग्रहणाद् वेदेऽप्यर्थप्रतिपत्तिर्न स्यात् । ननु कार्यस्य माध्यम्वभावत्वात् न प्रमाणान्तरगम्यतेति । ब्रह्मापि तर्हि रूपादिहीनत्वात् , न प्रमाणान्तरेण गम्यते ॥ प वि २४०

(४) (प्रमाणान्तरयोग्यार्थत्वात् तत्सिद्धार्थानुवादशङ्कापि न ) । स्पर्शज्ञानयोग्यद्रव्यविषयस्य चक्षुषोऽनुवादकत्वादर्शनात् । शब्दविषयोऽय नियम इति चेत् । विधिवाक्यस्यापि स्यात् तस्यापि लौकिकस्य मानान्तर योग्यत्वात् । शब्दावगतस्य वा प्रमाणान्तरमनुवाद कि न स्यात् ?

प वि २४०

(५) अपौरुषेयस्य शब्दस्यानपेक्षप्रमाणत्वात् , मानान्तरसवाद विसवादाभ्या न किञ्चित् परिहीयते ॥ प वि २४३

(६) इद निरूपणीयम् । पुरुष खलु इष्टानिष्टप्राप्तिपरिहारमात्र प्रार्थयते कि वा तयो प्रवृत्तिनिवृत्तिसाध्यतामपीति ? तत्र प्रवृत्तिनिवृत्ति-साध्येष्टानिष्टप्राप्तिपरिहारप्रार्थनाकल्पनात् लघीयसी हिताहितप्राप्तिपरिहार कल्पना । फलमेव हि मुख्य प्रार्थयते नान्तरायिका साधनप्रार्थना ॥

प वि २४४

(७) यस्मिन्नर्थे वाक्यस्योपक्रमोपसहारैकरूप्यम् , यस्य चार्थस्य पुन पुनरभ्यास , यस्मिन्नर्थे फलविशेषसकीर्तनम् अपूर्वार्थप्रमेयता च, यत्र चार्थवादोपादानमुपपत्तिभिरुपपादन च – इत्यादीनि लिङ्गानि भवन्ति, तस्य वाक्यस्य तस्मिन्नर्थे तात्पर्यमिति गम्यते । सर्वेषु वेदान्तेषु ब्रह्मात्मैकत्वप्रमितौ तात्पर्यलिङ्गानि द्रष्टव्यानि । एव तात्पर्येण समन्वयात् , ब्रह्मैव वेदान्तप्रमेयमिति ॥ प वि २३५–२३६

(८) सर्वे जगत्कारणविषया शब्दा मुख्यलक्षणोपाधिभिरेकरसमेव ब्रह्म प्रतिपादयन्ति । न चानिर्वचनीयभेदाभावयो शब्दप्रवृत्तिनिमित्तयो परमार्थसत्यैकरसभेदनिमित्तता ॥ प वि २३७

[ ‘ पदाना परस्परानवच्छिन्नार्थानाम् अनन्याकाङ्क्षाणाम् अव्यतिरिक्तैक-रसप्रातिपदिकमात्रान्वय ’ (समन्वय )–इति पञ्चपादिकोक्तिव्याख्यानावसरे ॥]

(९) क्रियाकारकससर्गविषयतया पदानामन्वय व्यावर्तयति ‘परस्परानवच्छिन्नार्थानाम्’ इति । तत्र उद्भिदादिशब्दस्य यजतिसामानाधिकरण्येनोद्भिद्यागमात्रवर्तिनोरुद्भिद्यागशब्दयोरनवच्छिन्नार्थत्वेऽपि नियोगाकाङ्क्षा विद्यते, तथेहापि स्यादिति, नेत्याह ‘अनन्याकाङ्क्षाणाम्’ इति । ननु नीलोत्पलवद् भेदाभेदविषयतयाप्यभिधेयाव्यतिरेक इति, नेत्याह ‘एकरस’ इति । तत्रोद्भिद्यागशब्दयोर्यागविशेषैकरसार्थवर्तिनोरपि अर्थस्य नियोगाकाङ्क्षावत् इहाप्यन्याकाङ्क्षेति, नेत्याह ‘प्रातिपदिकार्थ’ इति । तत्रापि लिङ्गसख्ययोरवश्याभ्युपगमनीयतेति, नेत्याह ‘मात्रान्वय’ इति ॥

प वि २३६

(१०) तत्र द्विविधा वाक्यप्रवृत्ति । एका ब्रह्मात्मनोरेकत्वविषया, अपरा सत्यज्ञानादिलक्षणब्रह्मविषया । तत्र प्रथम ब्रह्मात्मैकत्वे दृष्टान्तमाह – सोऽयमित्यादिवाक्यस्थपदानामिवेति । तत्र न तद्देशकालयोरेतद्देशकालयोश्च परस्परैक्य प्रत्यभिजानाति भेदप्रत्ययात् । अत एव विशिष्टयोरप्यैक्य न प्रत्यभिज्ञायते । किं तु सोऽयमिति विशिष्टद्वयोपलक्षित प्रत्यभिज्ञागोचर । प्रत्यभिज्ञात चार्थं परस्मै सोऽयमिति विशिष्टाभिधायिभ्या पदाभ्या स्वार्थैकदेशपरित्यागेन, एकदेशलक्षणया देवदत्तस्वरूपैक्यमेव प्रतिपादयति । (प वि २३७) तथा तत्त्वमसिवाक्यस्यापि त्वपदेनैकदेशपरित्यागेन लक्ष्यमाणद्रष्टृस्वरूपस्य पारोक्ष्यपरित्यागेन तत्पदाभिधेयब्रह्मस्वरूपैक्ये वाक्यजन्यज्ञानगोचरेऽपि जीवब्रह्मपदार्थप्रतीतिसमये प्रतिपन्नैक्यविषयतया अनुवादप्राप्तावपि भेदप्रतिभासविरोधितया प्रामाण्यम् उपपद्यते ॥

प वि २३८

(११) ननु पदार्थयो प्रत्येकम् असाधारणम् ऐक्य पदार्थप्रत्ययगोचर, पदार्थयोरितरेतरैक्य वाक्यगम्यम् इत्यस्त्येव प्रमेयभेद । नैतत् सारम् । भिन्नद्रव्ययोरैक्यप्रतिपादने तथा स्यात् । यदा एकमेव द्रव्य भिन्नोपाधिपरिकल्पितभेदप्रतिभासव्युदासेन प्रतिपाद्यते, तदा निवर्त्यविशेषादेव प्रामाण्य न प्रमेयविशेषात् । तदुक्त ‘ सिद्ध तु निवर्तकत्वात् ’ इति । इह तु कार्यकारणद्रव्यव्यतिरिक्तत्वे सति द्रव्याभिधायिपदयो सामानाधिकरण्यम् ‘ सोऽयम् ’ इतिवदेकस्य द्रव्यस्योपाधिपरिकल्पितभेदव्युदासे नैकद्रव्यपर्यवसायीत्यवगम्यते ॥ प वि २३८

अत्रोदाहृतानि वाक्यानि सर्वाण्यपि शब्दधर्मस्वभावमाश्रित्य विचारं प्रवर्तयन्ति । स्वभावतश्च शब्दः प्रमेयविषय एवेति ब्रह्मविषयकत्वं तस्य कथमित्यत्र विशेषहेतुर्वक्तव्यः । तत्र वेद्यवेदित्रादिविभागरहितं ब्रह्मेति ज्ञापनादेव शास्त्रं तत्र प्रमाणमिति स्पष्टं भाष्ये,–

(क) न हि शास्त्रमिदंतया विषयभूतं ब्रह्म प्रतिपिपादयिषति । किं तर्हि प्रत्यगात्मत्वेन अविषयतया प्रतिपादयत् अविद्याकल्पितं वेद्यवेदितृ वेदनादिभेदमपनयति ॥ सू. भा. १-१-४, पा. १६

इति । एतदप्यभ्युपगम्य विवरणे लिखितम् –

(१२) ननु 'मनसैवानुद्रष्टव्यम्', 'तं त्वौपनिषदं पुरुषम्' इति ज्ञानक्रियाकर्मत्वमपि श्रूयते । नैष दोषः । वेदान्तजनितापरोक्षज्ञानस्याकार-समर्पकतया व्यावर्तकत्वं शास्त्रप्रमेयत्वं नाम ज्ञानजन्यप्रकाशातिशयशून्यत्वं मविषयता नाम – इति व्यवस्थोपपत्तेः । न हि प्रकाशगुणे पुनः प्रकाश-गुणान्तरोदय इति ॥ प. वि. २६४

इति । तत्र यदुच्यते शास्त्रप्रमेयत्वं नामापरोक्षज्ञानाकारसमर्पकतया व्यावर्तकत्वमिति, तदुत्तरत्र विवक्ष्यामः । शब्दप्रामाण्यं तु न परमात्मविषयकज्ञानोत्पादनेन, किं तु यथोदाहृतभाष्योक्तनीत्या वेद्यवेदित्रादिविभागाध्यारोपनिराकरणमात्रेणेत्येवावश्यमभ्युपगन्तव्यमित्येतावदिह ब्रूमः ।

(ख) तस्मादविद्याध्यारोपितनिराकरणमात्रं ब्रह्मणि कर्तव्यम्, न तु ब्रह्मविज्ञाने यत्नः । अत्यन्तप्रसिद्धत्वात् ॥ गी. भा. १८-५०, पा. २८०

इत्यादिभाष्यप्रामाण्यात् । 'मनसैवानुद्रष्टव्यम्' (बृ.), 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ.) इत्यपि न ज्ञानक्रियाकर्मत्वमुच्यते । 'यन्मनसा न मनुते' इति श्रुतिकोपप्रसङ्गात् । 'नेह नानास्ति किञ्चन', 'स एष आत्मा नेति नेति' इति वाक्यशेषेण अविद्याध्यारोपितव्यतिरेकेण द्वैतं नास्त्येवेत्यवधारणात् । न च विज्ञातेर्विज्ञातुरन्यज्ज्ञानं दर्शनाख्यं काङ्क्षितव्यमस्ति । तथा हि **बृहदारण्यकभाष्ये** –

(ग) ननु विप्रतिषिद्धं 'न विज्ञातेर्विज्ञातारं विजानीयाः' इति श्रुतेर्विज्ञातुर्विज्ञानम्। न। एवंविज्ञानान्न विप्रतिषेधः। एवं दृष्टेर्द्रष्टा इति विज्ञायत एव। अन्यज्ञानानपेक्षत्वाच्च। न च द्रष्टुर्नित्यैव दृष्टिरित्येवं विज्ञाते द्रष्टृविषया दृष्टिमन्याम् आकाङ्क्षते। निवर्तते हि द्रष्टृविषयदृष्ट्याकाङ्क्षा तदसंभवादेव ॥ बृ भा १-४-१०, पा ६७३

इति। अथ, एवंज्ञानमेव वेदान्तजनितापरोक्षज्ञानं नामेति, न तदा कश्चन दोषः ॥

## विचारस्तर्कश्च –

२५५ स्थिते शब्दस्य प्रामाण्ये विचारस्य किं प्रयोजनमिति ? अत्रोच्यते विवरणकारैः –

(१) न शब्दसमवायी कश्चिद्दोषोऽस्ति पुरुषेन्द्रियसमवायित्वाद्दोषाणाम्। अतः शब्दो न विपर्यासादिज्ञानहेतुः, किं तु शब्दानां प्रयोगान्तरेषु अन्यथान्यथा शक्तितात्पर्यावगमदर्शनात्। इहापि तथातथाविधत्व-सामान्यतोदर्शनेन अर्थविरोधबुद्ध्या च पुरुषदोषेणान्यथाज्ञानान्युत्पद्यन्ते। शब्दाच्च तत्त्वज्ञानमेवोत्पद्यते। ततश्च शब्दात् पुरुषदोषाच्च बहुषु परस्परविरोधिषु ज्ञानेषु जातेषु शब्दशक्तितात्पर्यावधारणं पुरुषदोषापनयनेन प्रतिपक्षज्ञानान्तरमात्रं निवर्तयति। निवृत्ते च प्रतिबन्धे शब्दादेव तत्त्वज्ञानं जायते, जातं वा निश्चलमवतिष्ठते। तस्मात् न विचारः प्रमाणेतिकर्तव्यतया ब्रह्मविषयः ॥ प वि १८१

(२) पदानामेव संसर्गप्रतिपादनसामर्थ्यात्, मुख्यलक्षणादिद्वारेण प्रमाणान्तराविरुद्धे संसर्गे प्रतिपन्ने दोषान्तरनिमित्तसंशयविपर्यासविज्ञान-निराकरणाय तात्पर्यावगमः ॥ प वि १८२

(३) प्रमाणादेवार्थापरोक्ष्यनिश्चये तत्प्रतिबन्धापगमे तर्कस्योपयोगान्नार्थनिर्णयहेतुतेत्युक्तम् ॥ प वि १०३

(४) ज्ञानानन्दसर्वज्ञप्रत्यगात्मभूतं ब्रह्म निश्चाययितुमसमर्था अपि युक्तयः शब्दावगते ब्रह्मणि सामान्यद्वारेण संभावनाबुद्धिहेतवो भवन्ति। कथम् ? जगदुपादाने अद्वितीये शब्दावगते मृदादिदृष्टान्तैरुपादानव्यतिरेकेण कार्यस्यानिरूपणात्, अद्वितीयता संभाव्यते, स्फटिकलौहित्यप्रतिबिम्ब

**रज्जुसर्पघटाकाशदृष्टान्तैरात्मनि कर्तृत्वादेरारोपितत्वम् , जीवब्रह्मैक्यम् , ब्रह्म व्यतिरिक्तप्रपञ्चस्वातन्त्र्याभाव , अस्मच्छ्रत्वद्वारेण विशुद्धाद्वितीयप्रत्यगात्मता सभाव्यते ॥ प वि २२१**

[ 'ब्रह्मपरेषु वाक्येषु मृदादिदृष्टान्तैर्युक्तय उपन्यस्यन्ते ' इत्यादि 'स्वरूपवाक्यस्य फलपर्यन्तापेक्षितसभावनाथवादता प्रतिपद्यमानास्तत्र श्रुति साहाय्ये वर्तन्ते इत्युच्यते ' इत्यन्त(प पा ८१)वाक्यस्य विवरणमिदम् ।

एकविज्ञानेन सर्वविज्ञान कथमिति हृदयमागमयितुमुपन्यस्तेषु मध्ये स्फटिकादिदृष्टान्ता नैव लक्ष्यन्ते, नैव च तेषा तत्र यथोक्ताकर्तृत्वादिस्वरूप निर्धारणे । ।। ।ि ि - े । । यद्यपि भाष्ये स्फटिकादिदृष्टान्ता दरीदृश्यन्ते, तथापि न तेषा प्रतिज्ञासिद्ध्यर्थं विनियुक्तत्वमस्तीति न मृदादिसाम्यम् ॥ ]

(५) **प्रमाणादेवार्थापरोक्ष्यनिश्चये तत्प्रतिबन्धविगमे तर्कस्योप योगात् । नाथनिर्णयहेतुता ॥ प वि पा १०३**

[अस्य वाक्यस्याभिप्रायोऽनुपदमेव ब्रह्मापरोक्ष्यविचारे विमर्शनीय ॥ ]

## अपरोक्षज्ञान तत्साधनानि च –

२५६ अत्रापि पञ्चपादिकायामिव शब्दादेव ब्रह्मापरोक्ष्यमित्यनु मन्यते । कल्पान्तरमप्युक्तम् । तद्यथा –

(१) **लोके तावद् विषयस्यापरोक्षता सविद्भेदाद् वा विषयस्य अव्यवधानतया स्वसविज्जनकत्वाद् वा, प्रमाणकारणेन्द्रियसप्रयुक्तत्वाद् वा, भवति । उक्तकारणत्रयहीने अनुमेयादौ परोक्षतादर्शनात् । तत्र ब्रह्मण एव सर्वसविदुपादानत्वात्, ब्रह्माकारशब्दप्रमाणजन्यसवेदनेऽपि तदभिन्नतया वा तज्जनकतया वा ब्रह्मापि प्रथममेव अपरोक्षतया अवभासते । तच्च चित्तस्य अतिसूक्ष्मे अनेकाग्रतादोषात्, विपर्ययसस्कारदोषाच्च प्रतिबद्ध भ्रान्त्या परोक्षवदवभासते । तत्रापरोक्षज्ञानमुद्दिश्य यज्ञादीना शमादीना निदिध्यासनादीनां च विधानसामर्थ्यात् यज्ञादिनिर्बर्हितकल्मषप्रतिबन्धम् , शमादिनिरुद्धविपरीतप्रवृत्तिदोषम् मननसदर्शितप्रमेयादिसभावनागुणप्रदी पोज्ज्वलितम् , अतिसूक्ष्मतरब्रह्मात्मविषयनिदिध्यासनप्रचयपरिनिर्मिततदे काग्रवृत्तिगुण च इन्द्रिय पारोक्ष्यविभ्रमनिमित्तप्रतिबन्धनिरासेन शब्दादेवा परोक्ष्यनिश्चयनिमित्त भवतीति गम्यते । लोके च अतिसूक्ष्मवस्तुनिर्धारणे**

चित्तैकाग्र्यविशेषापेक्षाया दर्शनात् । तर्कशब्देन चात्र एतादृश सर्वप्रतिबन्ध निरासिचित्तदर्पणमुच्यते । गौक्तिकासभावनाविपरीतभावनानिरासितर्काणा प्रथमज्ञाने अन्तर्भूतत्वात् । एव च ' त त्वौपनिषदम् ' इति तद्धितप्रत्ययेन ब्रह्मावगतिहेतुत्व शब्दस्य दर्शितम् उपपन्न भवति । अपरोक्षावगतेरेव सम्यगवगतित्वात् ॥ प वि १०३

(२) अन्यन्मतम् । न प्रथमोत्पन्न शाब्दज्ञानमेव प्रतिबन्धविगमापेक्षया अपरोक्षावभास भवति, किं तु शब्द एव प्रथम ब्रह्मणि परोक्ष-ज्ञानम् उत्पाद्य पुनर्वर्णितचित्तदर्पणसहकारिकारणापेक्षया द्वितीयम् अपरोक्षज्ञानम् उत्पादयति । शब्दादीना तद्धितप्रत्ययादिना अपरोक्षज्ञाने विनियोगसामर्थ्यात् । यथा सप्रयोग अभिज्ञाम् उत्पाद्य पुन पूर्वानुभव सस्कारापेक्षया प्रत्यभिज्ञाम् उत्पादयति, तद्वत् । न च स्वयप्रकाशे ब्रह्मणि परोक्षज्ञान विभ्रम । स्वयप्रकाशेऽपि पुरुषान्तरसवेदने परोक्षानुमानदर्शनादिति । सर्वथापि आपरोक्ष्यस्य प्रयत्नान्तरलभ्यत्वात्, युक्त पृथक् प्रतिपत्ति शब्दग्रहणम् ॥ प वि १०४

' आत्मैकत्वविद्याप्रतिपत्तये ' इत्यत्र 'प्रतिपत्ति'शब्दग्रहणस्वारस्य कथनमिदम् । तत्र प्रथमपक्ष पञ्चपादिकास्थ एव विवृत । तर्कशब्दार्थो यथावर्णितचित्तदर्पणमित्यत्र तु नास्ति श्रुति , भाष्य वा । भाष्ये हि –

(१) वेदान्तवाक्यमीमासा तदविरोधितर्कोपकरणा नि श्रेयसप्रयोजना प्रस्तूयते ॥ सू भा १-१-१

(२) तथा हि ' श्रोतव्यो मन्तव्य ' इति श्रुति । ' पण्डितो मेधावी गन्धारानेवोपसपद्येतैवमेवेहाचार्यवान् पुरुषो वेद ' इति पुरुषबुद्धि साहाय्यमात्मनो दर्शयति ॥ सू भा १-१-२

(३) (a) प्रकृते तावद् विषये प्रसज्यत एवाप्रतिष्ठितत्वदोषाद् निर्मोक्षस्तर्कस्य । न हीदमतिगम्भीर भावयाथात्म्य मुक्तिनिबन्धनम् आगम मन्तरेण उत्प्रेक्षितुमपि शक्यम् । रूपाद्यभावाद्धि नायमर्थ प्रत्यक्षगोचर । लिङ्गाद्यभावाच्च नानुमानादीनामिति चावोचाम ॥

सू भा २-१-११, पा १९३

(b) यद्धि केनचित् तार्किकेण इदमेव सम्यग्ज्ञानम् इति प्रतिष्ठापितम्, तदपरेण व्युत्थाप्यते, तेनापि प्रतिष्ठापित ततोऽपरेण व्युत्थाप्यत इति प्रसिद्ध लोके । कथमेकरूपानवस्थितविषय तर्कप्रभव सम्यग्ज्ञान भवेत् ? ॥ सू भा २-१-१२

(४) यदपि श्रवणव्यतिरेकेण मनन विदधच्छब्द एव तर्कमप्यादतव्य दर्शयतीत्युक्तम् । नानेन मिषेण शुष्कतर्कस्यात्रात्मलाभ सभवति । श्रुत्यनुगृहीत एव ह्यत्र तर्कोऽनुभवाङ्गत्वेनाश्रीयते ॥

सू भा २-१-६, पा १८८

इति च मीमासारूपस्तर्क, श्रुत्यनुगृहीततर्कश्चेति द्वावेव तर्कौ अङ्गीकृतौ । निरागम पुरुषोत्प्रेक्षामात्रनिबन्धनस्तु तर्कोऽप्रतिष्ठितत्वदोषदुष्टत्वेन त्यक्त । तस्मात्, श्रुतिसहायत्वेन समतस्तर्क श्रुत्यनुगृहीत एवानुभवानुसारी अवस्थात्रयविमर्शनादिलक्षणो नान्य इति सिध्यति ॥

यत्तु परोक्षज्ञानविभ्रमनिरासार्थस्तर्क इति । तद्युक्तमेव । 'यत् साक्षादपरोक्षाद् ब्रह्म य आत्मा' इति श्रुतेर्नित्यापरोक्षत्वाद् ब्रह्मण । यत्तु श्रुतिजन्यो ज्ञानेऽपरोक्षेऽपि परोक्षविभ्रम इति, तदसत् । आत्मरूपेण नित्याव्यवहितस्य ब्रह्मणो ज्ञान हि नाम तत्राध्यारोपितनिराकरणमात्रम् । अत एव हि गीताभाष्ये (१८-५०, पा २८२) लिखितम् –

'तस्मात्, ज्ञाने यत्नो न कर्तव्य, कि तु अनात्मनि आत्मबुद्धिनिवृत्तावेव'

इति । अत एव शाब्दज्ञान प्रथमोत्पन्न परोक्षम्, अपरोक्ष तु प्रयत्नान्तरलभ्यम् इत्यप्यसाधु । शब्दस्याप्रामाण्यप्रसङ्गात्, मण्डनादिसमतज्ञानाभ्यासपक्षोक्तदोषप्रसङ्गाच्चेति भाष्योक्तरीत्यैव शब्दादपरोक्षज्ञानोत्पत्तिरङ्गीकर्तव्येत्यलमतिविस्तरेण ॥

## श्रवणादिविचारः –

२५७ प्रतिपत्तिविधिनिराकरण प्रायशो मण्डनप्रक्रियानुसार्येवात्र । (१) शाब्दज्ञानस्य, (२) तत्स्मृतिसतानस्य, (३) ब्रह्मध्यानस्य, (४) अपरोक्षज्ञानस्य वा विधान न सभवति (प वि २४८-२५०) ।

(५) अह ब्रह्मास्मीत्युपासनाया अपि न मोक्षफलकत्वम्, मोक्षस्यानित्यत्व प्रसङ्गात्, मिथ्याज्ञाननिवृत्तिफल तत्त्वज्ञानम् – इति न्यायविरोधाच्च (पा २५२–२५७)–इत्यादियुक्तिभि विविशेषत्व ब्रह्मणो निराकृत्यापि, अत्र मण्डनप्रस्थानमेवानुसृत्योक्तम् –

(१) शब्दादवगते ब्रह्मणि सुखसवेदनत्वात् अभ्यासेनापरोक्षीकृते विधि मन्तरेण यत् साक्षात्का(क?)रणम्, तद् ब्रह्मवेदनमित्युच्यते। तस्मिन्नुत्पन्ने अनन्तरमेवाविद्यादिदोषनिवृत्तेर्युक्त ब्रह्मसवेदनेन समानकालत्व फलस्य ॥
प वि २५६

इति। इद तु मण्डनपरीक्षयैव परीक्षितमिति न किञ्चिदधिक वक्तव्यमस्ति ॥

अत्र च श्रवणादीनामर्थवादमात्रत्वम् (प पा ९३) पञ्चपादिकोक्त नाङ्गीकृतम् ॥

(२) नित्येनैवाध्ययनविधिना अधीतस्वाध्यायो वेदान्तवाक्येष्वापात दर्शनेनेदमवगच्छति । 'आत्मनस्तु कामाय सर्वं प्रियम्' इत्युपक्रमात् सर्वतो विरक्तस्य आत्मप्रेप्सो 'आत्मनि विज्ञाते सर्वमिद विज्ञातम्', 'एतावदरे खल्वमृतत्वम्' इत्युपसहारात्, अमृतत्वसाधनम् आत्मदर्शन 'द्रष्टव्य' इत्यनूद्य तादर्थ्येन मनननिदिध्यासनाभ्या फलोपकार्यङ्गाभ्या सह श्रवण नामाङ्गि विधीयत इति। त च जिज्ञासु पुरुषार्थकामम् उपलभ मानो भगवान् बादरायण साधनचतुष्टयसपन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचार विदधतो विधे, अपेक्षिताधिकारिविषयफलानुबन्धत्रय मागमिकमपि न्यायेन निर्णेतु सूत्रयामास 'अथातो ब्रह्मजिज्ञासा' इति ॥
प वि ३–४

(३) आत्मतत्त्वापरोक्ष्यस्य सर्वादृष्टसाध्यत्वस्य वक्ष्यमाणत्वात् अव-घातादिवत् उभयार्थतया विधानोपपत्ते ॥ प वि ४

(४) ननु विधिपरत्वे वेदान्ताना तन्निष्ठतया ब्रह्मस्वरूपस्य असिद्ध्यादि दोषप्रसङ्गात्, नास्ति श्रवणादिविधानमिति भाष्यकारैरेव दर्शितम्। सत्यम्। ज्ञानविधिस्तत्र निराकृत, न श्रवणादिविधि । तत्रोक्तदोषप्रसङ्गाभावात् ॥
प वि ४

(५) कथमवान्तरवाक्यै श्रवणादिविधान कल्प्यत इति? अवान्तर-वाक्यभेदेन विविदिषन्तीति यज्ञादीना ज्ञानसयोगविधानवत् । उपरि हि

देवेभ्य –इत्युपरिधारणविधानवत्, मलवद्वाससो व्रतकलापविधानवच्च – इति ब्रूम । अथवा ‘तस्माद् ब्राह्मण पाण्डित्य निर्विद्य’ इत्यादिवाक्य श्रवणादिविधायकमस्तु । तस्य तत्परत्वात् । सूत्रकारेण च वक्ष्यमाणत्वात् । सर्वथा तावन्मनननिदिध्यासनाभ्याम्, अङ्गभूताभ्या सह श्रवणविधानम् अस्त्येव ॥ प वि ४-५

(६) ननु सम्यग्दर्शनस्य फलरूपत्वात् प्रमाणाधीनत्वाच्च अविधेयतेति युक्ता तस्यार्थवादता, श्रवणादयस्तु क्रियारूपत्वात् सम्यग्दर्शनस्य दृष्टा दृष्टोपकारितया विधेया एवेति । तदाह ‘एतच्च सर्वं प्रथमसूत्रेणैव’ इति । मनननिदिध्यासनोपबृंहितस्य श्रवणस्य सम्यग्दर्शनाय विधेयत्वमङ्गीकृत्य प्रथमसूत्र प्रवृत्तम् इत्यर्थ । विधीनामपि सता स्तावकत्वमुक्तम्, इदानी शब्दस्यार्थान्तरमाह ‘अपि च नैवायम्’ इति ॥ प वि २७३

[ ‘ईप्सितश्चेत् द्रष्टव्य श्रोतव्य इत्येषोऽर्थवाद । एतच्च सर्वं प्रथम सूत्रेणैव सूत्रित विवृत च भाष्ये । अपि च नैवाय विधौ कृत्य, कि तर्हि अर्हे कृत्यतृचश्चेत्यर्हकृत्य ’ (प पा ९४) इति सोपपादन ‘अर्थवादतया आत्मज्ञान स्तावकत्वेन तदुन्मुखीकरणात् सामर्थ्यसिद्धबहिर्मुखतानिरोधाच्च विधिकार्यलेशस्य विद्यमानत्वात् विधय इव लक्ष्यन्ते’ (पा ९३) इति च स्पष्ट निराकृत विधित्व तैरेव वाक्यै पञ्चपादिकाकारसमतमिव विवित्व व्याख्यानकौशलेन स्थापितमत्रेति स्फुटम् ॥ ]

(७) ‘विजिज्ञासितव्य’, ‘विजिज्ञासस्व’ इति चान्तर्णीतो विचारो विधीयते । इष्यमाणज्ञानस्य, इच्छायाश्च विधेयत्वायोगात् । ‘श्रोतव्य’ इति च स्वयमेव विचारो विहित । ‘तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्’ इति ज्ञानस्य साध्यतावगमात् । गुरूपसदनविधानाच्च तत्साधनश्रवणादिविधि कल्प्यते । ‘आत्मन्येवात्मान पश्येत्’ इति ज्ञानविधानायोगात् तत्साधने विधिरुपादीयत इति सर्वत्र मनननिदिध्यासनाभ्या सह श्रवण नामाङ्गि विधीयत इति सिद्धम् ॥ प वि १६८

अत्र श्रवणादीनामदृष्टार्थत्व किंप्रमाणकमिति न ज्ञायते –

(क) दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति । यथावघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि तद्वत् ॥

सू भा ४-१-१, पा, ४६०

(ख) यानि तावत् सम्यग्दर्शनार्थान्युपासनानि तान्यवघातादिवत् कार्यपर्यवसानानीति ज्ञातमेवैषामावृत्तिपरिमाणम् ॥
सू भा ४-१-१२, पा ४७१

इत्यादिभाष्योक्त्या दृष्टार्थत्व तु गम्यते ॥

(ग) यो हि बहिर्मुख प्रवर्तते पुरुष 'इष्ट मे भूयात्, अनिष्ट मा भूत्' इति, न च तत्रात्यन्तिक पुरुषार्थं लभते, तमात्यन्तिकपुरुषार्थवाञ्छिन स्वाभाविककार्यकरणसघातप्रवृत्तिगोचराद् विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्य इत्यादीनि ॥
सू भा १-४-४, पा १९

इत्यत्र तु विधिच्छायाना द्रष्टव्यादिशब्दाना प्रत्यङ्मुखीकरणार्थत्वेन सार्थक्य स्पष्टमुक्त भाष्ये। न चेद ज्ञानमात्रविधाननिषेधक वचनमिति साप्रतम्। आदिशब्देन श्रवणादीनामपि ग्रहणात् –

(घ) आत्मस्वरूपान्वाख्यानमात्रेण आत्मविज्ञाने विधिमन्तरेण न प्रवर्तते इति चेन्न। आत्मवादिवाक्यश्रवणेन आत्मविज्ञानस्य जनितत्वात्, किं भो कृतस्य करणम्? तच्छ्रवणेऽपि न प्रवर्तेत इति चेत्। न। अनवस्थाप्रसङ्गात्। यथा आत्मवादिवाक्यार्थश्रवणे विधिमन्तरेण न प्रवर्तते तथा विधिवाक्यार्थश्रवणेऽपि विधिमन्तरेण न प्रवर्तिष्यत इति विध्यन्तरापेक्षा। तथा तदर्थश्रवणेऽपीत्यनवस्था प्रसज्येत ॥ बृ भा १-४-७, पा ६६२

इति श्रवणविधिकाङ्क्षाया कण्ठरवेण निरासदर्शनाच्च भाष्यान्तरे ॥

(ङ) तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्त्यनुपपत्तिरिति चेत्। न। स्वात्मविषयत्वादात्मविज्ञानस्य। न ह्यात्मन स्वात्मनि प्रवर्तकप्रमाणापेक्षता। आत्मत्वादेव। तदन्तत्वाच्च सर्वप्रमाणाना प्रमाणत्वस्य ॥ गी भा २-६९

इति प्रवर्तकप्रमाणाकाङ्क्षानिषेधाच्च ॥

न च श्रवणस्याङ्गित्व मननादेश्चाङ्गत्व विधीयत इति युक्त भवति। श्रवणमात्रेण कस्यचिदपि ज्ञानानुत्पत्तिप्रसङ्गात्। तथा च –

(च) भवेदावृत्त्यानर्थक्य त प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्व मनुभवितु शक्नुयात् ॥ सू भा- ४-१-२, पा ४६१

इति सकृच्छ्रवणमात्रेणापि ज्ञानोत्पत्तिसभवोक्ति कुप्येत ॥

न च पाण्डित्य निर्विद्येत्यादिश्रुते श्रवणविधिसिद्धि । नापि सूत्रे तद्विधान सूचितम् ॥

(छ) 'तद्वतो विद्यावत सन्यासिन' सू भा ३-४-४७, पा ४५५

इति भाष्ये विद्यावत एव पाण्डित्यादिविधानमिति स्पष्टोक्ते । अथ मतम् मौनस्यैवेय विधित्ववाचोयुक्तिस्तत्राभिहिता न पाण्डित्यस्येति । तथापि बृहदारण्यकभाष्ये पाण्डित्यमात्मविज्ञान निरवशेष कृत्वा 'एषणाभ्यो व्युत्थाय' इति व्युत्थानविधिपरत्वेन व्याख्यानदर्शनात् नात्र श्रवण विधानमिति ब्रूम ॥

तस्मात्, विनापि विधि श्रवणादौ प्रवृत्तिसभवात् पञ्चपादिकाकाराद्युक्तमेवाविधित्व युक्त श्रवणादीनाम् इत्युत्पश्याम । ये तु 'सकृदुक्तमेव' इति भाष्याक्षरबाह्यमेव 'श्रुत्वा मत्वा क्षणमवधाय' इत्यधिकावाप कुर्वते तेषा वेदान्तवाक्यमात्रेणात्मज्ञान नोत्पद्यत इति दुरभिनिवेश एवापराध्यतीत्यल परस्परविरुद्धव्याख्यानप्रस्थानसूक्ष्मेक्षिकया ॥

निदिध्यासनशब्दस्य अपरायत्तबोधार्थकत्वेनाङ्गीकारो दृश्यते वार्तिके । ज्ञानसाधनभूतश्रवणादीना विहितत्वाङ्गीकारस्तु पर समान एव वार्तिक विवरणयो । मनननिदिध्यासनयो श्रवणाङ्गत्वकथन त्वत्र न केवल वार्तिकप्रस्थानेन, कि तु भामतीप्रस्थानेनापि विरुध्यते । स्वमते उपपत्तिरित्थ प्रदर्शित विवरणे –

(५) यस्मिन् पक्षे शक्तितात्पर्यविशिष्टशब्दावधारण प्रथम ब्रह्मणि परोक्ष ज्ञानमुत्पाद्य मनननिदिध्यासनसस्कारविशिष्टान्त करणापेक्षया अपरोक्ष ज्ञानमुत्पादयति, तत्र ब्रह्मणि परोक्षज्ञानस्य निदिध्यासनोपकारितया तदङ्गत्वेऽपि, तात्पर्यविशिष्टशब्दावधारणादपरोक्षज्ञानोत्पत्तौ मनननिदिध्यासने श्रवणस्य फलोपकार्यङ्गताम् अश्नुवाते ॥ प वि १०४

(६) विशिष्टशब्दावधारण प्रमेयावगम प्रति अव्यवधानेन कारण भवति । प्रमाणस्य प्रमेयावगम प्रत्यव्यवधानात् । मनननिदिध्यासने तु

चित्तस्य प्रत्यगात्मप्रवणतासंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुता प्रतिपद्येते इति फलं प्रत्यव्यवहितस्य करणस्य विशिष्टशब्दावधारणस्य व्यवहिते मनननिदिध्यासने तदङ्गे अङ्गीक्रियेते । यदा तु पुनः शब्दादेव प्रथममपरोक्षानुभवफलं विज्ञानमुत्पन्नं आन्तिविक्षेपसंस्कारखचितान्तःकरणदोषात् अर्थोऽपि परोक्षानुभवफलतया विभ्रान्त्या अवतिष्ठते, तदा मनननिदिध्यासने चित्तगतविक्षेपादिदोषप्रतिबन्धनिरासेनापरोक्षफलप्रतिष्ठाहेतुतया प्रमाणस्य फलोपकार्यङ्गमिति न विरुध्यते । न च शब्दकरणमन्तरेण निदिध्यासनादेवापरोक्षानुभवफलजन्म संभवति । तस्य प्रामाण्यासिद्धेः । शब्दावगतब्रह्मात्मविषयत्वादपरोक्षस्य तद्द्वारेण प्रामाण्यनिश्चय इति चेत् । नैवम् । उत्पन्नस्य हि विज्ञानस्य प्रमाणान्तराधीनविषयसद्भावनिश्चयाधीनप्रामाण्यकल्पनाद् वरं स्वस्यैव क्लृप्तप्रमाणजन्यत्वकल्पनम् । अन्यथा परतः प्रामाण्यात्, इतरत्र स्वतः प्रामाण्यात् । तस्मात्, युक्त फलोपकार्यङ्गता मनननिदिध्यासनयोरिति ॥ प वि १०४-१०५

श्रवणमनननिदिध्यासनानां सर्वत्र समुच्चयापेक्षा नास्तीति प्रागावेदितम् । श्रवणविधानपक्षोऽपि न क्षोदक्षम इति च । येषां श्रवणे प्रवृत्तानां प्रतिबन्धनिमित्तात् पदार्थविवेको नोत्पन्नः, तदर्थमेव तु श्रवणस्य मननसाहित्यमपेक्षितमिति स्थितं भाष्ये –

(क) तत्र येषामेतौ पदार्थौ अज्ञानसंशयविपर्ययप्रतिबद्धौ, तेषां 'तत्त्वमसि' इत्येतद् वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति पदार्थज्ञानपूर्वकत्वाद्, वाक्यार्थस्य, इत्यतस्तान् प्रत्येष्टव्यः पदार्थविवेकप्रयोजनः शास्त्रयुक्त्यभ्यासः ॥ सू भा ४-१-२, पा ४६२

इति । निदिध्यासनं तु, मनोनिग्रहापरपर्यायम्, मध्यमाधिकारिणाम् आत्मनि मनोलयार्थमिति कारिकाभाष्ये उपदिष्टम् –

(ख) मनसो निग्रहायत्तमभयं सर्वयोगिनाम् ।
दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च ॥ गौ का ३-४०

भाष्यम् – येषां पुनर्ब्रह्मस्वरूपव्यतिरेकेण रज्जुसर्पवत् कल्पितमेव मनः, इन्द्रियादि च न परमार्थतो विद्यते, तेषां ब्रह्मस्वरूपाणामभयं मोक्षाख्या चाक्षया शान्तिः स्वभावत एव सिद्धा, नान्यायत्ता, 'नोपचारः कथञ्चन'

इत्यवोचाम । ये त्वतो अन्ये योगिनो मार्गगा हीनमध्यमदृष्टयो वा, मनोऽन्यदात्मव्यतिरिक्तमात्मसबन्धि पश्यन्ति, तेषाम् आत्मसत्यानुबोध रहिताना मनसो निग्रहायत्तमभय सर्वेषा योगिनाम् ॥ पा २२५

इति । अतो नापरोक्षज्ञानार्थं निदिध्यासनम्, कि तु आत्मनि मनो विलापनेन प्रतिबन्धभूतमनस्सत्यत्वबुद्धिनिरासपूर्वकम् आत्मन्यवस्थानानुग्रहार्थमिति ज्ञेयम् ॥

## कर्मणा ज्ञानहेतुत्वम् –

२५८ पञ्चपादिकाया लिखितम् 'य प्रथमसूत्रे अथशब्दोपादानसूचितो न्याय स्वाध्यायस्य अर्थावबोधोपयोगप्रतिपत्तिहेतुता, यदप्यौत्पत्तिकसूत्रे शब्दार्थयो सबन्धनित्यत्वेन वेदान्ताना चापौरुषेयत्वेन कारणेन अनपेक्षत्व नाम प्रामाण्यकारणमुक्तम्, तदुभयम् इहाप्युपयुज्यताम् अपेक्षितत्वात्, इतरस्य पुनर्न्यायकलापस्य न ब्रह्मजिज्ञासायाम् उपयोगोऽस्ति, यतो निरस्ताशेषप्रपञ्च ब्रह्मात्मैकत्व प्रतिज्ञातम्, तत्र न तत्प्रतिपादने, तत्प्रतिपादनसामर्थ्ये वा शब्दाना कश्चिन्न्यायोऽभिहित । यत् पुन प्रथमतन्त्रसिद्धन्यायोपजीवनम्, अस्मिन्नपि तन्त्रे तत् सगुणविद्याविषयम् । तत्र च मानसी क्रिया उपासना विधेया अनित्यफला धर्मविशेष एव । तदेव न्यायकलापस्य न ब्रह्मजिज्ञासायाम् उपयोग '(प पा ५९) इति । तत्र विवरणम् –

(१) नन्विहापि 'शास्त्रयोनित्वात्', 'अत एव च नित्यत्वम्' – इत्यादौ वेदप्रामाण्यापेक्षितो न्याय सूत्रित एव । कुत प्रथमपादापेक्षेति ? सत्यम्, अङ्गीकृत्यैतदुक्तम् इति न विरोध ॥ प वि १५५

[औत्पत्तिकसूत्रोक्तो न्याय पूर्वतन्त्रगत एवेहोपजीव्यत इति युक्तम् । न हीहोदाहृतसूत्रद्वयेन स पुन स्वातन्त्र्येण प्रसाध्यते । शास्त्रयोनित्वात् इति हि ब्रह्मणो भूतार्थत्वेऽपि शास्त्रप्रामाण्य पूर्वत्रानुक्तमिह सूत्रितम् 'समन्वयात्' इति हेत्ववष्टम्भेन, न तु तत्र शब्दार्थसबन्धनित्यत्वपरामर्शोऽस्ति । 'अत एव

च नित्यत्वम्' इति पूर्वतन्त्रस्थितमेव तु विरोधशङ्कापरिहारेण दृढीकरणार्थम् इति न स्वातन्त्र्येण प्रतिपादित किञ्चित् ॥ ]

(२) ननु श्रुतिलिङ्गादिप्रमाणानामिहाप्यपेक्ष्यमाणत्वात् इतरोऽपि न्याय पूर्ववृत्ततया अपेक्षित इति । नेत्याह – इतरस्य तु पुनरिति । उत्पत्तिविनियोगप्रयोगाधिकारविधिकार्यापेक्षितो हि न्यायस्तत्र प्रतिपादित । न चाननुष्ठेयभूतवस्तुप्रतिपादनेऽसौ उपयुज्यते । कार्यार्थसाम्येऽपि प्रत्यध्यायम् अवान्तरप्रमेयभेदेन न्यायभेदोऽपेक्ष्यते, किमु वक्तव्यम् अकार्यभूत वस्तुप्रमेयभेद इति भाव । श्रुत्यादयस्तु लोकप्रसिद्धा एवोपादीयन्ते ॥
प वि १५५

[वस्तुप्रतिपादकवाक्यतात्पर्यनिर्णयेऽपि श्रुतिलिङ्गादिन्यायोऽपेक्षिष्यत एव । स च न्याय पूर्वतन्त्रसिद्ध । यत्तु श्रुत्यादयो लोकप्रसिद्धा एवेति, अत्यल्पमिद मुच्यते, लोकसिद्धा एव हि पदार्थधर्मा शास्त्रे निर्णीयन्ते । अन्यथा सर्वथाप्यलौकिकत्वे शास्त्रप्रतिपादिता अपि ते न बुद्ध्येरन् इति । इद तु सत्यम्, यदिह वस्तुस्वरूपनिर्णय एवापूर्वतया प्रस्तुत, तदपेक्षितो न्यायभेदश्च न पूर्वत्र गत इति ॥ ]

कर्मानुष्ठानानन्तर्यमथशब्दार्थं गृहीत्वा विचारस्तु पञ्चपादिकानुसारत एव विवरणेऽपि कृत । कर्मण किद्द्वारेण ज्ञानोपकारकत्वमित्यत्र विवरणम् –

(३) नित्यनैमित्तिककर्मानुष्ठानै सस्कृतस्यात्मनो यदि श्रवणमनन-ध्यानाभ्यासादीनि ज्ञानसाधनानि सपाद्यन्ते, तदा सस्कारकर्माणि सहकारि-विशेषादात्मज्ञानमवतारयन्ति । यदा तु सहकारिकारणविरह, तदभ्युदय-फलम् इति व्यवस्थोपपत्तेर्न श्रुतिस्मृत्यो परस्परविरोध ॥ प वि १५७

(४) प्रत्यक्षेण विशुद्धि प्रत्यक्प्रवणता च चित्तस्य कर्मफलमवगच्छन् जन्मान्तरानुष्ठित कर्मानुमाय ज्ञानस्यान्तरङ्गसाधनेषु प्रवर्तिष्यते ॥
प वि १५८–१५९

(५) अथवा सर्वाण्येव कर्माण्युत्पत्तिविधिविहितानि संयोगभेदेन जीवनकामनाद्यधिकारविध्यन्तरवद् ब्रह्मानुभवकामो यज्ञादीन्यनुतिष्ठेत् – इत्यधिकारान्तरविधिविधेयानि भविष्यन्ति । आत्मतत्त्वापरोक्षानुभवस्तावदिष्यमाणतया स्वर्गादिवत् भावनासाध्योऽवगम्यते । पुरुषार्थत्वात् ।

शाब्दज्ञाने तु सजाते तत्कामनायोगात्, असजाते विषयानवगमादेव तत्र कामनायोगात् शब्दावगते अपरोक्षज्ञानमिष्यत इति युक्तम् । तच्च प्रयत्नान्तरसाध्यमिति पुरस्ताद् दर्शितम् ॥ प वि १५९

[ अपरोक्षज्ञानविषये यद्वक्तव्य तदुक्त पुरस्तात् ॥ ]

(६) तत्र यज्ञादीनाम् इच्छोपसर्जनतया आख्याताभिहितभावना करणतया अवगताना साध्येनैवान्वयाद् यज्ञादीनि ब्रह्मानुभवसाधनान्यव गतानि । ततश्चात्मानुभवकामो यज्ञादीन्यनुतिष्ठेदिति विधि परिणस्यते । न चेच्छामात्रेण सयोग, तस्या असाध्यमानतावगमात् ॥ प वि १५९

[ भामतीप्रस्थाने तु, (वा भा पा ६१) विविदिषार्थमेव कर्म ॥ ]

(७) ननु विशुद्धिद्वारेण ज्ञानहेतुत्वे सस्कारविविदिषापक्षयो को विवेक ? उच्यते । श्रवणमननध्यानाभ्यासादिसहकारिकारणसपत्तावेव सस्कारो विज्ञान साधयति, तदभावे सत्यभ्युदयमेव । विविदिषाया तु विज्ञानस्य कर्मफलत्वात् फलपर्यन्त साधनानि सपाद्यापि विज्ञान जनयन्तीति विशेष ॥ प वि १६०

भाष्ये सस्कारविविदिषापक्षौ द्वावपि स्थितौ –

(क) येषा पुनर्नित्यानि निरभिसधीनि आत्मसस्कारार्थानि, तेषा ज्ञानोत्पत्त्यर्थानि तानि । 'ब्राह्मीय क्रियते तनु' इति स्मरणात् । तेषाम् आरादुपकारकत्वात् मोक्षसाधनान्यपि कर्माणि भवन्तीति न विरुध्यते ॥

बृ भा ३-३, पा ८०२

(ख) तत्राप्येवविदिति विद्यासयोगत् प्रत्यासन्नानि विद्यासाधनानि शमादीनि, विविदिषासयोगात्तु बाह्यतराणि यज्ञादीनीति विवेक्तव्यम् ॥

सू भा ३-४-२७, पा ४४३

सस्कारविविदिषाक्रमेणैव ज्ञानोत्पत्ति विविदिषूणा च कर्माणि ज्ञानसाधनानीत्येतत् स्थलान्तरेऽपि भाष्येऽस्ति –

(ग) ऋत चेत्यादिधर्मोपन्यासादनन्तर च वेदानुवचनपाठादेतदव गम्यते – एव श्रौतस्मार्तेषु नित्येषु कर्मसु युक्तस्य निष्कामस्य पर ब्रह्मविविदिषोरार्षाणि दर्शनानि प्रादुर्भवन्ति आत्मादिविषयाणीति ॥

तै भा १-१०, पा. २७२-२७३

## ब्रह्मणो जगत्कारणत्वम् –

२५९ विवरणे समाहृता कार्यकारणप्रक्रिया कीदृशीत्येतद् विमर्शमर्हति –

(१) ननु 'अस्येद लक्षणम्', 'इद वा अनेन लक्ष्यम्' इति लक्ष्यलक्षणयो, अव्याप्त्यतिव्याप्तिपरिहारेण अविनाभाव प्रमाणयुक्ति व्यतिरेकेण न सिध्यति, तत्कथ स्वरूपलक्षणपरमेव सूत्रमिति ? तत्राह – 'युक्तिरपि लक्षणनिर्णये अर्थात्' इति । अपिशब्दात् प्रमाणमपीत्यर्थ । अत्र च सूत्रितयोर्ब्रह्मणि प्रमाणयुक्त्योरध्यायद्वयेन निर्णय क्रियते ॥
प वि २०४

[अर्थतो युक्तीना प्रमाणस्य वा सूत्रितत्वे न किञ्चिद् गमकमस्ति । यतो जन्मादि अस्य सभवति तद् ब्रह्म– इत्येवमर्थकानामेवाक्षराणामत्र दर्शनात् । न च भाष्यमत्र प्रमाणम् । भाष्ये हि प्रधानादेर्जगतो यथोक्तविशेषणस्य जन्मादिर्न सभवतीत्येतावदुक्तम् । न च लक्ष्यलक्षणयोरव्याप्त्यतिव्याप्तिपरिहारेणाविनाभाव इह समुद्दिष्ट । 'वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्' इति हि भाष्य कारवचनमिति ॥ ]

(२) ननु जगज्जन्मस्थितिभङ्ग किसबन्धितया लक्षण भवति ? न तावत् काकवल्लक्ष्यसबन्धितया । जगदाश्रयत्वात् धर्माणामिति । कारण सबन्धितया इत्याह – 'यत इति कारणनिर्देश' इति । ननु जन्मादि-कारणत्वमपि लक्षणान्तर्गतम्, आहोस्वित् लक्ष्यस्वरूपान्तर्गतम् ? – इति वक्तव्यम् । ननु गृहस्य काकाधिकरणत्व नाम धर्म कस्मिन् अन्तर्भवति ? लक्ष्य इति चेत् । काकाधिकरणत्व च गृहशब्दार्थ स्यात्, ततश्च काक विगमे गृहैकदेशभङ्गबुद्धि स्यात् । लक्षणान्तर्गतमिति चेत्, कारणत्वमपि तथा । न हि नानाविधकार्यक्रियावेशात्मकत्व तत्प्रसवशक्त्यात्मकत्व वा जिज्ञास्यविशुद्धब्रह्मान्तर्गत भवितुमर्हति । तस्मात्, जगज्जन्मादिकारणत्व मेवोपलक्षणमिति ॥ प वि २०४–२०५

[जिज्ञास्यब्रह्मान्तर्गत न चेत् जगज्जन्मादिकारणत्वम्, न तर्हि जिज्ञास्य लक्षितम्, न च 'किंलक्षण पुनस्तद्ब्रह्म ?' इति प्रश्नोत्तरत्वेन सूत्रावतरण भाष्य कारस्य समञ्जस स्यात् । न च जगन्नाम दृष्टान्तोपात्तकाक इव गृहात्, ब्रह्मणोऽत्यन्त पृथक्त्वेनास्ति, येन तद्वदुपलक्षणत्वमत्र स्यादित्यनुसधेयम् ॥ ]

(३) महाभूतानि सद्वस्तुप्रकृतिकानि । तत्स्वभावानुरक्तत्वे सति विविधविकारत्वात्, मृद्नुस्यूतघटादिवत् । द्रव्यत्वाद्यभेदा अपि प्रकृति स्वभावा एव सामान्यवदवभासन्ते । सद्वस्तु पुन सर्वानुगमात् सर्वविकार-प्रकृति । भौतिकाना च भूतोपादानत्व दृश्यमान मूलप्रकृत्यधीनतामेव सर्वस्य गमयति । अत सर्वकार्योपादानम् एकमेव लाघवात् – इति न्यायानुगृहीतानुमानेन सिद्धम् । तस्यैव च निमित्तकारणत्वम् अनुमानेन कल्प्यते । तथा च इद जगत् अभिन्ननिमित्तोपादान भवितुमर्हति । प्रेक्षा पूर्वजनितकार्यत्वात्, आत्मगतसुखदु खरागद्वेषादिवत् । न च घटादिष्व नैकान्तिकता । तत्राप्यभिन्ननिमित्तोपादानत्वकल्पनात् । अदृष्टादिनिमित्त भेदो दृश्यत इति चेत् । न । उपादानाधिष्ठात्रोरेव एकत्वानुमानात् । तस्मात्, अनुमानेनैव प्रसिद्धमेकस्योभयकारणत्व लक्षणत्वेन निर्दिश्यते । सृष्टिवाक्यप्रसिद्ध चैकस्योभयकारणत्व लक्षणत्वेन निर्दिश्यते ॥

प वि २०५–२०६

[ 'नन्विहापि तदेवोपन्यस्त जन्मादिसूत्रे । न । वेदान्तवाक्यकुसुम ग्रथनार्थत्वात् सूत्राणाम्' (सू भा ७) इत्यारभ्य 'नन्मान्नन्मात्मित्र नानु मानोपन्यासार्थम्' इत्यन्त भाष्यमनादृतमत्र । प्रकृत्यधिकरणगतसूत्रेभ्योऽपि (१–४–२३ २७) श्रुत्यवगाह्यमेवेद कारणत्व नानुमानप्रसिद्धमित्यवगम्यते ॥]

(४) सर्वस्य कर्तृत्वादेव वर्तमानस्वकार्यसर्वविषयज्ञता तावत् सिद्धा । एव तत्तत्कालेऽतीतसर्वविषयावगमादनुभूतविषया असप्रमोषा स्मृति स्व मायापरिणामोपाधि, अनावरणत्वात् सर्वविषया कल्प्यते । तथा सृष्टे प्रागपि सृज्यमानपदार्थावधारणस्य कुलालादिषु दृष्टत्वात्, आगामिसर्व विषयज्ञान स्वमायापरिणामोपाधि कल्प्यत इति युक्ता सर्वज्ञता । य सर्वज्ञ सर्वविदिति च जगत्कारणे सर्वज्ञपदप्रयोगात् सर्वविषयज्ञान प्रमीयत इति श्रुतियुक्तिभ्यां युक्ता सर्वज्ञता ॥ प वि २१०

[मायापरिणामेन ब्रह्म सर्व जानातीति प्रतिज्ञामात्रमेतत् । न ह्यन्त करणवत् मायाया अपि परिणामलक्षणा वृत्तिरस्तीत्यत्र प्रमाणमस्ति । अतो न युक्त सर्वज्ञ त्वानुमानम् । अथ नेद स्वतन्त्रमनुमानम् । श्रुत्युक्तोपबृहणायैव तूपन्यस्तमिति, तर्हि 'सर्वविषयावभासनक्षम ज्ञान नित्यमस्ति' यत , तत सर्वज्ञ –इति भाष्योक्तम् (सू भा १–१–५, पा २७) इहापि वाक्यशेषेण स्वेनाप्युररीकृतमेवालम्, कि मायावृत्तिकल्पनया ? कालत्रयेऽपि सर्व जानातीत्यत सर्वज्ञत्वम् इत्यव्यापक लक्षणम् । कालस्यापि ज्ञेयत्वादेव । तैत्तिरीयभाष्यवाक्यमपीह अनुसधातु योग्यम् ॥

'यत्तु ब्रह्मणो विज्ञानम् तत् सवितृप्रकाशवत्, अग्न्युष्णत्ववच्च ब्रह्म स्वरूपाव्यतिरिक्त स्वरूपमेव तत। न तत्कारणान्तरसव्यपेक्षम्। नित्यस्वरूप त्वात्, सर्वभावाना च तेनाविभक्तदेशकालत्वात्, कालाकाशादिकारणत्वाच्च निरतिशयसूक्ष्मत्वाच्च। न तस्यान्यदविज्ञेय सूक्ष्म व्यवहित विप्रकृष्ट भूत भवत् भविष्यद्वा अस्ति। तस्माद् सर्वज्ञ ब्रह्म' (तै भा २-१ पा २८५) इति ॥]

(५) त्रैविध्यमत्र सभवति। रज्ज्वा सयुक्तसूत्रद्वयवत् मायाविशिष्ट ब्रह्म कारणम् इति वा, 'देवात्मशक्ति स्वगुणैर्निगूढाम्' इति श्रुतेर्मायाशक्तिमत् कारणमिति वा जगदुपादानमायाश्रयतया ब्रह्म कारणम्, इति वा, तत्र विशिष्टपक्षे तथैव ब्रह्मत्वेनोपलक्षितस्य ज्ञानानन्दादिस्वरूपलक्षणेन माया निष्कर्षात्, लक्षणद्वयेन विशुद्धब्रह्मसिद्धि। उत्तरपक्षयोस्तु मायाया ब्रह्मपरतन्त्रत्वात्, तत्कार्यमपि ब्रह्मपरतन्त्र भवति, यथा अशुतन्त्रतन्त्वारब्धोऽपि पट, अशुतन्त्र प्रतीयते। ततश्च, उत्पद्यमानकार्यस्य यदाश्रयोपाधिज्ञानानन्दलक्षण च तद् ब्रह्म- इति शुद्धब्रह्मलाभ इति ॥ प वि २१२

(६) तस्मात्, जन्मादिनिमित्तोपादानकारण सर्वज्ञ ब्रह्म - इति सिद्धम्। तत्र बिम्बस्थानीय ब्रह्म मायाशक्तिमत् कारणम्, जीवाश्च प्रत्येकम् अविद्यानुबद्धा इति केचित्, मायाविद्याप्रतिबिम्बित ब्रह्म जगत्कारणम्, विशुद्ध ब्रह्म अमृतत्वालम्बनम्, जीवाश्चाविद्याबद्धा इत्यन्ये। जीवा एव स्वाविद्यया प्रत्येक प्रपञ्चाकारेण ब्रह्माविर्भावयन्ति, सादृश्याच्च प्रपञ्चैकतावभास, अनेकैरवगतद्वितीयचन्द्रवत्, स्वरूपापेक्षया च ब्रह्म सर्व जगत्कारणम् इत्यपरे। ब्रह्मैकमेव स्वाविद्यया जगदाकारेण विवर्तते। स्वप्नादिवत् इति मतान्तरम्। तस्मात्, ब्रह्मैव स्वमायया अविद्यया विवर्तत इति ॥ प वि २३२

[अत्र चरमपक्ष एवेष्टसिद्धिकारानुसारेण स्वाभिमतेति सूचितम् ॥]

जगतो मिथ्यासृष्टत्वसाधने स्वय परिकर बद्ध्वा (प वि २०८) 'तस्मात् प्रत्यक्षानुमानार्थापत्तिभि प्रपञ्चस्य मिथ्यत्वावगमात्, प्रशान्तत्वाच्च ब्रह्मण. निष्प्रयोजना च सृष्टिश्रुति (?) विवर्त एवेति (प वि २०८) इति चोपसहरत अननुरूपमिद विकल्पनम्, कि ब्रह्मैव कारणम्, कि वा माया, कि ब्रह्मैव जगत्कारणम्, कि वा जीवा ? इति च। 'यतो वा इमानि'

'जन्माद्यस्य यत ' इति च श्रुतिसूत्रयोर्ब्रह्मण एव जगत्कारणत्वेन निर्देशाच्च । क्रियायामिव वस्तुनि विकल्पासभवाच्चायुक्तमिद विकल्पनम् । युक्त्यसहत्वाच्च । न हि मायाया परमात्मनि आत्मभूताया इवाविद्या कल्पिताया नामरूपबीजशक्तिरूपाया स्वतन्त्रसत्ता समस्ति, येन ब्रह्म वा माया वा जगत्कारणमिति विकल्प्येत । न च जीवाना ब्रह्मणो व्यतिरेकेणास्तिता, ' अनेन जीवेनात्मना ' इति श्रुतिविरोधप्रसङ्गात्, 'तत्त्व मासे' इत्युपदेशासागत्यप्रसङ्गाच्च । शारीरके च ' आभास एव च ' इति विशेषणरूपेण ब्रह्माभासत्वोपदेशाच्च जीवस्य 'नेतरो ऽनुपपत्ते ', ' अनुप पत्तेस्तु न शारीर ', इति पदे पदे सूत्रेषु कण्ठरवेण जीवस्य जगत्कारण त्वप्रतिषेधाच्चेति ॥

तस्मात् जगज्जन्मादिकारणत्ववचन न कारणत्वविवक्षया, कि तु जगत सर्वदा ब्रह्मात्मत्वप्रदर्शनविवक्षया, कारणत्व च ब्रह्मणो न स्वत , कि तु अविद्याकल्पितरूपभेदेन, सर्वशक्तियोगश्च तस्य तथैव – इत्यवश्य मभ्युपगन्तव्यम् । तथा हि भाष्यम् –

(१) उत्पत्तिस्थितिप्रलयकालेषु यदात्मता न जहति भूतानि-तदेतद् ब्रह्मणो लक्षणम् । तद् ब्रह्म विजिज्ञासस्व ॥ तै भा ३-१, पा ३१२

(२) अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्याम् अनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्व प्रतिपद्यते । पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतम् अवतिष्ठते ॥ सू भा २-१-२७, पा २१३

(३) प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मण सर्वशक्तियोग सभवतीत्येतदपि अविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव ॥

सू भा २-१-३१, पा २१५

(४) न चेय परमार्थविषया सृष्टिश्रुति । अविद्याकल्पितनामरूपव्यवहारगोचरत्वात्, ब्रह्मात्मभावप्रतिपादनपरत्वाच्चेत्येतदपि नैव विस्मर्तव्यम् ॥ सू भा २-१-३३, पा २१७

## उपसंहारः –

२६० प्रकाशात्मयतिभि पञ्चपादिकाविवरणप्रणयनात् प्रागेव अद्वैतवेदान्तिषु बहव प्रस्थानभेदा आविरभूवन्निति तत्र नानामतोदाहरणादेवानुमीयते । अत एव ते बहुत्र मतभेदान् सक्षेपतो निर्दिश्य क्वचिदेव स्वमत नि सदिग्धतया आविरकार्षु । अग्रहणाद्यतिरिक्तानिर्वचनीयभावरूपाविद्यावादम् इष्टसिद्धिकाराभिमतम् आग्रहपूर्वं युक्त्यन्तरैरुप बृहयामासुरित्यतोऽवगम्यते तत्काले अविद्योपादानकप्रपञ्चवादस्य बहु वेदान्तिमान्यता आसीदिति । जगत्कारणत्वनिष्कर्षप्रकारभेदेषु केचन वाचस्पतिमिश्रानुयायिवादिसमता इवाभान्ति । इष्टसिद्धिकारपक्षस्तु विशिष्य स्वमतत्वेनोल्लिखित ॥

यद्यप्यवच्छेदवाद निराकृत्याविद्याप्रतिबिम्ब एव जीव इति स्वपक्ष स्थापित, मनननिदिध्यासनयोरङ्गत्व च विहित श्रवण प्रति–इति वाचस्पतिमिश्रमत क्वचिदशे त्यक्तमिव, तथापि आत्माश्रिता अविद्या व्यवहारे जीवाश्रितैव लक्ष्यते, अविद्यामाययोरैक्य सर्वैरङ्गीकार्यम्, शब्देन प्रथम परोक्षज्ञानम्, ततो निदिध्यासनसाहाय्येन तत एवापरोक्षज्ञान चोद्भवतीत्युररीकारेण प्रतिपत्तिविधिमनपेक्ष्यैवान्वयव्यतिरेकसिद्धस्मृतिसतान शक्यकरण मर्दनमुखवत् प्रत्यक्षफलदर्शनात् (प वि २४८) इत्यनुमन्यते अत्रेति मण्डनप्रस्थानस्यापि स्थान प्रकल्पितम् । यद्यप्यनेकजीवाश्रितानेकाविद्यावादो नैव परामृष्टोऽत्र तथापि ‘जीवा एव स्वाविद्यया प्रपञ्चाकारेण ब्रह्माविर्भावयन्ति’ – इति जीवाविद्याकारणत्व जगत अनुमोदमानाना मतमप्युदाहृतम् । मण्डनवाचस्पत्युभयसमतोऽविद्यासस्कारवाद स्वीकृत प्रकाशात्मभि, इष्टसिद्धिकारसमताविद्यालेशवादोऽपि बह्वीभिर्युक्तिभिरुपबृहित, भाष्यप्रस्थानेन च वादमिम सगमयितु यत्न आस्थित । वाचस्पतिविमुक्तात्मभ्या खण्डितावशिष्ट भास्करप्रस्थानवादजाल तत्र तत्र खण्डयित्वा भेदाभेदवादोऽपि न्यक्कृत ॥

यद्यपि पञ्चपादिकाव्याख्यानमेव प्रतिज्ञातमत्र, तथापि पञ्चपादिकोक्तानुक्तदुरुक्तचिन्तनमपि कृतमेव, प्रबलतरयुक्तिभिश्चाविद्योपादानभेदवाद उपष्टम्भित । वेदान्तवादेषु श्रुत्यविरोधयुक्तिच्छलेन नैकान्यनुमानानि आनीतानीति वेदान्तविचारसरण्या तर्कशास्त्रसमतशैल्यपि प्रवेशिता । एव वाचस्पतिप्रस्थाने इवात्राप्यद्वैतदर्शनस्यासप्रज्ञातसमाध्यावश्यकताप्रदर्शनेन योगदर्शनानुयायिभिरपि सधि कृत । एव चात्र दर्शनान्तरवादसरण्यनुसरणेनात्मैकत्वविद्याप्रतिपत्त्यङ्गभूता अध्यारोपापवादप्रक्रिया श्रौती किञ्चिन्मलीमसेवाभूदिति तु निर्विवादम् ॥

सर्वथापि तु शाङ्करप्रस्थान नाम विवरणप्रस्थानमेव प्रायश इति इदानीतनाना वेदान्तिनामभिनिवेश । अत एव यत्र क्वचिदपि शाङ्करविवरणप्रस्थानयोर्वैलक्षण्य लक्ष्यते चेत्, तत्र सर्वत्र सर्वसाहसेनैकवाक्यताकरणे बद्धादरा सप्रतितना विद्वास । अभियुञ्जते च वैलक्षण्यस्थापनपरान् असप्रदायवित्त्वेनेति महदिद साक्ष्य विवरणमहिम्नीत्यस्मदभिप्राय ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिचयावाप्त वेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्यसच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीताया वेदान्तप्रक्रियाप्रत्यभिज्ञाया

**विवरणप्रस्थानपरीक्षा नाम द्वादश काण्ड**

---

# १३. न्यायमकरन्दप्रस्थानपरीक्षा

**न्यायमकरन्दः–**

२६१ विवरणप्रकाशनात् परस्तात् अद्वैतविचारे प्रस्थानान्तरोपस्थापनलालसा वेदान्तिषु नाभूत् । अद्वैतिप्रक्रियाभेदाना प्रयत्नपूर्वकम् एकवाक्यतामङ्गीकृत्य द्वैतखण्डनेन जिज्ञासूनामद्वैते रुच्युत्पादनमेव वरीय इति नूतनग्रन्थकारा मेनिरे । तेषु प्रप्रथम प्रयत्न, आनन्दबोधभट्टारकाचार्यस्य ॥

आनन्दबोधानाम् इतिवृत्तमधिकृत्य न किञ्चिद् विज्ञायते । विमुक्तात्मशिष्या एते इत्यभ्यूह केषाञ्चित् सप्रमाणको न भाति । संभावना त्वस्ति तत्र, बहुश इष्टसिद्ध्याहृतयुक्तीनामेव विशिष्टादरणदर्शनात् । **न्यायमकरन्दः, प्रमाणमाला, न्यायदीपावलिश्च** – इत्येते ग्रन्था आनन्दबोधाना प्राकाश्य नीता अद्यावधि । अत्र न्यायमकरन्दमेव विशिष्याधारीकृत्य किञ्चिल्लिख्यते ॥

पञ्चपादिकाविवरणे मूलाविद्यावादिसमतरीत्या भाष्यार्थप्रतिपादनमेव न केवलम्, कि तु प्रस्थानान्तरै किञ्चित् सन्धिकरणम्, तर्कशास्त्रसमत वादसरणिश्च दृश्यते–इत्यवोचाम । आनन्दबोधास्तु इमामेव सरणिमनुसृत्य ब्रह्मसिद्धौ, विधिविवेके, भामतीष्टसिद्धिविवरणादिषु च विद्यमानान् विषयान् सगृह्य तत्र तत्रोपबृहकयुक्तीरुपन्यस्य अद्वैतिसमतसिद्धान्त स्थापयितु प्रयेतिरे ॥

**न्यायमकरन्दग्रन्थविभागक्रमः –**

२६२ जिज्ञासुजनोपयुक्तन्यायाना सग्रहमात्र ग्रन्थोद्दिष्टमित्यनेन प्रतिज्ञाश्लोकेन विज्ञायते –

**निबन्धपुष्पजालानि समालोच्य प्रयत्नत ।**
**सन्न्यायमकरन्दाना सग्रह क्रियते मया ॥**

अत्र च (१) क्षेत्रज्ञभेदनिराकरणम्, (२) ज्ञेयभेदनिरास, (३) भ्रान्तिविचार, (४) प्रपञ्चमिथ्यात्वस्थापनम्, (५) आत्मन स्वयप्रकाशता च, (६) प्रत्यक्षादीना व्यावहारिकप्रामाण्यम्, (७) सिद्धे सगतिग्रह, (८) प्रवर्तकनिराकरणम्, (९) अखण्डार्थ, (१०) मोक्ष स्वरूपनिर्णय, (११) अविद्याश्रय, (१२) मोक्षसाधनम्, (१३) अविद्यानिवृत्तिश्च – इत्येव प्रतिपाद्यविषयविभाग कृत ॥

तत्र सर्वत्रापि प्रथम पूर्वपक्षमुपन्यस्य युक्तिभिस्तन्निरसनद्वारेण प्रायश सिद्धान्त प्रदर्श्यते । श्रुतयस्तु क्वचिदेवानीयन्ते । पूर्वपूर्वविषय-विचारसमाप्तौ उत्तरोत्तरविचारस्य समुत्थान श्लोकेन प्रदर्श्य तद्विचार प्रदर्श्यते । अनुशाङ्करवेदान्तनिबन्धानामेव प्रायश प्रमाणीकरणात्, भाष्यप्रस्थानादृता प्रक्रिया अनुभवप्रधानयुक्त्युपस्थापनरूपा क्वचिदेव लक्ष्यतेऽत्र । अनुमानार्थापत्तिरूपस्तर्क एव द्वैतबाधनिष्टप्रसञ्जको बाहुल्येन समाश्रीयते । ततश्च वेदान्ताभिमता प्रधानप्रक्रिया अध्यारोपापवादन्याया नुसारिणी नैव दृष्टिपथे समानीयते । अतो दिङ्मात्रमिह न्यायमकरन्द विचारक्रमस्य दर्शयित्वा तत्परीक्षा समापयिष्याम ॥

## भेदनिराकरणम्–

२६३　तत्र मङ्गलश्लोकेन सर्ववेदान्तसिद्धान्त इत्थ सगृहीत –

**यद्भासा निखिल विभाति विषयो यो न स्वय ज्योतिषाम् ।**
**यस्माहुर्भुवनोद्भवस्थितिलयान् लीलामयान् सूरय ।**
**य वागोचरमामनन्ति मनसा वाचा च विश्वात्मने ।**
**तस्मै शुद्धसुखाद्वितीयवपुषे शश्वन्नमो विष्णवे ॥**

[प्रथमेन पादेन परमात्मन चिदेकरसप्रकाशेन निखिलजगदवभासकत्व अनितरगोचरस्वयप्रकाशत्व चाब्रवीत्, द्वितीयेन निर्व्यापारस्यैव सर्वजगज्जन्म स्थितिलयकारणत्वकथनेन जगतस्तदधीनसत्ताकत्व तदात्मकत्व चाभाणीत्, तृतीयेनावाङ्मनसगोचरत्वम्, निखिलात्मत्व चावाक्षीत्, चतुर्थेन च परिशुद्धा-द्वितीयानन्दरूपतामचकथत् ॥ ]

**प्रथमं** तावत् सुखदु खानुभवभेदव्यवस्थान्यथानुपपत्ते, जनन मरणादिव्यवस्थान्यथानुपपत्तेश्चात्मनानात्वमास्थितवता तर्कं प्रतिक्षिप्य तस्य श्रुतिस्मृत्युदितात्मैक्यविरुद्धता प्रादर्शि ॥

(१) **विवादपदानि शरीराणि उभयवाद्यविवादास्पदेनैव आत्मना अधिष्ठितानि जीवच्छरीरत्वात्, यदुक्तसाधन तदुक्तसाध्यम्, यथोभयवाद्य विवादास्पद शरीरम्। तथा चेमानि। तस्मादुक्तसाध्यानि ॥ न्या म २९**[1]

इति प्रयोगश्चोपन्यस्त आत्मैकत्वसाधनाय ॥

(२) **आत्मा द्रव्यत्वव्यतिरिक्तापरजात्याधारभेदेन नाना न भवति। नित्यत्वात्, विभुत्वात्, निरवयवद्रव्यत्वाद् वा, गगनवत् ॥ न्या म ३०**

इति परप्रसिद्धदृष्टान्तेन परेषामनिष्टापत्तिश्चादशित ॥

[प्रथमानुमानेन स्वासीष्टैकत्वस्य सभावनामात्र सिध्यति । द्वितीयेन च तार्किकसमतप्रक्रियावलम्बनेनात्मनानात्व निराकृतम् । आत्मैकत्वे श्रुत्यादि-वाक्यानि यद्यप्युदाहृतानि, तथापि तानि कथम् अनुभवमुत्पाद्य प्रमाण भवन्तीति तु नोक्तम्। मकरन्दकारसमये आकाशोत्पत्तिमङ्गीकृत्याप्यात्मनानात्व साधयन्त प्रतिवादिनो नासन्नित्येतेनोन्नीयते ॥ ]

**द्वितीयेन तु वादेन** ज्ञेयभेदनिरास क्रियते। भेदस्य धर्मस्वरूपत्वे तद्धर्मत्वे वा न प्रत्यक्षप्रमाणात् तत्सिद्धि स्यात्, अत एव न तदुपजीवकेतर-प्रमाणेभ्यस्तत्सिद्धि । 'विवादपद भेदसवेदन न प्रमाणनिबन्धनम्, अनिरूपितप्रमाणकत्वात्, भेदसवेदनत्वाद् वा, स्वप्नभेदावभासनवत्'—इति प्रयोगसद्भावात् इति (न्या म ५५) ॥

वादद्वयेनापि प्रतिवादितर्कनिराकरणमात्रेण न भेदवादसामान्यनिरा-करणम् अद्वैतसिद्धिर्वा भवतीति स्पष्टमेव। भाष्यकारोक्तप्रकारेण तु

(१) **न ह्यात्मन शरीरात्माभिमानलक्षण मिथ्याज्ञान मुक्त्वा अन्यत सशरीरत्व शक्य कल्पयितुम् ॥ सू भा १-१-४, पा २२**

---

1 अत्र सर्वत्रापि न्या म इति सकेतानन्तर निर्दिष्टा सख्या न्यायमकरन्द-ग्रन्थपत्रपार्श्वपरामर्शिका ॥

इत्यभिहित, नायमप्यस्ति । तथा हि शुक्तिकेदन्तासंसर्गवत् सत्तासंसर्गस्याप्यनिर्वाच्यस्यैवावभासनात् । अन्यस्याश्च रजतसत्ताया अनुपलम्भात् न विरुद्ध प्राचीनोऽनुभव ॥ न्या म ११७-११८

(b) केचित्तु सत्तात्रैविध्यम् अङ्गीकुर्वाणा परमार्थसद्वैलक्षण्याभिप्रायेण च अनिर्वाच्यलक्षणम् आश्रयन्तोऽनुभवविरोध पराकृतवन्त ॥
न्या म ११९

[द्वितीय पक्षो विवरणाचार्याणाम् । प वि पा ३०-३१]

(c) नेद रजतमित्यय कालत्रयेऽपि लौकिकपरमार्थरजतप्रतियोगिनीम् अत्रासत्ता प्रतिभासोऽवलम्बते । तत एव प्रतिपन्न मिथ्यैव रजतम् इति परामृश्यते । न च वाच्यम् लौकिकस्यात्राप्रसक्तस्य प्रतिषेधो रजतस्य न युज्यत इति, रजताभासप्रसङ्गस्यैव तत्प्रतिषेधनिमित्तत्वात् । न खलु यद् यत्र साक्षाद् विज्ञानप्रसञ्जितम्, तत्र तत्प्रतिषेधो युक्तिमान्, अतिप्रसङ्गात् ॥ न्या म ११९-१२०

(d) न च पराचीनानुभवविरोधात् प्राचीनस्यानालम्बनता इति युक्तम् । स्वगोचरशूरत्वात् सर्वानुभवानाम् । अपरथा अतिप्रसङ्गात् । विश्रान्तितात्यसति विषयापहारे अनिर्वाच्यगोचरतयैवोपपन्ना ॥
न्या म १२१

इत्येक प्रकारो निर्णयस्य ॥

अत्र 'शुक्तिका हि रजतवदवभासते' (अ भाष्य) इति लोकानुभवानुवादिभाष्यप्रामाण्यात् शुक्तिकैव विषयो भ्रान्तिज्ञानस्यापि, अकार्त्स्न्येन ज्ञातत्वात्तु कतिपयानामेव शुक्तिकावयवाना गृहीताना कथञ्चिद् विशिष्टरीत्या सयोजनेन मनसा विकल्पनमेव रजतावभासो नाम – इत्युपपत्तौ शुक्तिपरमार्थरजतविलक्षण कश्चित् पदार्थस्तत्काले समुत्पद्यत इत्येषा भ्रान्तिरिति वक्तु शक्यम् । तस्य च रजतावभासस्य सत्त्वेनासत्त्वेन वा निर्वक्तुमशक्यत्वेनानिर्वचनीयत्वमित्यध्यवसायस्तु प्रमाणरहिततर्कमात्रावष्टम्भन एवेति युक्तम् । ग्रन्थकारोदाहृतार्थापत्तिप्रमाण तु शुक्तिकाया एव सल्लक्षणाया रजतत्वेन प्रतिभासोपपत्तेरन्यथैवोपक्षीणत्वात्, नात्र रहितु

पारयते। नैवात्र रजतमासीत्, भ्रान्त्यैवेत्थं विकल्पितं मया – इत्युत्तरानुभवो रजतप्रसक्तिमेव वारयति । न च स्वगोचरशून्यत्वात् सर्वानुभवानाम्, 'रजतमिदम्' इत्यनुभवस्यापि सालम्बनत्वेन भाव्यम्– इति शुष्कतर्केण प्रातिभासिकरजतस्यानिर्वचनीयस्य शुक्त्यतिरिक्तस्यात्मलाभः सेत्स्यति । शुक्तिकालक्षणालम्बनवत्त्वेनैव सालम्बनत्वोपपत्तौ निष्प्रामाणिकरजतालम्बनत्वावकल्पनानवक्लृप्तेः । तदेव शुक्तिकैव विषयः प्रकारान्तरेण ग्रहणस्य । विपर्ययग्रहणस्य करणदोषादप्युपपत्तेर्विभ्रान्तित्वम् अनिर्वचनीयवस्त्वन्तरकल्पनामन्तरेणैवोपपन्नम् । उक्तं हि बृहदारण्यकभाष्ये –

(अ) 'यथा गृह्यमाणाया अपि शुक्तिकाया विपर्ययेण रजताभासाया अग्रहणं विपरीतज्ञानव्यवधानमात्रम्, तथा ग्रहणं ज्ञानमात्रमेव । विपरीतज्ञानव्यवधानापोहार्थत्वाज्ज्ञानस्य' ॥ बृ. भा. १-४-७, पा. ६६६

इति । एतेन 'शुक्तिकेदन्तासंसर्गवत् तत्रासंसर्गस्याप्यनिर्वाच्यस्यैवावभासनम्' इत्युक्तिः, उक्तिमात्रमित्यापद्यते । अनिर्वाच्यत्वस्यैवासिद्धेः । एवं सत्तात्रैविध्याङ्गीकारेण परमार्थसद्वैलक्षण्याभिप्रायेणानिर्वाच्यतोक्तिः – इत्यपि न साधु, व्यावहारिकप्रातिभासिकसत्तयोः सत्ताविशेषत्वे मानाभावात् । तथा हि भाष्यम् –

(आ) यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति, एवं कार्यमपि जगत् त्रिषु कालेषु सत्त्वं न व्यभिचरति । एकं च पुनः सत्त्वम् । अतोऽप्यनन्यत्वं कारणात् कार्यस्य ॥ सू. भा. २-१-१६, पा. २०३

इति । तदेतत् पञ्चपादिकादिविवरणान्तेषु प्राचीनप्रस्थानेषु सर्वत्रापि समं प्रत्यवस्थानमिति स्पष्टम् ॥

अभ्युपगम्यापि सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वं प्रतीयमानरजतावभासस्य, नैव प्रपञ्चावभासस्य यथोक्तमनिर्वचनीयत्वं संभावयामः । न हि सद्रूपब्रह्मणोऽतिरिक्तं प्रपञ्चकुक्षिनिक्षेपानर्हम् असद्वस्तु किञ्चन

विद्यते, येन प्रपञ्चस्य सदसद्वैलक्षण्य सगच्छेतेति । यदा तु शुक्तिकाया अनन्यत्व प्रतिभासमानरजतस्य, शुक्तिकाया एव तदात्मना प्रतिभासात्–इत्यभ्युपगम्यते, तदा–यथैव प्रतिभासमानस्य रजतस्य स्वेन रूपेण माया मात्रत्वम्, परमार्थत शुक्तिकात्वमेव, तथैव–प्रतिभासमानस्य जगत स्वेन भाममानरूपेण मायामात्रत्व परमार्थतस्तु ब्रह्मत्वमेवेति सेत्स्यति ॥

तथा चाभियुक्तोक्ति –

(इ) **प्रपञ्चो यदि विद्येत निवर्तेत न सशय ।**
**मायामात्रमिद द्वैतमद्वैत परमार्थत ॥**

**गौ का १–१७ पा १९०**

[भाष्यम् – न हि रज्ज्वा भ्रान्तिबुद्ध्या कल्पित सर्पो विद्यमान सन् विवेकतो निवृत्त, नैव माया मायाविना प्रयुक्ता तद्दर्शिना चक्षुर्बन्धापगमे विद्य माना सती निवृत्ता । तथेद प्रपञ्चाख्य मायामात्र द्वैतम्, रज्जुवन्मायाविवच्चाद्वैत परमार्थत । तस्मान्न कश्चित् प्रपञ्च प्रवृत्तो वा निवृत्तो वास्तीत्यभिप्राय ॥ ]

इति प्रथमलक्षणपरीक्षा ॥

(२) **अपरे पुनर्बाधगोचरभावम् अनिर्वाच्यलक्षणमाचक्षते । न चैवमतिव्याप्ति । निर्वाच्यस्यात्मादेरबाधात्, नाप्यव्याप्ति । अनिर्वाच्य रज्जुभुजङ्गादेर्बाध्यत्वनियमात् । क पुनरय बाधो नाम ?**

(a) **सविलासाविद्यानिवृत्तिरेव बाध इत्याचार्या । तथा च तद्गोचरतैवानिर्वाच्यतेति सर्वमवदातम् ॥**

(b) **अपरे तु प्रतिपन्नोपाधौ प्रतिषेधमेव बाध तद्गोचरभाव च बाधकप्रत्ययप्रवेदनीयमनिर्वाच्यलक्षणम् आचक्षते ॥ न्या म १२५–१२६**

[ अत्राविद्यानिवृत्ति पुरस्तात् परीक्षिष्यते । तदिद बाधलक्षणम् इष्टसिद्धिकाराणाम् । प्रतिपन्नोपाधौ प्रतिषेधलक्षण तु विवरणाचार्याणाम् । तन्मते तु यद्यपि शुक्तिरजतस्य मिथ्यात्वाविलक्षणमनिर्वचनीयत्व सिध्यति, रजतस्य शुक्तिकाव्यतिरिक्तसत्त्व तु न सिध्यति 'शुक्तिका हि रजतवदवभासते' इत्यनुभवविरोधादिति मन्तव्यम् ॥ ]

## अनाद्यनिर्वचनीयाविद्या –

२६५ प्रातिभासिकरजताद्युपादानकारणत्वेनैव अविद्या साधितात्र। तस्माद्यदत्र वक्तव्यम्, तदिष्टसिद्धिपरीक्षणेनैव गतम्। तथापि किञ्चिदिहोच्यते –

(१) यदिदं निगदितम् 'अविद्या हि विद्याभावो मिथ्याज्ञानं वा न चोभयं कस्यचित् समवायिकारणम् अद्रव्यत्वात्' इति, तदप्यसत्। अनाद्यनिर्वाच्याविद्याश्रयणात्। तस्याश्च कार्यानुरूपाया कारणभावस्या प्रत्यूहमुपपत्तेः। न चास्या अप्रामाणिकतेति युक्तम्। कार्यवशादेव तत्सिद्धेः॥ न्या म १२२

(२) अत्र प्रयोगः। विवादपदम् अनाद्यनिर्वाच्योपादानम्, विपक्षे बाधकोपपत्तौ सत्या कार्यत्वात्, यद्यथोक्तसाध्यं न भवति न तद्यथोक्त साधनम्। यथोभयवाद्यविवादास्पदं वस्तु॥ न्या म १२४

(३) यत्तदनाद्यनिर्वाच्यं रजताद्यपादानम्, सैवास्माकम् अविद्या सिध्यन्ती रजताद्युपादानतयैव स्वप्रमाणप्रसिद्धा–इति न रजतादेस्तदुपादानतायामपि विवदितव्यम्॥ न्या म १२४

अत्रानिर्वाच्यताया कार्यताया च सिद्धायामेव रजतस्य, तदुपादानकारणत्वेन सिद्धिरविद्यायाः, यथोक्तप्रकारेण रजतावभासस्य विकल्पमात्रत्वे तु शुक्तिकानन्यत्वे च नैवमिति मन्तव्यम्। यत्तु–इष्टसिद्ध्याद्यनुरोधेन कारणनियतत्वं कार्यस्योपगम्य लिखितमत्र –

(४) अनुपपद्यमानाया सदसदुपादानताया तद्विलक्षणमेव कारणं परिशेषतः कार्यम् अनुमापयेत् सुखादय इव पृथिव्यादिष्वनुपपद्यमाना अष्टद्रव्यविलक्षणमात्मानम्। तस्य च सादिताया तथाविधोपादानान्तरपरिकल्पनप्रसङ्गात्, लाघवतर्कसाहाय्यादनाद्येव तदनुमातव्यम् – न्या म १२२

इति। तत्सर्वं तार्किकप्रतिवादिवाक्स्तम्भनक्षमं स्यात् सभवत, वेदान्तिनये तु भाष्यवार्तिककाराभ्यामङ्गीकृतरीत्या अज्ञातब्रह्मवस्तुन्येव सर्वप्रपञ्चविकल्पनसंभवात्, तत्सार्थक्याय न कार्यकारणभावानुमानावसरोऽस्ति।

अज्ञान च भाष्योक्तरीत्या आत्मानात्मनोरितरेतराध्यासलक्षणमेव, सर्वव्यवहारहेतुत्वेन सार्वत्रिकानुभवसिद्धम् । तस्यानादित्व च कालादिविकल्पनहेतुत्वेन इति सादित्वकल्पनाया एवानवकाशात् । अधिक त्वत्र पञ्चपादिकादिगतमूलाविद्यावादपरीक्षणेनैवोक्तप्रायमिति तत एवाधिगन्तव्यम् ॥

## प्रपञ्चमिथ्यात्वम्, आत्मनः स्वप्रकाशत्व च –

२६६ विभ्रमसतत्त्ववादमुपजीव्यैव प्रपञ्चमिथ्यात्वमपि साधितमत्र –

**(१) तस्मात्, न सत्, नासत्, नापि सदसत्, अपि तु अनाद्यनिर्वाच्याविद्याक्रीडनम् अलीकनिर्भास विभ्रमालम्बनम् इति सिद्धम् ।**

**सति चैव प्रपञ्चोऽपि स्यादविद्याविजृम्भित ।**
**जाड्यदृश्यत्वहेतुभ्या रजतस्वप्नदृश्यवत् ॥ न्या म १२७–१२८**

[अत्र सदसद्विलक्षणत्व प्रपञ्चस्य दुर्भणम् , प्रपञ्चव्यतिरिक्तस्यासतश्चिन्तयितुमप्यशक्यत्वात्–इत्यभाणि प्राक् । तत् स्मर्तव्यम् ॥ ]

धर्मिग्राहकप्रमाणबाधितमिदमनुमानम् , यदि पुनरय न प्रामाणिक प्रपञ्च , कथ तर्हि आश्रयसिद्ध न साधनम्, आश्रयहीनश्च दृष्टान्त ? अनैकान्तश्चात्मना हेतु ? – इत्याशङ्क्य प्रत्युक्तम्–

**(२) यत्तावत् धर्मिग्राहकप्रमाणापबाधितविषय साधनम् – इति तदतिमन्दम् । भेदप्रपञ्चस्य प्रत्यक्षादिगोचरताया प्राक् परास्तत्वात् । न चान्तरेण प्रामाणिकभावम् – आश्रयतानुपपत्तिरित्यपि कुलधर्म । प्रसिद्धिमात्रेण तदुपपत्ते । । तथा चायम् आश्रयहीनो दृष्टान्त इत्यपोढम् ॥**
**न्या म १२९–१३०**

**(३) यदपि आत्मना अनैकान्तो हेतु – इति, तदप्यप्रेक्षावत्पुरुषभाषितम् । अपराधीनप्रकाशत्वादात्मन । न चैतन्मनोरथमात्रम् । अनुमानागमाभ्या तदुपपत्ते ॥ न्या म १३०**

प्रपञ्चमिथ्यात्वस्य शुक्तिरजतदृष्टान्तस्य विभ्रमविषयत्वप्रसाधनमात्रेण तद्बलेनैवानुमानम्, श्रुतिप्रदर्शितयुक्त्यनुभवप्रदर्शने यत्नाभावश्च

क्रियते ? – इति स्यात् पठितॄणां शङ्का । अत्र सर्वत्र ग्रन्थे 'सन्न्यायमकरन्दानां सङ्ग्रहः क्रियते मया' इति प्रतिज्ञानुसारेण न्यायानामेव सञ्जिघृक्षितत्वात् अनुमानस्यैव प्राधान्यमिति परिहारो ज्ञेयः । अनुमानस्य सर्वत्र परोक्षस्यैव साधनप्रभुत्वात्, प्रपञ्चमिथ्यात्वात्मस्वयंप्रकाशत्वयोरपि तथैव वादिविप्रतिपत्त्यवकाशप्रदस्य तस्यानुसरणेन कियत्प्रयोजनम् आत्मतत्त्वजिज्ञासूनामिति तु अन्यदेतद् । एतेन–आत्मनो मानसप्रत्यक्षवेदनीयत्वनिरसनम् (न्या म १३१), संविदधीनप्रकाशत्वनिरसनं (न्या म १३५) चानुमानेनेत्यादिकं परीक्षितप्रायम् ॥

## प्रत्यक्षादिप्रमाणानां व्यावहारिकं प्रामाण्यम्, आगमस्य तु तत्त्वावेदकत्वेन –

२६७ प्रपञ्चमायामयत्वमुपजीव्य प्रत्यक्षादिप्रमाणानां प्रामाण्यमधिकृत्य चिन्तनमत्र कृतम् –

(१) मायामयत्वसिद्धौ च प्रपञ्चस्य प्रमाणतः ।
प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम् ॥
अद्वैतागमवाक्यं तु तत्त्वावेदनलक्षणम् ।
प्रमाणभावं भजते बाधवैधुर्यहेतुतः ॥ न्या म १४५

(२) तत्त्वसाक्षात्कारे तु प्रलीयत एव सकलोऽप्ययं भेदावभासः, तस्य च मायात्मनोऽपि विषयसत्यतया प्रमाणभावः, विपर्यासविरोधिता च युक्ता, स चाविद्यावभासमात्रविरोधितया स्वयमपि प्रलीयते । यथा कतकरजो रजोन्तरसंपर्ककलुषिते सलिले प्रक्षिप्तं रजोन्तराणि विलापयत् स्वयमपि विलीयमानम् अनाविलं सलिलमापादयति, तथा परमात्मतत्त्वसाक्षात्कारोऽपि अविद्यात्मकोऽविद्यावभासान्तराणि संहरन् स्वयमपि संह्रियमाणः परिशुद्धम् आत्मतत्त्वं व्यवस्थापयतीति न किञ्चिदवद्यम् ॥ न्या म १५३–१५४

पित्तोपहतेन्द्रियाणां मधुरेऽपि गुडे तिक्तावभासानुवृत्तिः, कतकरजसः स्वपरविलापकत्वं चेति दृष्टान्तौ मण्डनवाचस्पत्युदाहृतौ, साक्षात्कार-

वादश्च तदीय एवेति तत्र [illegible]मर्शनेनैवेदमपि मत विमृष्टप्रायम् । एव वेदस्य निर्दोषत्वात् स्वत सिद्धप्रमाण[illegible] बलीयस्त्व तत्त्वावेदक प्रामाण्य च (न्या म १५२) इत्यादि सर्वमत्र मिश्रप्रस्थानोपजीवकमेवेति न किञ्चिदतिरिक्तमवशिष्यते वक्तव्यम् । भगवत्पादीये प्रस्थाने त्वात्मानात्मनोरितरेतराध्यासस्य सार्वत्रिकानुभवानुसारियुक्तिभि सिद्धस्यैव बलात्, तत्पुरस्सराणा प्रत्यक्षादीना यावदध्यासानुवृत्तिस्तावद् व्यावहारिक प्रामाण्यम्, वेदस्य तु तादृशाध्यासापह्नवेन प्रमाणव्यवहारस्यैव बाधनेन स्वत सिद्धात्मतत्त्वविज्ञापनात् तत्त्वावेदकप्रामाण्यम् । अत्र पुनर्विवादग्रस्तसाक्षात्कारस्य कतकादिदृष्टान्तबलेन स्वपराविभाससहारकत्वोपगमेन कारकविधयैव [illegible] इति विशेष ॥

(२) एव च प्रमाणोपपत्त्यनुपपत्त्योरद्वैतविघात इत्यप्यनवकाश चोद्यम् । सदद्वैताभ्युपगमात् अलीकाकारेण च प्रमाणादिविभागेन तदविघातात्, अलीकाकारस्य च तत्त्वगोचरतया प्रमाणभावस्योपपादितत्वात् । प्रमाणोपपत्तौ प्रमेयाद्यनुपपत्तिरित्यपि न सुभाषितम् ॥ न्या म १५५

प्रमाणस्यालीकत्वात् सदद्वैतवादस्य निरवद्यत्वमित्येतत् अद्वैतस्य प्रमाणसिद्धत्वमुररीकृत्य— इति स्पष्टम् । वस्तुतस्तु वेदान्तानामपि न ब्रह्मणि इदतया बोधनेन प्रामाण्यम्, किं तु अध्यारोपितापवादविधयैवेति भाष्यकारवचनोदाहरणेनासकृदावेदितम् —

(क) अविषयत्वे ब्रह्मण शास्त्रयोनित्वानुपपत्तिरिति चेत् । न । अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । न हि शास्त्रम् इदन्तया विषयभूत ब्रह्म प्रतिपिपादयिषति, किं तर्हि प्रत्यगात्मत्वेन अविषयतया प्रतिपादयत् अविद्याकल्पित वेद्यवेदितृवेदनादिभेदमपनयति ॥

सू भा १-१-४, पा १६

इत्यादिस्थले तथावगमात् । तस्मात्, भेदापवादित्वेनैव वेदस्य प्रामाण्य प्राक् प्रबोधात् । जाते तु प्रबोधे न प्रमाणापेक्षा । स्वयसिद्धात्मरूपत्वादेव प्रबोधस्य ।

(ख) इष्यत एवमस्माभि श्रुतेरप्यभाव प्रबोधे ॥

सू भा ४-१-३, पा ४६५

इति भाष्यात् । तस्मात्, 'मायामयत्वेन प्रमाणस्य नाद्वैतविघात, सदद्वैताभ्युपगमात्' इति प्रतिवादितर्कभिया नाद्वैते सकोच आस्थेय, सर्वदा सर्वथापि विशुद्धाद्वैतमेव स्वयसिद्धम्, प्रमाणानामपि सर्वेषा तेनैवात्मवत्त्वादिति निर्भीकैरुद्घोषयितव्यम् ॥

## सिद्धे संगतिग्रहसत्त्वात्, वेदान्ताना ब्रह्मणि प्रामाण्यम् –

२६८ प्रमाणाना मायामयत्वेऽप्यद्वैतवाक्याना ब्रह्मणि मानत्व मित्युपसहारमुपश्रुत्य पूर्ववादिना –

(१) सिद्धे तत्त्वे मानभावो न युक्तो
वेदान्ताना तत्र सङ्गत्ययोगात् ।
तत्सवित्तिर्वृद्धचेष्टैकलिङ्गा
कार्ये सा चेत्याह कश्चिद् विपश्चित् ॥ न्या म १७५

इति शङ्कामुद्भाव्य तत्परिहारत्वेन

(a) विवादपदानि न कार्यान्वितस्वार्थनियतसामर्थ्यानि । पदत्वात् । कार्यपदवत्, (b) यद्वा कार्यं न समस्तपदसामर्थ्यप्रतियोगि । अन्वयातिरिक्तत्वात्, उभयवाद्यविवादास्पदपदार्थान्तरवत् ॥ न्या म १६८

इति प्रयोगद्वयोपन्यास, आत्मा ज्ञातव्य इति प्रतिपत्तिविधानमाशङ्क्य तन्निराकरणपूर्वक 'ज्ञातव्य' इत्यादिपदानामर्हार्थतयैव नयनम् (न्या म १७२) सिद्धे सगतिग्रहस्थापनप्रयास, तत पर

(२) इति विगलितदोषो मानभाव श्रुतीना
निरतिशयसुखात्मन्यद्वितीये प्रकाशे ।
न तु परमतकार्ये वेदलेशोऽपि मात्व
भजत इति वदामस्तत्र सगत्ययोगात् ॥ न्या म १७९

इति प्रतिज्ञाय कार्ये सगतियोगविनिवारणम्, पर्यवसाने च

(३) वेद सिद्ध एवार्थे प्रमाणम् । प्रमाणत्वात् प्रत्यक्षवत् ॥
न्या म २५६

इति प्रयोगोपन्यास,

(४) इति गलितकलङ्के सिद्धतत्त्वे प्रसिद्धे
सविधिकपदराशेमानभाव प्रमाणात् ।
प्रतिहतपरयुक्तिव्रातनीतप्रपञ्चात्
किमु विगलितभेदे पुसि वेदान्तवाच ॥ न्या म २५७

इत्युपसहारश्च न विस्तरेण परिशीलयितव्य ॥

अत्र समन्वयाधिकरणे भाष्योदाहृताना 'तदेतद् ब्रह्मापूर्वमनपर मनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभू ' (बृ २–५–१९) इत्येवञ्जातीयकाना निषेधरूपश्रुतिवाक्याना ब्रह्मणि कया प्रणाड्या समन्वय इति न प्रामुख्येन विचारितम् । न च केवल सिद्धे ज्ञानगतिर्नहामिन्यज्ञग।भनेन –तादृशवाक्यसमन्वय साध्यते, न च तत्साधनेन विना वेदान्तप्रमाणकत्व ब्रह्मण सिध्यतीति स्पष्टम् ॥

## वेदान्तानामखण्डार्थता –

२६९ 'विज्ञानमानन्द ब्रह्म', 'तत्त्वमसि'–इत्यादिवाक्याना-मद्वैतार्थनिष्ठत्व न युक्तिमत्, तद्गतशब्दानामैकार्थ्यानुपपत्ते । तथा हि सति शब्दाना पर्यायतया सहप्रयोगो न स्यात् । न च विज्ञानानन्दसच्छब्दा विवरणोक्तरीत्या (प वि १६१) परापरसामान्यवाचित्वात् सामानाधिकरण्याच्च स्वसामान्यविधानमुखेनैकामानन्दव्यक्तिम् अपरसामान्य-व्यञ्जिका ब्रह्मत्वेन लक्षयन्तीति युक्तम् । यस्मात् एकेनैव पदेन लक्षितार्थ-स्तस्यैव पदान्तरेण लक्षणाया पदान्तराध्ययनम् अनर्थकमापद्येत – इति पूर्वपक्षमादाय –

(१) लक्ष्यार्थभेदाभावेऽपि व्यवच्छेद्यविभेदत ।
विज्ञानानन्दपदयो पर्यायव्यर्थता कुत ॥ न्या म २६०

इति समाधानमुक्तम् । तत्र दृष्टान्तत्वेन 'प्रकृष्ट प्रकाशश्चन्द्र ' इति वाक्यमुदाहृत्य लिखितम् –

(२) अप्रकृष्टखद्योतादिव्यवच्छेदेन प्रकृष्टपदस्य अप्रकाशसम्तमसादिव्यवच्छेदेन, प्रकाशपदस्य च प्रवर्तमानस्य न वैयर्थ्यं नाप्यखण्डार्थताभाव । चन्द्रप्रातिपादिकार्थमात्रप्रतिपादनाय पदप्रयोगात् ॥ न्या म २६२

इति । प्रयोगश्चोपन्यस्त –

(३) विज्ञानानन्दादिवाक्यम् अखण्डार्थपरम् । लक्षणवाक्यत्वात् । यदित्थ तत्तथा प्रकृष्टप्रकाशश्चन्द्र इति वाक्यम्, यथा वा पृथुबुध्नोदराकार कुम्भ इति ॥ न्या म २६३

इति । आचार्यवाचस्पतिमिश्रानुसारेण च –

अणुमतुबिनिसमासविरोधाणा सन्निहितविशेषाभिधायित्वात् 'वैश्वदेव्यामिक्षा', 'दण्डी', 'कमण्डलुमान्' – न्या म २६४

इत्यादीनामप्यखण्डार्थत्वमुक्तम् । तदेतद् व्याख्यानप्रस्थानम् भाष्यप्रस्थानेन (बृ भा ३–९–७, तै भा १–१) सह तुलयितव्यम् । यद्यपि तैत्तिरीये

(क) ज्ञानशब्देन तल्लक्ष्यते न तूच्यते । शब्दप्रवृत्तिहेतुजात्यादिधर्मरहितत्वात् । तथा सत्यशब्देनापि । सर्वविशेषप्रत्यस्तमितस्वरूपत्वात् ब्रह्मणो बाह्यसत्तासामान्यविषयेण सत्यशब्देन लक्ष्यते 'सत्य ब्रह्म' इति, न तु सत्यशब्दवाच्यमेव ब्रह्म ॥ तै भा २–१, पा २८५

इति, तथापि लक्षणावृत्त्या ब्रह्मणो शब्दबोध्यत्वे न भाष्यस्य निर्भर इति भाति,

(ख) एव सत्यादिशब्दा इतरेतरसन्निधानात्, अन्योन्यनियम्य-नियामका सन्त सत्यादिशब्दवाच्यात् तन्निवर्तका, ब्रह्मणो लक्षणार्थाश्च भवन्ति । अत सिद्ध 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह', 'अनिरुक्तेऽनिलयने' इति, चावाच्यत्वम्, नीलोत्पलवद्वाक्यार्थत्व च ब्रह्मण ॥ तै भा १–१, पा २८५

इति वाक्यशेषाभिप्रायश्च निर्ज्ञातव्यो ब्रह्मणोऽपदार्थत्वमवाक्यार्थत्व चाङ्गीकुर्वाणैरिति विज्ञप्तिरस्माकम् ॥

(४) एव च 'तत्त्वमसि' इत्यपि जीवब्रह्मतादात्म्यबोधपर वाक्यम् अखण्डार्थनिष्ठमेव, 'सोऽय देवदत्त' इति वाक्यम् । तत्र हि सोऽयम् इत्यवच्छिन्नरूपद्वयोपलक्षित प्रत्यभिज्ञागोचरभावमाचरति । प्रत्यभिज्ञात चार्थं परस्मै विशिष्टाभिधायिपदाभ्या स्वार्थैकदेशपरित्यागेनैकदेशलक्षणया प्रतिपादयति । तथा च तत्त्वमसिवाक्येऽपि तत्त्वपदार्थयोर्विरुद्धांशपरिहाराय जहदजहल्लक्षणया जीवपरमात्मतादात्म्यपर्यवसायो नानुपपन्न । तथा च प्रयोग । तत्त्वमसिवाक्यम् अखण्डार्थनिष्ठम्, अकार्यकारणद्रव्यवर्तित्वे सति समानाधिकरणत्वात्, 'सोऽय देवदत्त इति वाक्यवद् इति ॥

न्या म २६७-२६९

अत्र गुणगुणिभाव–कार्यकारणभाव–जातिव्यक्तिलक्षणसामानाधिकरण्यव्यवच्छेदार्थं आत्मा द्रव्यमित्यङ्गीकुर्वाणान् प्रत्येव द्रव्यवर्तित्व विशेषणादानेन प्रयोगोऽयमिति स्पष्टम् । न हि वेदान्तिभिरात्मा द्रव्यत्वेनाभिमत । एव च लौकिकेषु प्रकृष्टप्रकाशादिवाक्येषु प्रातिपदिकार्थमात्रनिष्ठत्वप्रयोगोऽस्ति, सोऽयम् इत्यादिवाक्येषु लक्षणया एकत्वमप्यभिधीयते इत्येतावन्मात्रोपपादने यदि तात्पर्यम्, तर्हि न कोऽपि दोष । यदि पुन सत्य ज्ञानमित्यादिवाक्येषु तत्त्वमसीति वाक्येष्वप्युक्त लक्षणाखण्डार्थनिष्ठत्वमस्तीत्यत्राभिनिवेश, तर्हि न युक्तोऽसौ इति ब्रूम । न हि श्रुतिरपि प्रमातृप्रमाणादिव्यापारम् अभिधानाभिधेयलक्षण वाक्यधर्म चाङ्गीकृत्य आत्मान विज्ञापयतीति युक्तिमद्भवेत् । अप्रमेय त्वात्, अपरार्थत्वादवाक्यार्थत्वाच्चात्मन । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुते – इत्यवधेयम् ॥

## मोक्षस्वरूपनिर्णयः –

२७० अस्मिन् विभागे विज्ञानवादिशून्यवादिजैनवैष्णवकापालिकसाङ्ख्यमतेन मोक्षलक्षणमुपन्यस्य तन्निराकरणपूर्वकम् –

(१) **नित्यनिरतिशयसुखाभिव्यक्तिर्वि शेषदु खोच्छेदलक्षणमाचार्या, स पुनरविद्यास्तमय एवेति ॥ न्या म २७१**

इति ब्रह्मसिद्धिमतमेव सिद्धान्तत्वेनाश्रितम्, विशदीकृतश्च तदभिप्राय –

(२) एकमेव खल्वपराधीनप्रकाशानातिशयानन्दरूपम् अनाद्यविद्यावशेन अद्वितीयमपि सद्वितीयमिव सांसारिकधर्मकलुषितमिव च जीवव्यपदेशं ब्रह्मावभासते । तथा च अनादिरविद्यैव संसार, निखिलविकल्पातीतपरिशुद्धपरमात्मविद्योदयाधीन, तदस्तमय एव मोक्ष इति ॥
न्या म २८८

(३) विद्याविद्ययोर्हि विरोध सुप्रसिद्ध । शुक्तिशकलादौ चिरनिरूढामपि हि समाम्नामविद्या तत्र तत्त्वविद्या उच्छिनत्ति । सर्वस्य चास्य द्वैतावभासस्य अविद्यामयत्वम् अधस्तादापादितम् । अतश्चायमपि तत्त्वविद्या विनिवर्तनीय इति युक्तम् । तत्त्व च अद्वैतात्मरूपमेव इत्यनेकागमपर्यालोचनो निरणायि । तथा च अद्वैतात्मविद्यावशादेव अशेषाविद्याविनिवृत्तिर्नि श्रेयसमिति चतुरस्रम् ॥ न्या म २८९

इति च । तत्र चाक्षेपान् विस्तरशोऽनूद्य परिहृत्य च पुनरप्युपसंहृतम् –

(४) तस्मात्, अखिलसंसारमूलाविद्यायास्तत्त्वसाक्षात्कारतो नि शेषविनिवृत्तिर्मुक्तिरिति सकलमपि पुष्कलम् ॥ न्या म ३०८

इति । तत्र प्रायशो मण्डनप्रस्थानस्यैव पुन पठन दृश्यत इति न विशेषतो वक्तव्यमस्ति ॥

## अविद्याश्रयः –

२७१ अविद्याश्रयविचारे विविधाक्षेपान् आनीय तत्परिहारपूर्वकमुक्तम् –

(१) नाविद्यायाश्चित्प्रकाशाश्रयताविरोध, नापि तदाश्रयत्वे तस्या अनिवृत्ति, न च तन्निवर्तकस्य निवर्तकान्तर चिन्तनीयम्–इत्यशेषमति सुन्दरम् ॥ न्या म ३२२

(२) यदपि जीवानामविद्याश्रयत्वानुपपत्तिरिति प्रपञ्चितम्, तदिष्टमेव चेष्टितमस्माकम् आयुष्मता – इति परितोषमेव भजामहे । वय हि ब्रह्मतत्त्वमेवैकम् अविद्याधिकरणमभ्युपगच्छाम । प्रतिषिद्धश्च पक्षेऽस्मिन् प्रागुक्तो दोषः ॥ न्या म ३२३

**(३) यत्पुन 'सर्वज्ञस्य ब्रह्मण कथमविद्याश्रयत्वम्, अविद्यावान् सर्वज्ञ – इति विप्रतिषेधात्' इति। तत्राविद्यावत्तयैव सर्वज्ञत्वमिति ब्रूम। सर्वं हि यो जानाति स सर्वज्ञ। तिस्रश्चात्र विधा सभवन्ति। प्रमाणतो वा सर्वं जानीयात्, भ्रान्त्या वा, स्वभावसिद्धया वा प्रज्ञया। न तावत् प्रामाणिको भेद इत्युक्तम्। न च भ्रान्तिरनविद्यस्य – इत्यपि। स्वरूप प्रज्ञयापि नान्तरेणाविद्याम् अशेषार्थसगति। असङ्गत्वात्। 'असङ्गो ह्यय पुरुष' इति च श्रुति। न चान्तरेणाविद्या अस्ति सबन्ध – इत्युपपादितम्। अत सर्वज्ञतापि अविद्यावत्ताम् आक्षिपत्येव परमात्मन, न प्रतिक्षिपति ॥**

**न्या म ३२३–३२४**

[सर्वस्याप्यवभासक ब्रह्म अविद्याया अप्यवभासकमेवेतीति विनापि ता सर्वज्ञत्व सूपपादम्। अत एवाविद्यामनाश्रित्यैव सर्वज्ञत्वमुपपादित **तैत्तिरीयभाष्ये** –

(क) सत्रभावाना च तेनाविभक्तदेशकालत्वात् कालाकाशादिकारणत्वाच्च निरतिशयसूक्ष्मत्वाच्च न तस्यान्यदविज्ञेय सूक्ष्म व्यवहित विप्रकृष्ट भूत भवद् भविष्यद् वा अस्ति। तस्मात् सर्वज्ञ तद् ब्रह्म। तै १–१, पा २८५ इति ॥

**सूत्रभाष्ये च** –

(ख) यस्य हि सर्वविषयावभासनक्षम ज्ञान नित्यमस्ति सोऽसर्वज्ञ इति विप्रतिषिद्धम् ॥ सू भा १–१–५, पा २७

(ग) यदप्युक्तम्, प्रागुत्पत्तेर्ब्रह्मण शरीरादिसबन्धमन्तरेण ईक्षितृत्व मनुपपन्नमिति, न तच्चोद्यमवतरति। सवितृप्रकाशवद् ब्रह्मणो ज्ञानस्वरूपनित्यत्वे ज्ञानसाधनापेक्षानुपपत्ते। अपि चाविद्यादिमत ससारिण शरीराद्यपेक्षा ज्ञानोत्पत्ति स्यात्। न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य (सू भा १–१–५, पा २७) इति च ॥]

**(४) यदपि 'ब्रह्मैव च स्वाविद्यया ससरति विद्यया च विमुच्यते' इति ब्रुवाणस्य न बन्धमुक्तिव्यवस्थोपपत्तिरिति। तदसत्। तस्यैव कथञ्चित् तदुपपत्ते। यावदविद्य हि सर्वा अपि व्यवस्था स्वप्नवदुपपद्यन्ते। विनिवृत्ताविद्ये तु ब्रह्मणि नेष्टैव काचिदपि व्यवस्था, नापि युक्ता ॥**

**न्या म ३२४–३२५**

[तदिदम् इष्टसिद्धिवाक्यमेव स्वेष्टसिद्धयर्थमुच्चरितम्। तस्मात् तद्विमर्शे नैवैतदपि विमृष्टम्। अत्रापि 'तदात्मानमेवावेत् (बृ) इति बृहदारण्यकभाष्यम् 'कस्य पुनरयमप्रबोध' इत्यादिसूत्रभाष्यवाक्य च पुन पठनीयम् ॥]

**(५) यत्पुनरुत्पन्नविद्यस्य गुरोर्मायाऽयोगात् शिष्यसगत्यनुपपत्तिरिति, तदप्यसत् । गुरोरपि शिष्याविद्याविनिर्मितत्वात् । यदपि तस्य कल्पितस्य जडत्वेन विद्यावत्तानुपपत्तौ गुरुत्वानुपपत्तिरिति । तदपि मन्दम् । स्वप्नवद् विद्यावत्तयैव तत्परिकल्पनोपपत्ते । 'यत्तु मदविद्याविनिर्मितस्त्व किं न स्या' इति । तत्र त्वदविद्यायास्तव च मद्गुरुत्वन्मदविद्याविजृम्भितत्वादिति ब्रूम ॥ न्या म २२६-२२७**

[अत्र सिद्धान्त्यपि प्रतिवादिन त्वदविद्या च, त्वम्, मद्गुरश्च मदविद्या-विजृम्भिता – इत्याहेत्यहो अविद्याविजृम्भणमहिमा ! गुरुशिष्यादिविकल्पस्य सत्रिसत्यत्वमुपदेशार्थत्वात् । अतो 'उपदेशादय वाद' (गौ का १-१८) इति कारिकानुसारेण नात्र शरणम् । अविद्याविषयकविवादस्य शान्तये नैष्कर्म्यसिद्धिश्लोकोऽय पठनीय –

> कुतोऽविद्येति चोद्य स्यान्नैव प्रश्नो ह्यनन्तरम् ।
> कालत्रयापरिच्छित्तेर्न चोर्ध्वं चोद्यसभव ॥ नै सि ३-११६ ]

**(६) (a) यश्चाय पर्यनुयोग किमनादौ प्रपञ्चपरम्परायाम् आसीत् कस्यचिन्मुक्ति, नो वा इति निरूपणीयम् । यद्याद्य कल्प, कथमधुना न ससारदर्शनम् ? आत्मान्तराभावात् । यद्युत्तर, कथ तर्हि भविष्यतीत्य प्याशा ? इति । तत्रोत्तरपक्षमङ्गीकुर्मो न प्राच्यम् । तेन नाद्यतनससारोप लम्भानुपपत्ति ॥ न्या म २३१-२३२**

**(b) यत्पुनरुत्तरस्मिन् कल्पे कथ तर्हि भविष्यतीत्यप्याशेति तत्र मोक्षशास्त्रप्रामाण्यादेवेति सतोष्टव्यम् ॥ न्या म २३४-२३५**

[अहो निराशावादस्य परा काष्ठा, यया 'तद्यो यो देवानाम्'(बृ ) इत्यादि श्रुतिरपि पृष्ठत क्रियते ! 'व्यवस्थाश्रुतयस्तु गवा सत्रासनश्रुतिवत् कथञ्चित् अर्थवादभावेनान्यपरा व्याख्येया' (न्या म २३५-२३६) इति दुष्कर प्रतिज्ञाप्याश्रीयते । 'स्वप्नवत् सर्वमुपपद्यते' इति स्वोक्तिरपि विस्मर्यते । अलमनया विडम्बनया । इयदेवात्र स्मर्तव्यम् – व्यवहारतो यस्य दृश्यते तस्यैवाविद्या विद्यया च तन्निवृत्तिरिति, परमार्थतस्तु 'न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' (गौ का २-३२) इत्यभियुक्तोक्तिरेव शरणीकरणीया नत्वाधुनिकाना व्याहतस्तर्कसपर्क इति ॥]

## मोक्षसाधनविचारः –

२७२ अत्र समुच्चयवादनिरसनपूर्वकं विद्यैव मोक्षसाधनमिति समर्थ्यते –

(१) न खलु शुक्तिशकलादिषु समुत्पन्नस्तत्त्वसाक्षात्कारो न निवर्तयत्यविद्याम्, निवर्तयन् वा सहकारि किञ्चिदपेक्षते । न चान्तरेण तत्त्वसाक्षात्कारं जातु कर्मणा तन्निवृत्तिः । एवं लोकानुसारतो ब्रह्मसाक्षात्कार एव तदविद्याव्यावृत्तिहेतुरिति साम्प्रतम् ॥ न्या. म. ३३६-३३७

[अत्राविद्याविषये साक्षात्कारविषये च यद् वक्तव्यं तत् पुरस्तादेवासकृदुक्तम् । विद्ययैवाविद्यानिवृत्तिरिति सर्वाद्वैतिसम्प्रतिपन्नमिति न तत्र वक्तव्यमस्ति ॥ ]

## अविद्यानिवृत्तिः–

२७३ 'अविद्यास्तमयो मोक्षः' इत्यत्र सोऽस्तमयः 'किं सत्यः, मिथ्या वा?' इति विकल्प्य उभयथापि दोषमुद्भाव्य 'कथमविद्याव्यावृत्तिर्मोक्षः?' इत्याक्षिप्ते, **इष्टसिद्ध्यनुसारेणैव**

(१) न सन्नासन्नासदसन्नानिर्वाच्योऽपि तत्क्षयः ।
यक्षानुरूपो हि बलिरित्याचार्या व्यचीचरन् ॥ पा. ३५५

(२) यथा खलु शुक्तिशकलादेः स्वरूपे प्रसिद्धे प्रकारान्तरानिरूपणाच्च परिशेषतोऽनिर्वाच्यता, तथा अविद्याव्यावृत्तिरपि प्रसिद्धिपरिशेषाभ्यां प्रकारान्तरशालिनीति युक्तम् ॥ न्या. म. ३५५-३५६

इति पञ्चमप्रकारत्वं व्यावृत्तेरङ्गीकृतम् ॥

(३) अपरे केचित् परिहारालोचनकातरान्तःकरणाः परमात्मैवाविद्यानिवृत्तिरित्याहुः । उदाहरन्ति च आचार्यवचनम् 'आत्मैवाज्ञानहानिर्वा' इति । न तेषां प्रागुक्तदोषान्निर्मोक्षः । न चात्मैवाज्ञानहानिर्वा – इति वैदिकवचनम्, येन तन्मात्रादर्थसिद्धिः । अनास्थावादस्तु अयम्, आचार्यस्यापि स्खलितमेव वा, को दोषः? न्या. म. ३५६-३५७

[ 'अविद्याया नित्यनिवृत्तिः, आत्मनो वा सादिता' इति प्रागुक्तदोष इत्यर्थः । एतदसत् । आत्मनो नित्यनिवृत्ताविद्यात्वेऽपि अनिवृत्त्यारोपनिवारणार्थत्वाद् विद्यायाः – इत्याचार्यपक्षावलम्बिनामुत्तरसद्भावात् । विद्याविद्ययोरपि हि अध्यारोपदृष्ट्यैवाभ्युपगम इति ॥ ]

(४) अपरे पुनराहुः – अस्तु नामानिर्वाच्यता अविद्यानिवृत्तेः, का नो हानिः? न चानिर्वाच्याया निवृत्तौ अनिवृत्तिरेव तात्त्विकी स्यात्,

आत्मवदिति साम्प्रतम् । आत्मनोऽप्यनिवृत्ते सत्त्वोपाधिकत्वात् । अत एवोक्तम् – मिथ्याभावेन भूतं किं मिथ्यानाशान्न नङ्क्ष्यति ' इति । तदेव सदसद्वैलक्षण्येऽपि अनिर्वाच्यलक्षणे न काचनानुपपत्तिः । यदा तु बाध्यतैवानिर्वाच्यलक्षणम् इति स्थितिः, तदा अनिर्वाच्यविलक्षणैव । अविद्यानिवृत्तेरबाध्यत्वात्, न चैवमनिर्वाच्यलक्षणमपि अतिव्यापकम् इति सकलमनाविलम् ॥ न्या म ३५९

[अत्रेष्टसिद्धिरीत्यैव केवलतर्कानुसरणेन–अभावस्य नानाप्रकारत्वं विकल्पयता तार्किकाणां रीतिमेवानुसृत्य–अविद्यानिवृत्तिरपि विविधं विकल्पितेति स्पष्टम् । अविद्यानिवृत्तिः किं सती, किं वा असती, उत सदसती, आहोस्वित् सदसद्विलक्षणा ? – इति विकल्पनं हि लक्षणप्रमाणाभ्यां विना न वस्तुसिद्धिरित्यभ्युपगच्छतामेव शोभते । न त्वनुभवानुसारेण वस्तुनि निर्मिमित्सतामिति ॥ ]

## उपसंहारः–

२७४ यावता न्यायमकरन्दः प्राणायि, तावता कालेन प्रायशो भामतीष्टसिद्धिविवरणप्रस्थानानुयायिनाम् अद्वैतिनाम् अन्तःकलहौत्सुक्यं शैथिल्यमगमत् । अद्वैतसिद्धान्तप्रदर्शनप्रक्रियानिर्धारणापेक्षयापि परवादिकृताक्षेपपरिहारोऽभ्यर्हित इति कृत्वा द्वैतमिथ्यात्वाविद्यासतत्त्वादीनाम् अनुमानेनैव साधनमावश्यकं प्रथमतस्तर्कप्रधानानां द्वैत्याक्षेपाणां प्रशमं नायेति मतिः प्रादुर्बभूव ग्रन्थप्रणेतृषु । पूर्वमीमांसमनन्यायानुसारेण वाक्यार्थनिर्णयेनैव केवलं वेदान्तसिद्धान्तः प्रतिष्ठां गच्छेत्, तार्किकविचारसरण्यनुसरणेन लक्षणप्रमाणचिन्तैवालं वस्तुसिद्ध्यै–इत्यभिप्रायोऽपि प्राशस्त्यमलभत । तस्यास्य विचारपरिवर्तनस्य परिणामः कीदृशः कियान् प्रचोदको बभूव वेदान्तप्रधानप्रक्रियाविस्मरणे–इत्येतत् पाठका अचिरादेव द्रष्टार इति प्रकृतानन्दबोधपरीक्षाम् एतावतैव परिसमाप्य विरमामः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिचयप्राप्तवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्यसच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीतायां वेदान्तप्रक्रियाप्रत्यभिज्ञायां

**न्यायमकरन्दप्रस्थानपरीक्षा नाम त्रयोदशं काण्डम्**

# १४. खण्डनप्रस्थानपरीक्षा

**प्रक्रियासंबन्धः–**

२७५ उक्तमेतदधस्ताद् यदानन्दबोधाचार्यादारभ्य वेदान्तिन प्रायशस्तर्करसिका एव सवृत्ता इति । तत्र यद्यपि समानमिद तर्कशरणत्वम् आनन्दबोधस्य श्रीहर्षस्य च, तथापि वैलक्षण्यमेतत् तयोर्यत् पूर्वस्तावत् तार्किकोत्प्रेक्षितानि कुचोद्यानि भूयशोऽनुमानप्रयोगेणैव परिहर्तुं व्यवसित, परस्तु तर्कमतखण्डने एव व्यग्रोऽभूत्, तदर्थं च नूतामेव काञ्चित् प्रक्रिया स्वोपज्ञामाश्रिनवानिति । "श्रुतिप्रामाण्य सिद्धार्थप्रामाण्य च **ईश्वराभिसंधौ** साधयिष्यते' (ख ३६) इति लिखता, आनन्दबोधवदेव अनेनापि ग्रन्थ कारेण श्रुते सिद्धार्थेऽपि शब्दसगत्युररीकरणेन श्रुतिप्रामाण्य प्रसाधित मित्युन्नीयते । नोपलभ्यते तु तद् ग्रन्थान्तर येन निश्चिनुयाम यदनुभवोऽ प्याद्रियते स तत्र प्रामाण्यसिद्धये इति ॥

**श्रीहर्षसंस्तवः–**

२७६ रत्नावल्यादिनाटिकाकर्तुरन्य एवाय श्रीहर्ष इति बहूना ग्रन्थपुरावृत्तशोधकाना मतम् । नैषधचरितकर्तैव खण्डनखण्डखाद्यनिर्माता इत्यत्र तु न काचन सशीति । **नैषधचरिते** 'खण्डनखण्डतोऽपि सहजे' (नै ६ अन्तिमे श्लोके) इति, खण्डनखण्डखाद्ये च 'यथा च परिहृत चापलम् आत्मतत्त्वामृतसरसि निमज्ज्य रज्यति निरायासमेव मानसम्, तथाहमकथय नैषधचरितस्य परमपुरुषस्तुतौ सर्गे' (ख ६०) इति चान्योन्यस्मिन् ग्रन्थे अन्योन्यस्य परामर्शदर्शनात् । यद्यपि नैषधचरितमनेकै पठितमस्मिन् देशे, तथापि खण्डनग्रन्थे कृतपरिश्रमा विरला एव । एतच्च न केवल तर्कशास्त्रप्रमेयखण्डनपरत्वात्, शास्त्रान्तरग्रन्थाना नैकेषा परिचयमपेक्षते खण्डनम् इति हेतो, कि तर्हि, अत्र समादृतशैल्या अतिक्लिष्टत्वादपि । आह चाय ग्रन्थकृत् स्वयमेव –

(१) 'ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया' (ख ४१९) ॥

इति । श्रीहर्षजीवनचरितविषये नैषधे इद लिखितमस्ति स्वय कविना –

(२) श्रीहर्ष कविराजराजिमुकुटालङ्कारहीर सुत
श्रीहीर सुषुवे जितेन्द्रियचय मामल्लदेवी च यम् ।
तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्गया महा-
काव्ये चारुणि नैषधीयचरिते सर्गोऽयमाद्यो गत ॥ नै

इति । खण्डने चेद पद्य दृश्यते –

(३) ताम्बूलद्वयमासन च लभते य कान्यकुब्जेश्वरात्
य साक्षात्कुरुते समाधिषु परब्रह्मप्रमोदार्णवम् ।
यत्काव्य मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तय
श्रीश्रीहर्षकवे कृति कृतिमुदे तस्याभ्युदीयादियम् ॥
ख ४२०

इति । अत्र केवल खण्डनग्रन्थाधारेणैवास्य प्रस्थान विमृश्यते ॥

## ग्रन्थविषयविभागः –

२७७ खण्डखाद्य नाम वैद्यकग्रन्थेषु प्रसिद्ध कश्चन पाक-विशेष । अयमपि ग्रन्थ परमतखण्डनेन परमानन्दास्वादनयोग्यतासपादक इत्यभिप्रायेणाय खण्डखाद्यमित्यभिधानेनालङ्कृतोऽस्ति । सदसद्भ्यामनिर्वचनीयाया मायाया कार्यत्वात् सर्वमप्यनिर्वचनीयम्–इत्येतावतैव कथनेनातृप्यन्नय श्रीहर्ष 'निर्वचनाशक्यत्वमनिर्वचनीयत्वम्' इत्यभिप्रायमास्थाय ग्रन्थादावेव प्रतिज्ञातवान् –

(१) शब्दार्थनिर्वचनखण्डनया नयन्त
सर्वत्र निर्वचनभावमखर्वगर्वान् ।
धीरा यथोक्तमपि कीरवदेतदुक्त्वा
लोकेषु दिग्विजयकौतुकमातनुध्वम् ॥ ख २

ग्रन्थोऽय–भूमिका, खण्डनभागश्चेति द्वेधा विभाज्योऽस्ति । अत्र भूमिकैव विशेषत परिशील्यते । तत्र भूमिकायाम् (१) प्रमाणादिसत्त्व-

मभ्युपगम्यैव वादिप्रतिवादिभ्या कथा प्रवर्तनीया – इति नियमस्य खण्डन कृतम् । अनन्तर स्वप्रकाशत्व ब्रह्मण प्रसाध्य, तदनन्तर प्रत्यक्षमात्रगम्यो भेदो न श्रौताद्वैतबाधक इत्युपपादितम् । द्वितीयस्मिस्तु भागे षोडश पदार्थानामप्यनिर्वचनीयत्व व्यवस्थापितम् ॥

## कथकाभ्या प्रमाणादिसत्ता प्रथममेवाङ्गीकार्येति नियमो नास्ति –

२७८ प्रप्रथम कथाया प्रमाणसत्यनाङ्गीकारावश्यकता नियम इत्थ खण्डितोऽत्र –

(१) प्रमाणादीना सत्त्व यदभ्युपेय कथकेन, तत् कस्य हेतो ? किं तदनभ्युगच्छद्भ्या वादिप्रतिवादिभ्या तदभ्युपगमसाहित्यनियतस्य वाग्व्यवहारस्य प्रवर्तयितुमशक्यत्वात्, उत कथकाभ्या प्रवर्तनीयवाग्व्यवहार प्रतिहेतुत्वात्, उत लोकसिद्धत्वात्, अथवा तदनभ्युपगमस्य तत्त्वनिर्णय विजयफलातिप्रसञ्जकत्वात् ?

(a) न तावदाद्य । तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादे र्वाग्विस्तराणा प्रतीयमानत्वात् । तस्यैव वा अनिष्पत्तौ भवतस्तन्निरास प्रयासानुपपत्ते । सोऽयमपूर्वो वाक्स्तम्भनमन्त्रो भवताभ्यूहित, नून यस्य प्रभावाद् भगवता सुरगुरुणा लोकायतकानि सूत्राणि न प्रणीतानि, तथागतेन वा मध्यमागमा नोपदिष्टा, भगवत्पादेन वा बादरायणीयेषु सूत्रेषु भाष्य नाभाषि ॥ ख २-३

(b) नापि द्वितीय । तथा हि स्यादप्येव यदि कथकप्रवर्तनीय वाग्व्यवहार प्रति प्रमाणादीना हेतुता तत्सत्त्वानभ्युपगमे निवर्तेत । न त्वेव सभवति । तथा सति तत्सत्त्वानभ्युपगन्तॄणा वाग्व्यवहारस्वरूपमेव न निष्पद्येत । हेत्वनुपपत्ते । उक्तश्चायमर्थो यन्माध्यमिकादिवाग्व्यवहाराणा स्वरूपापलापो न शक्यत इति ॥ ख ६

(c) नापि तृतीय । लोकव्यवहारो हि प्रमाणलोकव्यवहारो वा स्यात्, पामरादिसाधारणव्यवहारो वा ? नाद्य । विचारप्रवृत्तिमन्तरेण तस्य दुर्निरूपत्वात् । तदर्थमेव पूर्वं नियमस्य गवेषणात् । नापि द्वितीय । शरीरात्मत्वादीनामपि तथा सति भवता स्वीकर्तव्यत्वापातात् । पश्चात्

तद्विचारबाध्यतया नाभ्युपेयत इति चेत्, तर्हि प्रमाणादयोऽपि यदि विचारबाध्या भविष्यन्ति तदानभ्युपेया एव, अन्यथा तूपगन्तव्या इति लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यत इति तावन्न भवति ॥ ख ८

(d) नापि चतुर्थं । यादृशो भवता प्रमाणादीन्यभ्युपगम्य व्यवहार नियम कथायाम् आलम्ब्यते, तस्यैव प्रमाणादिसत्त्वासत्त्वानुसरणोदासीनै रस्माभिरप्यवलम्बनात् । तस्य यदि मा प्रति फलातिप्रसञ्जकत्व, तदा त्वा प्रत्यपि समान प्रसङ्ग ॥ ख ८

यथोक्तप्रकारेण प्रमाणसत्त्वाङ्गीकारनियम दूषयित्वा अन्ते लिखितम्–

(२) कतिपयप्रतिपत्तृकतिपयकालतथात्वावगमादेव प्रायेण लौकिको व्यवहार प्रतीयते, तादृशश्चाय सत्त्वावगम कथाङ्गम् । एतत् तदुच्यते 'व्यावहारिकी प्रमाणादिसत्ताम् आदाय विचारारम्भ ' इति । तस्मात्, यादृग्व्यवहारनियम कृत, तन्मर्यादा अनेन नोल्लङ्घिता इति यद्वादिव्यवहारे मध्यस्थावगम, स विजयते, यस्य तु वचसि नैव तस्यावगम, तस्य पराजय । यत्र वाद्युक्तनिग्रहसत्त्वावगम स निगृहीत, तदितरस्तु न तथा–इत्यादिनियम एव कथारम्भाय ग्राह्य ॥ ख १०–११

इति । नियमानुल्लङ्घन तदुल्लङ्घन वा मध्यस्थेन निर्णीत जयपराजयनियामक न तु प्रमाणादिसत्तानभ्युपगमस्तदभ्युपगमो वा – इत्येतावान् यथोक्तस्य सार । प्रमाणानामेव यत्र कथाया सत्त्वमसत्त्व च विनिर्णेयत्वेत धृतम्, तत्र तत्सत्त्वासत्त्वाङ्गीकारौदासीन्येनैव कथा प्रवर्तयितव्येति स्पष्टमेव । अत एव शाङ्करभाष्ये सर्वप्रमाणप्रमेयव्यवहाराणामविद्यापुर सरत्व प्रतिज्ञाय –

(क) 'कथ पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ? उच्यते – देहेन्द्रियादिष्वहममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्ते '

इति भाष्ये अर्थापत्तिप्रमाणमुदाहृतमिति मन्यमाना प्रमाणवृत्तानभिज्ञा इति स्पष्टम् । न हि प्रमाणमविकृत्यैव यत्र विचार, तत्र प्रमाणोदाहरण

युक्तिमद् भवेदिति । एव सर्वप्रमाणानामध्यासपूर्वकत्वमभ्युपगन्तॄणा अध्यासमद्भावेऽपि प्रमाणोपन्यसन नोचितमिति स्पष्टम् । प्रमाणप्रमेयादि-सर्वव्यवहाराणाम् अविद्यापुरसरत्वोपपादने प्रमाणादिसत्त्वाभ्युपगमपूर्वक विचार कर्तव्य इति निर्बन्धो निरर्थक इत्यपि सेत्स्यति । अत्र तु प्रमाणादिनिराकरणस्यैव समुद्दिष्टत्वात् युक्तिभिरेव नियमनिरासे प्रयतित मिति स्पष्टम् ॥

## शून्यवादिनोऽपि कथायां प्रवेशाधिकारः-

२७९ प्रमाणादिसत्ता कथकाभ्यामवश्यमभ्युपेया – इति नियमो नास्ति, चार्वाकमाध्यमिकभगवत्पादीयाना विनापि तन्नियमाभ्युपगम स्वस्वमतानुसारेण स्वसिद्धान्तप्रतिपादने निष्प्रत्यूह प्रवृत्तिदर्शनात् – इत्युक्तम् । तत्र शून्यवादिमतेन प्रमाणादिसत्तामनभ्युपगम्यैव कथा शक्य प्रारम्भा इत्येतद्दर्शयितु शून्यवादिमत प्रदर्श्यते–

(१) अनेन नियमेन वक्तव्यम् – इत्यस्यायमर्थ । 'अनेन नियमेनोक्तमनेन' इति मध्यस्थावगमस्य विषयीभवितव्यमिति । न च वाच्यम् अन्ततस्तदवगमस्यापि सत्ता अभ्युपेयेति । तस्यापि सत्ताचिन्तायां तत्सत्ता वगमान्तरस्यैव शरणत्वात् । न चैवम् अनवस्था । तदनुसरणावश्यभावा नङ्गीकारात् । 'एव त्रिचतुरज्ञानजन्मनो नाधिका मति' (श्लो वा १ ६१) इति न्यायात् । न चान्तिमासत्त्वे पूर्वप्रवाहासत्त्वापत्ति । तथा च, अवगम मादायापि व्यवहरतो न निस्तार इति वाच्यम् । अस्तु, एव हि । तथापि त्रिचतुरज्ञानकक्षागवेषणमात्रविश्रान्तेन विचारेण तत परम् अननुसरण रमणीयेनैव च समयं बद्ध्वा कथाया मिथ सप्रतिपत्त्या प्रवर्तनात् । अन्यथा प्रमाणादिसत्त्वाभ्युपगमेऽपि ज्ञानानवस्थाया दुष्परिहरत्वात् ॥
ख ११–१२

(२) यथा च त्वत्पक्षे स्वरूपसत्त्वाविशेषेऽपि विज्ञानस्वरूपसत्त्वैव पर व्यवहारोपपादिका न घटादिसत्ता, एवमेव असत्त्वाविशेषेऽपि ज्ञानमेवासत् व्यवहारोपपादक नान्यत् । 'असच्च उपपादक च इति व्याहतम्' इति चेत्, न । सत् उपपादकमिति कुतो न व्याहतम्? न हि सत् उपपादकम्, असत्र – इति क्वचिदावयो सिद्धम् ॥ ख १२–१३

असत् कार्यकर कथम् ?– इत्यत्र खण्डनोत्तर त्विदम् –

(३) पूर्वसबन्धनियमे हेतुत्वे तुल्य एव नौ ।
हेतुतत्त्वबहिर्भूतसत्वासत्त्वकथा वृथा ॥ ख १८

असतोऽपि सवृतिसत्त्वाङ्गीकार शून्यवादिन । तत्राक्षेपपरिहारौ खण्डनकारस्य –

(४) असती सा न विशेषिका, सती सा नेष्टा – इत्यभिसधानेन सवृतिरपि सती नैव – इति पृच्छन् प्रतिवक्तव्य । विज्ञान तावत् व्यवहारोपपादकतया द्वाभ्यामप्यनुमतम् । तस्यापि जिज्ञासाया त्रिचतुरकक्षाविश्रान्तगवेषणस्य यदि सत्ता उपपन्ना भविष्यति, तदा सता तेन इदमुपपादित भविष्यति, अथ असत्ता तस्य पर्यवसास्यति, तदा असतैव तेन इदमुपपद्यत इति स्वीकर्तव्यम् । भ्रमविषयेणेव भ्रमे विशिष्टताव्यवहार ॥
ख १९–२०

शून्यवादिन कि कार्यकारणभावमभ्युपगम्य खण्डनोक्तप्रकारेण तदुपपादन कुर्वन्ति न वा – इत्येतदन्यत् । शून्यवादिनापि ज्ञानज्ञेययो रुभयोरप्यसत्त्वमभ्युपगच्छता 'प्रमाणादिसत्तामङ्गीकृत्यैव कथा प्रारब्धव्या' इतिनियम शक्यनिराकरण इत्येवाभिप्रायोऽत्रावसेय ॥

शून्यवादविचारानन्तर स्वप्रकाशविज्ञानवाद प्रतानितोऽत्र । ज्ञानस्य स्वयसिद्धत्वेनैव शून्यवादस्य सुनिराकरणत्व प्रतिज्ञात भाष्ये –

(क) न ह्यय सर्वप्रमाणप्रसिद्धो लोकव्यवहारोऽन्यत् तत्त्वम् अनधिगम्य शक्यतेऽपह्नोतुम् । अपवादाभावे उत्सर्गप्रसिद्धे ॥
सू भा २–२–३१, पा २५२

(ख) किञ्चिद् हि परमार्थमालम्ब्य अपरमार्थ प्रतिषिध्यते । यथा रज्ज्वादिषु सर्पादय । तच्च परिशिष्यमाणे कस्मिश्चिद् भावे अवकल्पते ॥
सू भा ३–२–२२, पा ३६४

इति च । अत शून्यवादस्य वेदान्तविचारणायामत्यन्तानपेक्षणेऽपि तत्र स्वीकृत वितण्डानुसरण परवादिमतप्रतिक्षेपणे उपयोक्ष्यत इति स्यात्, शून्यवादिनोऽपि प्रमाणाद्यसत्त्वाभ्युगन्तु कथाया प्रवेश उपपादितोऽत्र ॥

स्वप्रकाशविज्ञानवादः –

२८० विज्ञानस्य स्वप्रकाशत्वे सिद्धे एव सर्वो व्यवहार सिद्ध्यति । नान्यथा । तदेतद् ग्रन्थकार सर्वप्रथमम् आह –

(१) विज्ञान तावत् स्वप्रकाश स्वत एव सिद्धस्वरूपम् । न खलु विज्ञाने सति जिज्ञासोरपि कस्यचित् 'जानामि, न वा' इति सशय, 'न जानामि' इति वा विपर्यय, व्यतिरेकप्रमा वा । तेन जिज्ञासितस्य अतत्त्वज्ञानव्यतिरेकप्रमाणाभावात् अभावसमुदाय स्वव्यापक जिज्ञासितस्य प्रमितत्वम् आनयति । अन्यथा हि जिज्ञासितप्रमितत्वव्यतिरेकव्यापक जिज्ञासितव्यतिरेकोल्लेखिज्ञानम् अविज्ञातजिज्ञासस्य स्यात् । अत सर्वजन स्वात्मसवेदनसिद्धमेव अस्य बोधस्य स्वरूपम् ॥ ख २१

स्वानुभवानुभवैकविभागसाक्षित्वादेव सिद्धे विज्ञानस्वरूपस्यात्मन सप्रकाशत्वे जन्यज्ञानस्वरूपपरिशीलनेनापि तत् साधयितु प्रवृत्ति परवादि सतोषाय । अत एव विज्ञानस्वप्रकाशतानङ्गीकर्तृमते विविधान् दोषानुद्भाव्य स्वमते ते नावकाश लभन्ते इत्याह स ग्रन्थकृत् –

(२) न च तैर्दोषैर्नास्त्येव ज्ञानम् इत्यास्थेयम् । स्वत सर्वसिद्धस्य दुरपह्नवत्वात् । स्वप्रकाशाङ्गीकारादेव चानुभवस्य सर्वदोषहानेर्वक्ष्यमाणत्वात् । प्रकाशात्मसत्तामात्रस्यैव स्वत सिद्धिसभवे जडात्मना धर्माणा केषामपि तदन्तर्भावानुपपत्ति । अत एव धर्मोपग्रहप्रवर्तिष्णुवाग्व्यवहारा विषयत्वम् कालानवच्छेदमादाय च नित्यत्वोपचार । देशानवच्छेदमादाय विभुत्वव्यपदेश । प्रकारावच्छेदविरहनिबन्धनश्च सर्वात्मत्वाद्वैतादि व्यवहार ॥ ख २५

[इदमेव तु तर्कनिरपेक्षमनुभवात्मक स्वयसिद्धतत्त्वमाधारीकृत्य सर्वे प्रमाणप्रमेयादयो तर्काश्च स्वात्मान लभन्ते । अतोऽत्र तर्केण तत्सिद्धिप्रत्याशा न कर्तव्या । एव हि भाष्यकारा –

(क) नासौ नास्ति नाधिगम्यत इति शक्य वदितुम् 'स एष नेति-नेत्यात्मा' इत्यात्मशब्दात् । आत्मनश्च प्रत्याख्यातुमशक्यत्वात्, य एव निराकर्ता तस्यैवात्मत्वात् (सू भा १-१-४, पा २०) इति ॥ ]

**(३) सौगतप्राभाकरादिवद् भावे, नैयायिकवच्चाभावे, अभावानतिरकस्वीकारादेव चाद्वैताव्याघात । भ्रमविषयनिषेधवच्च प्रतियोगिन सर्वथैवासिद्ध्यापि न काचित् क्षति ॥ ख २५-२६**

[भावाभावादिविभाग प्रपञ्चान्तर्गतपदार्थविषयक, न तु सर्वाद्वैत-विकल्पास्पदे भावत्वमभावत्व वा, अभावप्रतियोगित्व तदनुयोगित्व वा शक्य कल्पनम् । निषेधश्रुतिस्तु सवप्रवृत्तिनिमित्तरहित ब्रह्म अस्पृष्ट्वैव तस्मिन्नध्यारोपित विकल्पमेव निवर्तयति । विविधविकल्पास्पदत्व ब्रह्मण इत्ययमपि विकल्प एव, सर्ववाक्प्रत्ययाविषयत्वात्-इति बोध्यम् । पश्यन्तु वार्तिककाराभिप्रायमप्यत्र ॥]

**(४) तदेतत्तु श्रुत्या प्रमाणेनोपलक्षणन्यायात् तात्पर्यत प्रकाश्यते। तेन परमार्थतोऽभिधानाभिधेयभावविरहे तात्पर्यत श्रुतिस्तस्मिन् अविद्या दशाया पराभ्युपगमरीत्या प्रमाणम् इत्युच्यते। वस्तुतस्तु स्वात्मसिद्धमेव चिद्रूपम् ॥ ख २६**

[परमात्मनो निर्विशेष रूप नोपलक्षणविधयापि प्रकाशयितु शक्यम् । लक्षणोपलक्षणप्रमाणानामपि तदधीनतयैव प्रकाशात् । शास्त्र तु प्रमाण न नैयायिकाद्यभ्युपगमरीत्या कि तु भगवत्पादोक्तविधया –

(क) शास्त्र तु, अन्त्य प्रमाणम् अतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन प्रामाण्यमात्मन प्रतिपद्यते न त्वज्ञातार्थज्ञापकत्वेन । तथा च श्रुति – ‘यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तर’ इति ॥ गी भा २-१८, पा १६

(ख) प्रमातृत्व हि आत्मनो निवर्तयत्यन्त्य प्रमाणम् । निवर्तयदेव च अप्रमाणीभवति स्वप्नकालप्रमाणमिव प्रबोधे ॥ गी भा २-६९, पा ३९ ]

**(५) न चैव घटतज्ज्ञानयोर्यादृग् विषयविषयिभाव, ततो मात्रयापि स्वप्रकाशे विषयविषयिभावान्यत्वे बाध्यतैकत्र स्यात् । अस्त्येव ह्यविद्याविद्यमाने घटतज्ज्ञाने बाध्यत्वम् । परमार्थसति तु स्वप्रकाशे पारमार्थिकत्वमिति द्वयोरननुगमेऽपि न दोष ॥ ख २९**

[यद्यय विषयविषयिभाव उपगत प्रौढिवादेन, नित्यविज्ञानैकरसघनत्वाच्च ज्ञानान्तरमपेक्षते ब्रह्म – इत्यभिप्रायक, तर्हि सम्यगेव । उक्त ह्यभियुक्तै –

(क) अकल्पकमज ज्ञान ज्ञेयाभिन्न प्रचक्षते ।
ब्रह्मज्ञेयमज नित्यमजेनाज विबुध्यते ॥ गौ का ३-३३

इति । वस्तुतस्तु नैव विषयित्वं विषयत्वं वा ब्रह्मणि । श्रुतिर्हि विद्यावस्थायां सर्वविषयविषयिभावं निषेधति

(ख) 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' (बृ २-४-१४) इति । अत एव स्यादत्रास्येरङ्गीकारं त्यजति ग्रन्थकारोऽप्यनुपदमेव ॥ ]

**(६) अथवा स्वात्मना सह क्रियाकर्मभावो विषयविषयिभावो वा स्वप्रकाशार्थ इति नाभ्युपेयमेव । यथा तु भवता सत्तासबन्धादितरत्र सद्व्यवहारव्यवस्था सत्ता तु स्वयमेव सद्रूपा, न चैतावता स्वात्माश्रयता तस्या तथा ज्ञानमपि स्वत एव सिद्धस्वरूपम् ॥ ख २९-३०**

['यथा परमते तथा स्वमतेऽपीति तुष्यतु दुर्जन इतिन्यायेन । न हि स्वप्रकाशत्वं तर्केण साधनीयं बाधनीयं वा 'अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धे' इति भाष्योक्तन्यायेन तस्य तर्कप्रवृत्ते पूर्वमेव सिद्धत्वात् । अत एव हि तार्किकसमताया सत्ताया वैलक्षण्यमुच्यते छान्दोग्यभाष्ये ब्रह्मण सद्रूपस्य –

(क) ननु वैशेषिकपक्षेऽपि सत्सामानाधिकरण्यं सर्वस्योपपद्यते । द्रव्यगुणादिषु सच्छब्दबुद्ध्यनुवृत्ते, 'सद् द्रव्यम्', 'सन् गुण', 'सत् कर्म' इत्यादिदर्शनात । सत्यमेव स्यात् इदानीम्, प्रागुत्पत्तेस्तु नैवेदं कार्यं सदेवासीदित्यभ्युपगम्यते वैशेषिकै । प्रागुत्पत्ते कार्यस्यासत्त्वाभ्युपगमात् । न चैकमेव सदद्वितीयं प्रागुत्पत्तेरिच्छन्ति । तस्मात् वैशेषिकपरिकल्पितात् सतोऽन्यत् कारणमिदं सदुच्यते मृदादिदृष्टान्तेभ्य ॥ छा भा ६-२-१, पा ५०७

तुल्यन्यायेन विज्ञानरूपत्वमप्यात्मनो विलक्षणमेव तार्किकाभ्युपगतात ज्ञानात् । न हि तत्समतं ज्ञानं सुषुप्तादौ समस्ति । आत्मविज्ञानं तु तत्राप्यनुवर्तते सर्वाद्वैतविगमेऽपि ।

(ख) 'यद् वै तन्न विजानाति विजानन् वै तन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यद् विजानीयात्' ॥ बृ ४-३-३०

– इत्यादिश्रुतिभ्य ॥ ]

**(७) तदेव यद् यदन्यत्र दृष्टवैधर्म्यं स्वप्रकाशे पर्यवसास्यति, तत् सर्वम् अन्यथानुपपत्तिरेव स्वप्रकाशसाधकतया प्रदर्शिता स्वीकारयिष्यति । तद् यथा 'अन्यो ज्ञाता, अन्यश्च ज्ञेय' इत्यन्यत्र दृष्टम् अहमिति व्यवहारान्यथानुपपत्त्या त्याज्यम् । तथा 'अन्यत् ज्ञानम्, अन्यत् ज्ञेयम्' इति जानामीति व्यवहारान्यथानुपपत्त्या त्याज्यम् । सर्वतो बलवती हि**

अन्यथानुपपत्ति, तथादृष्टतामात्रबलम् अवलम्ब्य प्रवृत्त तर्कशतमपि बाधते। तदिदमाहु 'प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि' इति ॥ ख ३०

[अत्र तत्तद्व्यावहारान्यथानुपपत्त्या तत्तन्नियमस्य त्याज्यत्व ब्रह्मणो व्यावहारिकत्वम् अर्थापत्तिप्रमाणस्य स्वप्रकाशत्वसाधकत्व चाभ्युपगम्यैवेति स्फुटम्। सर्वप्रमाणव्यवहारातीत तु ब्रह्म 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन क पश्येत्' (बृ) इति श्रुते। सर्वव्यवहाराविषयसुषुप्त्यादिष्वपि स्वयप्रकाशत्वाच्चात्मन। अत एव हि प्रमाणसर्वस्वभूतेनानुभवलक्षणेनैव स्वयसिद्धत्वमाह ग्रन्थकृदायुत्तरत्रेति बोध्यम् ॥]

(८) तदित्थ त्वदङ्गीकृतसद्विचारलक्षणोपपन्नैरेवविधैर्विचारै स्वप्रकाशता भवता सुप्रतिपदा। अस्माभिस्तु स्वसवेदनबलादेव स्वत सिद्धस्वरूप विज्ञानमास्थीयत इति ॥ ख ३१

[स्वप्रकाशविज्ञानवादे तर्कसरणिराहृता खण्डने इत्यत्रेदमेव वाक्य प्रमाणम् ॥]

## अनिर्वचनीयत्वं प्रपञ्चस्य–

२८१ शून्यवादाद् वेदान्तवादस्य वैलक्षण्य द्योतयितुम् इदमुक्त ग्रन्थकारेण–

(१) आदिम सर्वमेवानिर्वचनीय वर्णयति। तदुक्त भगवता लङ्कावतारे 'बुद्ध्या विविच्यमानाना स्वभावो नावधार्यते। अतो निरभिलप्यास्ते नि स्वभावाश्च देशिता ॥' इति। विज्ञानव्यतिरिक्त पुनरिद विश्व सदसद्भ्या विलक्षण ब्रह्मवादिन सगिरन्ते। तथा हि नेद सद् भवितुमर्हति, वक्ष्यमाण दूषणग्रस्तत्वात्। नाप्यसदेव। तथा सति लौकिकविचारकाणा सर्वव्यवहारव्याहत्यापत्ते। यदपि निर्वक्तुम् असामर्थ्ये गुरव उपास्यन्ताम्, येभ्यो निरुक्तय शिक्ष्यन्ते – इत्युपालम्भवचनम्, तत् तदा शोभेत यदि मेयस्वभावानुगामिनी इयमनिर्वचनीयता – इति न ब्रूयु, वक्तृदोषादिति च वदेयु। यस्तु वादी निरुक्त्यभिमान धत्ते स निर्वक्तु न तु शक्ष्यति। वक्तव्यदोषात् ॥ ख ३१–३२

['अनववारणीयस्वभावत्वात् सर्वपदार्था निरस्वभावा – इति शून्यवादिमतम्' इति तु सम्यक्। 'विज्ञानव्यतिरिक्त विश्व सदसद्भ्या विलक्षणम् – इति ब्रह्मवाद' इति तु चिन्त्यम्। यतो 'वाचारम्भण विकारो नामधेयम्'

इति कार्यस्य केवल वागारब्धत्वात् प्रतीतरूपेण मिथ्यात्व 'मृत्तिकेत्येव सत्यम्' इति च विकारस्य स्वकारणरूपेणैव सत्यत्व ब्रुवन्ति श्रुतय । अनुभवारूढ च तत् । अत एव वेदान्ता निश्शङ्क 'ब्रह्मैवेद विश्वम्', 'आत्मैवेद सर्वम्' इति च ब्रह्मात्मत्वमेवाववारयन्ति प्रपञ्चस्य पारमार्थिकेन रूपेण । सदसद्विलक्षण विश्वम्-इति वादे विश्वविलक्षणस्यात्मतो नैवावकाशोऽस्ति इत्यावेदितम् असकृत् ॥

ब्रह्मातिरिक्तवस्तुन [illegible] चेद् ब्रह्मवाद स एव समर्थनाय प्रयमत । न हि केवल निरुक्त्यभिमानखण्डनेन विश्वस्यानिर्वचनीयत्व साधित भवति । न हि वक्तृदोषादनिर्वचनीयत्व मन्यते ग्रन्थकारोऽपीति ॥ ]

ननु सदसत्पक्षयोर्दोषदर्शनादनिर्वचनीयतेति ब्रुवाणस्य कि सदसत्त्व सशय, कि वा सदसत्त्वपक्षबहिर्भावाभ्युपगम ? – इति विकल्प्य उभयथापि दोषमुद्भावयन्त प्रत्याह खण्डनकार –

**(२) तदेतदनाकलितपराभिसन्धे प्रत्यवस्थानम् । यो हि सर्वमनिर्वचनीयसदसत्त्व ब्रूते, स कथमनिर्वचनीयतासत्त्वव्यवस्थितौ पर्यनुयुज्येत ? साऽपि हि कृत्स्नप्रपञ्चपरसर्वशब्दाभिधेयमध्यनिविष्टैव । परस्यैव व्यवस्थया एव पर्यवस्यति 'निर्वचनप्रतिक्षेपादनिर्वचनीयत्वम्' । विधिनिषेधयोरेकतर निरासस्येतरपर्यवसायितायास्तेनाभ्युपगमात् । तत परकीयरीत्या इदमुच्यते अनिर्वचनीयत्व विश्वस्य पर्यवस्यतीति । वस्तुतस्तु वय सर्वप्रपञ्चसत्त्वासत्त्व व्यवस्थापनविनिवृत्ता स्वत सिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्था सुखमास्महे ॥ ख ३२**

[सत्यमिद यदनिर्वचनीयसदसत्त्व सर्वस्यापि प्रतिजानानस्य नास्त्यनिर्वचनीयतासत्त्वव्यवस्थितौ पर्यनुयोज्यत्वमिति । पर परकीयरीत्यैव चेदनिर्वचनीयत्व विश्वस्य, स्वमतेन कितत्त्वक तत ? – इति तु नोक्तमत्र । न च चिदात्मन स्वत सिद्धत्वाभ्युपगममात्रेणाद्वैतसिद्धान्त सेत्स्यति । न हि तदानीमपि साङ्ख्य दर्शनाद् विशेषोऽस्य दर्शनस्य दर्शित स्यात् । अभियुक्तसमतप्रक्रियया तु

प्रपञ्चो यदि विद्येत निवर्तेत न सशय ।
मायामात्रमिद द्वैतमद्वैत परमार्थत ॥ गौ का १-१७

इति रज्ज्वा सर्प इव कल्पितत्वादेव न प्रपञ्चो नाम विद्यते निवर्तते वा इति । अतो प्रस्थानवैषम्यम् ॥ ]

(१) अयमत्र संग्रह –नामरूपे परमात्मन 'आत्मभूते इवाविद्याकल्पिते तत्त्वान्यत्वाभ्यामनिर्वचनीये' (सू भा २–१–१४) इति **भाष्यकारसंमत अनिर्वचनीयतावादः**। तयोस्त्वनिर्वचनीयत्व प्रतीयमानमायारूपेणैव , वस्तुतस्तु आत्माऽव्यतिरिक्तैव तयो सर्वदा –

(क) यद्यपीदानीं स एवैक , तथाप्यस्ति विशेष । प्रागुत्पत्तेरव्याकृतनामरूपभेदम् , आत्मभूतम् , आत्मैकशब्दप्रत्ययगोचर जगत् , इदानीं व्याकृतनामरूपभेदत्वात् , अनेकशब्दप्रत्ययगोचरम् , आत्मैकशब्दप्रत्ययगोचर च–इति विशेष । यथा सलिलात् पृथक् फेननामरूपव्याकरणात् प्राक् सलिलैकशब्दप्रत्ययगोचरमेव फेनम् , यदा सलिलात् पृथङ्नामरूपभेदेन व्याकृत भवति तदा ' सलिल फेन च ' – इत्यनेकशब्दप्रत्ययभाक् सलिलमेवेति च एकशब्दप्रत्ययभाक् च फेन भवति, तद्वत् ॥ ऐ भा १–१

(ख) यदा तु परमार्थदृष्ट्या परमात्मतत्त्वात् श्रुत्यनुसारिभि अन्यत्वेन निरूप्यमाणे नामरूपे मृदादिविकारवद् वस्त्वन्तरे न स्त , सलिलफेनघटादिविकारवदेव, तदा तदपेक्ष्य 'एकमेवाद्वितीयम्', 'नेह नानास्ति किञ्चन'–इत्यादिपरमार्थदर्शनगोचरत्व प्रतिपद्यते । यदा तु स्वाभाविक्या अविद्यया ब्रह्मस्वरूप रज्जुशुक्तिकागगनस्वरूपवदेव स्वेन रूपेण वर्तमान केनचिदस्पृष्टस्वभावमपि सत् , नामरूपकृतकार्यकरणोपाधिभ्यो विवेकेन नावधार्यते, नामरूपोपाधिदृष्टिरेव च भवति स्वाभाविकी, तदा सर्वोऽय वस्त्वन्तरास्तित्वव्यवहार ॥ बृ भा ३–५–१, पा ८१०

(२) सदसद्विलक्षणत्वमनिर्वचनीयत्वम् , तच्च मायापराभिधानीयकाविद्योपादानकत्वहेतुकम्–इति तु भावरूपानिर्वचनीयाविद्याकृतभेदवादिन पञ्चपादिकेष्टसिद्धिविवरणाद्यनुयायिन । तेषा मते रज्जुसर्पशुक्तिरजतादीनामविद्योपादानविकारत्वम् न तु पराध्यारोपितरज्ज्वादिधर्मत्व भाष्यकारमते इव ॥

(३) बुद्ध्या विविच्यमानानामनवधार्यस्वभावत्वमेवानिर्वचनीयत्व भावानां सर्वेषा सौगतमते , सर्वस्यापि नि स्वभावत्वमेव तत्त्वमिति तद्राद्धान्त. ॥

(५) आत्मव्यतिरिक्तस्य सर्वस्यापि सत्त्वेनासत्त्वेन वा अशक्यनिर्वचनत्वम् अनिर्वचनीयत्वमिति तु खण्डनप्रस्थानम् ॥

तदेव भाष्यप्रस्थानतोऽन्यत्र सर्वत्राप्यनिर्वचनीयसपर्कस्तदाभासो वा नियतसहचारी सर्वदाप्यात्मन इति न निर्मृष्टनिखिलविशेषवत्त्वमात्मन । भाष्यकारीये तु प्रस्थाने स्वाभाविकाविद्याध्यस्तत्वमेव नामरूपयो सर्वदा, वस्तुगत्या तु तयोरात्मनैवात्मवत्त्वम् — इति वैषम्यम् ॥

एतदेव तु साप्रदायिक मतम्, अन्यथा अध्यारोपितत्वानिश्चयात् परमात्मनोऽन्यस्य श्रुत्याप्यपह्नवानुपपत्ते । न ह्यनध्यारोपित किञ्चिदपह्नुवानापि श्रुति प्रामाण्यमुपैतीति । अत एव ह्यभियुक्ता विज्ञानस्वरूपमविद्यया अनात्मरूपेणाभासमानम् आभासरूपत्वेनाचिन्त्यम्-इत्यूरीकृत्यापि परमार्थस्वरूपेण निरूप्यमाणमात्मनोऽन्यन्नास्त्येवेत्याहु —

(क) अलाते स्पन्दमाने वै नाभासा अन्यतोभुव ।
न ततोऽन्यत्र निस्पन्दान्नालात प्रविशन्ति ते ॥
न निर्गता अलातात्ते द्रव्यत्वाभावयोगत ।
विज्ञानेऽपि तथैव स्युराभासस्याविशेषत ॥
विज्ञाने स्पन्दमाने वै नाभासा अन्यतोभुव ।
न ततोऽन्यत्र निस्पन्दान्न विज्ञान विशन्ति ते ॥
न निर्गतास्ते विज्ञानाद् द्रव्यत्वाभावयोगत ।
कार्यकारणताभावाद्यतोऽचिन्त्या सदैव ते ॥

गौ का ४–४९तम कारिकामारभ्य ५२ पर्यन्तम् ।

[ ‘ विज्ञानस्पन्दितम् । स्पन्दितमिव स्पन्दितमविद्यया ’ इति भाष्यम् ॥]

(ख) नात्मभावेन नानेद न स्वेनापि कथञ्चन ।
न पृथङ् नापृथक् किञ्चिदिति तत्त्वविदो विदु ॥ गौ का २–३४·

[ ‘ न ह्यत्राद्वये परमार्थसत्यात्मनि प्राणादिससारजातमिद जगत्, आत्मभावेन परमार्थस्वरूपेण निरूप्यमाण नाना वस्त्वन्तरभूत भवति । यथा रज्जुस्वरूपेण प्रकाशेन निरूप्यमाणो न नानाभूत कल्पित सर्पोऽस्ति तद्वत् । नापि स्वेन प्राणाद्यात्मनेद विद्यते कदाचिदपि, रज्जुसर्पवत् कल्पितत्वादेव ’ इत्यादि भाष्यम् ॥ ]

## अद्वैते किं प्रमाणम् ? –

२८२ अत्र प्रश्नानुपपत्तिमाह खण्डनकृत् –

(१) प्रश्न एव तावत् अद्वैतमनङ्गीकुर्वतो नोपपद्यते । प्रमाणं यत्राद्वैते पृच्छ्यते, तस्य अप्रतीतौ कथमेवंभूतः प्रश्नः सगच्छते ? न हि प्रमाणमात्रं भवता पृच्छ्यते, किं नाम, विषयविशेषनियतम् । तच्च तदा उपपद्यते यदि तादृशं ते प्रतीतिमारोहेत् । यदि च, अद्वैतं प्रश्नविषयं प्रतीतमुच्यते, तदा तत्प्रतीतिस्ते प्रमा वा स्यात्, अप्रमा वा ? आद्ये यदेव तस्याः प्रमायाः करणम् तदेव अद्वैते प्रमाणं तवापि सम्प्रतिपन्नमिति वृथा तस्य प्रश्नः । यदि च द्वितीयः, तदानीम् अद्वैतप्रतीतिमप्रमां मन्यमानस्य तव 'अप्रमाविषये किं प्रमाणम् ?' इति कथं न प्रश्नो व्याहन्यते ? अथ अप्रमा सा मम मते, त्वन्मते तु प्रमैवेति तत्करणं प्रमाणं पृच्छ्यते इति ब्रूषे, नैतदप्युपपद्यते, तवाद्वैते ज्ञानं यदुत्पद्यते तत्करणं मया प्रमाणरूपं वक्तव्यम् इत्यत्र ममानियमात् । यदि नाम मया सदा अद्वैतमभ्युपेयते तावता किं तावकीनस्य तज्ज्ञानस्य करणमवश्यं प्रमाणं स्यात् ? वस्तुतो वह्निमत्यपि पर्वते यदि कश्चिद् बाष्पं धूमं प्रतीत्य ततो वह्निमनुमिनोति, एतावता किं बाष्पविषयं धूमज्ञानं करणं प्रमाणमेष्टव्यम् ? इति ॥

ख ३५–३६

[वितण्डालक्षणां कथामाश्रित्य वदतः प्रतिवादिप्रश्नानुपपत्तिरपि दर्शयितव्येत्यत्र न संशीति । तवाभिमते अद्वैते प्रमाणमस्ति चेत्, तर्हि तस्य प्रमाणेनैव सद्वितीयत्वम्, नास्ति चेत्, निष्प्रमाणकं तदिति न श्रद्धेयं भवेत् – इत्याक्षेप्तु समाधानं तु वक्तव्यम् । प्रमाणमस्ति, न च तेन सद्वितीयत्वम्, प्रमाणस्य सदसद्भ्यामनिर्वचनीयत्वात् – इति स्यादपि अस्याः प्रक्रियायाः समाधानम् । तेन च तत्त्वजिज्ञासुना न पूर्णा तृप्तिः स्यात्, कथितशङ्कातोऽनिस्तारात् ॥ ]

खण्डनसरणिमुत्सृज्य ग्रन्थकार एव प्रश्नमपाकरोति –

(२) अस्तु वा प्रश्नोऽयं यथा तथा, श्रुतिरेवाद्वैते प्रमाणम् इति ब्रूमः । श्रूयते खलु 'एकमेवाद्वितीयम्', 'नेह नानास्ति किञ्चन' इत्यादि ॥ ख ३६

'श्रुतिप्रामाण्य सिद्धार्थसाधन च ईश्वराभिसधौ साधयिष्यते' इत्युक्त्वा (ग ३६), तत प्रत्यक्षादिबाध्यत्व श्रुतेराशङ्क्य

**(अ) यदद्वैतश्रुतेर्बाधक प्रत्यक्षादि मन्यसे तदात्मीये विषये घट पटादिभेदे नियत एवोत्पद्यते, न तु प्रत्यक्षादिक भूतभाविवर्तमानसकल व्यक्तिभेदग्राहि जायमानमावयो सम्प्रतिपन्नमस्ति ॥ ख ३७ ३८**

इत्यादियुक्त्यवलम्बनेन परिहार, तदवान्तरसगत्या स्वरूपभेदान्योऽन्या भाववैधर्म्यादिविकल्पासहिष्णुत्वप्रदर्शनद्वारेण, भेदखण्डनम्, (ख ४८–५६) भेदस्यापारमार्थिकत्वात् भेदोपजीवकस्यापि श्रुतिप्रमाण स्याबाध्यत्वम् (ख ५६–५८) – इत्यादिकमत्र न वितत्य प्रदर्श्यते । केवलतर्कोपजीवकवेदान्तप्रक्रियानिर्धारणे अनुपयोगात् । उपसंहारवाक्य त्विदमत्र –

**(आ) तदिदमेताभिरात्मरूसितस्य युक्तिलक्षणोपपन्नाभिर्युक्तिभिरुप नीयमानम् अद्वैतम् अविद्याविलाससलालसोऽपि श्रद्धातु तावत् भवान् । तदनु चानयैवोपनिषदर्थश्रद्धया अध्यात्म जिज्ञासमान परमार्थतत्त्व क्रमाद् वृत्तिव्यावृत्तचेता स्वप्रकाशसाक्षिक साक्षिकरसातिशायि स्वात्मनैव साक्षात्क रिष्यति । यथा च परिहृतचापल्य् आत्मतत्त्वामृतसरसि निमज्ज्य रज्यति निरायासमेव मानसम्, तथाहमकथय नैषधचरितस्य परम्पुरुषस्तुतौ सर्गे इत्येषा दिक् ॥ ख ६०**

[अत्र कया विधया अद्वैतानुभव इति न प्रदर्शितम् । तर्कपराहतत्वमेव त्वद्वैतबुद्धेर्निराकृत सर्वत्र । यदि तु समाधावेव तदनुभव इत्यभिनिवेश, तर्हि, 'तत्त्वमसि' इत्यनवस्थाविशेषनिब धनत्व तस्य ब्रुवत्या श्रुत्या विरोध इति स्पष्टम् ॥]

## उपसहारः –

२८३ तार्किकाभिमतप्रमाप्रमाणादिलक्षणानि विविधै प्रकारै खण्डयित्वा ग्रन्थोपसहारे श्रीहर्ष प्राह –

**(१) अत्र चास्माभिर्दूषयितु शङ्कितेभ्य परपक्षप्रकारेभ्यो यदि प्रकारान्तर कोऽपि स्वयम् ऊहति, उक्ताना बाधकाना मध्ये मध्ये कश्चित् प्रज्ञयापि समाधानम् अभिदध्यात्, तत्र खण्डनवादिन प्रस्तुता प्रतिक्रिया**

न स्फुरेत् , तदा परेण प्रयुज्यमाने वाक्ये बहुपदात्मके कस्यचित् पदस्यार्थं खण्डयितु खण्डनान्तरमवतारणीयम् , एव तत्रापि परेण प्रज्ञाशोषणे पुनस्तथैव शाखान्तरेषु सक्रमणीयम् – इति प्रकारेण खण्डनमये चक्रे सम्य गवधेयम् । न च शाखान्तरसक्रान्तौ अर्थान्तर पतेत् । अप्रकृतत्वाभावात् । न च, एकनिर्णयारम्भे अन्यसक्रान्तौ अनौचित्य स्यात् । 'शब्दोऽनित्य , कृतकत्वात्' इत्यादौ परेणोक्ते कृतकत्वादौ अविप्रतिपत्तव्यत्वापत्तेरन्यतरा सिद्ध्याद्युच्छेदापातात् । येन हि तन्निर्वाह्यते तदनिर्वचनीयतयाऽपि निर्वाह्या अनिर्वचनीयतैवेति । तस्मात् –

तत्तुल्योहस्तदीय च योजन विषयान्तरे ।
शृङ्खला तस्य शेषे च त्रिधा भ्रमति मत्क्रिया ॥ ख ४१९

इति । एतेन खण्डनकारस्य येय प्रतिज्ञा ब्रह्मव्यतिरिक्त सर्वमनिर्वचनीयम् इति, तत्र सदसद्भ्यामनिर्वचनीयत्व कथम् ?– इत्येतन्निर्णयापेक्षया 'यस्तु वादी निरुक्त्यभिमान धत्ते, स निर्वक्तु न तु शक्ष्यति, वक्तृदोषात्' (ख ३२) इत्यस्य सोदाहरण विवरणेनैव सा प्रतिज्ञा समर्थिता मन्यत इति स्पष्टम् । अद्वैतश्रुतिप्रामाण्य च तदप्रामाण्यशङ्कानिरसनेनैव स्थापितमिति मन्यत इति च ॥

अपि च –

(२) तदेतादृशीषु सर्वास्वपि दर्शनस्थितिषु कामम् आस्माकीना खण्डनयुक्तय प्रगल्भन्ते । यासाम् ईश्वरपरवशा विश्वव्यवस्थाम् अनास्थाय निरसनम् अशक्यम् , तासामेवावतारणार्थम् अय प्रावादुकप्रवादोपन्यास ॥ ख ६१

(३) वितण्डाकथाम् आलम्ब्य खण्डनाना वक्तव्यत्वात् , तत्र च व्यावृत्त्य स्वपक्षनिर्वाह प्रति पर्यनुयोगानवकाशात् ॥ ख ६२

इति सर्वत्र प्रतिवादिवाक्स्तम्भनोपायप्रदर्शनमात्रेण सतृप्तोऽय ग्रन्थ इति नानेन वेदान्तप्रक्रियानिर्धारणे किञ्चिदप्युपयोग इति स्फुटम् –

(क) यद्यपीद वेदान्तवाक्यानाम् ऐदम्पर्य निरूपयितु शास्त्र प्रवृत्तम् , न तर्कशास्त्रवत् केवलाभिर्युक्तिभि कञ्चित् सिद्धान्त साधयितु दूषयितु वा प्रवृत्तम् ॥ सू भा २-२-१, पा २२०

(ख) श्रुत्यैव च सहायत्वेन तर्कस्याभ्युपेतत्वात् । श्रुत्यादयोऽनुभवादयश्च यथासम्भवमिह प्रमाणम् । अनुभवावसानत्वात्, भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य ॥ सू भा १-१-२, पा ८

इति च भाष्यावलोकनात् हीदमवगम्यते यत् केवलतर्कस्य वितण्डादिलक्षणस्य नैवास्ति क्वचिदुपयोगो वेदान्तप्रक्रियायामितीत्यलमतिविस्तृतपरीक्षणेनैतत्प्रस्थानस्य ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिचयावाप्त
वेदान्तप्रवेशेन श्रीयोगानन्देन्द्रसरस्वतीशिष्यसच्चिदानन्देन्द्रसरस्वत्याख्येन
भिक्षुणा प्रणीतायां वेदान्तप्रक्रियाप्रत्यभिज्ञायां
**खण्डनप्रस्थानपरीक्षा नाम चतुर्दशं काण्डं**

---

# १५. चित्सुखाचार्यप्रस्थानपरीक्षा

## खण्डनग्रन्थतो प्रदीपिकाया वैलक्षण्यम् –

२८४ श्रीहर्षोत्तरकालीना वेदान्तिनस्तत्कृतखण्डनग्रन्थप्रभाविता अधिकमधिकं तर्कलालसा संवृत्ता । पर[illegible] वेदान्तप्रक्रिया न परिपूर्णता भजेदिति स्वप्रक्रियामपि निशङ्केन [illegible] वेदान्तिसमतत्वेन प्रतिष्ठाप्य प[illegible] प्रयत्नमास्थिषत चित्सुखाचार्याः ॥

## चित्सुखाचार्यनिर्मिता ग्रन्थाः –

२८५ चित्सुखाचार्या ज्ञानसिद्धिन्यायसुधाप्रकरणनिबन्धॄणां ज्ञानोत्तमाख्यानां श्रीगौडेश्वराचार्याणां शिष्या इति (त पा २८५, २८८) विज्ञायते । तत्त्वप्रदीपिका, न्यायमकरन्दव्याख्या चेति द्वौ अद्यावधि प्रकाशितौ एतद्ग्रन्थौ । एते खण्डनव्याख्यामपि व्यरचीति श्रूयते । भाष्यभावप्रकाशिका, विवरणतात्पर्यदीपिका, ब्रह्मसिद्धि[illegible], प्रमाणमालाव्याख्यानम्, अधिकरणमञ्जरीसङ्गतिश्च – इत्येतेऽप्येतत्कृता ग्रन्था इति च । प्रकृतविमर्शने तु तत्त्वप्रदीपिकैव केवलं परीक्षिता ॥

खण्डनसमतर्कमार्गे कृतपरिश्रमा अनिर्वचनीयख्यातिवादे परमविश्रान्ताश्चेमे आचार्या इति दीपिकावलोकनाद् गम्यते । अनुशाङ्करवेदान्तशास्त्रार्थेषु व्युत्पित्सूनां न्यायवैशेषिकादर्शनपरिचयमवाप्तुमभिलषतां च जिज्ञासूनामतीवोपकारकोऽप्ययं ग्रन्थः, प्रकृतविचारे नातीव साहाय्यकमाचरितुमीष्टे । यत्कारणं ग्रन्थकृदसौ न्यायमकरन्दखण्डनखण्डखाद्यादृत विचारसरणिमेवानुसरन्, प्रायशस्तद्युक्तीरेव सोपबृंहणं स्वग्रन्थे निवेशयति । अतिविस्तरेण तार्किकप्रस्थानानि खण्डनयुक्त्यैव निरस्य स्वप्रक्रियास्थापने पुनरपि तामेव लक्षणप्रमाणाधिदेवतामुपास्यत्वेन वरयति विषास्य कराभ्यां

प्रेमभावेन गृह्णन्ति । अतोऽत्र वाचकाना दीपिकाग्रन्थसत्त्वार्थम् अत्रत्यविषयानुक्रमतत्प्रतिपादनरीत्यादीना दिङ्मात्रप्रदर्शनेनैव परितुष्टा प्रस्थानान्तरपरीक्षणाय प्रस्थास्यामहे ॥

**विषयविभागक्रमः –**

२८६ अत्र शारीरकग्रन्थविभागक्रममनुसृत्य स्वमतस्थापनपरमत दूषणमोक्षसाधनविचारजीवन्मुक्तिरूपविषयभेदेन चत्वार परिच्छेदा प्रकल्पिता ॥

तत्र **प्रथमपरिच्छेदे** तावत्- प्रत्यगात्मन स्वप्रकाशचिदात्मत्वम् (१–३२), दृश्यप्रपञ्चस्य मिथ्यात्वम् (३२–८४)[1] – वेदान्तवाक्याना सिद्धवस्तुन्यपि ब्रह्मणि प्रामाण्यम् (८४–१६३) – इति प्रधानविषया । अवान्तरसगत्या त्वविद्याविचार आनीत । **द्वितीयपरिच्छेदे** श्रुतेर्भेद ग्राहिप्रत्यक्षादिविरोधमाशङ्क्य भेदलक्षणानि तार्किकसमतप्रमाणप्रमेयादि पदार्थलक्षणानि च वादिकल्पितानि सर्वाणि खण्डनयुक्त्यनुसार विस्तरश प्रत्याख्यातानि (१६४–३३२), **तृतीये तु** साधनपरिच्छेदे शब्दादेवा परोक्षज्ञानमिति युक्तिभि प्रसाध्य (३३३–३४८) ज्ञानादेव कैवल्य न तु कर्मणा केवलेन, ज्ञानसमुच्चितेन वा – इति युक्तिभिरुपपादितम् । **चतुर्थे** पुनर्मोक्षलक्षणानि विकल्प्य तत्र दूषणान्युपन्यस्य ' आत्मनोऽविद्या तिरोधानमेव बन्ध, विद्यानिमित्तस्तदस्तमयो मोक्ष ' इति सिद्धान्तितम् (३४९–३६१), तदनु अविद्याश्रयविषयविचार प्रस्तुत्य ब्रह्मैव स्वाविद्यया आश्रयो विषयश्चेति साक्षेपपरिहार तर्केणोपपाद्य जीवेश्वरभेद- वादा श्रुत्यवष्टम्भेन तर्केण च वारिता (३६१–३७३) । तत ऊर्ध्व प्रसङ्गसगत्या साक्षिणि प्रमाणमुपन्यस्य नह्मैवाविद्यया ससरति विद्यया च मुच्यत इत्येकाविद्यापक्ष उपसहृत (३७३–३७५) । तत पश्चाच्च

1 अत्र दत्ता 'तत्त्वप्रदीपिका' ग्रन्थस्य निर्णयसागरमुद्राशालाया मुद्रापितस्य (1915) पत्रपार्श्वसख्या । एवमग्रेऽपूह्यम् ॥

नानाजीवनानाविद्यापक्षेऽपि न दोष इति प्रतिपादनेन वाचस्पतिपक्षोऽपि युक्तियुक्त इत्यास्थितम् (३७५–३८०)। अन्ते चाविद्यानिवृत्तिलक्षण विचिन्त्य 'मायालेशो जीवन्मुक्तस्यानिवृत्त समाध्यवस्थाया तिरोहित, अन्यदा देहाभासजगदाभासहेतुतयानुवर्तते, प्रारब्धकर्मफलोपभोगावसाने तु निवर्तते' (३८६) इति जीवन्मुक्तिसमर्थनेन (३८०–३८८) ग्रन्थोप सहार कृत ॥

## विषयप्रतिपादनरीतिः –

२८७ प्रतिविषय लक्षणप्रमाणाभ्या स्वाभीष्ट पदार्थ साधयितुम् आस्थितोऽस्मिन् प्रकरणे। 'अत्र लक्षणप्रमाणे न स्त' इति पूर्वपक्षोपन्यास, निर्दुष्ट लक्षणमस्ति, अविरुद्ध प्रमाणमपि च समस्तीति सिद्धान्तप्रदर्शन चेति ग्रन्थे सर्वत्रानुसृता रीति । आदौ स्वाभिप्राय श्लोकेन सगृह्य श्लोकार्थ आक्षेपपरिहारप्रपञ्चनेन व्याख्यायते–इति नियम सामान्येनादृत प्रतिविषयम्। यद्यपि खण्डनग्रन्थे इव ग्रन्थग्रन्थयो न बाहुल्येन निवेशिता अत्र, तथापि अपरिचितमीमासादिशास्त्राणा नवीनतार्किकभाषासरण्यामकृत-सचाराणा च नात्र प्रवेश सुलभ । किं च, विषयप्रतिपादनेऽपि अनेक-विकल्पानादौ पूर्वपक्षिमुखेनोपकल्प्य तदनुक्रमेणैव सप्रपञ्च परिहरणव्यसन न्यायमकरन्दे एव लब्धोदयम् अत्रातिवेलमभिवर्धितम्, परित प्रसृत-शाखोपशाखाविभूषितमहान्यग्रोधषण्डसमावृतगह्वरप्रविष्टानामिव वाचकाना क्षमावधिपरीक्षास्थानमिवाभूदितीय नात्युक्तिर्भवेत् ॥

उदाहरणार्थमत्र प्रप्रथममानीत स्वप्रकाशाधिकरणचिन्ताप्रकार किञ्चिद् वाचकाना पुरत उपस्थापयिष्याम –

'प्रमाणनखनिर्भिन्नमहामोहामरारये ।
नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने ॥ (३)

इति मङ्गलश्लोकमध्ये निविष्ट स्वप्रकाशत्वमधिकृत्य एता विकल्पा पूर्व-पक्षिणा कृता'–

अथ कोऽयं स्वप्रकाशशब्दार्थः ? (१) किं स्वश्चासौ प्रकाशश्च स्वप्रकाशः ? (२) स्वस्य स्वयमेव प्रकाश इति वा ? (३) सजातीयप्रकाशाप्रकाश्यत्वं वा ? (४) स्वसत्तायां प्रकाशव्यतिरेकविरहितत्वं वा ? (५) स्वव्यवहारहेतुप्रकाशत्वं वा ? (६) ज्ञानाविषयत्वं वा ? (७) ज्ञानाविषयत्वे सत्यपरोक्षत्वं वा ? (८) व्यवहारविषयत्वे सति ज्ञानाविषयत्वं वा ? (९) स्वप्रतिबद्धव्यवहारे सजातीयपरानपेक्षत्वं वा ? (१०) अवेद्यत्वे सति, अपरोक्षव्यवहारविषयत्वं वा ? (११) तद्योग्यत्वं वा ?

इति । तदनु च तानेतान् विकल्पान् क्रमेण दूषयति । तद्यथा –

"नाद्यः । वेद्यस्यापि ज्ञानस्य स्वप्रकाशत्वाभ्युपगमात् । न द्वितीयः । कर्मकर्तृभावविरोधेन लक्षणस्यासंभवात् । न तृतीयः । प्रदीपादेः सजातीयप्रकाशाप्रकाश्यस्यास्वयंप्रकाश्यत्वेन लक्षणस्यातिव्याप्तेः । घटादेरपि सजातीयप्रकाशाप्रकाशस्य स्वप्रकाशत्वप्रसङ्गाच्च । न हि प्रदीपादौ ज्ञाने वा घटत्वादिजातिरस्ति, येन घटादयः सजातीयप्रकाशप्रकाश्या भवेयुः । सत्तया सजातीयत्वं तत्राप्यस्तीति चेत् । न । विशेषणवैयर्थ्यात्, सत्ताविरहिणः प्रकाशस्यैवासंभवात् 'प्रकाशाप्रकाश्यत्वम्' इत्येतावतैव चरितार्थत्वात् । नापि चतुर्थः । (४)

इत्येवंरीत्या एकादशापि विकल्पान् दूषयित्वा –

'तदेवं न स्वप्रकाशलक्षणं पश्यामः । नापि प्रमाणम् ।'

इति प्रतिवादस्य द्वितीयांशं प्रपञ्चयितुमारभते –

अथ – 'अनुभूतिः, अनुभूतिव्यवहारहेतुप्रकाशः । अनुभूतित्वात् । यन्नैवम्, तन्नैवम् । यथा घटः' इत्यनुमानं प्रमाणम् । न चाप्रसिद्धविशेषणः पक्षः । अनुभूतिव्यवहारस्य हेतुभूतः प्रकाशः परेषामपि हि प्रसिद्धः । ततोऽनुभूतेस्तत्स्वरूपत्वप्रतिज्ञा उपपद्यते । न चानुव्यवसायज्ञाने साध्यस्य सिद्धत्वाद् भागे सिद्धसाधनता । तत्स्वरूपस्यैवासंमतत्वेन तस्य धर्मिभागतानङ्गीकारात् (६)

इति सिद्धान्तिसंमतत्वेनानुमानमुपन्यस्य दूषयति –

'इति चेत् । मैवम् । अनुभूतिव्यवहारस्य हेतुभूतः प्रकाशो यत्र सिद्धः, तत्र हेतोर्वृत्तौ केवलव्यतिरेकित्वव्याकोपात्, अवृत्तौ सपक्षाप्रवेशिनोऽसाधारणानैकान्तिकत्वापातात्', (६)

पुनरपि समाधानविस्तारण चावलोकयता कीदृशमतिदु सह मन परिखेद मावहेदिति । ' श्रुत्यादयोऽनुभवादयश्च यथासभवमिह प्रमाणम् । अनुभवाव सानत्वात्, भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य ' इत्यभियुक्तोपदेशमनादृत्य स्वन सिद्धमाक्षिस्वयप्रकाशत्वादीनामनुभवैकगम्यानामपि सिद्धये अविद्योप जीविलक्षणानुमानाद्यवलम्बनेन शुष्कतर्कमनुसरता पन्था कीदृशगर्तपङ्क कण्टकपतनादिभयान्वितो भवेदिति च न दुरूहम् ॥

## चित्सुखाचार्याभ्युपगतानि कतिचिल्लक्षणानि प्रमाणानि च –

२८८ पूर्वपक्षयुक्तीना सिद्धान्तयुक्तीना वा प्रदर्शन परित्यज्य केवल ग्रन्थकर्त्रभिमतानि कतिचिल्लक्षणानि प्रमाणानि चात्रोदाहरिष्यामो यथैषा ब्रह्मसिद्धिपञ्चपादिकातद्विवरणेष्टसिद्धिभामतीन्यायमकरन्दाभ्युपगत तत्तल्लक्षणैस्तुलन सुकर भवेत् ॥

१ (1) सर्वेषामपि भावाना स्वाश्रयत्वेन समते ।
प्रतियोगित्वमत्यन्ताभाव प्रति मृषात्मता ॥ (३९)

(2) विमत पट, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगि (मी?) अवयवित्वात् पटान्तरवत् । एवम्, एतद्गुणजात्यादयोऽपि तत्तत्तन्तुनिष्ठा-त्यन्ताभावप्रतियोगिन । तत्तद्रूपत्वात् । इतरतत्तद्रूपवत्–इत्येवमादिप्रयोग सर्वत्रैवोहनीय ॥ (४०-४१)

२ (1) अनादित्वे सति भावरूप विज्ञाननिरस्यमज्ञानम् ॥ (५७)
भ्रमोपादानमज्ञानम् इति लक्षणेऽपि न दोष ॥ (६०)

(2) विगीत देवदत्तनिष्ठप्रमाणज्ञान देवदत्तनिष्ठप्रमाभावातिरिक्ताना देर्निवर्तकम् । प्रमाणत्वात्, यज्ञदत्तादिगतप्रमाणज्ञानवत् ॥ (५८)

(3) 'न किञ्चिदवेदिषम्' इति परामर्शसिद्धसौषुप्तिकानुभवोऽप्यत्र प्रमाणम् ॥ (५८)

(4) त्वदुक्तमर्थं न जानामीति व्यवहारान्यथानुपपत्तिरपि भाव रूपाज्ञानसद्भावे प्रमाणम् ॥ (५९)

81

(5) 'तम आसीत्', 'मायां तु प्रकृतिं विद्यात्' इत्यागमोऽपि तत्र प्रमाणम् ॥ (६०)

(6) विगीतो विभ्रमः, एतज्ज्ञानकारणाबाध्यातिरिक्तोपादानः, विभ्रमत्वात्। देवदत्तादिविभ्रमवत् ॥ (६०)

[भावाविद्याविषये विवरणदत्तलक्षणप्रमाणैस्तुलनीयान्येतानि ॥]

३ (1) सत्त्वेनासत्त्वेन च विचारासहत्वे सति सदसत्त्वेन च यद्विचारं न सहते तदनिर्वाच्यम् ॥ (७९)

(2) ज्ञानबाध्यत्वं वा अनिर्वचनीयत्वम् ॥ (७९)

(3) प्रमाणं च तत्र ख्यातत्वे सति बाध्यत्वान्यथानुपपत्तिः ॥ (८१)

(4) विमतमनिर्वचनीयम्। बाध्यत्वात्, यन्नैवं तन्नैवम्, यथात्मा ॥ (८२)

४ (1) अपर्यायशब्दानां संसर्गागोचरप्रमितिजनकत्वमखण्डार्थता ॥ (१०९)

(2) 'यद्वा तत्प्रातिपदिकार्थता' ॥ (१०९)

[तेषामेव शब्दानाम् एकप्रातिपदिकार्थता – इति व्याख्यानकारः ॥]

(3) (a) सत्यादिवाक्यम् एतत्पदार्थसंसर्गातिरिक्ते अर्थे प्रमाणम्, प्रमाणत्वात्, चक्षुरादिवत् ॥ (११४)

(b) प्रातिपदिकमात्रार्थप्रश्नोत्तरत्वानुपपत्तिश्च लौकिकवैदिक-लक्षणवाक्यानाम् एकप्रातिपदिकार्थमात्रपर्यवसायित्वे प्रमाणम् ॥ (११४)

अविद्यालेशशब्देन मोहाकारान्वरोक्तितः।
ज्ञानस्य प्रतिबन्धाच्च प्रबलारब्धकर्मभिः ॥
लेशानुवृत्तौ तज्जन्यकर्मादेरनुवृत्तितः।
उत्पन्नात्मावबोधस्य जीवन्मुक्तिः प्रसिध्यति ॥ (३८५)

[अत्राविद्याया एकदेशः, तत्संस्कारः एव वा – इति पक्षद्वयनिरासेन, अविद्याकारविशेषः एव – अपरोक्षप्रतिभासयोग्यार्थाभासजनकः एव – अविद्यालेशार्थत्वेन स्वीकृतः ॥]

## वेदान्तेतिहासे चित्सुखाचार्यस्थानम् –

२८९ तत्त्वप्रदीपिकाग्रन्थस्याविर्भावानन्तर व्याख्यानप्रस्थानाना परस्परविरुद्धानामपि सर्वेषा कथञ्चित् सामरस्यसपादन न तु शकमिति मतिरुद्भूत वेदान्तिषु । प्रतिवादिवाक्स्तम्भनाय श्रीहर्षोपज्ञखण्डनयुक्तय सर्वथा प्रभवन्तीत्येतदालक्ष्य ता एव युक्ती प्रयुज्य स्वयूथ्यानपि जेतुं प्रवृत्ता वेदान्तिन इत परम् । खण्डनयुक्तय स्वप्रणीतलक्षणानि स्वाभिमतानुमानानि वा कथ खण्डयितु न शक्नुयुरिति तु प्रस्मृतमेतैर्निर्दुष्टलक्षणानुमानसृष्टिव्यसनिभि । अत एव 'श्रुतिवचन सार्वत्रिकानुभवसिद्धार्थस्य ज्ञापक न तु कारकम्' इति मूलमन्त्र दूरत एवोत्सृज्य परमतदोषाविष्करणे स्वमतस्थापने च केवल वाक्यमित्येव श्रुतिवाक्योदाहरणम्, केवलतर्कसाहाय्य चावलम्ब्य जल्पकथारसिका एव बभूवुर्वेदान्तिन इति वेदान्तप्रक्रियास्मरण स्वप्नेऽपि सुदुर्लभ जातम् । वेदान्तसिद्धान्तस्तर्कसरण्यापि शक्यावगम इत्युपपादने जयश्रीश्चित्सुखाचार्यानेव तावद् वव्रे – इति तु निर्विवादम् ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिचयावाप्त वेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्यसच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीताया वेदान्तप्रक्रियाप्रत्यभिज्ञाया

**चित्सुखाचार्यप्रस्थानपरीक्षा नाम पञ्चदश. काण्ड**

---

# १६ सर्वज्ञात्मप्रक्रियापरीक्षा

## कोऽयं सर्वज्ञात्मा नाम ?

२९० सक्षेपशारीरके प्रत्यध्यायपरिसमाप्तिपुष्पिकाया 'श्रीदेवेश्वरपूज्यपादशिष्यश्रीसर्वज्ञात्ममुने कृतौ सक्षेपशारीरके ' इति सगुरनामोल्लेख ग्रन्थकृन्नामोल्लेखन दृश्यते आनन्दाश्रममुद्राशालाङ्किते पुस्तके । काश्या मुद्रितपुस्तके तु 'श्रीसुरेश्वराचार्य[illegible]श्री[illegible]मुने कृतौ शारीरकमीमासाभाष्यप्रकरणवार्तिके सक्षेपशारीरके' (पा १-३९८)[1] इत्युपलभ्यते । ग्रन्थकृत्तु स्वय प्रथमाध्याये मङ्गलार्थमाचरित गुरुस्मरण श्लोकेन निबध्नाति –

> यदीयसपर्कमवाप्य केवल वय कृतार्था निरवद्यकीर्तय ।
> जगत्सु ते तारितशिष्यपङ्क्तयो जयन्ति देवेश्वरपादरेणव ॥ १-८

इति । अत्र व्याख्याकारो रामतीर्थो लिखति स्म –

> 'इदानीं साक्षात्स्वगुरु सुरेश्वराचार्यमभिपूजयति' ॥ स (१)[2], पा १७

इति । **मधुसूदनसरस्वती** च स्वकृतसारसग्रहव्याख्यायाम् –

> 'इदानीं स्वगुरु वार्तिककार पूजयति – यदीयेति । देवेश्वरस्य सुरेश्वराचार्यस्य ते पादरेणवो जयन्ति ॥ स (२), पा १५

इति । प्रथमाध्यायचतुर्दशश्लोकव्याख्यानप्रसङ्गेन च 'यथा सोम्य पुरुष गन्धारेभ्योऽभिनद्धाक्षमानीय त ततोऽतिजने विसृजेत्' इत्यादिश्रुतिमूला **ग्रन्थकर्तृदेशप्रसिद्धिः** [स (२) पा २०] इति गन्धारदेशीय ग्रन्थकार मन्यते स्म । **गुरुरत्नमालिकाव्याख्याता** तु सुरेश्वराचार्य गुरु सर्वज्ञपीठव्यवस्थागोपने नियुज्य (गु र ३४) काञ्चीपीठे सर्वज्ञशकरार्य न्यधात् (गु र ३८) इति बृहच्छङ्करविजयपुण्यश्लोकमञ्जरीप्रामाण्यमाश्रित्य कथयति स्म ॥

---

1 तृतीयाध्यायादिषु तु (पा १४४) केवल 'सक्षेपशारीरके' इति वर्तते ॥

2 स (१) इत्यानन्दाश्रमाङ्कितस्य, स (२) इति च काशीमुद्रितसक्षेपशारीरकपुस्तकस्य सज्ञा ॥

वय तु सर्वमेवैतदैतिह्यमात्रमवलम्ब्य समुत्प्रेक्षित देवेश्वररवमात्र मुपश्रुत्य व्याख्याकृद्भिरप्यनुमोदितमिति प्रतीम । यत्कारण ग्रन्थकारोऽयम् आदाविवान्तेऽपि स्वगुरून् –

'श्रीदेवेश्वरपादपङ्कजरज सपर्कपूताशय' स (२), पा ३९२

इति देवेश्वरसज्ञयैव परामृशति न तु सुप्रसिद्धसुरेश्वराचार्यनाम्ना । गुरुश्चाय केवल 'देवेश्वर' इति नाम्ना इत्यविभूषिताचार्यवार्तिककारादिविशेषणेन परामृष्ट इति मनसि कुर्वता तस्य सुरेश्वराचार्यत्वे महान् सशय उपजायते । किञ्च, वार्तिकप्रस्थाने अदृष्टचरमनिर्वचनीयमूलाविद्यावाद सप्रपञ्च स्वकृत प्रकरणे समुपपादयन् सर्वज्ञात्मा न कथमपि वार्तिककारस्य साक्षादन्तेवासी भवितुमर्हति । न हि गुरुशिष्ययोरीदृशं मतवैलक्षण्य विनाकारण सभावनीयमिति । अपि चाय स्वकालमेवमुद्घोषयति –

श्रीदेवेश्वरपादपङ्कजरज सपर्कपूताशय
सर्वज्ञात्मगिराङ्कितो मुनिवर सक्षेपशारीरकम् ।
चक्रे सज्जनबुद्धिवर्धनमिद राजन्यवशे नृपे
श्रीमत्यक्षतशासने मनुकुलादित्ये भुव शासति ॥ ४-६२

पुरावृत्ततत्त्वपरिशोधकाश्च **केचित्** अधस्तादुदाहृतमैतिह्यमवलम्ब्यैव देवेश्वर सुरेश्वर इति मनुकुलादित्यश्च आदित्यचोलापराभिधो नृप –इति च भ्रेमु. । अपरे तु तदमृष्यन्तो मनुकुलादित्यो नाम राजा दक्षिणतिरुवाङ्कूरु राष्ट्राधिपतिर्बभूव दशमशतकान्ते समये इति निश्चिन्वन्ति । सर्वथापि त्वय सर्वज्ञात्मा वार्तिककारसुरेश्वराचार्यै समकालवर्तीति दु संभावनमेतदित्यल दुरध्यवसायव्यक्तिसत्त्वान्वेषणेन ॥

**ग्रन्थमहत्त्वम्** –

२९१ अनिर्वचनीयविद्योपादानवादप्रास्थानिकदृष्ट्या सक्षे शारीकस्यास्ति किञ्चिन्निरतिशयमुन्नत स्थानम् । उत्तरमीमासान्यायजा

समुच्चयभूतेऽस्मिन् प्रकरणे सर्वस्या अपि शारीरकस्य मीमासाया निर्गुणब्रह्मतत्त्वप्रतिपादनेनैवोपक्षीणत्वोपपादनम्, मृदुमधुरपदगुम्फितैर्वाक्यै र्विविधच्छन्दोबद्धश्लोकनिवेशितैर्वाचकचित्ताकर्षकशैल्या विषयप्रतिपादन च दरीदृश्यते। स्वाभिमतप्रक्रियाविषये च नैकेषा पूर्वाचार्याणामेकवाक्यता मपादने महान् यत्न कृतोऽत्रेति वेदान्तप्रक्रियासतत्वजिज्ञासूनाममोघरत्न करण्डक इवाभिपूज्यो भवत्यय ग्रन्थ । प्रकृतप्रक्रियाप्रत्यभिज्ञादृष्ट्या तु नैवास्ति किञ्चिदत्र विशेषतो विचारयितव्यमित्यतिसक्षेपेणैव ग्रन्थोऽय परीक्षिष्यते ॥

अविद्यैवाध्यासहेतुः –

२९२. शारीरकमीमासानुरोधेन यद्यप्यत्र प्रकरणेऽपि समन्वया-विरोधसाधनफलविषयकाश्चत्वारोऽध्याया सन्ति, तथापि शास्त्रकार्यान्तरे स्थित प्रकरणम् – इति प्रकरणलक्षणवाक्य सार्थकयन्निव स्वातन्त्र्येणैव विषयविभाग करोति स्मायमाचार्य । तत्राविद्याविषये तावदिमे तदीयाभि प्राया –

(१) 'आनन्दविग्रहम् अपास्तसमस्तदुःख वस्तुस्वभावेन परि वर्जितसर्वभेदम् आत्मानम्' अधीतवेदान्ता अवगच्छन्ति। तस्मिन् परिच्छिन्न ससारिरूपम् अध्यस्तम्। त चाध्यास चिदचितोरन्योन्यमिथुनीकरणलक्षण प्रति अबोधमात्र समर्थं निमित्तम् ॥' (१-२६, २७)। अध्यासे सादृश्य वा विषयकरणगतदोषो वा निमित्ततया नापेक्षितम् (१ २८, २९, ३०)। न च आत्मानात्मनोरुभयोरप्यन्योन्याध्यासे निरास्पदत्वाज्जगत शून्यता शङ्क्या। यत्कारणम् अधिष्ठानसामान्याश 'आधार', विशेषाश एव तु 'अधिष्ठानशब्द वाच्य' इति विवेकानवधारणादुक्तशङ्का समुद्भवति। न ह्यधिष्ठान बाध्यते, येन जगत शून्यता स्यात्। किञ्च सत्यानृतयोर्मिथुनीकरणात्मकमध्यास रज्जुसर्पशुक्तिरजतमरुमरीचिकादिदृष्टान्तबलेन स्वीकुर्वाणस्य कथमिवोक्त दोष स्यात् (१-३२ प्रभृति ३६ पर्यन्तम्)। लोके सदृशे साशे पराग्विषये एवाध्यासो दृष्ट इति चेत् आत्मन्यपि तत्सकलमुपचारात् सपादयिष्याम। भाष्यकारोऽपि ह्यब्रवीत् 'न तावदयमेकान्तेनाविषय' इति। अपरोक्षत्व-मात्रेणात्मन्यध्यासोपपत्तेश्चैतदेवम् (१-३९ प्रभृति ४९) ॥

एव च –

अल्प रूप बन्धन प्रत्यगात्मा । बद्धोऽनेन स्वच्छचैतन्यमूर्ति ।
स्वात्माज्ञान कारण बन्धनेऽस्य । स्वात्मज्ञानात्तन्निवृत्तिश्च मुक्ति ॥
१–५०

[अध्यासस्यानादित्व भाष्योक्त न परामृष्टमत्र ॥]

२ (1) अज्ञानमप्यविदुषोऽस्य न तु स्वतोऽस्ति
चैतन्यनिर्विकृतिताद्वयताविरोधात् ।
अज्ञाततापयनवबोधनिबन्धनैव
नात्माश्रयत्वमपि चोदयितव्यमत्र ॥ १–५१

[ 'अनादि ह्यज्ञानमनानतन्त्रमज्ञातत्वमप्यनादीति क्वात्माश्रय ' इति मधुसूदन । श्लोके तु नेत्थमुक्तम् । अज्ञानस्य मिथ्यात्वे अध्यस्तत्वमेवायातीति शङ्का न प्रत्युक्तात्र ॥ ]

(2) दृग्दृश्ययो सबन्धस्याज्ञानकृतत्वात् दृश्यरूपाज्ञानसबन्धोऽपि तथैवाज्ञानकृत स्यात् (१–५२), यथैवात्मा स्ववेद्यजातमिव स्वात्मान मप्यवगतिशक्तियोगात् प्रसाधयति, यथैव च वार्तिकमतेन भेद भेद्य च भेदो भिनत्ति (१–५४, ५५) एवमज्ञानस्यापि स्वपरनिर्वाहकत्वमुपपद्यते । अतो नानवस्था[1]॥

(3) अज्ञान चेदमतिदु स्थितवपुरग्नि घृतपिण्डमिव निर्विभाग चिन्मात्रमाश्रयते विषयीकरोति च न जीवम्, तस्याप्यज्ञानकल्पितत्वात् । तस्य च 'तिमिरम्', 'तमिस्रम्', 'तामिस्रम्', 'अन्धतमसम्', 'जडिमा', 'तमिस्रा', 'माया', 'जगत्प्रकृति ', 'अच्युतशक्ति ', 'आन्ध्यम्', 'निद्रा', 'सुषुप्ति ', 'अनृतम्', 'प्रलय ', 'गुणैक्यम्' – इति चाभिधानानि (१–३१७, ३१८, ३१९)

(4) अभावस्यानावरणत्वात् नाज्ञानम् अभाव , गीतायामज्ञानस्यावरणत्वकथनाच्च भावरूपमज्ञानम् (१–३२०) । अस्य च जगद्गत जाड्यम्

---

1 सक्षेपशारीरकप्रस्थानपरीक्षाया बहुत्र तत्तदध्यायश्लोकसङ्ख्यापरामर्श पूर्वक प्रायशस्तदभिप्राय एवानूदित । मूलश्लोकास्तु क्वचिदेव यथावल्लिखिता इति बोध्यम् ॥

पुरुषगत मौर्ढ्यं चेति स्वभावद्वयम् अनुभवसिद्धम् । एतेनैवापवर्गो विहित (१-३२०, ३२१, ३२२)

अत्र सर्वत्र प्रायशो विवरणप्रस्थानानुसारी विचारक्रम इति स्पष्टम् ॥

## शास्त्रस्य, प्रकरणस्य चानुबन्धः –

२९३ तत्र विचारस्य स्थानमधिकृत्योक्तमत्र –

(१) वेदवाक्याज्जातमपि ज्ञान विपरीतज्ञानप्रतिबद्ध न फलाय भवति । तस्मात् प्रतिबन्धनिवारणार्थं विचार । न तु स ज्ञानोत्पत्तौ कारणमपि (१-१४ प्रभृति १९ पर्यन्तम्) । तथापि जीवेश्वरादिभेदविनाशक ज्ञानस्य प्रतिबन्धापनयनेन फलपर्यन्ततामापादयितु शास्त्रम् (१-५७) ॥

(२) अत्र पुरुषार्थार्थमभिलष्यमाणतया प्रतिपाद्यमानस्य ज्ञानस्य अपुरुषतन्त्रत्वेन अविधेयत्वात्, अविदिते ब्रह्मणि तज्ज्ञानस्य विधेयत्वा सभवात्, विदिते तु विधेरेवानवकाशात्, द्रष्टव्यादिविधिसरूपवाक्याना मिहान्यथैव नेतु शक्यत्वाच्च नेद शास्त्रम् गतार्थम् (१-५९ प्रभृति ६३)

(२) आत्यन्तिकदुःखनिवृत्ति निरतिशयसुख च मोक्षतत्त्वम् । एत दुभयमपि स्वरसत एव वाञ्छति जन । अतो यज्ञाद्यनुष्ठानेन विविदिषोत्पत्तौ सत्या साधनचतुष्टयसपन्नोऽधिकारी गुरुमुपसृत्य तत्त्व विजिज्ञासेत् (१-६७ प्रभृति ९२ पर्यन्तम्) ॥

## महावाक्यविचारः–

२९४ तत्त्वमस्यादिमहावाक्यानामखण्डार्थबोधकत्वम्, महावाक्यज्ञानेन चाधिकारिणो मोक्षप्राप्ति – इत्येष एव प्राधान्येन मीमासा शास्त्रस्य प्रतिपिपादयिषतोऽर्थ –इति ग्रन्थकृदाशयोऽस्ति । अत एवायम् इत्थ वक्ति –

(१) स्वाध्यायधर्मपठित निजवेदशाखा
वेदान्तभूमिगतमादरपालित च ।
सन्यासिनापरदृशा गुरुणोपदिष्ट
साक्षान्महावचनमेव विमुक्तिहेतु ॥ ३-२९५

न वेदविदि... स्तुते पुरुष ...न्त
किं ... वेदवचन ...अन्यथतन् ।
वाक्यान्तर च कथमाह पुमान्... ।
...टो नौपनिषदत्व... दोषेण ॥
...निषदिति यद् इत्यपीन
...पमिवदन्ति महावचो महान्त ।
फर वदनगति स्यादन्तरेणैतदेक
वचनमिति न शक्य वक्तमित्यादरोऽस्मिन् ॥

[...गोर्युत्पन्न महावाक्य एव प्रवृत्ति, तादर्थ्याच्च तदपर वाक्येषु ... त्रिशततमश्लोकमारभ्य २०.तम श्लोकपर्यन्तम् उपपादित मत्र । महावाक्यशब्दो भाष्ये कुतो न प्रयुक्त ?-इति शङ्का तु नोद्भावितात्र ॥]

(२) आद्ये सूत्रे ...पदस्योदितत्वाद्
 वृत्तेरस्मिस्तत्पदस्योच्यमाना ।
वृत्तिर्ज्ञेया तत्पदार्थेऽद्वितीये
 प्रत्यङ्मात्रे त्वंपदस्योदितैव ॥ १-५५२

[प्रथमसूत्र ब्रह्मजिज्ञासाकर्तव्यतोपदेशपरम्, द्वितीय ब्रह्मलक्षणपर च न सुप्रसिद्धम् । अथापि प्रौढिवादितयात्र महावाक्यगतपदार्थसमन्वयपरत्वेन प्रतिज्ञान कृत कथ सगच्छत इत्याशङ्क्य ५५३तम श्लोकम् आरभ्य ५६१तम श्लोकपर्यन्तम् तदुपपादनार्थं यत्न कृतोऽत्र ॥ ]

(३) 'सोऽय पुमान्' इति लौकिकवाक्यस्येव तत्त्वमसीतिवाक्य स्यापि जहदजहल्लक्षणया अखण्डार्थनिष्ठता ( १-१४९ प्रभृति १६६ पर्यन्तम् )। लक्षणा मानान्तरगोचरमेव वस्त्वाकाङ्क्षते स्वविषयतया इति न नियम । सिद्धवस्तुमात्रमेवाल तत्प्रवृत्ते (१-१५२)। अह ब्रह्मासी त्यत्र ब्रह्मशब्दस्य साभासाज्ञानवाचित्वम् अहशब्दस्य चाहकारवाचित्व च यदा स्वीक्रियते, तदा जहल्लक्षणास्वीकारेऽपि न विरोध (१-१६९) अथव ब्रह्माहशब्दयो 'अग्निर्माणवक', 'सिहो देवदत्त' इत्यादि स्थलेष्विव गौण्या वृत्त्या ईश्वरजीवबोधकत्वमप्यस्तु मुख्यार्थस्वीकारे विरोधात् (१-१७०) । एव 'सत्य ज्ञानमनन्त ब्रह्म' इत्यप्यवान्तर वाक्येष्वप्यखण्डार्थत्व ज्ञेयम् ॥ १-१७५ प्रभृति १८९ पर्यन्तम् ।

82

[वार्तिकमते इवात्रापि तत्त्वपादयोः सामानाधिकरण्यम्, पदार्थयोः विशेष्यविशेषणभावः, तदनु पदार्थयोः संसर्गस्य विरोधबुद्धौ सत्यां पदद्वयेऽपि लक्षणाप्रसंगेनाखण्डात्मकवस्तुनिश्चयश्चेति क्रमोऽनुसृतः (१-१९६-१९७)]

(४) 'तत्तु समन्वयात्' इति सूत्रे अन्वयशब्देन सामानाधिकरण्यम्, 'सम्' इति विशेषणेन गौणसामानाधिकरण्यनिवृत्तिं च दर्शयति भगवान् बादरायणः । तत्र संसर्गरूपार्थपर्यवसायि गौणम्, अखण्डार्थनिष्ठं तु मुख्यमिति हि तयोः सामानाधिकरण्ययोर्विवेकः (१-२१७, २१८) इति ॥

शास्त्रयोनित्वं ब्रह्मणः –

२९५ निर्विशेषे (१-२३९) ब्रह्मणि कथं शास्त्रस्य प्रामाण्यम्? न हि तत्र वाङ्मनसगोचरत्वमस्तीत्याशङ्क्य (१-२४२, २४३, २४४) ग्रन्थकर्तुः परिहारः

(१) तदाकारग्रहणेन वस्तुनि कल्पितस्य जगतो मूलस्याज्ञानस्य दाहमात्रेण वाक्यजनितबुद्धेः प्रमाणत्वोपपत्तिः । यथा भाट्टमते संविदः सर्वथा अविषयत्वेऽपि तद्व्युत्पादकं वाक्यं प्रमाणम्, यथा वा प्राभाकरमते घटादिज्ञानस्य तद्विषयकसंविदन्तराभावेनाविषयत्वेऽपि तद्विषयकं वाक्यं प्रमाणम्, तथैवेहापि चैतन्यस्याविषयत्वेऽपि वाक्यजन्यज्ञानात् तद्विषयकाविद्यानिवर्तनेन प्रामाण्योपपत्तेः (१-२४६) ॥

[ज्ञानमात्माकारवृत्तिरूपमात्मानं विषयीकुर्वदविद्यां नाशयति चैतन्यं तु स्वप्रकाशमिति मूलाविद्यावादिप्रक्रिया ॥ ]

(२) केचित्तु नेतिनेतीतिवाक्यजनिता प्रतीतिर्जगतो निषेद्ध्र्यापि पश्चात् पूर्णात्मवादसमर्पणे एव पर्यवस्यतीति तत्त्वमस्यादिविधिमुखवाक्येन समं प्रधानं निषेधवाक्यम् । अथवा तदेव वाक्यं प्रधानम्, न हि विधिमुखप्रवृत्तं वाक्यं निर्भेदार्थाकारज्ञानं जनयितुं क्षमम् । तस्य शबलार्थगोचरत्वनियमात् । न च लक्षणया ब्रह्मवस्तुसमर्पणम् । न हि ब्रह्मणि निखिलद्वयरहिते कश्चन संबन्धोऽस्ति येन लक्षणा प्रवर्तेत – इत्याहुः ॥

१-२५० प्रभृति २५२ पर्यन्तम् ।

तदेतदयुक्तम् । यत्कारणम् अध्यारोपितभेदविलयमात्रे व्यापृतं निषेधवाक्यं न विधिमुखप्रवृत्तवाक्यवत् साक्षात् स्वरूपं कथयितुं क्षमम् । न चाज्ञातवस्तुनो स्वाकारसंवेदनमन्तरेण तद्विषयभ्रान्तिकारणमज्ञानं विनश्यति । न हि 'न सर्पोयम्' इति निषेधमात्रेण रज्जुप्रकाशकाज्ञानं मुक्त्वा रज्ज्वज्ञानप्रशान्तिरस्ति । तस्मात् अस्थूलादिनिषेधवाक्यं वाच्यार्थलक्ष्यार्थसंशोधनद्वारेण वाक्यार्थसमन्वये उपकारकं भवति, न तु साक्षान्मोक्षसाधनमिति ज्ञेयम् (१-२५३ प्रभृति २५६ पर्यन्तम्) । अथवा विधिवाक्यजनितात्मज्ञानानुवादकमात्रं निषेधवाक्यम्, 'रज्जुरियं नायं सर्पः' इति वाक्यवत् (१-२५७, २५८) ॥

(३) तस्मात् सृष्टिस्थितिप्रलयसंयमनप्रवेशकथनबलेन प्रवृत्तैरनुगृहीतेभ्य एव तत्त्वमस्यादिवाक्येभ्यो विधिमुखप्रवृत्तेभ्यो ब्रह्मावगतिरिति सिद्धम् । एवमेव हि 'तत्तु समन्वयात्' इति सूत्राक्षरसामञ्जस्यं भवेत् । अत एव निषेधवाक्यविचारणावसरे 'ततो ब्रवीति च भूयः' (वे सू ३-२-२२) इति निषेधवचनं, विधिवचनशेष एवेति सूत्रकृतापि सूचितमिति ॥
१-२६१, २६२

[तदिदं निषेधवाक्यव्यापारवर्णनं सूत्रभाष्येण वार्तिकेन च विरुध्यत इति स्पष्टम् । (द्रष्टव्यं प्रकृतग्रन्थे भगवत्पादप्रस्थानम् ख २८, वार्तिकप्रस्थानं च ख ११०) । सूत्रभाष्ये तावत् 'ततो ब्रवीति च भूयः' इत्येतदन्यथैव व्याख्यातम् । पश्यन्तु बृहदारण्यकभाष्यवाक्यं सवार्तिकम् 'यदा पुनः स्वरूपमेव निदिदिक्षितं भवति निरस्तसर्वोपाधिविशेषं तदा न शक्यते केनचिदपि प्रकारेण निर्देष्टुम् । तदा अयमेवाभ्युपायो यदुत प्राप्तनिषेधद्वारेण नेतिनेतीति निर्देशः' इति ॥ ]

शास्त्रप्रामाण्यविषये शङ्कासमाधानानि वितत्य प्रदर्शितानि नात्र विमृश्यन्ते विप्रतिपत्तिस्थानत्वाभावात् ॥

## समन्वयाध्यायार्थसंग्रहः –

२९६ आत्मज्ञाने विध्यसंभवात् सर्वाप्युपनिषत् 'विधिशून्यतया परमात्मवस्तुविषया' (१-४६२) इत्युपसंहृत्य सगुणवाक्यमपि निर्गुणवस्तुनि समन्वितमित्याह ग्रन्थकारः

(१) सगुणवाक्यमपीह समन्वितं भवति निर्गुणवस्तुनि सर्वशः ॥
१-४६३

(२) सत्यासत्यवपुस्तथा हि सगुणं ब्रह्माख्यविद्या तथा
तद्वत् तद्विषयस्य वेदवचसस्तात्पर्यमेवेति न ।
तेनाज्ञानतरमथ वेदवचसस्तात्पर्यमन्यादृश-
चान्यन्निर्गुणवस्तुनस्त्वविषयं सङ्कीर्त्यते भगवता ॥ १-४६४

[ 'इदं रजतम्' इति ज्ञानवत् सगुणवाक्यमपि स [illegible] सम्प्रष्टार्थद्वयवदिति वक्ष्यते समनन्तरोत्तरश्लोके, तदनन्तरश्लोके च तद्बुद्धिमात्रफलत्वमेव तात्पर्यं नामेति च । एवं च सगुणवाक्यस्य विशेष्ये विशिष्टे च तात्पर्येऽपि न दोष इति ग्रन्थकृन्मतम् ॥ ]

अत्र यद्यपि 'विद्याविद्याविषयभेदेन ब्रह्मणो द्विरूपतां दर्शयन्ति वाक्यानि' (सू भा १-१-१२), 'परमेव हि ब्रह्म विशुद्धोपाधिसंबन्धं क्वचित् कैश्चिद् विकारधर्मैर्मनोमयत्वादिभिरुपासनायोपदिश्यमानमपरम्' (सू भा ४-३-९) इति च भगवत्पादैरपि सगुणनिर्गुणब्रह्मणोरेकत्वमेवोपदिष्टम् – तथापि

(१) 'अत पार्थगर्थ्येनोपासनावाक्यानां ब्रह्मवाक्यानां च न्याय्यं नैकवाक्यत्वम् ॥ सू भा ३-२-२१, पा ३६१

(२) इतराणि त्वाकारवद्ब्रह्मविषयाणि वाक्यानि न तत्प्रधानानि । उपासनाविधिप्रधानानि हि तानि । तेषु असति विरोधे यथाश्रुतमाश्रयितव्यम्, सति तु विरोधे तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्ति ॥
सू भा ३-२-१४, पा ३५७

इत्युपासनाप्राधान्यावधारणात्, 'सगुणवाक्यं निर्गुणवस्तुनि समन्वितम्' इति वक्तुं न समञ्जसमित्यस्मन्मतिः ॥

अथ समन्वयाध्यायप्रतिपादितमर्थं सगृह्णच्छ्लोकमेकमत्रोदाहृत्य शास्त्रप्रामाण्यविचारविमर्शनमुपसंहराम –

शक्नोति सिद्धमवबोधयितुं च वाक्यं
शक्नोति कार्यरहितं वदितुं च वाक्यम् ।
शक्नोत्यखण्डमवबोधयितुं च वाक्यं
शक्नोति मुक्तिफलमर्पयितुं च वाक्यम् ॥ १-५६२

जगत्कारणतालक्षणम् –

५९७ ब्रह्मजगतोः कार्यकारणभाव इत्थं परिणीतोऽत्र –

(१) साभासाज्ञानमुपजीव्य अद्वितीया चिद् भवति जगत्कारणम्। तच्चाज्ञानं केवलं द्वारम्, दृश एव तु कारणत्वम् ॥ १ ३२२

(२) अज्ञानशबलमात्मतत्त्वमेव जगत्कारणम्। यथैवान्तःकरणप्रतिबिम्बितं चैतन्यं सुकृतदुष्कृतकर्तृ भवति, एवं परमात्मा तमःप्रतिबिम्बकं जगत्कर्तृत्वं व्रजति – इत्येके (१-२२६, ३२७)। नैतद्युक्तम्। परमचैतन्यमेवात्मशब्देनोच्यते। शास्त्रद्वारा तात्पर्यविषयीभूतशुद्धात्मविवेकात्तेषामेव भ्रमो जायते ॥ १-३२९, ३३०

(३) प्रधानादिकमपि न जगत्कारणम्। जडत्वात् ॥ १ ३२४

(४) जगज्जन्मादिकारणत्वं तावदुपलक्षणमेवेत्यङ्गीकार्यं यावल्लक्ष्यभावित्वाभावात् (१-५१९)। नच ब्रह्मणस्तदितरव्यावृत्त्यर्थमेव (१-५२६), कालस्वभावपरमाणवणुभूतप्रधानस्कन्धप्रतीत्यखिलशून्यानां कारणत्वेन प्रसक्तौ तन्निवृत्त्यर्थं हीदं सूत्रम् (१-५२८) ॥

(५) यज्जन्मादिनिमित्तमुपादानं च तत् परं ब्रह्म – इति प्रसिद्धकारणमनुवदद् 'ईदृशं कारणं ब्रह्म' – इति हि श्रुतिवाक्यं ब्रह्म विधत्ते। (१-५३४)। न चानुवादिश्रुतिरेव कारणप्रमितौ प्रमाणमिति वाक्यभेदशङ्क्य। अत्र वाक्यान्तरस्यैव प्रमाणतया कल्प्यमानत्वात् – इत्यपि केचिद् वदन्ति (१-५३६) ॥

(६) चेतनस्याप्युपादानकत्वं स्वप्नादिदृष्टान्तैः सिध्यति। बुद्ध्यादिकार्येषु चेतनोपादानकत्वं तार्किकैरपीष्यते (१-५४५, ५४६)। तस्मान्न चेतनस्योपादानत्वे काचिदप्यनुपपत्तिः। ब्रह्मणो जगज्जन्मादिकारणत्वं तु लक्षणमात्रम्, प्रमाणं तु स्वतःप्रमाणभूताम्नाय एव ॥ १-५४८

तदेवं यथोदाहृतसंक्षेपशारीरकवाक्यैरिदं विज्ञायते यद् ब्रह्मणो जगज्जन्मादिकारणत्वं तटस्थलक्षणमात्रं तदानन्त्यसिद्ध्यर्थं वेदान्तैरुपन्यस्तमिति, तानि च वाक्यानि तत्पदार्थे समन्वितानीति च एते अभ्युपगच्छन्ति प्रकरणकृत (१-५४९)। ब्रह्मणश्चाज्ञानशब्दितप्रकृतिद्वारेणोपादानत्वम्।

अभिन्ननिमित्तोपादानत्वं तु श्रुतिप्रमाणात् तर्कोपोद्बलितात् सिध्यतीति च । कार्यकारणभावस्य श्रुत्युक्तस्य कया विधया अद्वितीयब्रह्मसिद्धौ उपयोग ? – इति तु नैव चिन्तितं तैः । अन्यत्र च दृष्टित्रयाश्रयेण विवर्तवादमप्यतीत्याद्वैतदृष्टिराश्रयितव्येत्युक्तम् –

आरोपदृष्टिरुदिता परिणामदृष्टि
 द्वैतोपशान्तिरपवादकदृष्टिरन्त्या ।
मध्ये विवर्तविषया द्व्यमिश्रदृष्टि
 र्व्यामिश्रदृष्टिरधरोत्तरभूमिभावात् ॥
तत्त्वावेदकमानदृष्टिरधमा तत्त्वक्षतिर्मध्यमा
 तत्त्वप्रच्युतिविभ्रमक्षतिकरी तत्रान्त्यदृष्टिर्मता ।
जीवैश्यमुमुक्षुभेदगतितो व्यामिश्रदृष्टिर्द्विधा
 भिन्ना तत्र च पूर्वपूर्वविलयादूर्ध्वोर्ध्वलब्धिर्भवेत् ॥
२–८२, ८३

इति । तदेवं सर्वत्र प्रतिज्ञामात्रेण केवलतर्कानुसरणेनैव वा कार्यकारणवादः परीक्षितः । श्रीगौडपादानुगृहीताजातिवादो वा, भगवत्पादैः प्रपञ्चितः सत्कार्यवादो वा (ख ३५) न कुत्रापि परामृष्टः – इति प्रस्थानवैषम्यम् ॥

ब्रह्मणः ऐश्वर्यं मृषेति प्रतिपादनप्रसङ्गेन तस्य साक्षित्वं कारणत्वं च तथैवेत्युक्तम् (३–१८६ प्रभृति १९० पर्यन्तम्, १९८) । असत्कार्यवादं सत्कार्यवादं च निरस्य (३–१९९ प्रभृति २१४ पर्यन्तम्), वेदान्तिसमये तु सर्वं कार्यं संव्यवहारमात्रम् इत्यत्र **वाक्यकारात्रेयवाक्यम्**[1] (३–२१७ प्रभृति २२०) **निर्गुणमेव परतत्त्वमित्यत्र भाष्यकारवचनं च**[1] (३–२२१) यद्यपि प्रमाणतयोपात्तम्, तथापि न क्वापि तत्रानु

1 अयमात्रेयो ब्रह्मदत्त इति कश्चित्, ब्रह्मनन्दीति बहवो व्याख्याकाराः । भाष्यकारश्चात्र परामृष्टो द्रविडाचार्य इति वदन्ति । सुरेश्वराचार्यकृतवार्तिकान्ते भगवत्पादा अप्याचार्या 'अत्रिकुलोद्भवत्वेन' समुल्लिखिताः । अतोऽत्र कोऽयमात्रेयः, कश्चाय भाष्यकारः परामृष्ट इति भूयो विचारणीयमस्ति । ततो ह्यद्वैतसंप्रदायनिर्धारणे साधनविशेषलाभः स्यादिति ॥

नयानुसारिणी युक्तिरादर्शिता। सापेक्षत्वात् कारणत्वं न सत्यमित्येतावदेव तु (३-१८९) तत्र कथितम्। किं कुर्वद् कारणम् आहोस्विदकुर्वत् ?-इति विकल्प्य तर्कबलाद् दूषणमात्रेण जगत आविद्यकत्वं प्रसाध्य (३-२२४ प्रभृति २२७), ब्रह्मणि निजं सकलत्रिकालीनां निरस्य जगत्प्रसिद्ध्यै निरूपणादपि तस्य मायामयत्वमित्युक्त्वा (३-२३१), आरम्भवादपरिणाम वादयोर्दूषणं प्रदर्श्य 'ततो वियन्मुख्यमदो जगज्जडं चिदात्मनोऽस्यैव विवर्त इष्यताम्' (३-२३५) इत्युपसंहृतम् ॥

## अवस्थात्रयपरीक्षा –

२९८ महावाक्यार्थज्ञानसिद्ध्यर्थमपेक्षितं त्वंपदार्थविवेचनमारभ्य तत्प्रसङ्गेनावस्थात्रयपरीक्षणमानीतम् ॥

(१) कर्त्रादेरवभासकत्वमगमं शुद्धं स्वयं भास्वरं
चैतन्येन निजेन तेन भवतः कर्त्रादिबुद्धिर्भ्रमः ॥
कूटस्थस्य चिदात्मनस्तव कुतः कर्तृत्वभोक्तृत्वयोः ।
शङ्का जागरितेऽपि कारकगणं कर्त्रादिकं पश्यतः ॥ ३-६१

(२) विविधकार्यकरणान्येव बहुप्रकारभेदभाञ्जि । तेन जलपात्रगत सूर्यस्येव जीवनानात्वभ्रमो भवति । अध्यात्मम्, अधिभूतम्, अधिदैवं सूत्रं विराजमपि चेत्येतत्सर्वमप्यात्मैवैकः तत्साक्षी सन् पश्यति । तत्र साक्षित्वमपि चिदाभासयुक्ताज्ञानकृतम् ॥ ३-६६, ६७

(३) आत्मनः कर्तृत्वं न स्वाभाविकमित्येतस्य मायामयस्वप्नदर्शनमुपोद्बलकम्। न हि स्वप्नः सत्यम्। बाध्यं हि तत् प्रसिद्धमायावत्। सा च माया नाविद्यातिरिक्ता। ३-८३ प्रभृति ११२ पर्यन्तम् ॥

[ अत्र मायाविद्ययोरैक्यं विस्तरेणोपपादितम् ॥ ]

(४) मिथ्याभूतस्वप्नदर्शनं यथा परमार्थवस्तुसूचकम्, एवं मिथ्याजाग्रद्दर्शनमपि तत्रावगतिहेतुः । स्वप्नभ्रमो वा जाग्रद्भ्रमो वा स्वपरिस्फुरणहेतोरदृष्टस्य क्षये सममेव सुषुप्ते जगन्निदाने गाढे तमसि लयमेति ॥
३-११७, ११९

[अत्र सारसग्रहव्याख्या 'गाढे सवविशेषप्रकाशशून्ये जगच्छिदाने तमसि स्वप्नस्य लय वदतो ग्रन्थकारस्य मलाविद्याकार्यत्व तस्याभिमतम्' इति पा २१९]

(५) सुषुप्तौ सवमज्ञाने लीनमित्येतत् पुनरुत्थानलिङ्गतोऽनुमीयते 'न किञ्चिदवेदिषम्' इति सुप्तोत्थितस्मरणादपि निश्चीयते । अहङ्कार हीनत्वात्तु सुषुप्तेस्तदा नाज्ञानस्य स्पष्टानुभव । अत एव सुषुप्तौ अज्ञानमपि नास्तीति बुद्धिरुदेति ॥ ३-१२० प्रभृति १२४

(६) एवम् आचार्यैरपि क्वचित् 'सुषुप्तस्याज्ञान नास्ति', क्वचित्तु 'सुषुप्तो गाढे तमस्यभूत्' - इति चोच्यमानम्, एव 'जीव पर एव तदानीम्', 'स तदा निर्बीजतामुपगत', 'अज्ञान काम कर्म च तदा नास्त्येव' इति 'तत्राहङ्कार आसीत् । स एव जाग्रतो दु खमानीय दर्शयति' (?) - इति च विरुद्धाभासमुच्यमान विविच्य सुषुप्तौ स्पष्टतया अनुभवो नास्ति यतस्तत एवमुक्तमिति इत्यङ्गीकर्तव्यम् ॥

३-१२५ प्रभृति १२८ पर्यन्तम् ॥

(७) सुषुप्ते, आत्माज्ञानसाक्षित्वे सत्यपि तत्रान्त करणाभावात् प्रमातृत्व नास्ति । अतोऽज्ञानविषयकस्पष्टाननुभव । तथापि तु मुक्ति विलक्षणत्वात् सुषुप्ते साज्ञानत्वमेष्टव्यम् ॥ ३-१३२, १३३

(८) एव चैतन्यवदवस्थात्रयेऽप्यव्यभिचारादज्ञानस्यात्मस्वभावत्वम् इति तु न शङ्कनीयम् । आत्मन प्रत्यक्त्वेन अज्ञानस्य तु पराक्त्वेनेति विविक्तमवगमात् तयो सुविवेचनत्वात् । एवमवस्था अपि नात्मधर्मभूता, तेषामपि विषयत्वेनावभासात् । आविर्भावतिरोभाववत्त्वाच्च । अहङ्कारस्या प्यविद्याकल्पितत्वात् तस्यापि चित्प्रकाशविषयत्वेनैवानुभवाच्च नात्मधर्म त्वम् । एव च जाग्रत्स्वप्नसुषुप्तिमूर्छामरणावस्थासु व्यभिचारिणीष्वनुगत मात्मतत्त्व सत्यम्, तदितरत् सर्व मिथ्या । व्यभिचारित्वात् । अवस्था रूप चित्तमज्ञानत प्रादुर्भूत नात्मनो भिन्नम् । अज्ञान चात्मानुभूतिबलत एव सिद्धमिति मिथ्यैव । अत प्रत्यक्चैतन्यम् अद्वितीय पूर्णमेवेति सिद्धम् ॥

३-१३४ प्रभृति १४०

(९) एतदवस्थात्रयधर्मरहितत्वमात्मनो ज्योतिर्ब्राह्मणप्रमाणत सिद्धमिति सर्व श्रद्धेयम् ॥ ३-१४१

अवस्थात्रयविचारे आत्मनो व्यतिरिक्त सर्वमप्यात्मदृश्यत्वादेव मिथ्या, 'अज्ञान चानुभूतिबलत एव सिद्धमिति मृषा' इत्युक्त भवति। जाग्रत्स्वप्नसुषुप्तधर्मक चित्तमज्ञानप्रादुर्भूतत्वान्नात्मनो भिद्यते (३-१४०)-इति युक्तिबलादेवात्मनोऽद्वितीयत्व साध्यत इति स्पष्टम्। यद्येवम्, अनात्मन सर्वस्य मिथ्यात्वमात्मन्यध्यस्तत्वादेव, साक्षिरूपानवबोधादेव तु प्रमातृत्वाध्यासेन अवस्थावत्त्वभ्रम — इत्येतावदेवाल किमध्यासोपादानभूताविद्याकल्पनप्रयासेन ? तस्या अपि ह्यध्यस्तत्वादेव मिथ्यात्वम्। अपि च अवस्थाना त्रिसृणामपि कार्यकारणभावकल्पनम्, सुषुप्तौ कारणभूताविद्याकल्पनम्, स्वप्नजागरयोश्च तत्कार्यभूताविद्याविलासत्वकल्पनम्-इति च मुधैव प्रयास। युक्तिहीनश्च। एव हि अवस्थाना कालाधारकत्वमापाद्येत। प्रतीयते तु स्वप्नजागरयोस्तत्तदवस्थासमुचितोऽन्योऽन्य काल। यथोक्तमभियुक्तै — 'चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये बहि। कल्पिता एव ते सर्वे विशेषो नान्यहेतुक ॥' (गौ॰का २-१४) इति। सुषुप्ते च काल भानमेव नास्तीति सुप्रसिद्धम्। तथा चात्मन्यध्यासमात्रसिद्धमवस्थात्रयवत्त्व मायामात्रमित्यायाति। यथोक्त भाष्यकारै — 'मायामात्र ह्येतद् यत् परमात्मनोऽवस्थात्रयात्मना अवभासनम्' (सू भा २-१-९) इति। किञ्चान्यत्, केवल स्वदेहपरिच्छिन्न एवात्मा अवस्थात्रयादिपरीक्षणेन दृष्ट स्याद् यदि माण्डूक्योपनिषद्दृशा समष्ट्यात्मनापि व्यष्ट्यात्मन एकत्व नावध्रियेत। एतत्तु न चिन्तितमस्मिन् प्रकरणे ॥

## चिन्मात्रस्यैवाज्ञानाश्रयविषयत्वम् —

२९९ अविद्यामाययोरैक्यमभ्युपगम्य सर्व ससारो 'गुर्वादिभेदान्वित' कल्पितोऽस्त्यविद्यया यथा स्वप्ने (२-१२७) इत्युक्त्वा —

> मुक्तामुक्तौ विद्वदज्ञौ त्वदन्या
> वाकाशादि क्ष्मावसान च विश्वम्।

स्वाविद्योत्थस्वान्तनिष्पन्दनं त-
 द्विज्ञातव्यं मा ग्रहीरन्यथैतत् ॥ २-१२८
तस्माद् ब्रह्माविद्यया जीवभावं
 प्राप्याऽऽसित्वा तात्त्विके तु स्वरूपे ।
स्वच्चित्तेन स्पन्दितं जीवजात-
 माकाशादि क्ष्मावसानं च पश्येत् ॥ २-१६२
स्वीयाविद्याकल्पिताचार्यवेद-
 न्यायादिभ्यो जायते तस्य विद्या ।
विद्याजन्मध्वस्तमोहस्य तस्य
 स्वीये रूपेऽवस्थितिः स्वप्रकाशे ॥ २-१६३

इति च ब्रह्माश्रितामेवाविद्यां तद्विषयामाहुः । एवं चेष्टसिद्धिपक्ष एव तैः समादृत इति वक्तव्यम् ॥

कथं तर्हि भाष्यकारर्जीवाश्रितेयमिति श्रुतिः सगमनीया ?–इत्यत्रोत्तरमिदम् –

'अज्ञानं जडशक्तिरूपेण जीवाद् बहिः सिध्यति । परमेश्वराधीनेन तेनाकाशादिकं सृज्यते । तदेव च जीवे 'अहमज्ञ' इति स्फुरतीत्यतो (२–१६५, १६७) जीवस्यैवाज्ञानमिति भाषणमुचितम् । ईश्वरे बाधितवपुरियमविद्या, जीवं प्रति तु चितिशक्तिबाधकवपुः (२–१६८), ईश्वरस्य मायापि दृश्यत्वजाड्यपरतन्त्रत्वचिदाश्रयत्वैर्हेतुभिः स्वप्नरजतभ्रमादिदृष्टान्तैश्च अविद्यात्मिकैव इति आकाशादिकम् एकाविद्याकल्पितमेव, बाध्यत्वात् स्वप्नवत्–इति चानुमानाभ्यां मायाविद्ययोरैक्यं सिद्धं भवति (२–१६९, १७०) । ईश्वरे प्रतिभासमानाप्यविद्या न तस्य दुःखजनकम्, मोहावृतस्य जीवस्य तु दुःखहेतुः (२ १७३) – इत्येव भाष्योक्तजीवाश्रयत्ववचनं नेयम्, न तु मण्डनवचोऽनुसरणीयम् (२–१७४) । किञ्चिज्ज्ञो जीवः, सर्वज्ञ ईश्वरः – इत्यप्यज्ञानावृतत्वानावृतत्वपरम्, न तु तयोरज्ञानभावाभावपरम्, ईश्वरस्य निरहङ्कारत्वात् अज्ञानं वशीकृत्यैव स्वेच्छागृहीतशरीरत्वाच्च 'अहमज्ञ' इति न भवति । अत एवेश्वरः सर्वज्ञः निरावरणज्ञानस्वरूपः, स्वात्मभासा निखिलाज्ञानतत्कार्यभासकः – इति कथ्यते (२–१७७ प्रभृति १८७ पर्यन्तम्) । तस्मात्, चिन्मात्रमेवाविद्याश्रयभूतं जीवेश्वरजगद्विभागनिर्मातृ – इति शुद्धं मतम् (२–१८९), ब्रह्मणि जीवत्वमज्ञानजन्यमित्यतो

जीवस्य नाज्ञानाश्रयत्वं घटते । ब्रह्माश्रयमज्ञानमिति पक्षे तु तच्चित्तशुद्ध्यैव कल्पितमिति यतो न कोऽपि दोषः (२-१९१ १९७)। न चैवमेकमेव ब्रह्मस्वरूपेण स्फुरति न स्फुरतीति व्याहतोक्तिः स्वरूपेण स्फुरदेव बोधशास्त्रात् स्फुरतीत्यभ्युपगमात् (२-२०२ २०३)। 'अपि च न वयं ब्रह्म निर्मलं ब्रह्म तद्रूपेणाज्ञानाश्रयविषयम् इति ब्रूमः, किं तर्हि प्रत्यगात्माश्रयविषयम् अज्ञानमिति । चैतन्यवस्तु विषयाश्रयमेव, ह्यज्ञानं प्रतीयते नान्यवस्तुविषयाश्रयकम् । ब्रह्माश्रयमज्ञानमित्युक्तिस्तु बुद्ध्यादिविशिष्टचैतन्ये नाज्ञतत्वाभिप्रायेणैव, न हि तस्य केवलब्रह्माश्रयत्वे किञ्चित् प्रमाणमस्ति (३-१३ १४) । तस्माच्चिन्मात्रमेव ज्ञानस्याश्रयो विषयश्चेति सिद्धान्तः (३-१५) ॥

[दृष्टान्तद्वयरीत्या ब्रह्माश्रिताविद्यावादस्य परिष्करणमेतत् । अविद्याया स्वाभ्यासत्वनिरक्तौ ना प्रसिद्धौ सर्वमिदम् भित्तिचित्रं भवतीति तु न पृथग् वक्तव्यम् ॥ ]

## बद्धमुक्तादिव्यवस्था –

२०० ननु ब्रह्मैवैकं नित्यमुक्तमपि स्वाश्रयविषयाज्ञानवशात् संसरति ज्ञानेन च मुच्यत इति चेत्, कथं बन्धमुक्ताद्यवस्था ? कथं वा तद्बोधकशास्त्रप्रामाण्यम् ? – इत्याशङ्कायां ग्रन्थकृदुत्तरम् –

**(१) न तावच्छास्त्रं यथोक्तव्यवस्थाप्रतिपादनाय प्रवृत्तम्, किं तु ब्रह्मात्मैक्यप्रतिपादनपरम् । न च 'मदन्यः कश्चिद्बन्धमोक्षभागस्त्यासीद्वा'– इत्येतदनुभवविरुद्धं भवेदिति शङ्क्यम् । न तावदत्र द्वैतानुभवविरोधोऽस्ति, एतज्ज्ञानबाध्यत्वात् तस्य, न चान्योऽस्ति बाधकानुभवः (२-२१९) न च गुर्वादेरपि कल्पितत्वे उपदेष्टृत्वाद्यभावः, कल्पितसर्पस्यापि मरणहेतुत्ववत्, वैशेषिके श्रोत्रेन्द्रियत्वेन कल्पितस्याप्याकाशस्य शब्दप्रकाशकत्ववच्च तदुपपत्तेः ॥**

[व्यावहारिकानुभवापलापेनाप्यभिलषितं साधयता किं किं न सिध्येत् ?]

## ज्ञानसाधनानुष्ठानाज्ज्ञानोत्पत्तिः, मुक्तिश्च –

२०१ ज्ञानोत्पत्तिप्रकारः, मुक्तेर्नित्यत्वं चेत्थमुपपादितमत्र –

अन्तरङ्गसाधनमवश्यं करणीयं मुमुक्षुभिर्यतिभिः, विविदिषोपायत्वेन श्रुतं कारकं बहिरङ्गम्, ब्रह्मावगतिसाधनं व्यञ्जकं श्रवणादि तु अन्तरङ्गम् (३-३२७, ३२९)। श्रवणादीन्यावृत्तिमन्त्यानि तावत् अज्ञानसंशयविपर्ययनिवर्तकानि। शब्दशक्तिविषयं युक्तितो निरूपणं श्रवणम्, वस्तुवृत्तविषयकं मननम्। निदिध्यासनं तु चित्तस्य चिन्मात्रशेषता (३-३४३, ३४४)। श्रवणमननबुद्ध्योर्जातयोस्तत्फलमनुभवरहितनिश्चितिलक्षणमेव निदिध्यासनमित्यपरे (३-३४३, ३४४, ३४५)॥

महावाक्यजनितं ज्ञानं सन्यासिना प्रायेणेह जन्मनि भवति (३-३४८, ३५९) असन्यासिभिरनुष्ठितं श्रवणादि जन्मान्तरे फलदं भवेत् (३-३५८)। ज्ञानादेवाज्ञाननिवृत्तिः। न तस्यान्यसाधनापेक्षा तत्र (४-१ प्रभृति ११)। अज्ञाननिवृत्तिश्च 'सदसत्सदसद्भिः कल्पितप्रतिपक्षैकवपुः' (४-१२) सा च चितो न भिन्ना, अभिन्ना, भिन्नाभिन्ना वा विकल्पितरूपा वा – इति मुक्तिकोविदा वदन्ति (४-१४), अथवा वाक्योत्थबुद्धिलक्षित आत्मैव निवृत्तिः (४-१५)॥

[ अत्रेष्टसिद्धिवार्तिककारयोर्मतमनुमतम् ॥ ]

एवं वाक्योत्थज्ञानम् उद्यन् वा उदयोत्तरक्षणे वा अविद्यातत्कार्ययोर्यथोक्तां निवृत्तिं संपादयतीति न सहायान्तरमपेक्षते। एवं वेदान्तवाक्योत्थं ज्ञानं सकलं संसारं शमयित्वा स्वयं च शाम्यति 'दग्धलोहपीतं यथाम्बु' (४-२८)। तदेव ज्ञानफलत्वात् मुक्तिः कूटस्थनित्या (४-२९)। अथवा अज्ञाननिवृत्तेरात्मस्वरूपत्वात् तमोमयविश्वविकल्पनाविलयनात्मिकैव मुक्तिरित्यस्तु। निर्दोषत्वादेवमभ्युपगमस्य (४-३७)॥

## जीवन्मुक्तिः –

### ३०२ जीवन्मुक्तिविषये ग्रन्थकृन्मतमित्थम् –

सम्यग्ज्ञानाग्निः सर्वमप्यज्ञानं तत्कार्यं च सद्य एव दन्दहीति निर्लेपेन। ततो विदुषः सद्योविमुक्तिर्ध्रुवा। न च जीवन्मुक्तिज्ञापकं शास्त्रम् अनर्थकम्। तस्य कल्पितजीवन्मुक्तेः योजनीयत्वात् (४-३८, ३९)॥

इत्येकं मतम्।

अथवा विदुषोऽविद्यालेशस्यानुवृत्ते, तस्याश्च निर्निमित्तम् विद्या निमित्त वा निवर्तनम् इत्यङ्गीकारात् जीवन्मुक्तिरपि सप्रमाणैव । अविद्या लेशाविद्यागन्धादिभाषास्तु नाविद्याया नापि तस्या भागस्य, किं तु बाधिता विद्याप्रतीते – इति भाष्यकारीय मतम् (४–४१, ४२)

जीवन्मुक्तिस्तावदस्ति प्रतीते
द्वैतच्छाया तत्र चास्ति प्रतीते ।
द्वैतच्छायारक्षणायास्ति लेश
स्तस्मिन्नर्थे स्वानुभूति प्रमाणम् ॥ ४–४३

तस्मात्, जीवन्मुक्तिरूपेण ज्ञानी आरब्धकर्मणा भोगार्थं स्थित्वा, अविद्यागन्धप्रसूत भोग भुक्त्वा अत्यन्त कैवल्यमश्नुते । 'भूयश्चान्ते विश्व मायानिवृत्ति' इति श्रुतिरत्र मानम् (४ ४५, ४६) । न चार्चिरादिमार्गेण गत्वैव मुक्ति प्राप्या – इति नियन्तु शक्यते, ब्रह्मादीना विनैव तादृशी गति मुक्ते श्रूयमाणत्वात् । तस्मात्, न निर्गुणविषया गति, किं तु सगुणविद्याविषयैवेति ज्ञेयम् ॥ ४–४७, ४८

## सर्वज्ञात्ममुनेः स्थान वेदान्तेतिहासे –

२०३ अनिर्वचनीयभावाविद्यावादिना विविधप्रक्रियासु सार सगृह्य सैवैका भाष्यसमता, युक्त्यनुभवोपबृहणेन वेदान्तसिद्धान्त निराक्षेप स्थापयितु समर्था च – इति प्रतिपादने यत्न कृत सर्वज्ञात्माचार्यै । एकमेवाज्ञान आकाशादिसकलजगत द्वारकारण सन्मायेति, जीवस्यान्त - करणे मौढ्यरूपेण स्फुरदविद्येति च भाति । एकस्यैव जीवस्याज्ञानेन भेदप्रपञ्च सर्वोऽपि निर्मित – इति चैकाज्ञानैकजीववाद एव वेदान्ते परमसिद्धान्त – इति ते व्यवस्थापयाबभूवु ॥

(१) अज्ञान व्यक्तिषु जातिवद् व्यापि । तच्च बिम्बोपमे ब्रह्मणि कल्पितानां प्रतिबिम्बकल्पाना जीवाना ज्ञानिन विहायाज्ञ भजते, नष्ट व्यक्ति परित्यज्य विद्यमानव्यक्तिभागिनीव जाति –इति, (२) अज्ञानानि बहूनि जीवाश्चानन्ता । प्रतियुगमज्ञाना जीवाना ज्ञानेन नि श्रेयसम् । माया तु ईश्वरसमाश्रया आकाशादिसर्वसाधारणप्रपञ्चस्रष्ट्री – इति,

# १७. प्रथमसंपुटोपसंहारः

इदमेव त्वत्र वाचकै हृदये स्थापयितव्यं यत् सुरेश्वराचार्यवार्तिकरचनादूर्ध्वं वेदान्तप्रक्रिया सर्वथा विस्मृता प्रायशः सर्वैर्वेदान्तिभिः। अद्वैताभिनिवेशयुतैरपि तैः संसारकारणमविद्या तस्याः प्रहाणं च विद्यया केनचिद् द्वारेण–इत्यभ्युपगच्छद्भिरपि 'नित्यशुद्धबुद्धमुक्तस्वरूपे परमात्मनि तत्सत्तामात्रसंबन्धिनी काचिदविद्या अनादिकालात् स्थिता, सा च विद्यया विनाशयितव्या' इति बन्धमुक्तिशास्त्रार्थवत्त्वकरणव्यसनितया निर्युक्तिकमेव कल्पितम्। अविद्या च तत्कार्यं च मिथ्यैवेत्यभ्युपयन्त एव, अविद्याया एकत्वे, नानात्वे, तन्निवृत्तिसतत्त्वे च विविधान् वादान् विकल्पितवन्त इमे। अविद्यावत्त्वेन तन्निवृत्तिमत्त्वेन च तद्वति विशेषं बन्धमुक्तिकृतविशेषं च निर्विशेषवस्तुमात्राभ्युपगमबाधकं पश्यन्तोऽपि तमङ्गीचक्रुः सर्वे वादिनः। ततश्च अविद्याभ्युपगमो वेदान्ते अध्यारोपापवादन्यायेन परिशुद्धमात्मतत्त्वं निवेदयितुमेव केवलम् अविद्यादृष्ट्यैव, न तु वस्तुवृत्तमपेक्ष्य – इत्येतत् सर्वथा प्रस्मृतं सर्वैरित्यहो अविद्यावैभवम्!

इतः परम् अद्वैतिना न केवलमन्यैर्द्वैतिभिः कथाप्रसङ्गो मुख्यः, अपि तु वेदान्तिमध्यादेव समुत्थितैर्द्वैतिभिः। तत्रापि न केवलम् सर्वसंप्रतिपन्नोपनिषत्प्राधान्येन ब्रह्मजीवजगत्संबन्धमधिकृत्य विवादः, किं तु पौराणिकशैववैष्णवादिभक्तिप्रभेदमतान्यधिकृत्यापीत्यतो वेदान्तविचारेतिहासः पृथगेवावलोकनीयो द्वितीयसंपुटे। तत्र च वेदान्तप्रधानप्रक्रियाया कीदृश्यवस्था संजातेत्यप्यवलोकयितव्यमिति विज्ञाप्य प्रथमसंपुटमिमं परिसमापयामः। अत्राधिकं यद्वक्तव्यं तद्भूमिकातोऽवगन्तव्यमिति सर्वं शिवम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिचयावाप्त
वेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्यसच्चिदानन्देन्द्रसरस्वत्याख्येन
भिक्षुणा प्रणीतायां वेदान्तप्रक्रियाप्रत्यभिज्ञायां
**प्रथमः संपुटः**

---

अध्यात्मप्रकाशमुद्रणालय, होळेनरसीपुरम्

# प्रधानविषयसूची

**अत्र दत्ता पत्रपाङ्कसङ्ख्या**

[म = मण्डन इ सि = इष्टसिद्धि – इत्यादिरीत्या सङ्केताक्षराणि तत्तत्प्रस्थानकर्तृसंकृतग्रन्थान्यतरसूचकानीति बोध्यम् ]

अध्यात्मप्रकाशमुद्रणालय, होळेनरसीपुरम् १०००, ६–६–१९६४